University of Mysore

Oriental Library Publications

SANSKRIT SERIES NO 87

GENERAL EDITOR

H R RANGASWAMY IYENGAR, Esq , M A ,
*Curator in charge, Government Oriental Library, Mysore*

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्

# आपस्तम्बीयं श्रौतसूत्रम्

(तत्र १–५ प्रश्नाः)

# THE ŚRAUTA SŪTRA OF ĀPASTAMBA

WITH

## THE BHĀṢYA OF DHŪRTASWĀMI

AND

## THE VṚTTI OF RĀMĀGNICIT

(Prasnas . 1–5)

EDITED BY

VIDVAN So. NARASIMHACHAR,
*Govt. Oriental Library, Mysore*

MYSORE
PRINTED BY THE ASST. SUPDT AT THE GOVT BRANCH PRESS
1944

॥ श्रीः ॥

# आपस्तम्बकल्पसूत्रपरिचयः

पुमर्थान् स्वस्वार्हानधिगमयितुं धर्मनियतान्
श्रुतिस्मृत्याचारैः समयनियतैः स्वप्रविततैः ।
मतिं शक्त्युत्साहौ धृतिमविचलां च प्रदिशतु
प्रजानां राज्ञश्चानिशमपि स देवो हयमुखः ॥

नमो यज्ञाय परमात्मने ।

'वेदाः नः परं धनम्' इति आर्योध्यक्षब्रह्मविदामुद्घोषः । अवर्जनीयमध्ययनं यथाशक्त्युपकारकं नासम्भावनीयं चेति धनव्यपदेशः । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतिः साङ्गं वेदाध्ययनमन्तरेण विप्रस्य स्वरूपलाभमेवासम्भावनीयं अध्ययनेन आमुष्मिकं श्रेयस्सुसाधं च मन्यते।

तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ।

इति वैदिककुलं शिक्षयन् श्रुतिमतं श्रेयः परमर्षिः पाणिनिरप्यनुवदति ।

वेदानां श्रेयस्साधनता कथन्तासम्बोधपरिकरभूतानि चाङ्गानि शिक्षाव्याकरणं छन्दो निरुक्तं ज्यौतिषं कल्पश्चेति प्रथन्ते ।

तत्र 'हस्तौ कल्पोऽथ पठ्यते' इति परिग्रहपरिहाणमुख्यसाधनरूपतां कल्पानामुपदिशति शौनकः पाणिनिश्च ।

## कल्पसूत्रप्रवृत्तिः.

[1]कल्पशब्दश्च प्रयोगपरः । प्रयोगश्च बहुश्रुतप्रयोक्तृबहुले धर्मैकनिरतजनभूयिष्ठे कलिदोषलवविदूरेऽवसरे साङ्गसरहस्यनानाशाखाध्येतृषु महर्षिषु नानाशाखास्थतत्तद्विशेषोपसंहारेणानुष्ठानप्रवाहं प्रचारयत्सु विनैवायासं समाकलनीय आसीत् । ततस्ततोऽनृषिषु श्रुतर्षिषु च प्रचरत्सु अनुष्ठानवैगुण्यादिदोषान् सम्भावयद्भिः महर्षिभिराधिकारिकैर्यथायथं सङ्क्षेपविस्तरप्रक्रियया श्रद्धाल्वनुष्ठातृजनानुजिघृक्षया नानाशाखास्थतत्तद्विशेषसङ्ग्रहेण सुगमा इति [2]प्राणायिषत सूत्रनिबन्धाः । ये किल प्रथन्ते, बोधायनाश्वलायनापस्तम्बहिरण्यकेशिखादिरद्राह्यायणलाट्यायनशाङ्खायन मानववाराह कौशिकवैखानस भारद्वाजादि तत्तत्सुगृहीतनामधेयभूषितैरेव सूत्रपदैः ।

---

[1] तेषां जुहूवत्कल्पः (६३३ सू ) (१८-१-३ सू ) धूर्तस्वामिकपर्दिस्वामिभ्या कल्पो विधि इति विवरणात् । रामाग्निचिता च 'प्रयोगतया' इति पूरणात् । अन्यत्रापि भाष्यकाराभ्यां कल्पशब्दस्य विधिशब्देन विवरणाच्च तथात्वमवसीयते ।

[2] कल्पसूत्रप्रवृत्तावुक्तमेव हेतु मन्यन्ते भाष्यकारादय ;—दर्शपूर्णमासौ व्याख्यास्याम इत्यत्र व्याख्याया आवश्यकत्वोपपादनाय 'तत्र कश्चिद्ब्रूयात् मन्त्रब्राह्मणव्याख्यातत्वाद्दर्शपूर्णमासयो. अनर्थकस्सूत्रकारयत्न इति, तच्च न; दुर्ज्ञानत्वाच्छ्रुत्यर्थस्याद्यतनै., अनेकविध्युपसंहारस्य च । अतो नानर्थक इति धूर्तस्वामी (१० पृ) ।

एवं बोधायनकल्पव्याख्यारम्भे—

'ब्राह्मणाना बहुत्वात् एकैकस्या शाखायां परिसमाप्तत्वात् अर्थस्य च दुरवबोधत्वात् संहृत्य विवरणार्थं सुखं बुद्ध्वा कर्माण्यनुष्ठाय फलं सर्वे प्राप्नुयुरिति कल्प आरब्ध आचार्येण' इति भवस्वामी ।

एवं आश्वलायनश्रौतदेवत्रातभाष्येऽपि—

तत्र पुरुषशक्तिपरिहारमुपलक्ष्य शौनकादिभिराचार्यैः कल्पा. प्रणीता. इति ॥

प्रायोऽनृषयः क्वचिदेव च श्रुतर्षयश्च भाविन इति भगवता आपस्तम्बेन न्यबन्धि धर्मेषु, 'नियमेषु तपश्शब्दः, तदतिक्रमे विद्याकर्म निस्स्रवति ब्रह्म सहापत्यादेतस्मात्। कर्तपत्यमनायुष्यं च। तस्मादृषयोऽवरेषु न जायन्ते नियमातिक्रमात्। श्रुतर्षयश्च सम्भवन्ति केचित् कर्मफलशेषेण पुनस्सम्भवे यथा श्वेतकेतुः' इति १–५–५, १–६ सूत्रे। कर्तपत्यं-नरकपातहेतुरिति तत्र हरदत्तः।

## कल्पानां पाणिनिपूर्वकालिकत्वम्

परमर्षिप्रणीतानि कल्पसूत्राणि ऋषिभिरेव प्रचारमासेदिवांसीति भगवतः पाणिनेर्वचसा प्रतीमः। यतः 'तेन प्रोक्तम्'इति प्रवचनार्थकपदेन प्रक्रम्य तित्तिरिप्रभृतीन् वेदप्रवक्तृनिव कल्पप्रवक्तृनपि 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति स्मरति।

यद्यपि 'पुराणानि कल्पान्' इत्यस्नायमान इव कल्पशब्दस्सूत्रेऽपि प्रयोगदर्शकवेदभागपर इति तस्य च प्रवचममप्याम्नाय इव स्वारसिकमिति च वक्तुं शक्यते, तथाऽपि 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' इति सूत्रे [1] कल्पसूत्रनिबन्धानुवादिनो मीमांसादर्शनप्रवर्तकस्य जैमिनेराचार्यं बादरायणं निर्दिशन् कल्पसूत्रप्रवचनपरम्परायाः स्वप्राचीनतां बाढमेवानुमन्यते पाणिनिः।

'काश्यपकौशिकग्रहणं कल्पे नियमार्थम्' इति वदन् वार्तिककारःकात्यायनश्च कण्ठत एवाह तत्प्राचीनताम्।

कल्पसूत्रनिबन्धेषु च आपस्तम्बीयोऽप्यन्यतमः प्रथते। निबन्धोऽयं पाणिनेरतिप्राचीन इति निश्चिते भाष्यकृत्सम्मतिं दर्शयामः;—'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रे 'सन्मात्रे च ऋषिदर्शनात्' इति वार्तिकम्। तत्र च भाष्यम्;—सन्मात्रे च ऋषिर्दर्शयति मतुपम् 'यवमतीभिर्यूपं प्रोक्षतीति' इति। इदं च वाक्यम् आपस्तम्बकल्पे सप्तमप्रश्ने नवमखण्डे नवमसूत्रे 'अग्रेणाघटं प्राञ्चं यूपं निधाय' इत्यारभ्य 'यूपं प्रक्षाल्याथैनं यवमतीभिः

---

[1] जैमिनेः कल्पनिबन्धानुवादिता चाग्रे व्यक्ती भविष्यति।

प्रोक्षति' इति दृश्यते। एनमित्यस्य विवरणतया यूपशब्दः प्रयुज्यते पतञ्जलिना॥

कोऽत्रापस्तम्बः कदाऽसौ ?

पतञ्जलिना कल्पसूत्रवाक्यानामृषिवाक्यत्वोक्तेः पाणिनिनापि पुरातनप्रोक्ततया कल्पसूत्राणामनुवादात् ऋषिकुलस्य कल्यादि ४५० वर्षान्ततायास्सिद्धत्वात् ऋषिप्रणीतानां कल्पसूत्राणां कल्यादितः ४५० वर्षान्ता प्राचीनता दृढं निश्चीयत इति तु भगवद्दत्तः।

याज्ञवल्क्यश्च—

यमापस्तम्बसंवर्ताः कात्यायन बृहस्पती।
पराशरव्यासशङ्खलिखिता दक्षगौतमौ॥
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः॥

इति स्वप्रवर्तनीये धर्मनिबन्धे प्राचीनधर्मनिबन्धप्रवर्तकान् स्मरन् तेष्वन्यतमं कलयत्यापस्तम्बम्।

अत्राह बोधायनकल्पव्याख्याता यज्ञेश्वरः—

मेधां बोधायनो वो वितरतु सहितष्षष्टिसाहस्रशिष्यैः
यस्यापस्तम्ब एकाधिकशतयजुषां पारगो मुख्यशिष्यः।
सूत्रं प्रायुङ्क्त नैकक्रमविधिनिपुणाध्वर्युनानाप्रयोग-
व्यक्तिज्ञानोपयुक्तस्फुटमृदुगहनप्रौढसन्दर्भगर्भम्॥
कल्पामृतं क्षितिसुरप्रकराय योऽदात्
वेदाम्बुराशिमधिमथ्य निजप्रभावात्।
बोधायनाय मुनिवन्दितपादपद्म-
द्वन्द्वाय कण्वतनयाय नमोऽस्तु तस्मै॥

इति। प्रायश्चित्तविच्चिन्तननाम्नि निबन्धे च—

बोधायनं जैमिनिं च कौषीतक्याश्वलायनौ।
वाधूलकापस्तम्बादीन् नौमि शाखाप्रवर्तकान्॥

इति शाखाप्रवर्तकेष्वापस्तम्बगणनां दर्शयति। बह्वृचशाट्यायनिपैङ्गिछन्दोगादि पदपुरस्कारेण ब्राह्मणानां प्रमाणतां प्रदर्शयन् भगवानापस्तम्बः शाखाविभाजकाद्भगवतो वेदव्यासादनन्तरकालिक इत्यप्यध्यवसातुमस्त्यवसरः।

पराशरेण सह धर्मशास्त्रप्रवर्तकेषु परिगणनं व्यासपूर्वकालिकतामेव सुघटयति ।

तत्तत्तपस्विजनसुकृताधीनपरमपुरुषानुग्रहनिबन्धनस्तत्तन्मन्त्रप्रादुर्भवोऽपि 'विश्वामित्रस्य सूक्तं भवत्येतेन वै, इत्यादिषु 'ब्रह्म स्वयम्भवभ्यानर्षत् तदृषीणामृषित्वम्' इत्यादिषु च श्रुतिभिरेवावेद्यते। एष एव च न्यायो ब्राह्मणेष्वपि। तत्तदुपदेशपरम्परया च प्रचारः। तदुदाहरणमपि तदनुरोध्येवेति नावश्यं शाखाविभागोत्तरभावितैवेति निश्चयसंभव ।

ननु तथाऽपि विस्तृतवेदराशिमध्यसंगृहीतांशचतुस्संहिताकरणेन प्रत्येकं शिष्यप्रवर्तकाद्भगवतो व्यासादनन्तरं वैशम्पायनशिष्य परम्पराप्रवचनविषयशाखाभेदेषु ;—

'तत्र तैत्तिरीया नाम द्विभेदा भवन्ति औखाः खाण्डिकेयाश्चेति। तत्र खाण्डिकेया नाम पञ्चभेदा भवन्ति कालेता हैरण्यकेशी भारद्वाजी आपस्तम्बी चेति' इति चरणव्यूहे द्वितीयखण्डे आपस्तम्बप्रवर्तितशाखायास्तन्नाम्ना व्यवहारमूलप्रसिद्धिकीर्तनात् शाखाचार्यरूप एव भगवानापस्तम्बः कल्पनिबन्धकृदपीत्यवगन्तुं शक्यते। बादरायणशिष्यपरम्पराघटक एव भगवानापस्तम्बः कल्पसूत्रकृदपीत्यपि तदीयकल्पसूत्रेषु 'इति वाजसनेयिनस्समामनन्ति, एके, कङ्कति ब्राह्मणम्, काठकाः, कालबविब्राह्मणम, कौषीतकिनः, छन्दोगब्राह्मणम्, ताण्डकम्, ताण्डिनः बह्वृचब्राह्मणम् भाल्लविकम् वाजसनेयकम्, शाट्यायनकम्, शैलालिब्राह्मणम्, शाट्यायनिब्राह्मणम्' इत्यादि शाखाविभागोत्तरभाविबह्वृचादितत्तत्प्रवर्तितवेदभागानां प्रमाणतां प्रकटयता भगवताऽपस्तम्बेनैवाविष्कृतं भवति इति चेन्न; प्रमाणतया परिग्रहस्य तत्तद्दृष्टभागपरतयाप्युपपत्तेः वक्ष्यमाणोपजीवनक्रमेणप्राचीनतासिद्धेश्च।

प्रवक्तृपरम्परा परिगणितश्च भगवानन्य एवापस्तम्ब इत्यवधेयम्।

शुल्बप्रश्ने करविन्दाधिपेन—तक्षशास्त्रे गार्ग्यागस्त्यादिभिरङ्गुलिसंख्ययोक्तं रथपरिमाणश्लोकमुदाहरति इति सूत्रावतारणदर्शनात् गार्ग्यागस्त्याद्युत्तरकालिकोऽयमापस्तम्ब इत्यप्यवगम्यते ।

## कल्पभाष्यप्रवृत्तिः.

सानुकम्पमेव प्रणीतान्यपि कल्पसूत्राणि कालवशात् दुरूहार्थतां गतानि तैस्तैः चिरगृहीतगुरुवरिवस्या संप्राप्तसरहस्यवेदार्थैः निस्संशयानुष्ठानानुष्ठापनप्रवीणैः परिचयम्लानिं संभवन्तीमालोच्य भाष्यादिप्रणयनेन समुज्जीव्यमानानि स्वार्थबोधनक्षमाणि जाग्रति ॥

तत्रापस्तम्बकल्पसूत्रबृन्दस्य धूर्तस्वामिकपर्दिस्वमिनौ भाष्यकारौ रामाग्निचित् वृत्तिकारश्च परिरक्षकतायां संप्रतिपद्येते ॥

## कल्पानां मीमांसादर्शनपूर्वकालत्वमूलत्वे ॥

कल्पसूत्राणि च जैमिनीयमीमांसादर्शनादपि पुरातनानीति तन्मूलभूतानीति च निश्चयः । यतः,—'नास्यैतां रात्रिं कुमाराश्च न पयसो लभन्ते' इति (१-४-२) आपस्तम्बीयं कल्पसूत्रम् 'तथा पयः प्रतिषेधश्च कुमाराणाम्' इति (११-१-५१) सूत्रेणानुवदत्यर्थतः । एवम्,—

| आपस्तम्बस्य | | जैमिनि |
|---|---|---|
| नर्तुं सूर्क्षेन्ननक्षत्रम् (इति (५-१-२१) सूत्रम्) | | ऋतुनक्षत्रातिक्रमवचनात् (५-४-६) इति |
| मन्त्रान् जपत्यकरणानुपतिष्ठते | (४-१-३) | मन्त्राश्चाकर्मकरणास्तद्वत् इति मन्त्राणांकरणार्थत्वात् इति. (३-८-१५) (१२-३-२५) |
| पितृयज्ञः स्वकालविधाना (परि २-३५) | ,, | तथैवानुपूर्व्यादनङ्गं स्यात्. (४-४-१९) |
| तुल्यवच्च प्रसंख्यानात् | (,, २-१६) ,, | ,, (४-४-२०) |
| प्रतिषिद्धे च दर्शनात् | (,, २-३७) ,, | ,, (४-४-२१) |
| स्वामिनोऽग्नेरित्यादि | (,, ४-१) ,, | न देवताग्निशब्दक्रियम् इति (६-३-१८). |

अर्थद्रव्यविरोधेऽर्थो बली- (परि ३-४६) ,, तयैवानुपूर्व्या (६-३-३९)
याान्

द्रव्यसंस्कारविरोधे ,, ,, ,, (६-३-३८)

अथ कर्माण्याचारा- (आप गृ सू) आचाराद्गृह्यमाणेषु (६-२-३०)
दित्यादि इति

नैयमिकं ह्येतदृणसंस्तुतम् (वासिष्ठसू ) सोमविद्याप्रजमृणवाक्येन (६-२-३१)

इत्यादिरूपेणापस्तम्बकल्पं तस्यान्यस्य च गृह्यं चानुवदन् ततोर्वाऽचीनोऽवगम्यते ।

एवम् ;—

| | | | | |
|---|---|---|---|---|
| अधिकारिणं प्रथमेऽध्याये | का. १-२५ | सू | जै | षष्ठेऽध्याये |
| यागहोमभेदम् ,, | २६-३० | ,, | ,, | २-२७-२८ |
| नित्यान्यनुष्ठेयानि ,, | २७-४१ | ,, | ,, | ६-३-१-७ |
| साङ्गकाम्यानुष्ठानम् ,, | ४२ | ,, | ,, | ६-३-८-१० |
| प्रायश्चित्तसाफल्यम् ,, | ४३ | ,, | ,, | ६-३-७ |
| मन्त्रशब्दार्थम् ,, | ४५ | ,, | ,, | २-१-३२ |
| यजुर्लक्षणम् ,, | ४६ | ,, | ,, | २-१-३७ |
| अध्याहारहेतुम् ,, | ४७ | ,, | ,, | २-१-४८ |
| मन्त्रेयत्तानिर्णयम् ,, | ४८ | ,, | ,, | २-१-४७ |
| मन्त्रकर्मसंबन्धकालम् ,, | ४९-५३ | ,, | ,, | १२-३-२५ |
| उपांशूच्चारणम् ,, | ५४-५५ | ,, | ,, | २-१-४१ |
| बर्हिश्शब्दशक्तिम् ,, | ५६ | ,, | ,, | १-४-१० |
| प्रकृतिविकृत्यर्थताहेतुम्. ,, | ७३ | ,, | ,, | ६-८-९ |
| प्रतिनिधिविचारम् ,, | ८६-१०० | ,, | ,, | ६-३-१३-४१ |
| अर्थद्रव्यादिबलाबलम्. ,, | १०१-१०४ | ,, | ,, | ६-३-३९ |

| | | | | | |
|---|---|---|---|---|---|
| अङ्गकर्मणां क्रमम् | ,, | १०५–११३ | ,, | ,, | ५–१–१४ |
| क्रमनियामकबलाबलम् | ,, | ११४-१२१ | ,, | ,, | ५–१–१–५ |
| अवत्तनाशे कर्तव्यम् | ,, | १२२–१२६ | ,, | , | ६–४–१–२ |
| सत्राधिकारनिर्णयम् | ,, | १३४–१४८ | ,, | ,, | १०–६–४५–५० |
| तन्त्रविचारम् | ,, | १४९–१६५ | ,, | ,, | ११शेनाध्यायेन |
| आवृत्तिहेतुम् | , | १७५ | , | ,, | ,, |
| विकल्पसमुच्चय व्यवस्थाम् | ,, | १७६–१९० | ,, | ,, १२ | ,, |
| मन्त्रेषु स्वरव्यवस्थाम्. | ,, | १९१–१९४ | ,, | ,, | १२–३–२०–२२ |
| दानसंयोगि संख्याम् | ,, | १९५ | ,, | ,, | १२–४–९ |
| समुच्चयविकल्पौ | ,, | १९६–१९९ | ,, | ,, | १२शोऽध्याये |

इति वेदार्थनिर्णयोपयोग्यर्थमीमांसनं कल्पसूत्रकृत्कात्यायनः पूर्वपूर्वकल्पनिबन्ध प्रवचनादिप्राप्तं दर्शयति; तदेव च विस्तरेण जैमिनिः।

एवम्—

| | | | | | | |
|---|---|---|---|---|---|---|
| जैमिनिः | विधिलक्षणम् | १–१–१ | सत्याषाढः | १ प्र | १ | पटले |
| ,, | ब्राह्मणलक्षणम् | २–१–३२ | ,, | ,, | ,, | ,, |
| ,, | मन्त्र ,, | ,, | ,, | ,, | ,, | ,, |
| ,, | मन्त्राणां यज्ञाङ्गताम् | १३–३–२५ | ,, | ,, | ,, | ,, |
| ,, | ,, परिमाण निर्णयम् | २–१–४६ | ,, | ,, | ,, | ,, |

| | | | | | | |
|---|---|---|---|---|---|---|
| ,, | फलार्थपुनश्श्रवणे कर्मभेदम् | २–१–३६ | ,, | ,, | ,, | ,, |
| ,, | पदार्थानुसमयादि | ५–२–१–१२ | ,, | ,, | ,, | ,, |
| ,, | अधिकारिनियमम् | ६–१–२–१–१२ | ,, | ,, | ७ | ,, |
| ,, | प्रतिनिधिविचारम्. | ६–३–१३–४१ | ,, | ,, | ,, | ,, |
| ,, | मोमाधाने ऋत्वाध्यनीक्षाम् | ५–४–५–९ | ,, | २ | १ | ,, |
| ,, | पवमानहविर्विषयव्यवस्थाम् | ११–४–१२–१५ | ,, | ,, | ५ | , |
| ,, | दर्विहोमपदार्थम् | ८–४–१–२८ | ,, | ,, | ८ | ,, |
| ,, | अतिदेशविचारम् | ८ अध्यायेन | ,, | ,, | ,, | ,, |
| ,, | ऊहविचारम् | ९ ,, | ,, | ,, | ,, | , |
| ,, | पशोः आमिक्षा- | ८–२–१०–१४ , | ,, | ४ | ५ | ,, |
| ,, | याश्च प्रातर्दोहविकारताम्. | ,, १९–२३ | | | | |

इत्येवं स्वीये कल्पे वेदार्थनिर्णय परिकरं निरूपयति जैमिनिः तमेव च सत्याषाढः ।

पवमनादेः कालात्प्रवहन् अनुष्ठानतत्प्रमाण तत्प्रचार प्रकाराणां विचारः तैस्तैः कल्पकारैः संक्षेपविस्तराभ्यां यथायथं निरूप्यते इति बहुषु कल्पनिबन्धेषु को वा यज्ञकर्मापेक्षितो न्यायनिर्णयादिरनिरूपितोऽवशिष्यते इति महाप्राज्ञमुनिजनपूर्वपूर्वक्षुण्णेनैव पथा जैमिनिरप्याचार्य· संचरमाण· बहुसंग्राहिणं विपुलं दर्शनं प्रवर्तयामासेति विश्वसिमः। जैमिनिसूत्रेषु तत्तदृषिनामग्रहणमप्येतदुपपादयति ।

एवं बादरायणोऽपि—'पारिप्लवार्था इति चेन्न विशेषितत्वात्' इति सूत्रे पारिप्लवशब्देन (२० प्र ६ खं ७ सूत्रे) आपस्तम्बेन यानि, 'दक्षिणेनाहवनीयं होता हिरण्यकशिपावुपविशति पारिप्लवं भौवन्यवं चाचिख्यासन्' इत्यनेनानूदितानि, आश्वलायनेन च,—दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे पारिप्लवमाचक्षीत' इत्यादिना नवाहसमापनीयानि यान्याख्यानशंसनानि विहितानि तान्येवानुवदतीति ततोऽर्वाचीनमेव बादरायणीयं दर्शनमपि। गृह्यतात्पर्यदर्शनेऽपि;—

नानासाधनकाः नानाशाखास्थाङ्गकाः मीमांसान्यायसहस्रनिर्धार्यवचनव्यक्तिकाः मन्दबुद्धिभिरिदानीन्तनैर्दुर्ज्ञानाः, अज्ञाने चानुष्ठातुमशक्ताः कथं चन प्रत्यवेयुरिति कृपाविष्टचेतस्कतया सूत्रकारेण 'यज्ञं व्याख्यास्याम' इति परिभाषायामेकविंशतियज्ञान् संक्षेपतो व्याख्याय तावन्मात्रेणानुपयोगात् 'अथातो दर्शपूर्णमासौ' इत्यारभ्य श्रौता हविर्यज्ञसंस्थाः क्षामवत्यादयो नैमित्तिकाः प्रसङ्गात्काम्याश्च विशेषतो व्याख्याताः इत्याह सुदर्शनाचार्यः।

अत्र च सर्वविधमीमांसान्यायबृन्दमपि पूर्वपूर्वकल्पसूत्रप्रवर्तकमुनिपरम्परया संक्षेपविस्तराभ्यां प्रवर्त्यमानं प्रचरतीत्यभिप्रायः।

सति चैवं यज्ञशास्त्रव्याख्या तत्परिगृहीतवेदव्याख्यानिबन्धा इव मीमांसादर्शनमपि यज्ञशास्त्रव्याख्यारूपमेवेति सिद्धं भवति।

इत्थं च यज्ञशास्त्रव्याख्याभिरखिलाभिरैककण्ठ्येनैव वेदार्थेतिकर्तव्यता पूरणीयेति सिद्धम्।

यज्ञशास्त्रव्याख्या तत्परिगृहीतवेदव्याख्या तथा विधमीमांसादर्शनरहस्य वेदिन एव यज्ञशास्त्रभूतकल्पसूत्रविवरणे प्रभवन्ति।

तथाभूता एव धूर्तस्वामि कपर्दिस्वामि रामाण्डारा आपस्तम्बीयकल्पसूत्रनिबन्धे भाष्यकारवृत्तिकाराः यज्ञानुष्ठानमार्गसंरक्षकविपुलनिबन्धप्रणेतारः प्रथन्तेतराम्।

,, सायमुपक्रमं प्रातरपवर्गमग्निहोत्रं सूत्रकाराणां मतम्; सायमादिकामो द्रव्यनियमश्च। मीमांसकानां तु कर्मनामैवाग्निहोत्रमिति न समुदायस्य, तेषां यस्मिन् कस्मिन् होमे आरम्भः। (भा.)

,, आग्रयणेन यक्ष्ये स्वर्गं लोकमवाप्नवानीति सङ्कल्प आदौ मीमांसकमत्या; यत्रानाम्नातः कामः न तत्र कामयितव्यमित्युपदेश.। (भा).

,, आगन्तुकत्वादाग्रयणस्य अविरुद्धा अज्यान्यः क्रियन्ते। मीमांसकानामाग्रयणस्य प्राधान्य-मित्यनित्यस्य प्रयोग इति सगुणविगुण-साध्या प्रकृतिरिति तत्र तस्य सर्वतन्त्रम्। (भा).

,, यद्यपि मीमांसकैः वैश्यदेव्यामिक्षासाहचर्यात् दण्डिन्यायेन वैश्वदेवशब्दस्य प्रवृत्तिरुक्ता। अत्र ब्राह्मणोक्तं निर्वचनमाश्रियते। (भा).

,, षडृत्विजः पशुबन्धस्य कर्मकुर्वन्ति। यद्यपि शमिता श्रपणं करोति, तथा न भवत्यृत्विक्। मीमांसकैरध्वर्योरेव शमितृत्वे उक्तेऽपि विश्वसृजामयने 'शमितोग्रो विशांपतिः' इति अध्वर्योरन्यस्य शमितृत्वदर्शनात् आन्यश्शमिता, तस्य ऋत्विक्त्वं नास्ति। (वृ).

,, तस्मादनागते मुख्यकाले तन्त्रमारब्धमिति ज्ञानं निमित्तम्। तस्यावस्थाभेदो निरूढं गृहीतमिति। मीमांसकानां तु निरूढादीना-मप्यविवक्षा अकाले तन्त्रप्रवृत्तिमात्रं निमि-त्तम्; (वृ).

१३ ,, अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि; अग्नीवरुणौ स्विष्टकृतौ यजेतिमीमांसकाः (भा)

१९ ,, अग्नीदौपयजानगारं हरन्त्यादि पाशुकम् यद्यपीष्टिविधिः; प्रणीताविमोकमार्जनान्त--वचनादेव मीमांसकाः (भा)

,, नष्टा पुनरागता गृहान् सा च दक्षिणा सत्त्ववतामिति मीमांसकाः प्रधानदक्षिणान्तर्भावादिति। तत्तु नोपपद्यते तस्मादङ्गभूतैक दक्षिणा (भा).

एवमादीनि बहून्युदाहरणानि द्रष्टव्यानि।

स्पष्टमेव चाब्रवीन्महादेवः—

याज्ञिकास्सूत्रकारणां मतं बुद्ध्वा स्वयं तथा।
न्यायैस्तत्सूचितैरेव द्रढयन्त्यकुतोभयाः॥
प्रसिद्धिमनुगृह्णन्तस्ते मान्याश्श्रौतकर्मणि॥ इति॥
तज्जैमिनिमतापेतमिति मे दूषणं न हि॥ इति॥

जैमिनीयैस्तु पशुप्रकृतित्वमाशङ्क्य दूषितं न्यायेन, तत्तु अस्मच्छास्त्रोपदेशसूचितन्यायव्याख्याने सूत्रतात्पर्ये दर्शितम्। अतोऽस्मत्सूत्रेऽयमेव प्रकारो ज्ञेयः। इति--

न्यायोपदेशयोः केचित् विकल्पं ब्रुवते न तत्।
युक्तं न्यायोऽनुमानं तु श्रुतितुल्यं कथं भवेत्॥

इति च। अतः मीमांसकोक्तेषु स्वस्वसंप्रदायाविरुद्धमेव ग्राह्यमिति याज्ञिकपक्षः।

देवताविग्रहादियज्ञशास्त्रव्याख्यातृपरिग्राह्यमेव॥

यश्च जैमिनीयव्याख्यातॄणां पराक्रमः—

कथमपि न देवताया विग्रहादिस्वीकारः। शब्दमात्रं देवता। अर्थस्तु चेतनोऽचेतनो वा कश्चित् स्वीक्रियते; न तु विग्रहादिमान्। उपासनादौ परं ध्यानमाहार्यं तस्य (भाट्टदी· ९-१-४) इति।

देवताया विग्रहाद्यस्ति, न तु तस्याः फलप्रदत्वं विकल्पासहत्वात् (शास्त्रदी) इति च। सोऽयं वादश्शबरस्वामिनमारभ्य मीमांसकैः जैमिन्यभिप्राय इति कृतसंकेतैः यथामतिबलं न्यायादिनिरूपणैर्व्यावर्ण्यमानः प्रचरति।

तेषु च वादिषु मूर्धन्यः खण्डदेवः स्वयं समुचितसूत्रतात्पर्यपरिचिन्तनशक्तोऽपि शबरादिपूर्वपूर्वमीमांसकपरम्परावचस्समाश्वासप्रचारमात्रधिया वादमिममुपवर्ण्य 'मम त्वेवं वदतो वाणी दुष्यतीति हरिस्मरणमेव शरणम्' इति मुक्तकण्ठमाजूघुपत्। तदेतच्छरणवरणं निखिलपूर्वमीमांसकवर्गप्रतिनिधिस्थानस्थितेन तेन कृतम्।

न खलु जैमिनेराशय इति वर्णनमात्रेण प्रत्यवायभिया शरणवरणं वस्तुतो देवतातत्प्रसादादिनास्तिक्यहतमतेः प्रवृत्तिगोचरस्स्यात्।

मीमांसासारसर्वस्ववेदि परमधार्मिकविद्वद्बृन्दपरिगृहीतकल्पसूत्रव्याख्यातृवेदव्याख्यातृसूक्तिसिद्धं भगवतो वेदपुरुषस्य निगूढमाशयं स्वपूर्वपुरुषपरम्परोपदेशपरिप्राप्तं देवतातत्प्रसादादि तात्विकताविषयं जानात्येव खण्डदेवोऽपि।

परिपाल्यमानप्रस्थानपरिचयप्राथमिकश्रद्धामूलकस्य साहजिकपाटवातिशयस्य सतो दुर्निरोधतया परं तथा वादोद्घोषः।

न च जैमिनौ ब्रह्मवादिनामग्रेसरे कश्चिद्दोषमारोपयितुं सचेता उद्युङ्क्ताम्।

नित्यनिषिद्धयोरिष्टानिष्टफलं नास्तीत्यादिनिष्ठभर्तृमित्रादि निरसनेन मीमांसास्तिक्यसंपादनैदम्पर्यम्,

निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति॥

इति अधिकारिभेदभिन्नस्वर्गमोक्षपुरुषार्थशास्त्रार्थनैर्भर्यप्रदर्शनेन तदनभ्युपगमनिन्द्यतां च प्रकटयन्तः, 'यदा अध्येतारोऽध्यापयितारश्च पश्र्वेस्था वा वेदवाक्यतदर्थरूपाण्यालोचयन्ति तदा स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति। तावता तु बाह्यतार्किकाणां प्रतीतिभावना नोत्पद्यत इति तत्तत्प्रतिपादनक्षमवेदोत्थापित

न्यायोपनिबन्धनात् मीमांसकैः केवलं यश एव पीतम्, इति च वदन्तो (१-३-६) वार्तिककाराः संप्रतिपन्नवेदार्थवित्संमतन्याय-निबन्धनरूपा मीमांसेति, मीमांसकानां च बाह्यतार्किकतन्मार्ग-प्रविष्टप्रतिबोधनाधिकारो महानेवारोपितश्शिरसि, न तु परम-वैदिकपरिगृहीतपथकदर्थनं कर्तव्यतापि इति च मन्यन्ते।

सनातनधर्मानुष्ठानमार्गनिष्ठाश्च अनुष्ठापकवचोबृन्दसामरस्य धीपरिभूषितहृदया. कल्पसूत्रव्याख्यातार एवमातिष्ठन्ते, तथाहि—

तृतीयप्रश्ने—पिष्टलेपफलीकरणहोमविषये—'अस्य होमस्य आदित्यो देवता हृदयान्तरपुरुषो वा इति वृत्तिकृत् रामाण्डारः।

तुरीयप्रश्ने—वनस्पतीज्याभिराराधनं करिष्यामीति इति, आहुतिभिराराधितत्वात् इति च भाष्यकृत् धूर्तस्वामी।

तुरीयप्रश्ने—ज्योतिष्मतीष्ट्या यस्याग्निहोत्रार्थमुद्धृतोऽग्निरहु-तेऽग्निहोत्रेऽनुगच्छति तस्योत्पत्तिः (भा)

य पूर्वमनुगत आहवनीयोऽग्निः स एवायमग्नि योऽत्र देवताभूतोऽग्नि. । पूर्वमनुगतस्यावक्षाणस्थस्य ज्योतिर्मात्रं विनष्टम्। तत्राहवनीयाग्नेः ज्योतिष्मतो विनष्टस्य देवतात्वेना-न्वयात्। यदेवास्य ज्योतिः परा पतितं तदेवावरुन्धे' इति विनष्टस्य ज्योतीरूपस्यादृष्टात्मकस्य प्रतिसमाधानार्थेयमिष्टि. इति तत्रवृत्तिः।

तुरीये प्रश्ने—उपावरोहेति मन्त्र उक्ते गार्हपत्यादिर्देवताभूतोऽ-ग्निर्लौकिकमुपसंक्रामति इति भाष्यम्।

षष्ठे प्रश्ने—होमेनाराध्य आशीर्भिरुपस्थानेन याचते, देवता कोपप्रसङ्गात् इति वृत्तिकृत्।

षष्ठे प्रश्ने—नवानामग्रप्रापणं देवानाम्, तदाग्रयणकर्म इति धूर्तस्वामिभाष्यम्।

सप्तमे प्रश्ने—वैश्वदेवशब्दनिर्वचने—अत्रेदं प्रयोजनम् आग्ने-याद्यष्टकर्मसमुदायेन अग्न्याख्यः परमात्मा यष्टव्य इति ज्ञानम् इति वृत्तिः।

अष्टमे प्रश्ने—प्रजापतिर्मनसान्धोच्छेत इति होमेषु तत्तदव-स्थापन्नसोमात्मना यज्ञदेवतात्वात् सोमस्य देवतारूपत्वम् ॥ इति वृत्तिः।

द्वादशे प्रश्ने—इन्द्र एव देवता परमात्मरूपः आत्मन इन्द्राय इति श्रुते : इति वृत्तिः।

इष्टिहौत्रकल्पे—'स्वं महिमानमावह' इति मन्त्रं प्रगृह्य स्वमते तु सर्वदेवताऽऽवाहनाङ्गत्वेन सर्वदेवतानां स्वकीय महिमान-मावहेति वाक्यशेषः। 'एष वै देवानां महिमा यो विष्णुः पर-मेष्ठी' इति सर्वदेवतान्तर्यामिणं विष्णुम् इति वृत्तिः।

तुरीये प्रश्ने—असति कामे कामशब्दो लुप्यते। सत्यपि वा वर्जनं श्रेयः। तद्धि परमं परदेवताप्रीणनम् परमनिःश्रेयसायेति सर्वशास्त्राणां मर्यादा। यथोक्तं गीतासु—

कार्यमित्येव यत्कर्म—सात्विको मतः ॥ इति।

सूत्रकारश्चाह—'नेमं लौकिकमर्थं पुरस्कृत्य दर्मांश्चरेत्+अनूत्य द्यन्ते इति। श्रुतिश्च अकामहतस्यानन्दानुपदिशति' इति च वृत्ति कृद्रुद्रदत्तः।

एवं 'परमात्मरूपिणेऽग्नये' इति; 'एवं सर्वत्र नेयम्' इति देवतावाच्यग्न्यादिशब्दानां परमात्मपर्यवसायिताम्।

नाना पाठकैर्ब्रह्मकथा कर्तव्या 'इदं वा अग्रे नैव किञ्चनासीत् इत्याद्याः इति ब्रह्मविचारम्।

'महदेतत्प्रजापतेराराधनम् इति तदाराधनं च दर्शयति कपर्दिस्वामी।

कल्पान्तरकारा अपि कर्मसाद्गुण्यावहां देवतास्तुतिं निबध्नन्ति; यथा द्राह्यायणः—'ब्रह्मोद्यं वदन्ति, गायत्रीं त्रिर्ब्रूयुरिति धान अय्य चतुर्होतारमभिप्रेत्यैतदिति गौतमः' इत्यादि च। तद्भाष्य-कृत् धन्वी तस्य तस्य परब्रह्मप्रतिपादकतामाह।

एवमादिभाष्यवृत्तिपरिशीलने शब्दातिरिक्ता देवता तदारा-धनं तत्प्रीतिकोपौ तस्य हविरुपभोगः फलप्रदत्वं च एतत्सर्वानुगुण-विग्रहवत्त्वं च श्रुतितात्पर्यसिद्धमिति निर्विशयमेवावगम्यते।

न चैवं विधसत्कर्मकलापोपदेष्टृपरिगणितो जैमिनिर्मुनिर्निस्स्वरूपां देवतां वेदार्थ इत्युपदिशेत् !

आश्वलायनप्रयोगदीपिकाकृत् मञ्चनाचार्योऽपि द्वादशे प्रश्ने 'यद्यपि प्रकृतिभावनिर्णये देवतासामान्यं दुर्बलमिति स्थितम्, तथाऽपि औपमानिकद्रव्यसामान्यात् प्रत्यक्षं देवतासामान्यं बलवदेव इत्याह । त्रिकाण्डमण्डनव्याख्याकारोऽपि देवताविग्रहादि निराकरणस्य नावमिकस्य उत्सूत्रां समर्थयते । (३१ पृ)

सत्याषाढकल्पव्याख्याता महादेवोऽपि वैजयन्त्याम्—

इन्द्राद्यर्था न लौकिकाः येनेन्द्रादिपदानां लोकतश्शक्तिग्रहस्स्यात् । किंतु तेऽपि शास्त्रादेव ज्ञेया । शास्त्रं च विग्रहवत एव ब्रूते । तत्रैव शक्तिग्रहो न तु विग्रह विधुरे व्यवहारोऽस्ति । न च शब्द एव तावद्देवतास्वरूपम् पदार्थत्वेन प्रमाणाभावात् तादृगप्रतीतेश्च । तस्मात् यादृशेऽर्थे शक्तिग्रहः तादृगेव तत्तद्देवताशब्देन वाच्यम् । तत्रैव देवतात्वेन विधि· । बादरायणेनाप्ययमंशः प्रतिपादितः इत्याह ।

सायणाचार्या अपि वेदभाष्ये देवताविग्रहादि समर्थयन्ते ।

## देवताविग्रहादि जैमिनिसंमतमेव

कथमिदं देवताविग्रहादिनिराकरणस्योत्सूत्रत्वादिकं महानिबन्धाक्षेपरूपं घटेत ? कश्च तत्समर्थनप्रकारः ? इति चेत्;

अत्रेदमवधीयताम् श्रीमन्निगमान्तगुरूणां जैमिनिहृदयावेदनेन निर्दैवतवादि प्रतिबोधनम् (तत्वटीकायाम्),—

'अपि चैवं नवमाद्यपादे फलदेवतयोश्च । न चोदनातो हि ताद्गुण्यमिति प्रसक्तयोः फलदेवतयोर्मध्ये देवताविषयाणि देवता वा प्रयोजयेत् इत्यादीनि सूत्राणि यानि तानि व्याकुर्म·—देवतोद्देशेन देयं द्रव्यं देवता न प्रयोजयेत् कुतः ? कृष्यादिवत्फलसाधनभूतक्रियाया एव प्रयोजकत्वोपपत्तेः तत्राह—

सू. देवता वा प्रयोजयेत् अतिथिवद्भोजनस्य तदर्थत्वात्, (९-१-६) वा शब्दश्शङ्कानिवर्तकः । हविरुद्देश्या देवता फलार्थिनं

स्वाराधने प्रयोजयेत् । कुतः भोजनस्य तदर्थत्वात्- भोजनस्य हविषस्तत्समर्पणस्य च तदर्थत्वात्–तच्छेषत्वात् । संप्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते—

क्रियाप्रधानवाक्येषु न्यग्भूतापि हि देवता ।
तत्तन्मन्त्रादिसामर्थ्यादार्थप्राधान्यशालिनी ॥

न च वाच्यं विग्रहादिपञ्चकायोगान्न प्रयोक्त्री देवतेति, स्मृत्युपचारान्यार्थदर्शनैरबाधितैस्तत्सिद्धेः । अतो यथाविग्रहादिमानतिथिराराध्यः स्वार्थं स्वाभीष्टमुपचरणं प्रयुङ्क्ते तथा देवतापीति ।

'अर्थवत्त्वाच्च' (९-१-७) अर्यते प्राप्यत इत्यर्थो विभूतिः अर्थ्यत इति वा । अतः तदभावादनाराध्या अनीप्सितप्रदत्वा दप्रयोजिकेति न शङ्क्यम् । परा खलु देवता सर्वस्येष्टे । तन्नियुक्ता चापरा यथाऽधिकारं तत्तद्विभूतीनाम् ।

तथाऽपि निरपेक्षा देवता न कुतश्चित्प्रीयेत न कश्चित्प्रीणाति ततः कथं प्रयोजिकेत्यत्राह—ततश्च तेन सम्बन्धः (९-१-८) ।

ततः—नैरपेक्ष्येऽपि नरदेवनीत्या दयौदार्यशालिन्याः परिचर्यमाणायाः प्रसेदुष्या देवताया एव हेतोः परिचरतां स्वाभीष्टफलेन सम्बन्ध स्मृत्युपचारादिभिरेवं सिद्ध इति पूर्वपक्षः ।

राद्धान्तस्तु—

अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् (९-१ ९) अत्र अपि वेति साधाङ्गीकार पक्षव्यावर्तनम् । यद्यपि देवताविग्रहादि पञ्चकं दुर्निषेधम् । द्रव्याद्यपेक्षया संप्रदानस्य प्राधान्यम् । यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यं सिद्धपरवाक्येषु च परावरदेवतयोस्स्वरूपमनन्यार्थमामनामः, तथाऽपि कर्तव्योपदेशेषु यज्ञादिरूपं कर्म फलसाधनतया चोदितत्वात् प्रधानं सत् साध्यतया बुद्ध्यारोहेण पुरुषं प्रवर्तयति । कृत्स्नं च देवतादिक्रियाशेषभूतम् ॥

ननु फलप्रदाया देवताया आराध्यत्वेन प्राधान्यमनुशोश्रूयामहे? अत्राह ;—गुणत्वे देवता श्रुतिः (९-१-१०) ।

हविः प्रदानं प्रति गुणीभूतां हि देवतामनुशृणुमः । मन्त्रार्थवादोपस्थापितं देवता प्रीतिरूपमपूर्वं चोदितस्य कर्मणः क्षणिकस्य

कालान्तरभाविफलद्वारतयोपादीयेत। अतो वास्तवप्राधान्यशालि-न्यपि देवता फलकामप्रवर्तक शाब्दप्राधान्यक्रियागुणीभूता न प्रधान्येन प्रयोजिकेति। अतिथेस्तर्हि कथं प्रयोजकत्वम्? इत्थमि-त्याह,—अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् (९-१-११) आतिथ्यं प्रत्यतिथेः प्रधानत्वं प्राप्तम्। अन्यथा हि तदर्थे कर्मणि प्रयोजकाभावात्तदभावस्स्यात्। तत्सपर्याविधिरेव प्रयोजक इति चेत्, तत्र प्रत्याह;—तस्य प्रतिविधानत्वात् (९-१-१२)।

अतिथ्यकर्मणो हि अतिथ्यागमनप्रतिविधानायैव चोदना।
क्रियाप्रवृत्त पुरुषसमाहूता तु देवता।
सन्निधत्ते तदिष्टार्थं न ततस्तत्प्रयुक्तता।
अतिथिस्तु स्वयं प्राप्तः स्वाभीष्टं च प्रयोजयेत।
तदिष्टानुविधानेन तत्सपर्यार्थचोदना॥

अत. प्राप्ताप्राप्तविवेकाददतिथिप्राधान्योक्तिरिति। यथा चातिथेर्वि-ग्रहादिमत्त्वे तदुपचरणानुष्ठानस्य न कदाचित् क्षतिः प्रत्युत स्वरूप-लाभ एव, एवं देवतायास्तद्वत्त्वेऽपि, न चात्र तत्प्रतिक्षेपसाफल्यं पश्याम.। गुणीभावसाधनेऽपि किं फलमिति चेत्, अनिर्धारित-वास्तवप्राधान्यानामपि कर्मश्रद्धा संमर्थनम् इति।

सूत्रेषु तावदेतेषु पूर्वपश्चिम पक्षयोः।
देवताविग्रहादेर्न प्रतिक्षेप्यत्वसूचनम्॥ १॥
शाबरे·पूर्वपक्षोक्त देवता विग्रहादिषु।
स्वतः प्रामाण्यवेदिभ्यस्स्वदते न निराकृतिः॥ २॥
स्मृत्योपचारादन्यार्थदर्शनैश्च स्वभाषितम्।
न वाङ्मात्रेण निह्नोतुं शक्यते नास्तिकेतरैः॥ ३॥
अदर्शन कुतर्काभ्यां श्रुतार्थानामपह्नवे।
चार्वाकादिमतापत्त्या सर्वोपप्लव संभवः॥ ४॥
श्रुतानां विग्रहादीनां कल्प्यत्वोक्तिश्च मोहजा।
श्रुतशक्त्याद्यभावस्य कल्पने गौरवं तु वः॥ ५॥

क्षणिकस्य फलद्वारं किं भवेदिति चिन्तने ।
द्वारक्लृप्तेर्वरं तत्र क्लृप्तद्वार परिग्रहः ॥ ६ ॥
देवतानां क्रियार्थत्वं कर्मणां च तदर्थता ।
मुख भेदेन सिद्धत्वान्न मिथो बाधमर्हतः ॥ ७ ॥
आदित्यादिमतीरङ्के स्थापयन् बादरायणः ।
देवतानां प्रधानत्वमर्थसिद्धमसूत्रयत् ॥ ८ ॥
नासिद्धदेवतारूपदृष्टिश्चान्यत्र युज्यते ।
न च सर्वत्र निर्बाधे कल्प्यो दृष्टिविधिक्रम. ॥ ९ ॥
देवतानां तपश्चर्योक्तिश्च न विरुध्यते ।
स्वाधिकेश्वरतोषार्थं प्रवृत्तेरुपपत्तित. ॥ १० ॥
प्रशासितुश्च घृणया धर्मसंस्थापनार्थिन. ।
तत्तत्कर्मप्रवृत्तिस्स्यात्कर्मवश्यानुसारिण. ॥ ११ ॥
तिर्यक्स्थावर निर्जीव तत्प्रतीक गुणक्रियाः ।
अभिमत्यनुबन्धेन डेवतास्तदपि श्रुतम् ॥ १२ ॥
हविर्भेदानुसारेण फलभेदप्रदायिता ।
प्रतिषिद्धैः प्रकोपश्च राजादिन्यायतो भवेत् ॥ १३ ॥
यदिश्रुत्यनुसारेण स्वभावो हविरादिषु ।
तेनैव तत्तदाराध्य स्वभावस्वीक्रियोचिता ॥ १४ ॥
मन्त्रार्थवादसिद्धेऽपि यत्र बाधा न दृश्यते ।
तन्मूलास्मृतिरप्यत्र न बाधार्हा स्वमूलवत् ॥ १५ ॥
पर्याये च विशिष्टे च देवताभेदकल्पनम् ।
तत्तच्छब्दोपधानेन तदुद्देश्यत्वसिद्धये ॥ १६ ॥
अविदित्वा स्वमन्दत्वं नास्तिकैरास्तिकेष्विह ।
यैरजल्प्यत मन्दत्वं शोच्यास्ते सूक्ष्मदर्शिभि. ॥ १७ ॥
द्रव्यदैवतसामान्ये बलीयो द्रव्यमित्यपि ।
प्रत्यक्षे च परोक्षे च प्रमाण प्रस्थितेर्वशात् ॥ १८ ॥
द्रव्यस्याध्यक्षसिद्धस्य हविष्ट्व शास्त्रगोचरः ।
देवताया स्वरूपं च धर्मत्वं चेति भेदतः ॥ १९ ॥

प्रत्यक्षाद्युपजीवित्वात् शास्त्रतो धीर्विलम्बिता ।
ततो हि परदौर्बल्यं श्रुतिलिङ्गादिकेष्वपि ॥ २० ॥
द्रव्यदैवतवैषम्यं न सत्यासत्यभावत ।
दैवतं यदि मिथ्या स्यात् कथं भेदादिधर्मभाक् ॥ २१ ॥
अर्थोपश्लिष्टशब्दात्मा शब्दमात्रात्मिकापि वा ।
यथा श्रुतगृहीता वा सत्यैव खलु देवता ॥ २२ ॥
मणिमन्त्रौषधाद्यैश्च सिद्धिरुक्ताभ्युपेयते ।
जन्मसिद्धाऽपि साधीता किन्न देवेषु गृह्यते ॥ २३ ॥
न वस्तु देशान्तरयोर्देवदृष्टि विधानवत् ।
इह कल्पयितुं शक्यं स्वरूपविधिसौस्थ्यतः ॥ २४ ॥
रात्रिसत्रादिनीत्या च विध्यपेक्षानुसारतः ।
फलदाः फलभूतत्वादपि सिध्यन्ति देवताः ॥ २५ ॥
इत्थं प्राचीनया नीत्या क्षिप्तं निर्दैवतं मतम् ।
शेषं तदुपरीत्यादिसूत्रभाष्ये भविष्यति ॥ २६ ॥

द्रमिडभाष्यकारैरप्युक्तम् ;—'अङ्गसैव विश्वसृजो रूपम्' इत्यारभ्य 'नह्यरूपाया देवताया रूपमुपदिश्यते ! यथाभूतवादि हि शास्त्रम् ! इति' इति ।

धूर्तस्वामिपरिचयः

अपस्तम्बश्रौतसूत्रभाष्यकारो धूर्तस्वामी कदा कतमं भूमिभागमलंचकारेति विचारे भाष्यं वृत्तिर्वा नास्माकं साहाय्यकमाचरति ।

अथाऽपि श्रीभाष्यकारैः वेदार्थसंग्रहे ;—उपनिषदां स्वोपपादितार्थे तात्पर्ये प्राचीनवेदव्याख्यातृसंमतौ दर्शनीयायाम् ;—'तदेतत् नानाविधश्रुतिनिकरशिष्टपरिगृहीततद्व्याख्यानपरिश्रमादवधारितम्' इत्यत्र ; 'बोधायनटङ्कद्रमिडगुहदेवकपर्दिभारुचिप्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकर-दर्शितोऽयं पन्थाः' इत्यत्र च कपर्दिनः स्वप्राचीनसंप्रतिपन्न वेद-वेदान्त व्याख्यातृतया परिगणनमवलम्ब्य तद्व्याख्येय पूर्वभाग-व्याख्यात्रा धूर्तस्वामिनाऽपि ततोऽनर्वाचीनेन भवितव्यमिति निश्चिनुमः ।

'अक्षय्यं हवै+भवति' इति स्वर्गफलानुवाद इति व्याख्यातं हविर्यज्ञेषु' इति वदन् कपर्दिस्वामी धूर्तस्वामिभाष्यं तन्नामनिर्देश विनिर्मुक्तं निर्दिशतीति ततोऽपि तस्य तत्पूर्वकालिकता निश्चीयते।

किञ्च;—(२-२-२८) उपभृति द्वौ गणौ प्रयाजानूयाजार्थौ मीमांसकैरुपपादितौ' इति धूर्तस्वामिभाष्यम्।

(४-१-७) अधिकरणे च शबरस्वामिना उपभृति चतुर्गृहीत_ द्वयात्मकत्वमुपपाद्यते।

एवम्,—(४-११ खण्डे) 'सुब्रह्मण्या तु तन्त्रं स्यात् इति मीमांसकमतात्' इति भाष्यम्। 'सुब्रह्मण्या तु' इति (११-३-२२) सूत्रे एवमेव दृश्यते शबरस्वामिनो वाक्यम्।

एवमादिग्रन्थपर्यालोचनया शबरस्वामितोऽर्वाचीनो धूर्तस्वामीति व्यवसातुं शक्यते।

शबरस्वामिनोऽपि भाष्यं भाष्यान्तरमूलकमिति स्वामिपदान्तनामधेयतातौल्याच्च ततोऽर्वाचीनतेति तु न शङ्क्यम्; भवस्वामि केशवस्वाम्यादिषु ततोऽर्वाचीनेष्वपि स्वामिपदान्तनामधेयतासंमतेः।

शबरस्वामी शालिवाहनशकारम्भात्पूर्वतनो वत्सराणां शतद्वय्या इति विनायकरायः।

धूर्तस्वामी बहुशखाभिज्ञ' इति (१० प्रश्ने) 'न त्वयं विधिस्स्यात् श्रूयमाणासु शाखास्वदर्शनात्' इति तद्वाक्यादवगच्छामः।

दशमे प्रश्ने,—'नीविरसीति नीविमनुकल्पयते' इति सूत्रम्। तत्र सोमस्य नीविरसीत्यन्तान् वेष्टयति' इति धूर्तस्वामिभाष्यम्।

अत्र च 'यथोपरि न भवन्ति यथा वाससोऽन्ता न प्रकाशा भवन्ति' इति रामाण्डारः। अनेन च संदर्भेण गृहस्थस्य वा-,सोधारणप्रकारश्शिक्षितो भवति। स च वस्त्रधारणप्रकारः अधरीयविषयकस्सन् वैदिकैश्श्रीवैष्णवैरद्यापि परिपाल्यमानो जागर्ति।

## श्रौतसूत्रमितिव्यपदेशमूलम्

दर्शपूर्णमासादि प्रयोगनिरूपणपरस्य कल्पसूत्रभागस्य श्रौतसूत्रमित्यपि व्यवहारः प्रचरति। तमेव व्यवहारमवलम्ब्य वयमपि श्रौतसूत्रमित्येव नाम निरादिशाम। अत्र च मूलं भाष्यकारवृत्तिकारव्यवहार एव, तथाहि,—

पञ्चमे प्रश्ने द्वितीयखण्डादौ नान्दीश्राद्धप्रकारमुक्त्वा 'एष सर्वत्र विधिः श्रौतस्मार्तानां चादौ। न नित्यम्, आपस्तम्बेनानिबन्धनात्' इति धूर्तस्वामी।

अत्र रामाण्डारः;–'अनिबन्धनात्–श्रौते स्मार्ते च' इति। तथा च कल्पव्यपदेशः गृह्यादिसाधारण इत्यपि स्वरसत एव सिध्यति।

गृह्यधर्मपितृमेधघटितामेव कल्पसूत्रगणनां निबध्नन्ति व्याख्यातारो रत्नमालाकारादयः।

### कल्पसूत्रोपक्रम. कः ?

कल्पसूत्रं चापस्तम्बीयं किमुपक्रममिति विचारयामः—

तत्र तावत् 'अथातो दर्शपूर्णमासौ व्याख्यास्याम' इति दर्शपूर्णमास प्रकरणे प्रथमं सूत्रम्। तच्च विवृण्वन् रुद्रदत्तः 'अथ शब्दोऽयं प्रकरणारम्भे प्रायः प्रयुज्यते वृद्धैः। क्वचिदानन्तर्येऽपि, यथा—इमे भृगवो व्याख्याताः अथाङ्गिरसाम्' इत्यादौ। न पुनरिहानन्तर्यार्थः वृत्तस्य कस्यचिदनन्तरस्यानुपलम्भात् इत्याह।

अनेन च ग्रन्थेन 'अथातो दर्शपूर्णमासौ' इत्यारभ्य कल्पसूत्रं प्रवृत्तमित्यवगम्यते।

आह च विशदमेव, 'समाम्नाये दर्शपूर्णमासमन्त्राणामेव प्राथम्यात् तावेवाग्रे व्याख्यास्यन्नधिकारं दर्शयति' इति।

सायणादर्वाचीनः चौण्डपाचार्योऽपि प्रयोगरत्नमालायाम्,—

त्रिंशत्प्रश्नात्मकं सूत्रमापस्तम्बमुनीरितम्।
श्रौतगार्ह्यस्मार्तकर्मबोधकं तत्र पञ्चभिः॥

इत्युपक्रम्य—

त्रयोविंशे ततः प्रश्ने सत्रायनविधिक्रमः ।
चतुर्विंशे ततः प्रश्ने न्यायप्रवरहौतृकम् ॥
पञ्चविंशे च षड्विंशे गार्ह्यमन्त्राः प्रपञ्चिताः ।
प्रश्नेऽथ सप्तविंशे स्यात् गार्ह्यतन्त्रविधिक्रमः ॥
अष्टाविंशैकोनत्रिंशप्रश्नयोः स्मार्तसत्क्रियाः ।
सामान्यतो विशेषेण त्रिंशे शुल्बविनिर्णयः ॥
एवं सामान्यतस्सर्वप्रश्नानामार्थनिर्णयः ।

इति आपस्तम्बीयकल्पनिखिप्रश्नार्थसंग्रहप्रसङ्गेन न्यायसंज्ञया परिभषाभागस्य चतुर्विंशप्रश्नघटकतामुपवर्णयन् न परिभाषाप्राथम्यपक्षं सूचयत्यपि ।

अस्या एव प्राच्यकोशशालायाः पुरा मुद्रितप्रकाशिते कपर्दिस्वामिनो हरदत्तस्य च व्याख्ये इति प्रथेते ।

तयोः कपर्दिभाष्यनाम्नि ग्रन्थे 'व्याख्यानं नाम' इत्यारभ्य तदिदं व्याख्यानं सर्वकर्मशेषत्वादादौ प्राप्तं सत् अन्ते कृतम् ; कथं नु नाम आधिकारनिरूपणादि यथासंभवमाचारगृह्यकर्मस्वपि प्राप्तं स्यादित्येवमर्थम्' इति परिभाषावतारणं दृश्यते ।

अनेन च परिभाषाया आदौ करणं प्राप्तमपि तात्पर्यविशेषेणोपेक्षितं मुनिनेत्यवगम्यते ।

इष्टिहौत्रकल्पभाष्यविवरणारम्भे वृत्तिकारो रामाण्डारः 'इष्टिहौत्रे कल्पकारेण परिभाषाप्रकरणे उक्तेऽपि दर्शपूर्णमासप्रयोगस्याकल्यार्थं इह भाष्यकारेणोच्यते' इति भाष्यमवतारयति ।

अत्र च उक्तेऽपि इत्येतेन परिभाषापाठः पूर्वमेवेति स्फुटमुक्तं भवति ।

अथातो दर्शपूर्णमासौ इति सूत्रार्थवर्णनावसरे च धूर्तस्वामी 'संक्षेपतो यज्ञो व्याख्यातः परिभाषायाम् ; विस्तरेण दर्शपूर्णमासावनन्तरं व्याख्यायेते । अतश्शब्दो हेत्वर्थः' इत्याह ।

अत्र अनन्तरं इति अतश्शब्दो हेत्वर्थ इति च वदतो भाष्यकारस्य परिभाषाप्राथम्यमेवाभिमतम् ।

किञ्च दशमप्रश्ने १मसूत्रे वृत्तिकारो रामाण्डार आह—आदौ तावत् परिभाषायां एकविंशतिर्यज्ञा व्याख्येयतया प्रतिज्ञाताः। तेषु पाकयज्ञास्सप्त गृह्येषु व्याख्याता.। शेषेषु हविर्यज्ञास्सप्तकर्माणि अथातो दर्शपूर्णमासौ इत्यारभ्य अथान्वारम्भणीया इत्यन्तेनोक्तानि। इति 'परिभाषायां व्याख्यातत्वाच्च न व्याचष्टे। तस्येदं प्रयोजनम्—परिभाषाप्रभृति प्रायश्चित्तपर्यन्तं यदुक्तमत्रापेक्षितं तत्तत्र यथा व्याख्यातं तथेह प्रतिपत्तव्यम्' इति च।

अनेन च संदर्भेण विशदमेवावगम्यते प्राथम्यं परिभाषाप्रश्नस्य। एनयोश्च पक्षयोः आद्ये पक्षे परिभाषासूत्राणि चतुर्विंशप्रश्नः, नतूपक्रमः। द्वितीये तूपक्रम एव।

गृह्यतात्पर्यदर्शने च 'सूत्रकारेण यज्ञं व्याख्यास्याम इति संक्षेपतश्च व्याख्याय तावन्मात्रेणानुपयोगात् अथातो दर्शपूर्णमासौ इत्यारभ्य+व्याख्याता इत्युक्तं सुदर्शनाचार्येण।

शुल्बप्रश्नविवरणे च करविन्दाधिपेन—यज्ञं व्याख्यास्याम इति प्रतिज्ञां कुर्वता भगवताऽऽपस्तम्बेन व्याख्येयतया हविर्यज्ञास्सोमयज्ञाः पाकयज्ञाश्च प्रतिज्ञाता व्याख्याताश्च' इति वदता परिभाषाप्राथम्यपक्षः पर्यगृह्यत।

एवं नृसिंहयज्वसूनुना अहोबलसूरिणा,—

आपस्तम्बं मुनिश्रेष्ठं भाष्यवृत्तिकृतावपि
प्रयोगवृत्तिकारादीन् नमस्कुर्वे सदा हृदि।
आपस्तम्बीयसूत्रार्थं वृत्तिभाष्यानुसारिणी
क्रियते बालबोधाय .॥

इति प्रतिज्ञाय 'अथात' इत्यादि सूत्रं परिगृह्य 'अथ शब्द आनन्तर्यार्थः। यज्ञमात्रसामान्यव्याख्याने परिभाषानन्तर्यमुच्यते सामर्थ्यात्। परिभाषामन्तरा व्याख्यानरूपोत्तरशास्त्रस्य कर्तुमशक्यत्वात्। इत्युक्त्वा—

ननु यज्ञं व्याख्यास्याम इति परिभाषाया उत्तरत्रेदानीमध्ययनात् तदानन्तर्यं दर्शपूर्णमासव्याख्यानस्यासङ्गतम्? उच्यते—

व्याख्यान सौकर्याय भाष्यकारादिभिरग्रे व्याख्यानात् अन्तेऽध्येतृभिरधीयते। तत्प्रणयनं त्वादावेवेति मन्तव्यम्, सामर्थ्यरूपलिङ्गस्य पाठबाधकत्वात् इत्युक्तम्।

अनेन च विचारेण परिभाषोपक्रमः कल्पनिबन्ध इति स्पष्टमुक्तं भवति।

हिरण्यकेशिलाट्यायनद्राह्यायण शाङ्खायन कात्यायनाश्वलायनादि कल्पेषु परिभाषोपक्रमत्वं दृश्यते तत्तद्व्याख्यातृभिरपि स्पष्टमुक्तं च।

अत्रापि धूर्तस्वामिना चतुर्दशे प्रश्ने द्वितीयपटले 'विकृतौ यथार्थमूह इति सिद्धे पुनर्विधानात्' इति परिभाषोक्तं वदताऽप्युपदर्शितम्। न हि पुनर्विधानोक्तिः परिभाषायाः पूर्वप्रवृत्तिमन्तरा युज्यते।

सूत्रकोशेषु यद्यपि चतुर्विंशप्रश्नतयैव लेखो दृश्यते सामान्यप्रश्नस्य न तु परिभाषापृथक्कारः, परिभाषाव्यवहारस्तु न्यायभागस्यैवेति इतो मुद्रितप्रचारिते परिभाषोपोद्घाते दृश्यते। परिभाषामात्रे न्यायशब्दप्रयोगश्च प्रयोगरत्नमालाकृत्संमतोऽपि; तथाऽपि परिभाषाशब्देन सामान्यसूत्रभागस्यैव व्यवहार एतत्कल्पसूत्रव्याख्यातृसंमत इति वक्तव्यम्, रामाण्डारेण इष्टिहौत्रकल्पभाष्यस्यावतरणे 'इष्टिहौत्रे कल्पकारेण परिभाषायामुक्तेऽपि' इति; 'ब्रह्मत्वं प्रकरण इत्युपदेशः' इति भाष्यविवरणे 'ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोरिति वचनान्न दर्शपूर्णमासप्रकरणे ब्रह्मत्वपटलाम्नानं हौत्रप्रवरादिवत्' इति च वदता हौत्रभागस्यापि परिभाषाव्यपदेशस्य निस्संशयं प्रदर्शनात्।

तदेवं परिभाषोपक्रमत्व तदभावपक्षौ तत्तन्निबन्धृसंमतौ यद्यपि प्रचरतः; तथापि एकप्रबन्धतया प्रवृत्तयोर्भाष्ययोः प्रबन्धोपक्रमे भिन्नाभिप्रायकत्वं कथं घटताम्? कपर्दिस्वामिनं हि ;---

| | | | |
|---|---|---|---|
| स्वीये भाष्ये—तदुक्तम्–द्रव्यसंस्कारविरोधे इत्यादि | | | १५ पत्रे |
| ,, | विकल्पो याज्यानु-वाक्यासु | ,, | ५२ , |
| ,, | ब्राह्मणशेषोऽर्थवादः | ,, | ५५ ,, |
| ,, | त्रिभिः कारणैः | ,, | ६१, १५२, ,, |

इत्यादिरूपेण परिभाषासूत्राण्युपदशसु प्रदेशेष्वनुवदन्तम् ,

उलूखलमुसलप्रत्याम्नाय उक्तः 'नखेषूलूखलधर्मान्' इति दशमप्रश्नस्थं सूत्रम् , 'रत्निनो व्याख्याताः' इति पूर्वनिरूपितार्थं च भूतं निर्दिशन्तम् , 'कौकिल्यां वक्ष्यति' इति (१८ प्रश्ने) 'रत्निनो वक्ष्यमाणाः' इति (२० शे) 'राजानो मङ्गलनामानः इति संज्ञां वक्ष्यति' इति (तत्रैव) इत्येवमादिषु भाविनिरूपणगोचरार्थान् सूत्र-पाठक्रमसिद्धान् निर्दिशन्तं च चतुर्विंशःप्रश्नस्सामान्यसूत्राणि इति परिगृह्य परिभाषाया प्रथमं प्रणयनस्य न्यायप्राप्तस्याप्युपेक्षणेन अन्ते प्रणयन सहेतुकं मन्यमानस्य पक्षे कथं पातयामः ?

अत इह भाष्यकारावुभावेककण्ठावेवेति परिभाषोपक्रमत्वं कल्पनिबन्धस्यापस्तम्बीयस्यापि तत्र च परिभाषाहौत्रप्रवरपटला-त्रय इति च निर्विवादमित्यवधेयम् ।

## अत्रेयं सूत्रपाठक्रमगमनिका

आदौ तावत् परिभाषायां एकविंशतिसंस्थाः यज्ञस्य व्याख्ये-यतया प्रतिज्ञाताः। तेषु पाकयज्ञास्सप्त गृह्येषु व्याख्याताः । शेषेषु हविर्यज्ञास्सप्तकर्माणि अन्वारम्भणीया इत्यन्तेनोक्ता' इति रामाण्डा-रोक्तयनुरोधात् परिभाषा प्रथमा। ततः दर्शपूर्णमास याजमानाग्न्या-धेयाग्निहोत्रपशुबन्धचातुर्मास्यप्रायश्चित्तप्रश्नाना क्रमः ततस्सोम-संस्था तत उक्थ्यादयोऽग्निष्टोमविकाराः तत. प्रवर्ग्यमिति च क्रमसिद्धः ।

'उक्तानि श्रौतानि गृह्याणि च कर्माणि वक्ष्यमाणान् धर्मानपे-क्षन्ते' इति धर्मप्रश्नव्याख्यातृहरदत्तोक्तया, 'हविर्यज्ञाः सोमयज्ञाः पाकयज्ञाश्च व्याख्येयतया प्रतिज्ञाताः व्याख्याताश्च' इति

करविन्दाधिपोक्त्या, 'पूर्वोक्तानि कर्माणि जीवतां जातकर्मप्रभृतीनि, अथेदानीं मृतस्य कर्मोच्यते' इति कपर्दिस्वाम्युक्त्या; 'भगवता सूत्रकारेण व्याख्यातानि वैतानिकानि गृह्याणि च कर्माणि अथातः पैतृमेधिकम्' इति गार्ग्यगोपालयज्वोक्त्या, गृह्यप्रश्ने,--श्रुतिलक्षण हविर्यज्ञसोमसंस्थास्सविकृतयो व्याख्याताः। अथानन्तरमधिक्रियन्ते कर्माणि गृह्यन्ते यान्युत्सन्नपाठब्राह्मणेभ्यस्तानि व्याख्यास्यामः' इति भाष्योक्त्या च सोमग्रन्थात्परभावित्वं गृह्यप्रश्नस्य सिध्यति।

चयनप्रश्नभाष्ये 'एकाग्राका व्याख्याता सूत्रकृता आपस्तम्बेन यामाघ्या' इत्यादीत्युक्तिरप्येतदनुकूला।

कपर्दिस्वामिगार्ग्यगोपालयज्ववचोभ्यां गृह्यप्रश्नोत्तरभावित्वं पितृमेधप्रश्नस्य; हरदत्तवचसा चैतदुत्तरत्वं धर्मप्रश्नस्य सिध्यति।

चयनप्रश्ने 'शुल्बेषु व्याख्यातमेतद्ब्राह्मणम् चतुर्भागीयारुक्मम्' इति भाष्यदर्शनात् शुल्बप्रश्न प्रागेव चयनप्रश्नादित्यगम्यते।

सौत्रामणी प्रश्ने 'सर्वास्वित्यग्नौ व्याख्यातम्' इति कपर्दिभाष्यदर्शनात् ततः प्राक्चयनप्रश्न इति सिद्धम्।

ततश्च वाजपेयराजसूयसौत्रामणी काम्येष्ट्यश्वमेधादिप्रश्ना इति।

यद्यपि आदौ तावदित्युपक्रम्य 'गृह्यप्रश्न व्याख्यातः' इत्यन्तरामाण्डारवृत्तिपर्यालोचनायां गृह्यप्रश्नोऽपि दर्शपूर्णमास्यप्रश्नतः पूर्व इति शङ्का स्यात्,

अथातो दर्शपूर्णमासावित्यत्र धूर्तस्वामिना यज्ञविभागे पाकयज्ञसंस्थानां प्रथमनिर्देशोऽपि सूत्रकारीयं प्रणयनक्रममेव तथा विधं बोधयेदपि, तथाऽपि परिभाषाया दर्शपूर्णमासनिरूपणोपोद्घातत्वकीर्तनपरधूर्तस्वामिभाष्यमनुसृत्य परिभाषानन्तरं दर्शपूर्णमासप्रश्न एव प्रणीतो मुनिना इति निश्चीयते। अयमत्र भाष्याशयः;—यज्ञं व्याख्यास्याम इति प्रक्रम्य स त्रिभिर्वेदैर्विधीयते' इति

श्रौतविधिग्राह्ययज्ञापेक्षितांशपरिभाषणात् श्रौतयज्ञा एव प्रथमं व्याख्येयतया परिगृहीता मुनिनाऽऽपस्तम्बेन। गृह्याणां तु कर्मणां उत्सन्नपाठब्राह्मणमूलकतया श्रौतविधिग्राह्येभ्य उत्तरभावित्वं युक्तम्। विभागे गृह्यकर्मणां प्रथमनिर्देशस्तु प्रथमानुष्ठेयता प्रयुक्त इति।

उक्तचैतत् गृह्यतात्पर्यदर्शने सुदर्शनाचार्यैः—यत एव आचारानुमेय वेदावगम्यानि कर्माणि अत एव तेभ्य' प्रथममनुष्ठेयेभ्योऽपि पूर्वं श्रौतानां व्याख्यानं कृतम् इति।

प्रत्यक्षश्रुतिविहितेषु जिज्ञासायाः प्रथमभावित्वात् अनुमितवेदार्थजिज्ञासायाश्चरमभावित्वात् इति च।

'प्रोक्षणीसंस्कारः पात्रप्रोक्ष इति दर्शपूर्णमासवत्तूष्णीम्' इति गृह्यसूत्रमप्येनमर्थमभिप्रैति, न हि सूत्रकारो मुनिरनिरूपितपूर्वमर्थमतिदेश्यं मन्यते।

## सूत्रपाठसम्प्रदायः

आपस्तम्बकल्पसूत्रेषु संहितारूपेणैव पाठः खण्डिकारूपा एव त्ववान्तरविभागाः कतिपय खण्डिकाभिश्च पटलाभिधाना विभागाः पटलैश्च कतिपयैः प्रश्नाः इति स्थितिर्दृश्यते प्रायो लिखित सूत्रकोशेषु।

वेदभाष्यकृतस्सायणाचार्या अपि तत्रतत्र अनुवाकारम्भादिषु अत्र कल्प. इत्युपक्रम्य वाक्यान्युदाहरन्ति, न च तानि खण्डात्मकानि वा सूत्रात्मकानि वा दृश्यन्ते, किंतु तत्तदपेक्षितवाक्यसमुदायात्मकान्येव।

रुद्रदत्तवृत्त्या सह क्यालेङ्नाम्ना हूणेन मुद्रापिते जर्मन्भाषारूपेणानूदिते तु संपुटत्रयं विभक्तसूत्रक्रम चतुर्विंशतिप्रश्नघटितमेव विलसति। वाजपेयादिभागे कपर्दिभाष्येऽपि प्रायस्सूत्रपरिग्रहेण विवरणं दृश्यते। अनेन च कल्पसूत्रेष्वेषु सूत्रविभागेन पाठोऽपि साम्प्रदायिक इत्यवगन्तुं शक्यते।

इत्थं च संहितारूपेणैवाध्यापनेन प्रचार्यमाणं सूत्रबृन्दं सांप्रदायिकार्थानुसन्धानसरण्या क्लृप्तविभागयैवानुपूर्व्या भाष्यकारप्रभृतयोऽनुसमदधुः। स च पर्यपाल्यतैव यथायथं व्याख्यातृभिः यथा रुद्रदत्तेन इति सिद्धम्।

अयं चांशः भाष्यवृत्तिकारवचोभिरप्यवगम्यते, तथाहि—

इति सूत्रच्छेदः।

पादम्' इत्यन्तमेकं सूत्रम्।

उभयत्र सूत्रे मन्त्रयोर्विरोधपरिहारार्थं भाष्यम्।

ब्रह्मप्रकरणोक्तस्य कालविधानमेतत्सूत्रम्।

दीप्यमानं परापश्येत्तत आहृत्याग्निं कल्पयेदित्येकं सूत्रम्।

नहीनमन्वाहरेयुरिति सूत्रमर्थसंगत्या उत्कृष्यव्याख्यायते।

सूत्रक्रमेण मन्त्राणां सूत्रकारपाठस्य विवक्षितत्वात्।

तथाग्निराधेय इत्येकं सूत्रं न भवति।

तौ न पशौ करोति इत्यनेन सूत्रेण प्रतिषेधः।

न सोमे इति सूत्रान्तरेण।

हृदयमभिघारयतीत्यन्तमेकं सूत्रम्।

इति भाष्यकारवृत्तिकारवचनानि तत्र तत्र सूत्रभागनिर्णायकतया प्रवृत्तानि तत्र मतिभेदसंभवं तन्निरासं पाठसम्प्रदायस्य सूक्ष्मेक्षिका ग्राह्यतां तन्मूलभूतं तदाम्नानसम्प्रदायभेदं च ग्राहयन्ति।

सत्यपि सत्सम्प्रदायपरिपालनश्रद्धापौष्कल्ये सूत्रकारभावपरिज्ञानसंप्रदायपरिरक्षणं कचित् केनापि कारणेन दौष्कर्यग्रस्तमपि भवितुमर्हतीति कपर्दिस्वामिभाष्यादवगम्यते। यतो हि—'भुवोकथ्येन रथन्तरसाम्ना भूतिकामो यजेत' इत्यस्मिन् (५.२-६-२६) सूत्रे 'न विद्यते ताण्डिनामिति न शक्यते व्याख्यातुम' इति भाष्य ग्रन्थो दृश्यते।

## आपस्तम्बकल्पभाष्यभागव्यवस्था.

आपस्तम्बकल्पसूत्रं धूर्तस्वामि कपर्दिस्वामिभ्यां साम्प्रदायिकगूढभावाविष्करणपरभाष्यभागाभ्यां भूषितं विराजत इत्यभ्रम्।

तत्र कति प्रश्ना धूर्तस्वामिना कति च कपर्दिस्वामिना व्याख्याता इति विशयं पर्यहार्षीत् त्रैविद्यवृद्धः प्रयोगदीपिकाकृत् तालवृन्तनिवासी। तेन हि ,—

'आपस्तम्बीयसूत्रस्य धूर्तस्वामिव्याख्यानुसारेण शास्त्रान्तरसिद्धानपेक्षितानुपसंहृत्य अग्निचयनपर्यन्तानां कर्मणां प्रयोगवृत्तिः क्रियते ' इति स्वग्रन्थारम्भे ;

कपर्द्यभिप्रायेण ' वाजपेयादि विश्वसृजामयनपर्यन्तानां कर्मणां प्रयोग उच्यते ' इति च स्वग्रन्थमध्ये वाजपेयारम्भे प्रतिज्ञायते ।

अनेन च आदितो धूर्तस्वामिना वाजपेयमारभ्य कपर्दिस्वामिना च भाष्यं प्राणायीति सूचितं भवति ।

उभाभ्यां पृथगेव भाष्यं समग्रमेव रचितमित्यपि कुतो न कल्प्यतामिति चोद्यं तु ग्रन्थोपलम्भमात्रनिरस्तमपि तटस्थप्राचीनप्रामाणिकनिबन्धृवचस्संवादेन निरस्यामः । श्रीमन्निगमान्तदेशिकविरचितायाः श्रीभाष्यसारसङ्ग्रहरूपाया अधिकरणसारावल्याः ११श्लोकविवरणे तत्तनयैः वरदनाथाचार्यैः कर्मकाण्डे जैमिनिः देवताकाण्डे काशकृत्स्नः शारीरके बादरायण इति कर्तृभेदाच्छास्त्रभेदमाशङ्क्य ' न ह्येकस्य कार्यस्य एक एव कर्तेति नियमोऽस्ति ! दृश्यते हि पूर्वोत्तरयोर्वृत्त्योः एकनिबन्धत्वमापस्तम्बीयस्सूत्रव्याख्यानयोर्धूर्तस्वामिकपर्दिस्वामिनिबन्धनयोरपि ' इत्युक्तम् ॥

एवम् अष्टमप्रश्ने प्रथमपटलान्ते यो वै वसन्तोऽभूत् ' इत्यादिसूत्रे ' पुनर्वसन्तादिनियमात् ' इत्यादिभाष्यमुपादाय वसन्तशब्दार्थविचारं प्रक्रम्य " अत्र कपर्दिस्वामिना ' शिशिरे दीक्षन्ते वसन्त उत्तिष्ठन्ते ' इति सूत्रे ' द्वादशप्रथमराश्योर्यदा सूर्योदयस्तदा वसन्त इत्युक्तत्वात् " इति रामाण्डारवृत्तेर्दर्शनात् (२१–२-८) सूत्रस्थं कपर्दिभाष्यं प्रमाणयता रामाण्डारेण तत्र धूर्तस्वामिना भाष्याप्रणयनं सूच्यते । न हि सदपि तत्र धूर्तस्वामिभाष्यं नालं विवक्षितार्थसाधनायेति निपुणतरमवश्यापेक्षिताखिलगूढार्थनिरू-

पणपरस्य धूर्तस्वामिनो भाष्यकृतो न्यूनतां शङ्कितुमर्हति कश्चिन्निरूपकः ।

नापि भाष्यभागद्वयैककण्ठ्यं पृथक्समग्रभाष्याप्रणयनं च मन्वानः सुगृहीतसम्प्रदायस्तालवृन्तनिवासी अवहितपरिपालनीये कर्मानुष्ठानमार्गे सम्प्रतिपन्ने प्रमाणे ऐच्छिकौ परिग्रहपरित्यागौ चिकीर्षेत् ।

सन्तमिममंशं वरदनाथाचार्यवचसा साध्वेव परिकलयन्ति विमर्शकाः ।

## परिभाषा धूर्तस्वामिना न व्याख्याता.

धूर्तस्वामी परिभाषाप्रश्ने भाष्यकृन्न वेति विचारयामः—दशमप्रश्नाद्यसूत्रभाष्यवृत्तौ ‘ यत्त्वयं भाष्यकार ’ इत्युपक्रम्य “ परिभाषायां व्याख्यातत्वाच्च न व्याचष्टे ’ तस्येदं प्रयोजनम्- -परिभाषाप्रभृति प्रायश्चित्तपर्यन्तं यदुक्तमत्रापेक्षितं तत्तत्र यथा व्याख्यातं तथेह प्रतिपत्तव्यम् , यथा ‘ दीक्षणीयायास्तन्त्रं प्रक्रमयति ’ इत्यत्राव्याख्यातस्तन्त्रशब्दः ; तन्त्रमित्यङ्गसमुदाय इति दर्शपूर्णमासयोर्व्याख्यातत्वात् ” इत्युक्तम् । अनेन च परिभाषाया धूर्तस्वामिना व्याख्यातत्वं प्रतीयते ।

एवं तञ्जानगरस्थप्राच्यकोशागारसूच्यां धूर्तस्वामिकृतं सामान्यसूत्रभाष्यं निर्दिश्यते । बहुषु परिभाषाव्याख्यानकोशेषु धूर्तस्वामिभाष्यमित्येव लेखोऽपि दृश्यते ।

तथा उषानाम्न्यां पत्रिकायां आपस्तम्बपरिभाषासूत्रभाष्यं धूर्तस्वामिप्रणीतं मुद्राप्य प्रकाशितम् , तस्मादद्राक्षमिति परिभाषासूत्रव्याख्याप्रकाशका म. रा महादेवशास्त्रिणो व्यलिखन् ।

तञ्जानगरप्राच्यकोशसूचीप्रकाशकश्च स्वनिर्दिष्टं सामान्यसूत्रभाष्यं महीशूरपुरप्राच्यकोशागारतः प्रकाशितम् । तत्र चात्रत्यकोशात्कियन्तश्चिदेव वर्णमात्रकृताः पाठभेदा दृश्यन्त इति इतः प्रकाशितयोर्व्याख्ययोर्हरदत्तीयव्याख्यां निर्दिशति ।

हरदत्तकृतपरिभाषाव्याख्या च दर्शपूर्णमासव्याख्याप्रतिज्ञासूत्रस्थधूर्तस्वामिभाष्यसरूपभूयोभागोपक्रमा धूर्तस्वामीयत्वसम्भावनामुपोद्बलयेदपि ।

तथाऽपि धूर्तस्वामी परिभाषाप्रश्ने भाष्यमकरोदिति चेदभ्युपैमः 'यज्ञं व्याख्यास्यामः' इत्यत्रैव अवश्यापेक्षितस्य यज्ञविभागस्य व्याख्याशब्दार्थविवरणस्य च कृतत्वान्न पुनर्दर्शपूर्णमासव्याख्याप्रतिज्ञासूत्रे तदपेक्षा स्यादित्याशङ्का तत्र यज्ञविभागादिप्रदर्शनपरस्य धूर्तस्वामिनो दुस्समाधा समापतेदिति तेन तद्व्याख्यानमेव प्रतीमः ।

अहोबलसूरिरपि परिभाषाप्रश्नस्य कल्पनिबन्धोपक्रमतां समर्थयन्नपि ,—

भाष्यकारादिभिरग्रे व्याख्याततत्वं वदन् आदौ तस्याव्याख्यानं स्पष्टमाह । हौत्रस्य इष्टिप्रकरणान्ते चातुर्मास्यान्ते च धूर्तस्वामिना व्याख्यानात् तत्र च रामाण्डारेण वृत्ते· प्रणयनादग्रे व्याख्यानवचनमुपपन्नमपि । परिभाषाया एव भागविशेषे भाष्यकृद्व्याख्याततां सूचयत्यप्यादिशब्देन । एककर्तृकसमग्रभागव्याख्यायास्सप्रतिपन्नायास्सत्त्वे हि तन्मूलकव्याख्याना तेन सहादिशब्देन निर्देशो नातीव शोभेत ।

यथाऽवसरं च परिभाषणीयांशानां समुचितलक्ष्यनिर्देशासंभवाच्च धूर्तस्वामी परिभाषाव्याख्यान उदास्तेत्यपि चिन्तयितुमुचितम् ।

न चेद्धूर्तस्वामी परिभाषाणां भाष्यकृत् कस्तद्व्याख्याकृदिति विचारणीयम्—

यद्यपीत एव मुद्राप्य प्रकाशिते व्याख्ये इति जानतो नास्ति विचारावसर इति शङ्का स्यादपि ; तथाऽपीतः प्रकाशिते भाष्ये कपर्दिकर्तृकत्वस्य विचारासहतां पश्यतोऽस्ति विचारावकाशः । तथाहि—आपस्तम्बगृह्ये अष्टमे पटले तात्पर्यदर्शनकृत् सुदर्शनाचार्यः "ब्राह्मणभोजनं होमः पिण्डदानं च त्रीण्यपि मासि श्राद्धे प्रधानानि अग्न्याधेये भाष्यकारेण धूर्तस्वामिनोक्तत्वात् । 'वैश्वदेवे विश्वेदेवाः' इत्यत्र कपर्दिस्वामिनोक्तत्वाच्च" इति वदन् गृह्यप्रश्नभाष्यकारः कपर्दिस्वामी इति स्पष्टमेवाह ।

स च कपर्दी गृह्यप्रश्नम्, यज्ञं व्याख्यास्याम इति प्रतिज्ञाय "श्रुतिलक्षणहविर्यज्ञसंस्थास्सोमसंस्थास्सविकृतयो व्याख्याताः। अथ अनन्तरं अधिक्रियन्ते कर्माणि गृह्यन्ते यान्युत्सन्नपाठब्राह्मणेभ्यः तानि व्याख्यास्यामः" इत्यवातारयत्।

कपर्दिभाष्यमिति इतः प्रचारिते च 'व्याख्यानं नाम' इत्यारभ्य "तदिदं व्याख्यानं सर्वकर्मशेषत्वादादौ प्राप्तं सदन्ते कृतम्" इत्यादिना परिभाषाप्रश्नस्य कल्पनिबन्धान्तिमभागतां प्रकटयति।

गृह्यभाष्ये तथाऽवतारयन् परिभाषाप्राथम्यसमर्थकः कपर्दिस्वामी परिभाषामन्यथावतारयितुं नार्हेदिति कपर्दिस्वामिनोऽन्य एव तत्र व्याख्यातेति निश्चिनुमः।

तत्र च रुद्रदत्तो हरदत्तश्च कल्पनिबन्धे व्याख्यातारौ प्रथेते। तयोश्च हरदत्तोऽपि धूर्तस्वामिवचश्छायानुसारी व्याख्यातेति रुद्रदत्त एव चतुर्विंशप्रश्नतया परिभाषाप्रश्नं मन्यत इति स एवैवं व्याख्याकृत्स्यादिति संभावयितुं शक्यत इति।

## धूर्तस्वामिभाष्यवृत्तिपरिचयः.

धूर्तस्वामिभाष्यस्य दर्शपूर्णमासप्रभृतिसोमान्तभागे रामाण्डारवृत्तिर्दृश्यते। सोमग्रन्थान्ते 'इति रामाग्निचिद्वृत्तिस्समाप्ता' इति लेखदर्शनाच्च तदन्तैव वृत्तिः प्रणीतेत्यपि निर्णेतव्यं भवति।

यद्यपि पुण्यपत्तनतः दर्शपूर्णमासप्रकाशनाम्ना प्रचरति किञ्चन पुस्तकम्; यत्र च भाष्यवृत्तिः सूत्रदीपिका च प्रश्नचतुष्टयीभागस्य प्रकाश्येते। तथाऽपि तत्प्रकाशकस्य भाष्यग्रन्थदौर्लभ्यं भाष्यवृत्तिरूपनिबन्धद्वयविवेचनदौष्कर्यं वा तथा प्रकाशने निबन्धनमाकलयामः।

यद्यपि भाष्यानुपूर्वीं समग्रामेवानूद्य वृत्तिनिबन्धलेखनं कोशेषु दृश्यते; ततश्च स्वपदविवरणरूपतयैक एवायं निबन्ध इति शङ्कितुमस्त्यवसरः।

तथापि (५ प्र ७ पटले) "क्वचित् चतुर्होत्रर्थं प्रणीते त्यक्तेऽन्वाधानमिति पाठः इति ;

(६–१) क्वचिन्मन्त्रेण बोधनं नित्यवत्, इति पाठः इति ,

(७–२) 'विकारवद्भ्याम्' इति पाठः इति ,

(१०–१) पितामहसंततिका इति वा पाठः" इति पाठभेदान् ;

(११ प्र.) 'सूत्राणां व्युत्क्रमेण व्याख्यानमनास्थया लेखकप्रमादाद्वा' इति भाष्यशैलीपरिचयं च प्रकाशयन् ,

'यत्त्वयं भाष्यकारः' इत्यादिना भाष्यकारं पृथङ्निर्दिशंश्च रामाण्डारः स्वीयां वृत्तिं तद्विवरणीयं च भाष्यं विविक्तं मन्यत इत्यवधेयम् ।

## वृत्तिकारपरिचयः

अथ वृत्तिकारं परिचिचीषामः । तत्र ,—

अहोवलसूरेः सूत्रवृत्तौ तावत् अधिकारनिरूपणं प्रक्रम्य—'अविदुषोऽपि साधोरधिकार इति प्रयोगवृत्तिकाराः । आत्मज्ञानवतोऽधिकार इति भाष्यकारादयः । नाद्वैतज्ञानवतोऽधिकार इत्यद्वैतवेदान्तिन' इत्याह ।

अनेन च आत्मज्ञानं यज्ञाधिकारहेतुरिति भाष्यवृत्तिकारयोराशय इति निवेदितं भवति। अयमर्थो भाष्यवृत्तिकारयोरभिमत इत्यहोवलसूरिपक्षं तत्तद्भाष्यवृत्तिग्रन्थभागप्रदर्शनेन च विशदयाम —

चतुर्थप्रश्ने चतुर्थखण्डारम्भे—'इदं शकेयं यदिदं करोमि आत्मा करोत्वात्मने' इत्यादिमन्त्रजपस्सूत्रकृता विहितः ।

तत्र धूर्तस्वामिभाष्ये ,—'आत्मा करोत्वात्मने इति विज्ञानं मन्त्रलिङ्गेन' इति विवृतम् ।

तत्र वृत्तौ ,—"आत्मने ब्रह्मणे आत्मा करोत्विति विज्ञानमपि कर्तव्यम् ;—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥

इति स्मृतेश्च । ननु कथमात्मने ब्रह्मणे इत्युच्यते? उच्यते ;—'य अत्मनि तिष्ठन्नात्मनोन्तरो+यमयति यस्यात्मा शरीरं स आत्मा इति जीवशरीरकेऽन्तर्यामिणि आत्मशब्दप्रयोगात् । तस्य च परमात्मत्वात् । परमात्मनो ब्रह्मत्वेन सर्वशाखाप्रसिद्धत्वात् ।

नारायणः परं ब्रह्म आत्मा नारायणः परः ।

इति नारायणपरब्रह्मपरमात्मशब्दानां सामानाधिकरण्यात् । नारायणं महाज्ञेयम् इति सर्वदा ज्ञेयत्वात् ।

कथमन्याभ्यो देवताभ्योऽपि क्रियमाणं कर्म ब्रह्मेति ध्यायेत्?

यो देवानां नामधा एक एव' 'स ब्रह्मा स शिवः' चतुर्होतारो यत्र संपदं गच्छन्ति देवैः' 'सर्वे वेदा यत्रैकं भवन्ति' इत्यादिश्रुतौ सर्वदेवतानां नामधारकत्वेन सर्वदेवस्वरूपत्वेन सर्वयज्ञैरिज्यत्वेन सर्वविधिवाक्यैर्विधेयत्वेन चावगमात् ।

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ॥
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ।

इति स्मृतेश्च" इति धूर्तस्वाम्याशयो वर्णितः ।

एतत्सूत्रविवरणावसरे च अहोबलसूरिरपि अत्रत्यभाष्यवृत्ती शब्दतोऽर्थतश्चानुवदति ;—

"अस्मिन् मन्त्रे आत्मा करोत्वात्मने इति लिङ्गेन आत्मा ब्रह्मात्मने ब्रह्मणे करोत्विति ब्रह्मैव कर्ता भोक्तेत्यनुसंधानं कर्तव्यम् । यत्करोषि+धिना इति स्मृतेश्च । ननु कथमात्मपदस्य ब्रह्मपरत्वम्? उच्यते ;—य आत्मनि तिष्ठन्+स आत्मेति जीवशरीरकेऽन्तर्यामिणि आत्मशब्दप्रयोगात् । अन्तर्यामिणः परमात्मत्वात्+सिद्धत्वात्+रण्यात् । कथमन्याभ्यो+वगमात् । अहं हि+पूर्वकम्' इति स्मृतेश्च" इति ।

एवं पञ्चमे प्रश्ने सप्तमे पटले ;—'अग्निहोत्रमारप्स्ये यावज्जीवं होष्यामि जीर्णो वा विरमणं करिष्ये इति सङ्कल्पः । स्वर्गकामं

मीमांसकाः। अबन्धनात्कामस्य न काम इत्युपदेशः। यत्रापि बन्धः, अकामहतश्रुतस्य प्रतिषिध्यते; व्यासमताच्च' इति धूर्तस्वामिभाष्यम्।

अत्र वृत्तिः,–'स्वर्गकामं मीमांसकाः,—अश्रुतफलत्वात् विश्वजित्पितृयज्ञादिष्विव स्वर्गफलता।

अबन्धनात्कामस्य न काम इत्युपदेशः,– सूत्रकारेणाबन्धनात्कामस्य न फलकल्पना।

यत्रापि बन्धः,—सूत्रकारेण दर्शपूर्णमासादिषु।

तत्राप्यकामहतश्रुतस्य मुमुक्षोः प्रतिषिध्यते फलम्' इति।

अस्यार्थः;—ज्ञानकर्मसमुच्चयान्मोक्षसिद्धेः कर्मसु फलेच्छा न कर्तव्या श्रोत्रियस्य चाकामहतस्येति। कामिनो मोक्षाभावात्। स्वर्गादिश्रवणेऽपि मुमुक्षोस्तदिच्छयाऽनुष्ठानमयुक्तम्।

अकामहतश्रुतस्य—अकामहत इति श्रुतस्येत्यर्थः।

व्यासमताच्च,—'कामात्मता खल्वपि न प्रशस्ता' इति। भगवद्गीतासु च,—'सङ्गं त्यक्त्वा फलं च' इति वहुशो दर्शनात्।

ननु 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' 'नास्त्यकृतः कृतेन' इत्यादिभिश्च श्रुतिस्मृतिभिः कर्मणो मोक्षसाधनत्वं प्रतिषिध्यते तथा 'तमेव विदित्वाऽतिमृत्युमेति' 'ब्रह्मवेद ब्रह्मैव भवति' 'तमेवं विद्वानमृत इह भवति' इत्यादिभिः ज्ञानसाधनत्वावगमात्। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्यादिभिः कर्मणो विद्यायाश्च फलभेदोऽवगम्यते, अतो न समुच्चिते ज्ञानकर्मणी मोक्ष साधनमिति।

नैतत्सारम्,—श्रुतिस्मृतिनियन्त्रणां महतीमसहमानानां स्वैराचारसमुत्सुकानां वैदिकगर्हाभयाद्वेदवाक्यानि यथातथमुदाहरतां परलोकभयरहितानां मतमिदम्, तथाहि;—

यत्तावत् कर्मणो मोक्षसाधनत्वप्रतिषेधकवाक्यानि, तानि केवलकर्मविषयाणि; विद्यासहितस्यैव वीर्यवत्तरत्वात्। 'यदेव

विद्यया करोति–तदेव वीर्यवत्तरम् ' इति श्रुतेः । 'यज्ञेन–स्सचन्ते' 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति' इत्यादिभिश्च कर्मसाधनत्वावगतेः ।

' हिरण्मयश्शकुनिर्ब्रह्म नाम येन सूर्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान् योनियोनौ । नावेदविन्मनुते तं बृहन्तम् । सर्वानुभुमात्मानं संपराये ' इति ब्रह्म प्रशस्य ' ब्रह्मणस्सायुज्यं सलोकतां यन्ति य एतदुपयन्ति ओम् ' इति विश्वसृजामयनस्य ब्रह्मप्राप्तिसाधनत्वदर्शनाच्च ।

' तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन ' इति च ।

प्रत्युत विद्याया भगवतोक्ताविद्याकार्यत्वं गम्यते । अतः ;— ' यथा वा एष रथोऽन्यतरेण चक्रेण न वर्तते यथा वा पक्षेणैकेन पक्षी एवं विद्याकर्मणी पुरुषस्य ' इति ताण्डायानिश्रुत्या परस्परव्याघातपरिहाराय समुच्चिते एव विद्याकर्मणी । स्मृतिरपि ,—

इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥

इति । तथा च भगवतोक्तं मतान्तराण्युपन्यस्य ,—

कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।

इति अलं विस्तरेण " इति ।

यतिधर्मसमुच्चये यादवप्रकाशैरप्यभिहितम् ,—

' कर्मयोगो नाम ज्ञानकर्मसमुच्चयः, ततो मोक्षः ' इति ।

एवम् ('१–४–४) तस्य सर्वत्रावस्थानात् ' इति भाष्यम् ।

अत्र वृत्तिः ;—तस्य ब्रह्मरूपत्वेन सर्वपदार्थेष्ववस्थानात् , इति ।

इग्निहौत्रकल्पे ,—' एष वै देवानां महिमा यद्विष्णुः परमेष्ठी इति सर्वदेवतान्तर्यामिणं विष्णुम् ' इति ।

(५ प्रश्ने) आधाने अश्वस्य कर्णे वाचनीयस्य मन्त्रस्य ' वाजिग्रहणात् कमण्डल्वादौ निवृत्तिः ' इत्युक्ता ' अनिवृत्तिरुपदेशः ' इति भाष्यम् ।

तत्र वृत्तिः,—'आदित्यो वाजी' इति निर्वचनमुदाहृत्य 'तस्य च ब्रह्मरूपत्वेन सर्वपदार्थेष्ववस्थानात् कमण्डल्वादावप्यनिवृत्तिः' इति।

९ म. प्रश्ने १ खं,—'देवयानो हि पन्था दर्शपूर्णमासौ' इति भाष्यम्।

अत्र वृत्तिः,—'एष वै देवयानः पन्था यद्दर्शपूर्णमासौ इति श्रवणात् ब्रह्मज्ञानिनो नित्यकर्मानुष्ठानेन अर्चिरादिमार्गस्य ब्रह्मप्राप्त्युपायभूतस्य प्राप्तेः 'परमामेव काष्ठां गच्छति इति' दर्शपूर्णमासयोरपवर्गार्थत्वात् अर्चिरादिमार्गेण चापवर्गप्राप्तेः, इति, कारणे कार्योपचारात् देवयानप्राप्त्युपायभूतयोर्दर्शपूर्णमासयोर्देवयानत्वम्' इति च।

९ प्र. २ खं 'स्वर्गपथप्रतिपत्त्यर्थः इति भाष्यम्।

अत्र वृत्तिः,—'अथो देवता एवान्वारभ्य सुवर्गं लोकमेति' इति निर्देशात् स्वर्गशब्दस्य मोक्षपरत्वात्, मोक्षप्राप्तेश्च देवयानमार्गप्राप्तिद्वारकत्वात्' इति।

१२ श प्रश्ने,—'अपरिमितनिःश्रेयसवाचित्वात्स्वर्गशब्दस्य इति' भाष्यम्।

अत्र वृत्तिः;—'संवत्सरस्स्वर्गो लोकः, इति कालात्मकपरब्रह्मस्वरूपानन्दपरत्वात् मोक्षार्थश्च सदा यत्नः कर्तव्य इति स्वर्गकामश्रवणेऽपि नित्यता' इति।

एवं च भाष्यकृत् धूर्तस्वामी वृत्तिकारो रामाण्डारश्च जीवपरमात्मनोः शरीरशरीरिभावं परमात्मनश्च विष्णोः सर्वचेतनाचेतनान्तर्यामित्वं अपरमितनिःश्रेयसस्य मोक्षात्मकस्य स्वर्गपदव्यपदेश्यस्य ब्रह्मज्ञानिनो ज्ञानसहकृतनित्यकर्मानुष्ठानसाध्यदेवयानगतिसाध्यत्वं भगवतश्च सर्वकर्मसमाराध्यत्वं तस्यैव च सर्वकर्मकर्तृत्वफलभोक्तृत्वानुसंधानं इत्यादिवदन्तौ विशिष्टाद्वैतसंप्रदायस्थौ संभावयितुं शक्येते।

'ज्ञानकर्मसमुच्चयान्मोक्षसिद्धेः' इति वृत्तिकारवचोऽनुरोधे च विशिष्टाद्वैतसंप्रदायाप्रविष्टावित्यपि संभावयितुं शक्येते।

यदि च 'कर्मापेक्षाभिसन्धिं क्वचन विवृणुते तत्समुच्चित्य-वादः' (तत्वमु जीवस ३३) इति तत्वमुक्ताकलापविवरणे ;—

'हतं ज्ञानं क्रियाहीनं हता चाज्ञानिनां क्रिया।

इत्यादिषु द्वयोस्समुच्चितवद्वादः-कर्मसापेक्षत्वाभिसन्धिं व्यनक्ति' इति सर्वार्थसिद्ध्यनुगृहीतरीत्या, 'विद्यासहितस्यैव वीर्यवत्तरत्व-श्रुतेः' इति 'विद्याया अविद्याकार्यत्वं गम्यते' इति च वदत एव ज्ञानसमुच्चयवादस्य कर्मणो विद्याशेषत्वाभिसन्धिसन्धुक्षकत्व-संभव इति परिशीलयामः तदा एतौ विशिष्टाद्वैतनिष्ठावेवेत्यव-गन्तुं पारयामः। युज्यते चैवमवगन्तुम्। यतः,—

त्रिकाण्डीमण्डने भास्करसोमयाजी,—

यद्वा वसन्तकालादिजीवनाख्यनिमित्तवान्।
सोमेन यजते ब्रह्मविद्याशेषतयाऽथवा॥ (१ का ३८)

इति प्राचीनकल्पसूत्रभाष्यतद्व्याख्यातृपरम्पराप्राप्तं पक्षं अधिकार-निरूपणेऽनुवदति॥

सोऽयं पक्ष एतयोरपि भाष्यवृत्तिकृतोरिति निर्णेतुमप्यस्त्यव-काशः।

न च एवंविधं अन्तर्यामिब्राह्मणवाक्यतात्पर्यवर्णनं श्री-भाष्यकारोपज्ञं ततः प्राचीनेषु ज्ञानकर्मसमुच्चयशब्देन मोक्षसाधन-निर्देशकेषु कथङ्कार घटताम्? इति वाच्यम्, अस्याश्शङ्काया मण्डनमिश्रवाचस्पतिमिश्राभ्यामेव परिहारात्। तथाहि--विधि-विवेके (२४ पु) विधिपदार्थे प्रक्रान्ते –'वेदात्मनोऽभिप्राय इत्यनि स्थवीय' इत्युक्तम्।

अत्र वाचस्पतिमिश्राः—'येऽपि वेदान्तवादिनोऽपौरुषेय-मङ्गीकृत्य वेदं वेदशरीरिणमन्तर्यामिणमास्थिषत—'अथाधिदैवम्--यस्सर्वेषु वेदेषु तिष्ठन् सर्वेभ्यो वेदेभ्योऽन्तरोयं सर्वे वेदा न विदुर्यस्य वेदाश्शरीरं यस्सर्वान् वेदानन्तरो यमयति एष त आत्माऽन्तर्याम्य-मृतः इति श्रुते.' इति व्याचख्युः।

अनेन विवरणेन च निखिलचेतनाचेतनशरीरकत्वं भगवत उप-निषदभिप्रेतमिति मण्डनमिश्रादपि पुरातना वेदव्याख्यातार आति-ष्ठन्त इति सिद्धं भवति।

## रामाग्निचित्कालः

रामाग्निचिच्च त्रिकाण्डमण्डनकारात् भास्करसोमयाजिनोऽपि प्राचीनतर इति तदीयकण्ठोक्त्याप्यवगम्यते—स हि दौर्ब्राह्मण्ये प्रमाणमुक्त्वा आह—

पक्षमङ्गीकरोत्येनं मन्त्रब्राह्मणभाष्यकृत्।

इति। अत्र 'मन्त्रब्राह्मणभाष्यकृत्—रामाण्डारः' इति तट्टीकाकार आह। एव रामाण्डारवृत्तिवचांस्यपि तत्र तत्रोदाहरत्यपि।

भास्करसोमयाजी च स्वस्य प्राचीनकल्पनिबन्धभाष्यतद्व्याख्यातृवेदव्याख्यातृसम्मतार्थप्रकाशकत्वं निगमने स्वयमेवाह—

अनेकाचार्यसिद्धान्ताः सौकर्याय निरूपिताः।
देशकालवयोऽवस्थाशक्तिभेदाद्यवस्थिताः॥

इति। एवं चाचार्यपदेन त्रिकाण्डमण्डनसंगृहीतो रामाण्डारोऽपि प्रामाणिकप्राचीनवेदार्थव्याख्यातृगोष्ठीगरिष्ठ एवेति निर्णयेनास्त्येव विशयलेशावकाशः।

## रामाण्डारव्यपदेशमूलम्

धूर्तस्वामिभाष्यवृत्तिकृतो रामाण्डार इति व्यवहारः निबन्धसम्मत एव प्रचरन्नपि किम्मूलकस्स्यादिति विचारयन्त उपपत्तिबलादेवं वयमध्यवस्यामः—आण्डार्—पद हि द्राविडभाषायां नाथपदपर्यायतया सम्प्रतिपन्नं प्रथते, प्रयोक्तृपरम्परया च रेफान्तनिगमनालस्यादिना आण्डार इत्यकारान्ततयैव पर्यवसितप्रयोगं च प्रचरति। राम इति च पितृसङ्केतितं नाम। रामाग्निचिदिति तु अग्निचयनानुष्ठाननिबन्धनं प्रतिपटलान्तं वृत्तौ लिख्यमानं दृश्यते। आण्डारपदं तु बिरुदभूतं नाम्ना सङ्कटितव्यवहारमिति युज्यते भट्टमिश्रस्वाम्यादिपदवत्।

आण्डार इति बिरुदभाजनताऽप्यस्य तद्बिरुदभूषितमहावंशसम्भूतिनिमित्ता समुचिता भवितुमर्हति। श्रीकृष्णदिव्यावतारबाललीलादिवर्णनरूपजगत्पावनसाग्रगाथाचतुश्शतीप्रणेतारो विष्णुचित्ताचार्याः पाण्ड्यदेशे कूडल्नाम्नि दक्षिणमधुरानगरे राज्ञो वल्लभदेवस्य विद्वत्सदसि जनकसदसीव याज्ञवल्क्यः अतिगहन-

परमात्मतत्वसुनिरूपणपरिमुदितविद्वद्राजसाक्षिकं भट्टनाथबिरुद्-भूषिता महतीमर्हणामवाप्नुवन्निति च तदितिहासप्रसिद्धं जागर्ति ।

त इमे भट्टनाथाः पेरियाऴ्वार् इति विशिष्टाद्वैतिगुरुपरम्परा-परिपाल्यमानानुसन्धानसुगृहीतनामधेयाः प्रथन्ते ।

एतैरेव पुरुषधौरेयैः पुत्रीभावपरिगृहीता जनकेन यजनभूतला-दुत्थिता जानकीव निरन्तरवटपत्रशायिसमाराधनकुसुमप्रसवधन्य-पुष्पवाटीभूतलादुत्थिता श्रीदेव्यपरावतारभूता गोदादेव्यपराभि-धाना देवी 'आण्डाळ्' इति तदीयेनैव नाथबिरुदेन भूषिता श्रीकृष्णदिव्यकल्याणगुणानुसन्धानसमाधिनिष्ठापरिभूषितदिव्या - शयालङ्कृतगाथाशतीप्रवर्तिका अखिल एव दक्षिणभारतभूतले अखिलेष्वेव विष्णुदेवालयेषु श्रीदेवीनिर्विशेषं समाराध्यमाना जगन्ति रक्षति ।

यांश्च भट्टनाथान् श्रीमन्निगमान्तगुरवः कल्पसूत्रव्याख्यातृत्वे-न व्यपदिशन्ति स्वीये रहस्यत्रयसारनाम्नि मणिप्रवाल निबन्धे—

*இப்பாகவத சேஷத்வம் க்ரயம் செல்லும்படியை ‘பேசு வாரடியார்கள் எந்தம்மை விற்கவும் பெறுவார்கள்’ என்று கல்பஸூத்ர வ்யாக்யானம் பண்ணின பெரியாழ்வாரருளிச் செய்தார்* इति । भगवद्दासत्वस्य भागवतदासत्वान्तस्य विक्र यान्तपर्यवसानपरिपालनीयताम् 'भगवन्नामसंकीर्तननिष्ठाभगव-द्दासा अस्मान् विक्रेतुमपि कल्पन्ते' इति कल्पसूत्रव्याख्यातारः श्रीभट्टनाथाचार्याः अन्वगृह्णन्' इति च तदर्थः ।

अत्र च — 'अङ्गाङ्गिनोश्शेषशेषिभावं स्वत्वत्यागात्मक-यागान्तर्गतस्वत्वस्वरूपं सोमक्रयणान्तर्गतक्रयविक्रयस्वरूपं विनि-योगप्रकारादिकं च समीचीनन्यायैर्निर्णीय कल्पसूत्रं व्याख्यातवन्तो भट्टनाथा इति यावत्' इति तद्व्याख्याने सारास्वादिनीकारा आहुः ।

त इमे भट्टनाथबिरुदभूषिता विष्णुचित्ताचार्याः कल्यादि

चत्वारिंशदब्देभ्य उत्तरं स्वावतारेण धरातलं पवित्रयामासुरिति गुरुपरम्परयाऽनुसन्धेयात्पद्यादवगम्यते ,—

तत्वाब्दापगमे कलौ युगपरे संवत्सरे क्रोधने
चण्डांशौ मिथुनं गतेऽह्नि नवमे पक्षे बलक्षेऽपि च ।
स्वात्यां भास्करवासरे शुभतिथावेकादशीनामनि
श्रीमानाविरभूदचिन्त्यमहिमा श्रीविष्णुचित्तोऽनघः ॥
(जयन्तीमाला)

इति । एवंविधबिरुदभूषितमहाकुलजनिनिमित्ता बिरुदसंपत्तिः धूर्तस्वामिभाष्यवृत्तिकृतो रामाग्निचितः कल्पसूत्रव्याख्याप्रवीणबुधवेदविद्वज्जनपरम्परापरिप्राप्ता संप्रतिपन्ननिबन्धादृता च जागर्तीति ।

## रामाण्डारः कुमारिलादर्वाचीनः

वृत्तिकारोऽयं रामाण्डारः पशुबन्धप्रश्नारम्भे ,—

"तदेतत् अर्थवादाधिकरणे 'पूर्णाहुत्या सर्वान् कामान वाप्नोति' इत्यत्र वार्तिककारेणोक्तम् ,—

कर्मणामल्पमहतां फलानां च स्वगोचरे ।
विभागः स्थानसामान्यादविशेषोऽपि चोदिते ॥"

इति कुमारिलवार्तिकमुदाहरन् ततोऽर्वाचीन इत्यवधारयामः ।

भट्टनाथवंश्यत्वाच्चास्य तत्कुलधनभूतं यज्ञशास्त्रप्रवर्तकत्व परम्पराप्राप्तं निश्चिनुमः ।

## धूर्तस्वामी रामाण्डारश्च न समकालौ

यद्यपि ;—

आपस्तम्बं नमस्कृत्य धूर्तस्वामिप्रसादतः ।
तद्भाष्यवृत्तिः क्रियते यथाशक्ति निरूपिता ॥

इति स्वग्रन्थारम्भे वृत्तिकारो रामाण्डारो धूर्तस्वामिनः प्रसादं स्वग्रन्थनिर्माणहेतुं कीर्तयन् तस्यैव गुरुभूतस्योपसदनवरिवस्यादिना तदनुग्रहलाभमिवाचक्षाणस्तत्समकालिकमात्मानं प्रकाशयतीव प्रतीयते ।

तथापि ,—(५ ५-८१) सूत्रे 'अधिदेवनादिनिःसादहोमान्तं राजन्यस्यैव' इति भाष्ये ; 'अस्यार्थो मृग्यः' इति ।

एवं १७७तमे सूत्रे ; 'अस्य भाष्यस्य शास्त्रान्तराविरोधेन विषयवर्णना कर्तव्या' इति ।

एवं दशमप्रश्ने ,— 'पात्रसंशमनानन्तरं वक्तव्यमपि भाष्यकारेणानास्थयेदमुक्तम् ; लेखकप्रमादाद्वा' इति. एवंविधैर्भाष्यकृत्पारोक्ष्यगमकैर्वचोभिः न भाष्यवृत्तिकारौ समकालाविति निर्णीयते ।

एवं च;—

> आश्वलायनसूत्रस्य भाष्यं भगवता कृतम् ।
> देवस्वामिसमाख्येन विस्तीर्णं सदनाकुलम् ॥
> तत्प्रसादान्मयेदानीं क्रियते वृत्तिरीदृशी ।
> नारायणेन गार्ग्येण नरसिंहस्य सूनुना ॥

इत्यत्रैव रामाण्डारवृत्तावपि भाष्यग्रन्थाध्ययनजनितधीवैशद्यलाभमूलकृतज्ञतानिवेदनमात्रं तत्प्रसादत इत्युक्तिरित्यध्यवस्यामः ।

## श्रौतसूत्रवृत्तिकृद्रुद्रदत्तपरिचयः

आपस्तम्बीयश्रौतसूत्राणां साक्षाद्वृत्तिकारः रुद्रदत्तोऽपि । रुद्रदत्तभाष्यमित्यपि तस्या वृत्तेर्व्यपदेशः त्रिकाण्डमण्डनटीकायां दृश्यते ।

यथा त्रिकाण्डमण्डने ;—(१५५ व्या.) 'बलवद्भिः परैर्निगृह्यमाणत्वं रुध्यमानत्वम्. तदेवारोधनम्' इति रुद्रदत्तभाष्ये, इति ।

अयं च ग्रन्थः रुद्रदत्तवृत्तौ ५ प्रश्ने ८म पटले ३य सूत्रे दृश्यते ।

अत्र च रामाण्डारवृत्तेरपि भाष्यमित्येव व्यपदेशो दृश्यते ।

अयं च रुद्रदत्तः धूर्तस्वामिनोऽर्वाचीनः ; तथाहि ग्रन्थारम्भे ;—

अस्यापस्तम्बसूत्रस्य दुर्ज्ञानाज्ञानसंशयान् ।
सूत्रदीपिकया वृत्त्या रुद्रदत्तः परास्यति ॥

इति प्रतिजानन् स्वप्राक्तनैतद्विवरणमूलकानर्थपरिजिहीर्षयैव स्वप्रवृत्तिमावेदयति। प्रायोऽयं वृत्तिकारः धूर्तस्वाम्युक्तिं मतान्तरतयोपन्यस्य खण्डयति । यथा ;—'संक्षेपतो यज्ञो व्याख्यातः परिभाषायाम्, विस्तरेण दर्शपूर्णमासावनन्तरं व्याख्यायेते' इति धूर्तस्वामिभाष्यम्।

'न पुनरिहानन्तर्यार्थः' वृत्तस्य कस्य चिदनुपलम्भात् इति।

एवं दर्शशब्दविवरणे ,—

'दृश्यते यस्मिन् क्षणे सूर्येण संगतश्चन्द्रमाः सिद्धैः स क्षणो दर्शः' इति भाष्यम्।

अत्र रुद्रदत्तः ;—

"न दृश्यतेऽस्मिश्चन्द्रमा इति विपरीतलक्षणया दर्श इत्यमावास्योच्यते न त्वियमन्वर्थसंज्ञेति। चन्द्रदर्शनस्य सर्वतिथिसाधारण्यात्। न च सूर्येण सङ्गतो दृश्यते इति विशेष्टव्यः, सूर्यसङ्गतेरमावास्याशब्दप्रवृत्तिहेतोर्दर्शनात् ; अमा सह वसतोऽस्यां चन्द्रार्कौ, इति वाच्यम्, अतितेजस्विसूर्यमण्डलान्तर्विलीनः क्षीणकलश्चन्द्रमाः सिद्धैरेव दृश्यते नास्मद्विधैः। तत्रापि सिद्धदर्शनस्याविशेषकत्वादस्मद्दर्शनपरिसङ्ख्यापर एव शब्दोऽभ्युपगन्तव्य इति स एवार्थश्छद्मनोक्तस्स्यात्। न चासौ प्राञ्जलः विवक्षिततिरोधनात्। सूत्रकृतैव विपरीतलक्षणया विवरणाच्च 'यदहर्न दृश्यते तदहरमावास्या' इति। तस्माद्यथोक्त एव शब्दार्थश्शोभते" इति।

एवमुत्तरत्रापि गतश्रीशब्दार्थादौ भाष्यकृदुक्तिखण्डनपर एव रुद्रदत्त इति।

एवं बहुत्र तदुक्तानेव पदार्थान् सूत्रार्थांश्चानुवदन्नपि दृश्यत इति तत्तत्परिचयावसेयं भवति।

कल्पसूत्राणां परिभाषोपक्रमत्वानभ्युपगमपक्षोऽस्य पूर्वमुपपादितः।

एवम् ;—' एते वा अध्वर्योर्गृहा य एवं वेद गृहवान् भवतीति विज्ञायते ' इति (२२ शं ) सूत्रम् ।

तत्र ,—' यो यजमानो गृहान् वेद कर्माणि तस्यापि गृहा भवन्तीति फलसंस्तुतिः ' इति भाष्यम् ।

अत्र रुद्रदत्तः ,—वेदनस्य परार्थत्वात् फलवचनं प्ररोचनार्थम्, ततश्च यजमानस्यैवेदमेवंविदुषः फलमिति न शङ्कनीयम् , इति ।

अत्र च इति फलस्तुतिः इति फलसंस्तुतिः इति वा भाष्य-पाठेऽपि फलप्रशंसाप्रतिपत्त्या न भाष्यखण्डनावकाशस्तावानस्ति ; तथाऽपि रामाण्डारवृत्तौ ,—फलसंस्तुतिः-फलविधिः इति व्याख्यानात् यजमानगामिफलविधिपरत्वं भाष्यवृत्तिकारौ तस्याश्श्रुतेर्मन्वाते इत्याशयेन खण्डनप्रवृत्ती रुद्रदत्तस्य ।

अनया च वचोभङ्गया भाष्यकाराद्धूर्तस्वामिन इव वृत्तिकाराद्रामाण्डारादपि रुद्रदत्तोऽर्वाचीन इत्यवगम्यते ।

किञ्च ,—१ प्र ६ष्ठे सूत्रे ,—' इति सङ्कल्पः ' इति भाष्यम् ।

अत्र रामाण्डारः ,—यद्यपि ' मानसव्यापाररूपस्सङ्कल्पः ; तथाऽपि तद्वाचकशब्दोच्चारणपर्यन्त एव । ' यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत ' इति उच्चारणपर्यन्तनिर्देशात् ' इति ।

अत्र रुद्रदत्तः ; "सङ्कल्पश्च मनसोऽसाधारणव्यापारत्वान्मानसः। यथाऽऽहुस्सांख्याः ' मनस्सङ्कल्पं' इति । वाचिकोऽपीत्यपरं 'यो यक्ष्य इत्युक्त्वा न यजते इति लिङ्गात् " इति रामाण्डारग्रन्थमनुवदति ।

एवं ,—(४-१६-८) ' प्रतिपुत्रमावर्तेते ' इति रामाण्डारः ।

अत्र रुद्रदत्तः ;—'बहुपुत्रत्वे तु स्वस्थानवृद्धया नाम्नां ग्रहणम्। न त्वभ्यासवृत्त्या ' इति तदुक्तिं खण्डयति ।

पञ्चदशैव च प्रश्ना रुद्रदत्तेन व्याख्याताः । परिभाषाऽपि तेन व्याख्यातेति संभावयितुमस्त्यवकाशः । केशवस्वामिमतानुयायी च रुद्रदत्त इति त्रिकाण्डमण्डने अधिकारिनिरूपणग्रन्थादवगम्यत इत्यलं प्रासङ्गिकेन ।

## धूर्तस्वामिभाष्यवृत्त्योरुदाहृता निबन्धाः.

अनुपदकारः—११-९-२ सूत्रे भाष्यकृत् धूर्तस्वामी 'अनुपदकारस्य तूर्ध्वबाहुना' इति तद्ग्रन्थमनुवदति।

तत्र च रामाण्डारः—'अनुपदकारः छान्दोग्य-षड्विंशब्राह्मणव्याख्याता' इत्याह।

छन्दोगसूत्रम्—यजुरन्तरयेऽन्वाहारं धानञ्जय्यः, उपेक्षणं शाण्डिल्यः, इति छन्दोगसूत्रात् इति (९-७) भाष्यम्। द्राह्यायणश्रौतसूत्रस्यायं निर्देशः तत्र च २६ २७ संख्याङ्कितमिदं सूत्रद्वयम्।

,, 'यत्र दक्षिणो हस्तः तां दिशं गच्छति ब्रह्मा' इति (१४-३) भाष्यम्। अयमंशः द्राह्यायणश्रौते १४शे पटले ११शे सूत्रे 'उत्तरेण सोमवहनं गत्वा प्राग्वा पशाभिहोमात् दक्षिणेन यत्र राजानं क्रेष्यन्तस्स्यु-स्तत्र गत्वा तूष्णीमुपविशेत्। सा हि प्राची वर्त-मानस्य' इत्यादिषूक्तस्स्यात्।

छन्दोविचितिः—'द्विपदास्ववसानं नेष्यते' 'समस्त एवोपचर-णीयासु द्विपदात्वं नेष्यते' इति छन्दोविचिति-वचनात् इति (६-५) भाष्यम्।

याष्कद् पिङ्गलनागाद्यैश्छन्दोविचितयः कृताः।
तासां पिङ्गलनागीया सर्वसाधारणी भवेत्॥
सर्वानुक्रमणी काचित् छन्दोऽनुक्रमणी परा।
शौनकीया तृतीयेमास्तिस्रः ऋग्वेदिनां मताः॥
यजुर्वेदविदामन्या सर्वानुक्रमणी भवेत्।
सामगानां निदानस्था पतञ्जलिकृता हि सा॥

इत्युक्तरीत्या छन्दोविचितीनां बहुत्वं निश्चितम्। तत्र मुद्रितायां निदानसूत्रान्तर्गतायां छन्दोविचितौ द्वितीयपटले 'अथावसानम्' इत्यादिप्रकरणे इयमानुपूर्वी न दृश्यते।

इतिनिदानकारमति. ' इति भाष्यवचोऽनुरोधे निदाना-
नन्तर्गतमेव छन्दोविचितिसूत्रं निर्दिशतीति
ज्ञायते । पिङ्गलनागीया सर्वसाधारणी मता
इत्येतदालोचने याजुष्यपि छन्दोविचितिस्सैवेति
निश्चयस्स्यात् । यादवप्रकाशैश्च याजुषीत्येव छन्दो-
विचितिः परिगृहीता व्याख्याता च । पिङ्गल-
च्छन्दोविचितौ च इदं वचनं न पश्यामः ।
धूर्तस्वामी च याजुषीमेव छन्दोविचितिं निर्दिश-
तीत्यत्र च संशयः । ततश्च क्व स्यादिद वचनमिति
परिचिन्तनीयम् ।

निदानकारः—' सर्वः पूर्वपक्षो दर्शस्य इति निदानकारमतिः ' इति
सर्वमहः प्रातराहुते इति निदानसूत्रं ' इति च
भाष्यम् ।

निदानसूत्रं नाम पतञ्जलिप्रणीतः छन्दोगाना परि-
करभूतेषु द्विपञ्चाशत्सु ग्रन्थेषु —

कल्पसूत्रं तथा क्षुद्रं लाट्यायनकमेव च ।
उपग्रन्थः पञ्चविधो निदानं ताण्ड्यलक्षणम् ॥
अनपत्स्थानुस्तोत्रं कल्पानुपदमेव च ।
एतद्दशविधं सूत्रं सामगेषु च विश्रुतम् ॥

इत्युक्तेषु सूत्रनिबन्धेष्वन्यतमम् ।

लाट्यायनमनुपदं निदानं कल्पमेव च ।
उपग्रन्थाश्च क्षुद्राश्च तण्डालक्षणमेव च ॥
सूत्रं पंञ्चविधीयं च कल्पानुपदमेव च ।
अनुस्तोत्रं च विज्ञेयं दशसूत्रप्रकीर्तनम् ॥

इति तत्रैव पाठान्तरम् ।

भगवान् पतञ्जलिरेव निदानसूत्रकर्तेति तु—

निदाने भगवानाह बहुवित्तु पतञ्जलिः

इति षोडशी विचारे रुद्रस्कन्दोक्त्याऽपि निश्चीयते ।

भाष्यम् ;—अश्वप्रतिग्रहेष्टिविषये कपर्दिभाष्ये (७७ पत्रे),—

'अत्र भाष्ये विप्रतिपत्तिः प्रतिग्रहीतुरिष्टिः प्रतिग्राहयितु-रिति' इत्युक्तम् । किमीयमिदं भाष्यम् ? कल्पभाष्यम् वेदभाष्यं वेति विचारणीयम् ।

श्रीभाष्यकारपरिगृहीतक्रमे गुहदेवकपर्दिस्वामिनोः पूर्वापरभावेन निर्देशात् गुहदेवस्वामिन एव भाष्यं निर्दिष्टं स्यादिति संभावयामः ।

वेदभाष्यम् ,—'वेदभाष्यानुसारेण यथाशक्ति प्रकल्पितम्' ।

इति रामाण्डारवृत्तेरारम्भे वेदभाष्यनाम निर्दिश्यते । कस्येदं वेदभाष्यं इति विचारणीयम् । उत्तरत्र वृत्ति-कारेण 'गुहदेवस्वामिना ब्रह्मयज्ञप्रकरणे व्याख्यातम्' इत्युक्ते इह तमेव गुहदेवस्वामिनं भाष्यकार इति निर्दिशतीति संभावयामः ।

२ कल्पोपाध्यायः ,—'न गर्भिणीं दीक्षयेत्' इति गर्भवत्पश्वालम्भन-निषेध इति कल्पोपाध्यायेन व्याख्यातस्सोमाधाने' इति रामाण्डारः (१० प्रश्ने) ।

१ कपर्दिस्वामी , —'द्वादशप्रथमराश्योः सूर्योदयकालो वसन्तः इति कपर्दिस्वामी' इति रामाण्डारः (१० प्रश्ने) ।

केशवस्वामी ,—'निशायां द्वितीययामे इति केशवस्वामी' इति ।

'शमीगर्भस्याश्वत्थस्यारणी आहरतीति केशवस्वामी' इति च रामाण्डारः ।

अयं च केशवस्वामी प्रयोगसाराख्यश्रौतनिबन्धकर्ता,—

श्रियः पतिं नमस्कृत्य काण्वं च मुनिपुङ्गवम् ।
प्रयोगसारं वक्ष्यामि केशवोऽहं यथामति ॥

इति प्रयोगसारारम्भ उक्तेः ।

'नारायणादिभिः प्रयोगकारैः एकं पक्षमाश्रित्य दर्शपूर्ण-मासादीनां प्रयोग उक्तः । भवस्वामिमतानुसारिणा मया तु भवभाष्यमङ्गीकृत्य प्रयोगसारः क्रियते ।

इत्यपि तत्रैवाह । यद्यपि- भवस्वामी बोधायन-
कल्पसूत्रभाष्यकृदिति निश्चीयते। काण्वं मुनिं स्व-
ग्रन्थादौ नमस्यन् तच्छाखाश्रौतप्रयोगकार इत्यपि
निश्चेतुं शक्यते। तन्नामधेयस्तच्छाखाभाष्यकृदपर-
एव वा स्यात् इत्यपि ।

तथाऽपि बोधायनस्य कण्वतनयत्वप्रसिद्ध्या बोधा-
यनस्यैवायं काण्व इति निर्देश इति नानुपपत्तिः ।

गुहदेवस्वामी, —६ प्रश्ने ७ पटले 'अरण्यावसाने ग्रामसीमान्तप्रभृति
छर्दिर्दर्शनम्' इति ब्रह्मयज्ञप्रकरणे गुहदेवस्वामिना
अछर्दिर्दर्श इत्यस्य व्याख्यानावसरे उक्तत्वात्' इति
रामाण्डारः ।

श्रीभाष्यकारैः वेदार्थसङ्ग्रहे प्राचीनवेदव्याख्यातृत्वेन
गुहदेवस्वामी परिगणितः । अस्य च वेदभाष्यं
श्रीभाष्यकारैः स्वसिद्धान्तानुकूलार्थपरमिति गृही-
तम् । तदभिप्रायेणैव श्रीमन्निगमान्तगुरुभिः यति
राजसप्ततौ ;—

निरातङ्काष्टङ्कद्रमिडगुहदेव प्रभृतयः—

इति श्रीभाष्यकारपरिगृहीतसिद्धान्तप्रवर्तकेषु पूर्वपुरुषेषु गुहदेव-
स्वामी गृहीतः ।

पक्षिमतम्—

कपर्दिभाष्ये —१६, १८, पत्रयोः 'श्वो वा पक्षिमतात्' इत्यु-
च्यते। कोऽयं पक्षी नाम कश्च तदीयनिबन्ध इति विचारणीयम्।
पक्षिल इति च न्यायदर्शनभाष्यकृतो वात्स्यायनस्य नामनिबन्धृभि-
र्व्यवह्रियते वाचस्पतिमिश्रादिभिः । स एव तथाविधोऽन्यो वेति
न निश्चेतुं पारयामः ।

बैजवापिः, —'तत्पुत्रशिष्यादयः प्रतिप्रस्थात्रादीन्यार्त्विज्यानि कुर्व-
न्तीति बैजवापिः' इति भाष्यम् ।

भवदासः, —उपाकृतहोमे आज्यं प्रस्तुत्य 'लौकिकाज्यादिति भव-
दासमतिः' इति भाष्यम् ।

भवस्वामी :—(६-५) 'पार्श्वेनोपस्थानमिति भवस्वामी इति ; भवस्वामिमतिस्तु नक्तमुपतिष्ठते न प्रातरित्यत्र वाक्यभेदभयात् न प्रातरित्यनुवादः इति ' च रामाण्डारः। साक्षात्परम्परया च यज्ञव्याख्यातारो भवदासभवस्वामिभवदेवभवनाथाः श्रूयन्ते।

१ तत्र भवदासः,—'वृत्त्यन्तरेषु केषांचित्' (श्लोकवा ३३) 'केषांचित्—भवदासादीना' इति तत्र पार्थसारथिमिश्रटीका।

'भवदासेनापि कृतं जैमिनीये भाष्यम्' इति प्रपञ्चहृदयकारः। एतदुत्तर द्वितीयं सङ्कर्षकाण्डं विहाय शबरस्वामिना संक्षेपेण कृतम्' इत्यत्रत्यवाक्यादपि भवदासादर्वाचीनश्शबरस्वामीत्यवगम्यते।

२ भवस्वामी च बोधायनश्रौतसूत्रभाष्यकृदिति तद्ग्रन्थे प्रकरणान्तेषु निर्देशादवगम्यते। आदौ च न क्वापि कोशे तत्कृतिरिति निर्दिश्यते।

रामाण्डारे च पार्श्वेनेत्यादिवाक्यस्य भवस्वामीयत्वमुच्यते। भवस्वामिभाष्ये तु सर्वाग्न्युपस्थानप्रकरणे 'तस्मादीषत्तिर्यङ्ङिवोपतिष्ठते' इत्येव पङ्क्तिर्दृश्यते।

यद्यपि १६२२ सङ्ख्याङ्किते तालकोशे अग्निग्रन्थान्ते,—'इति भवस्वामिकृते बोधायनकल्पविवरणे' इति लेखः ; ततः 'पञ्चहसहस्रग्रन्थोपरि त्रिशतग्रन्थो भवनाथमिश्र' इत्येतावति त्रुटितपत्रशेषो लेखश्च दृश्यते तेन च एतद्ग्रन्थसंख्याप्रदर्शनपूर्वकभवनाथमिश्रनामग्रहणेन भवनाथस्यैतत्कर्तृत्वकीर्तनायैव लेखकप्रवृत्तिस्संभावयितुं शक्यते। सति चैवं नाथस्वामिपदयोः पर्यायत्वबुद्ध्या एकस्यैव भाष्यकृत उभयथा व्यपदेशः प्रवृत्त इत्यपि वक्तुं शक्यम्।

भवस्वामिवचनं रामाण्डारगृहीतं नात्र पश्याम इत्यन्य एवासौ भवस्वामी वाच्य इत्यपि चिन्तयितुमस्त्यवकाशः।

तथापि मद्रपुरस्थप्राच्यकोशागारस्थसविमर्शसूच्यां भव-स्वामिभाष्योपसंहारादौ पञ्चसहस्रेत्यादि दर्शितवाक्यादर्शनात् तथा लेखनं कस्यापि स्वमतिविजृम्भितमूलकं स्यादिति निश्चिनुमः।

शबरस्वाम्यग्निस्वामिभवस्वामिधूर्तस्वामिकपर्दिस्वामिनः निबन्धादौ मङ्गलवाक्यप्रयोगमुपेक्षितवन्त इत्येतदपि निबन्धनं भवितुमर्हति नयविवेकादौ मङ्गलपद्यं घटयतो भवनाथस्य न तेषु परिगणना युज्यते शालिकनाथादर्वाचीनस्येत्यत्र।

न ह्येक एव निबन्धकृत् एकत्र स्वनिबन्धे मङ्गलपद्यं घटयन् अन्यत्राघटयंश्च प्रणयेन्निबन्धमित्यभ्युपगन्तुं शक्यते। भट्टभास्कर-मिश्रश्च स्वीये ज्ञानयज्ञाख्ये वेदभाष्ये आदौ—

वाक्यार्थैकपराण्यधीत्य च भवस्वाम्यादि भाष्याण्यतो
भाष्यं सर्वपथीनमेतदधुना सर्वीयमारभ्यते॥

इति स्वस्य ग्रन्थप्रणयने वाक्यार्थधीवैशद्यहेतुतया भव स्वामिभाष्य कीर्तयन्ति। एवम्,—

प्रणम्य शिरसाऽऽचार्यान् बोधायनपुरस्सरान्।

इति बोधायनमुनेरादौ प्रणतिं प्रतिपादयति।

तत्र विविधेतिहासविवरणादिघटितकल्पसूत्रप्रवर्तकतया बहु-तरवैशद्यमूलं बोधायनमुनिरिति तन्नातिर्घटते।

भवभाष्याध्ययनेन वेदभाष्यप्रणयनवचनं तु कल्पसूत्रभाष्य-ग्रहणेन नोपपादनमर्हति। विनियुक्तमन्त्राणां तत्र तत्र वाक्यार्थवर्णन-संग्रहसम्भवेऽपि 'वाक्यार्थैकपराणीति' विशेषणस्वारसिकसम-न्वयस्य कल्पभाष्ये दुर्घटत्वात् वेदभाष्यमेव तत्र भाष्यपदेन निर्दिष्ट-मित्यवश्यं वाच्यम्। छन्दोनिरुक्तकल्पव्याकरणादिषोडशविधपरि-करविशदीकरणेन व्याचिकीर्षुर्हि भास्करमिश्रः वाक्यार्थैकपरत्वं भवभाष्ये कीर्तयन् निखिलवाक्यविवरणरूपतां वदन्नेव तस्यापुष्कल-परिकरता मन्यते! किमुत कतिपयमन्त्रवाक्यविवरणसङ्ग्रहपरे कल्पभाष्ये।

ततश्च वेदभाष्यस्थमेव रामाण्डारोदाहृतं भवस्वामिवचनं स्यादित्यध्यवस्यामः। तदीयं वेदभाष्यं तु वयं नोपलभामहे।

भवदेवस्तु तौतातितमततिलकस्य कौमारिलग्रन्थगूढभावाविष्करणपरस्य रचयिता सोमनाथखण्डदेवादिभ्यः प्राचीनः पूर्वमीमांसकाग्रणीरित्यवगम्यते।

सङ्कर्षः,—धूर्तस्वामी स्वभाष्ये इष्टिकल्पभाष्यान्ते 'अन्यैव सा यत्र तुल्यः पदाभ्यास इति सङ्कर्षपक्षः' इति,

१०मे प्रश्ने;—'दीक्षणीयाग्नेस्तु धारणं हिरण्यकेशि सङ्कर्षवचनात्' इति,

११ ,, 'हिरण्यकेशिनस्सङ्कर्षकारस्य च प्राजहितम्' इति,

,, ,, सर्वस्य सङ्कर्षकारस्य' इति,

१४ ,, 'मन्त्रेणाग्निष्ठं परिधीयत इति सङ्कर्षकारमतिः' इति,

'सङ्कर्षणकारमतिः परिव्ययणविधानेन' इति,

१६ ,, 'सङ्कर्षणकारस्य तु पूर्वयोपधानं उत्तरयाऽभिमर्शनम्' इत्येवं सङ्कर्ष-सङ्कर्षकार-सङ्कर्षणकारशब्दैः निबन्धं निर्दिशति।

'सङ्कर्षपक्षः' 'हिरण्यकेशिसङ्कर्षवचनात् इति वाक्ययोश्च हिरण्यकेशिपदसमभिव्याहारपर्यालोचनया सङ्कर्षशब्दो निबन्धृपरोऽपि प्रयुक्त इत्यवगन्तुमस्त्यवकाशः।

'तदुक्तं साङ्कर्षणे' इत्यारभ्य तद्वचनोदाजिहीर्षुभिश्च श्रीभाष्यकारैरपि सङ्कर्षणो निबन्धकारोऽभिप्रेत इत्यवगम्यते।

'सङ्कर्षः काशकृत्स्नप्रभवः' इति तत्वरत्नाकरकारवचनाच्च सङ्कर्ष इति निबन्धनिर्देशोपीत्यवगच्छामः।

सङ्कर्षपदं सङ्कर्षणपदं वा निबन्धारं व्यपदिशतु तन्नाम्ना च निबन्धस्यापि व्यपदेशः प्रचरतीति यथायथं व्यपदेशद्वयमुपपादयतोऽपि कोऽसौ सङ्कर्षः सङ्कर्षणो वा इति विशय परं विनैव विचारं नोपशाम्येत्।

अत्रेत्थं मीमांसेतिहासं कञ्चिदाकलयामः,—षोडशाध्यायनिबद्धं पूर्वमीमांसाशास्त्रं जैमिनिकृतम्। तदन्यदध्यायचतुष्कं व्यासकृतम्।

विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम्।

तत् ग्रन्थबाहुल्यभयादुपेक्ष्य किञ्चित्संक्षिप्तं उपवर्षेण कृतम् ।

तदपि मन्दमतीन् प्राति दुरुपपादं विस्तीर्णत्वादुपेक्ष्य षोडश-लक्षणपूर्वमीमांसाशास्त्रस्य देवस्वामिनाऽतिसंक्षिप्तं कृतम् ।

भवदासेनापि कृतं जैमिनीये भाष्यम्। पुनर्द्विकाण्डे धर्ममीमांसाशास्त्रे सङ्कर्षकाण्ड द्वितीयमुपेक्ष्य पूर्वस्य तन्त्रकाण्डस्य आचार्यशबरस्वामिनाऽतिसंक्षिप्तं कृतं भाष्यम् । तथा देवताकाण्डस्य (संकर्षेण) संकर्षणेन इति। [प्रपञ्चहृदये उपाङ्गप्रकरणे लेखो दृश्यते] अनेन च सङ्कर्षणो नाम देवताकाण्डभाष्यकार इति . तत्र च काण्डे शबरस्वामिना भाष्यस्याकरणेऽपि तत्पूर्वकालिकैः देवस्वामिभवदासोपवर्षबोधायनैर्भाष्याणि प्रणीतानीति चावगम्यते ॥

तत्र श्रीशङ्कराचार्यैः 'तदुक्तं सङ्कर्षे' इति; श्रीरामानुजाचार्यैः 'तदुक्तं साङ्कर्षणे' इति, श्रीभाष्ये: सङ्कर्षे इति, वेदान्तदीपे चानूद्यमानः;

"कर्मणां प्रकृतिविकृतिरूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः 'प्रभुत्वादार्त्विज्यम्' इत्यन्तेन सूत्रकलापेन * सङ्कर्षणेन कृतः" इति सारग्रन्थे द्वादशाध्याय्युत्तरतच्छेषभूतविचारपरसूत्रनिबन्धतया गृहीतः ।

शङ्करभाष्यप्रकटार्थटीकाकारैः, 'सङ्कर्षे—देवताकाण्डे' इति विव्रियमाणः, शङ्करभाष्यरत्नप्रभायां 'सङ्कर्षो देवताकाण्डम्' इति व्याख्यातः;

रत्नप्रभाविवरणे आनन्दगिरिभिः;—'संकृष्यते कर्मकाण्डस्थमेवावशिष्टं कर्म संक्षिप्योच्यते इति सङ्कर्षो देवताकाण्डम्' इत्युपपाद्यमानः,

धूर्तस्वामिनाऽपि 'इति सङ्कर्षकारमतिः' 'सङ्कर्षणकारमतिः' सङ्कर्षकारः' 'सङ्कर्षपक्षः' 'सङ्कर्षवचनात्' इति विविधनिर्देशैः

* सङ्कर्षणेनेतिसाहित्ये तृतीया ससङ्कर्षणेनेति पाठस्तु सुगमार्थः ।

निबन्धनिबन्धृनिर्देशरूपैश्शब्दैर्गृह्यमाणश्च कोऽसौ ग्रन्थः कश्च तत्प्रतिपाद्य इति विशये ,—

मीमांसारूपः कश्चित्सूत्रनिबन्ध इति शङ्कराचार्यादिदर्शित-निखिलप्रबन्धृसंमत्या निश्चिनुमः । तत्प्रतिपाद्ये विशयाच्च स्वरूपेऽपि स भविष्यति । तथाहि ,—

धूर्तस्वामी तावत् दीक्षणीयाग्निधारणादियज्ञसंबन्धिकर्मविषय-प्रमाणोदाहरणतया सङ्कर्षग्रन्थपरिग्राही ।

श्रीशङ्कराचार्याः श्रीभाष्यकाराश्च देवतापृथक्त्वहेतुकप्रदान-दृष्टान्तेन स्वाभिमतार्थसाधनाय तदुदाहरन्ति ; इत्थं च ब्रह्मसूत्र-भाष्यकृतोः देवताभेदादिनिरूपणपरत्वाभिप्रायकस्तत्परिग्रह इति सिद्धम् ।

' सङ्कर्षकाण्डमुपेक्ष्य शबरस्वामिना भाष्यं कृतम् ' इत्येतदनन्त-रम् तथा देवताकाण्डस्येत्यादिप्रपञ्चहृदयवाक्यस्य च सङ्कर्षव्यप-देशमुल्लङ्घ्य देवताकाण्डं व्यपदिशतो सङ्कर्षादन्यदेव किमपि सूत्र-बृन्दं विवक्षितं स्यादिति प्रतीयते, तस्य च भाष्यकारस्सङ्कर्षण इति च ।

सङ्कर्षपदस्य देवताकाण्डपरता प्रकटार्थरत्नप्रभानन्दगिरि-व्याख्याभ्योऽवगम्यते ।

इममेवार्थं श्रीमन्निगमान्तगुरवोऽपि शतदूषण्याम् (४ वादे) ,–

' देवताकाण्डं च कर्मकाण्डशेषतया श्रीभाष्यकारैः परिगृहीतम् । तदुक्तं सङ्कर्षे इति हि तत्सूत्राण्युदाहरन्ति' इति निर्दिशन्ति । वेदान्त-दीपे 'तदुक्तं संकर्षे ' इति निर्देशात्संकर्ष इति देवताकाण्डे व्यवहारोऽपि श्रीभाष्यकारसंमत इत्याशयः ।

कर्मदेवता ब्रह्मगोचरा
सा त्रिधोद्बभौ सूत्रकारतः ।
जैमिनेर्मुनेः काशकृत्स्नतो
बादरायणादित्यतः क्रमात् ॥
(तत्वरत्नाकरे)

इति भट्टपराशरपादानां सूक्तिरिहानुसंहिता ।

एवंविधप्रमाणोपदेशादित एव च आचार्यश्रीमेघनादारिसूरिभिरप्यनुगृहीतं नयप्रकाशिकायाम्। 'द्वादशलक्षण्याः कर्मविषयत्वमुपाधिः। अनन्तरचतुर्लक्षण्या देवताविषयत्वं' इति।

तत्त्वटीकायाम्,—'तर्किते कर्मणि संकर्षकाण्डे चतुर्लक्षण्या तत्तदाराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैर्निष्कृष्यते' इति निगमान्तगुरुभिरपि। तत्र च प्रत्यध्यायं विषया अपि स्वरूपादयो निर्दिष्टा अप्याचार्यैः।

संकर्षपदस्य देवताकाण्डपरत्वे व्युत्पत्तिस्तु दर्शिता आनन्दगिरिभिः - 'संकृष्यते कर्मकाण्डस्थमेवावशिष्टं कर्म संक्षिप्योच्यत इति संकर्षो देवताकण्डम्' इति। एतदनुसार्येव ब्रह्मविद्याभरणग्रन्थः।

एवं च संकर्षपदेन देवताकाण्डमिति प्रसिद्धमेव सूत्रवृन्दं जिघृक्षितं भाष्यकृद्भिरिति तद्व्याख्यात्रैककण्ठ्यसिद्धं भवति।

देवताकाण्डव्यपदेशप्रसिद्धस्य सूत्रनिबन्धस्य व्याख्याप्रसिद्धिमूलकप्रसिद्ध्या तत्रात्रैव व्यवहारः प्रासिध्यर्दिति सङ्कर्षपदेन देवताकाण्डव्यपदेष्टृभाष्यकृदाशयः प्रपञ्चहृदयाशयश्च पर्यवस्यति।

भाष्यव्याख्यासु च देवताकाण्डसंकर्षयोरैक्यमेव स्पष्टमुपपाद्यते। कर्मदेवताब्रह्मगोचरेत्यादिभट्टपराशरसूक्तिः आचार्यमेघनादारिसूरिसूक्तिः श्रीमदागमान्तगुरुसूक्तिश्च मीमांसायाः काण्डत्रयमेव प्रकाशयति। 'त्रिधोद्भवौ' इति (तत्वर); 'अनन्तरचतुर्लक्षण्या देवताविषयत्वम्' इति (नयप्रकाशिका) सङ्कर्षकाण्डे इत्यादि (तत्त्वटीका) मीमांसायां त्रिकाण्ड्यां (अधि-सा) इत्येव हि तेषां सूक्तिः।

तत्राचार्यश्रीमेघनादारिसूरिश्रीनिगमान्तसूरिभ्यां तु तस्य देवताकाण्डस्य स्वकालेऽप्रचार एवोक्तः 'संकर्षकाण्डस्तु न मया दृष्टचरः' इति (नयप्रकाशिकायां २३८ पृ.)

'मध्यः काण्डस्तु लुप्तस्थितिः इति (मीमांसापादुका ३६ श्लो.) च। लब्धिविषयक आनन्दगिरिटीकामूलकविमतिक्षोभादिसद्भावश्चात्र व्यज्यते।

किं च शतदूषण्यां संकर्षकाण्डं प्रक्रम्य; "तस्य च काण्ड-स्योपसंहारे अन्ते हरौ तद्दर्शनात्' इति देवताकाष्ठां प्रदर्श्य 'स विष्णुराह हि' इति सर्वदेवताराधनानां तत्पर्यवसानाय तस्य सर्वान्तरात्मत्वेन व्याप्तिं प्रतिपाद्य 'तं ब्रह्मेत्याचक्षते' इति तस्यैव वेदान्तवेद्यपरब्रह्मत्वोपक्षेपेणोपसंहारः कृत इति तत्वावित्संप्रदायः" इत्यनुगृहीतम्।

तदानीं सूत्रपाठसंप्रदायस्य विच्छेदेऽपि उपदेशतस्सिद्धस्य स्वपूर्वव्याख्यातृभिरर्थतो निर्देशस्य पूर्वपूर्वोपदेशलब्धस्योपदेशाच्च ऐकशास्त्र्यापेक्षितपरिचिन्तनपरिकराविलोप उपपद्यत इत्याचार्या-णामाशयः।

श्रीकण्ठभाष्यशिवार्कमणिदीपिकाकारा अप्पय्यदीक्षितास्तु परिमलग्रन्थे—

यद्यपि संकर्षकाण्डो न देवताविचारार्थं प्रवर्तितः। किं तु द्वादशलक्षण्यविचारितनानाविषयन्यायविचारात्मकस्तत्परि-शिष्टः तन्त्रप्रसङ्गवदुपदेशातिदेशसाधारण्येन प्रकीर्णकः प्रवर्तितः। न हि तत्र देवताविचारेणोपक्रम उपसंहरो वाऽस्ति, तत्र हि 'अनु-यजतीत्यनुवषट्कारश्चोद्यते' इति–विचारोपक्रमः–'विद्यते वाऽन्य-कालत्वात् यथाऽऽज्य (याज्या) संप्रैषो यथाऽऽज्य (याज्या) संप्रैषः'–इति विचारेण शास्त्रसमापनम्।

देवताविधानरहितेषूपांशुयाजादिषु देवताऽस्ति न वा?—१.

प्रयाजादिषु देवतावाचिनः समिद्बर्हिरादिशब्दा दर्शपूर्ण-मासाङ्गप्रसिद्धसमिद्बर्हिरादिपरास्तदन्यपरा वा?—२.

अग्निं होत्रायावह स्वं महिमानमावह इत्यत्र होत्रशब्दोक्तहोम-द्रव्यार्थत्वेन श्रुतः स्विष्टकृदग्निराहवनीयो वा गार्हपत्यो वा?—३.

पशौ यष्टव्या वनस्पतिर्देवता पश्वङ्गयूपरूपाऽन्या वा?—४.

स्वाहा देवा आज्यपा जुषाणा इत्यत्राज्यपाः सकलप्रयाजानू-याजदेवता उत्तमप्रयाजानूयाजमात्रदेवता वा?—५.

ग्रहाणां वैराजस्य स्तोत्रायेत्यादिचतुर्थीनिर्दिष्टानि स्तोत्राणि आग्नेयं गृह्णातीत्यादितद्धितनिर्दिष्टा अग्न्यादयो वा?—६.

यां देवतां वषट्करिष्यन् स्यात्तां मनसा ध्यायेत् इति देवतावाचिशब्दध्यानविधिः देवतार्थध्यानविधिर्वा ?—७. यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं इति विहितयोर्यजयेयजामहयोरग्निं विष्णुमित्यादिद्वितीयान्तदेवतानां निर्देशः कार्यो न वा ?—८. आवह देवान् यजमानायेति प्राकरणिकसकलदेवताविषयो वा अग्निमग्न आवहेत्यादिनिर्देक्ष्यमाणाग्न्यादिदेवतामात्रविषयो वा ? — ९. देवान् यजेति प्रथमानूयाजोपक्रमप्रैषे देवानिति शब्दः प्रथमानूयाजदेवताविषयः सर्वानूयाजदेवताविषयो वा ?—१०.

इत्यादि देवताविचारभूयस्त्वात् भूम्ना संकर्षकाण्डस्यैव देवताकाण्ड इत्यपि व्यवहारोऽस्तीति तस्य तेनोपादानम्' इति रत्नप्रभाकारान्तैरद्वैतिभिर्निर्विशयाभ्युपगतं देवताकाण्डशब्दप्रधान-व्यपदेशं सूत्रकलापं श्रीभाष्यकारप्रशिष्यवचनसंप्रतिपत्तिमूल-विशिष्टाद्वैतिसर्वनिबन्धृसंमतं स्वयमपलपन्त एवोपपादयन्ति । संप्रदायविदस्तु—

धूर्तस्वामिना संकर्षस्थविचारोदाहरणात् शबरस्वामिनाऽपि १०-४-३२ सूत्रे १२-२-११ " सूत्रे च 'इति संकर्षे वक्ष्यते' इत्युक्तेश्च कर्मविचारस्संकर्षे वर्तत इत्यविवादमेव। संकर्षे देवताविचारसद्भाव-तदभावौ न धूर्तस्वामिवचसाऽवगम्येते। शंकराचार्यैश्श्रीभाष्यकारैश्च तदुदाहरणं प्रपञ्चहृदये देवताकाण्डे संकर्षणेन भाष्यप्रणयनोक्तिश्च देवताविचारपरत्वं संकर्षस्यास्तीत्यप्यवगमयति । द्विकाण्डे धर्म-मीमांसाशास्त्रे संकर्षकाण्डं द्वितीयमुपेक्ष्य शबरस्वामिना भाष्य-प्रणयनमुक्त्वा ; तथा देवताकाण्डे इति देवताकाण्डपदेन कञ्चिद्भागं प्रतिपादयतः प्रपञ्चहृदयकारस्य शबरोपेक्षित एव भागो विवक्षित इति हि स्फुटमेव ; तदतिरिक्तविवक्षायां विंशत्यध्यायात्मक-त्वोक्त्युपरोधात्। इत्थं च संकर्षकाण्डं कर्मदेवताविचाररूपम ; तत्र कर्मविचारो द्वादशाध्यायीविचारितशेषभूत एव विवक्षाति-शयमूलः, देवताविचारस्तु प्रधानः, तत्स्वरूपादेः पूर्वमनि-रूपितत्वात्. अतः प्रधानदेवताविचारत्वमूलकं तस्य देवताकाण्ड

इत्यन्वर्थं नाम । तत्र संकर्षे(णेन)ण भाष्यप्रणयनतत्प्रसिद्धि-निबन्धनस्संकर्षकाण्ड इति व्यवहारः, एनमेव च व्यवहारं व्याख्यातृनिबन्धनमादृत्य श्रीशंकराचार्य-श्रीरामानुजाचार्ययोर्व्य-वहारस्संकर्ष इति सांकर्षण इति च । तत्र संकर्षपदस्य साक्षाद्ग्रन्थ-प्रतिपाद्यविषयपुरस्कारेण निबन्धानवबोधकतया तत्प्रतिपाद्य-विशदीकरणाय श्रीरामानन्दानां प्रकटार्थकाराणां च संकर्षो देवता-काण्डम् ' इति विवरणे प्रवृत्तिः ।

संकर्षेण देवताकाण्डे भाष्यकरणेऽपि शबरस्वाम्युपेक्षया तदानीं प्रचारशैथिल्योपक्रमे भट्टगुर्वादिसुप्रसिद्धधीमत्परिग्रह-वैकल्यादिभिस्संकर्षकाण्डस्य परिग्रहप्रचारयोर्वैरल्यं क्रमेणान्व-वर्तत । तत्रापि कर्मविचारभागस्य द्वादशाध्यायीसंबद्धतया किया-निव प्रचारस्संभवन्नास्त । देवताविचारभागे तु निरीश्वरवादरुचि-भिः स्वपरहस्तैर्विपरिलोपन एव यत्नः कृतप्राय आसीत्, येन च श्री-रामानन्दान्तं कथञ्चिदनुवर्तमाने दैवादन्तर्हिते च देवताविचारभागे संकर्षपदप्रतिपाद्यतायां प्रवृत्तिनिमित्तवैकल्यमनुसंदधद्भिरानन्द - गिरिभिरेव संकृष्यते कर्मैवेत्यादिना विग्रहं प्रदर्श्यापि प्रसिद्धिपरि-पालनाशयेन देवताकाण्डमित्येव विवृतमपि । अनेन च तदानीं कर्मविचारभागमात्रमनुवर्तमानमासीत् देवताविचारभागस्तु लुप्त एवासीदित्यवगम्यते । अत एव तदनन्तरभवैः कर्मविचारसर्वस्व-वेदिभिः आचार्यश्रीमेघनादारिसूरिभि॰ श्रीनिगमान्तसूरिभिश्च देवताविचारपरभागमात्राभिप्रायेण ' संकर्षकाण्डस्तु मया न दृष्ट-चर॰ ' इति ' मध्यः काण्डस्तु लुप्तस्थितिः ' इति च नयप्रकाशिकायां मीमांसापादुकायां चानुगृहीतम् ।

अत्र च आचार्यैर्मीमांसापादुकायां लुप्त इत्येव वक्तव्ये लुप्त-स्थितित्वकथनं देवताविचारभागमात्रस्य विलोपमभिप्रेत्य; अत-स्तदानीं कर्मविचारभागस्य सत्त्वमप्यभिप्रेतम् । एवं शतदूषण्यामपि 'देवताकाण्डं च कर्मकाण्डशेषया भाष्यकारैः परिगृहीतम् । तदुक्तं सङ्कर्षे इति हि तत्सूत्राण्युदाहरन्ति ' इत्युक्त्वा ' तस्य च काण्डस्योप-

संहारे अन्ते हरौ तद्दर्शनात्' इत्यादिना तत्रत्यान्तिमसूत्रप्रदर्शनेन तत्ववित्संप्रदाय इत्यनेन च उपदेशप्राप्तमेतावदेव, प्रत्येकभाग- प्रतिपाद्यग्रहणं तु तत्सद्भावसाध्यं न संभवतीदानीमित्याविष्कृतम्।

तत्वटीकायाम् 'तर्किते कर्मणि सङ्कर्षकाण्डे चतुर्लक्षण्या तत्त- त्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैर्निरूप्यत' इति श्रीसूक्ति दर्शनात्, तत्तनयैर्वरदनाथाचार्यैः—

स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम्।
फलं च देवताकाण्डे देवतानां निगद्यते॥

इति संगृहीतम्। एवं परिचिन्तनीयायां च वस्तुस्थितौ आनन्द- गिरीणां सङ्कर्षपदविग्रहणं पर्यालोचयद्भिः देवताविचारभागमनु पलभमानैश्च स्थितगतिचिन्तनाय प्रयस्यद्भिः सङ्कर्षे कर्मविचारभाग एव कांश्चन विचारान् परिगृह्य तावन्मात्र एव देवताकाण्डत्वप्रसिद्धि मूलत्वोपपादनाय प्रववृते। न च तावता सांप्रदायिकस्य संप्रति- पन्नस्य च देवताकाण्डस्य देवताविचारेणोपसंहारपरस्यापलाप उचित इत्यनुसंदधते।

तत्र धूर्तस्वाम्यनूदिताविषयेषु तु ;—

१. तत्र 'दीक्षणीयाग्नेस्तु धारणम्' इत्यंश. सङ्कर्षकाण्डे पञ्चदशेऽ- ध्याये द्वितीये पादे 'दीक्षिताग्नेः' इत्यनेन सूत्रेणोच्यते।
२. सङ्कर्षकारस्य प्राजहितमित्युक्तांशश्च सङ्कर्षकाण्डे तत्रैव 'सर्वैव स्यात्' इति सूत्रेणोच्यते।
३. सर्वस्य सङ्कर्षकारस्य इत्युक्तांशस्तु सङ्कर्षकाण्डे न दृश्यते।
४ मन्त्रेणाग्निर्ह परिधीयते इत्यंशस्तु सङ्कर्षकाण्डे १३शेऽध्याये ४पादे विचार्यते इति व्याख्ययाऽवगम्यते।
५. सङ्कर्षकारस्य तु पूर्वयोपधानमुत्तरयाऽभिमर्शनम्' इत्यंशस्तु सङ्कर्षकाण्डे १४शेऽध्याये १मे पादे।
६ अन्यैव सा यत्र तुल्यः पदाभ्यासः इत्यंशस्तु सङ्कर्षकाण्डे सूत्रेषु नोपलभ्यते।

अत्रेदं चिन्तयामः--सङ्कर्षकाण्डं नाम भास्करदीक्षितव्याख्या-युतं मुद्रापितं प्रचरति । तत्र च सुबहून्येव किं बहुना सर्वाण्येव सूत्राण्यपरिपूर्णानुपूर्वीणि दृश्यन्ते । योऽग्निम् १३-७ अभितः १३-१० ऐन्द्रम् १३-२-५, उत्तरस्मिन् ११ तेषाम्, १३-४-१९ गणेषु १४-१-१९, उदिते १५-१-४, यस्यै १६-४-६ इत्यादिरूप एव हि तत्र सूत्रपरिग्रहो दृश्यते । तद्व्याख्यायां च विशदबह्वर्थपुरस्कृतो वाक्यार्थः प्रदर्श्यते । तावन्तं चार्थं प्रतिसूत्रं विनाऽप्याक्षेपाध्याहारादिशेषपूरकपरिकरं सूत्रसूचितं न संमन्यते कोऽपि दार्शनिकः ।

न च लवशोऽप्यवलम्बनं विना स्वकपोलकल्पितैरुपपन्नानेकार्थघटितैर्वाक्यार्थैरयं सूत्रार्थ इत्यारोप्यमाणैः कश्चिन्निबन्धा भवितुमर्हति । नवा तथाविधं निबन्धं प्रामाणिका बहुमन्वते ।

अतः सूत्रप्रतीकमात्रग्रहणेन व्याख्यानं वा, समग्रसूत्रलेखनपूर्वकव्याख्यालेखनश्रद्धावैकल्येन प्रतीकमात्रप्रदर्शनपूर्वकं व्याख्यालेखनं वा, समग्रसूत्रपाठदौर्लभ्यदशाकृतं वा तथाविधैकदेशमात्रोपलम्भं सभावयामः ।

तदिदं शङ्करभाष्यटीकाव्याख्यायां अप्पदीक्षितीयपरिमलग्रन्थे सङ्कर्षकाण्डीयकतिपयसमग्रसूत्रप्रदर्शनात् । श्रुतप्रकाशिकाया व्याख्यायां भावप्रकाशिकायाम् ,--

'नाना वा देवतापृथक्त्वात्' इति प्रतीकमुपादाय 'तेषां पृथक्प्रदानमवदानैक्यात्' इति सूत्रेण अवदानवत्प्रदानमपि युगपदेव कार्यमिति पूर्वपक्षः, तत्रेदं सिद्धान्तसूत्रम् 'नाना वा देवतापृथक्त्वात्' इति सूत्रपरिग्रहेण रङ्गरामानुजमुनिभिः पूर्वपक्षसिद्धान्तयोर्विवरणाच्च निर्णीयते ।

अतो विरलप्रचारतया कैश्चिदनुपलब्ध एव काप्यसमग्रोपलब्धश्चासीत्सङ्कर्षकाण्ड इति समुचितैव संभावनेति ।

## एतन्मुद्रणपरिकरभूताः कोशाः.

रामाण्डारवृत्तियुतधूर्तस्वामिभाष्यभूषितस्यापस्तम्बीयश्रौत--सूत्रस्य १--५ प्रश्नान्तभागरूपप्रथमसंपुटस्य मुद्रणे परिशोधनायावलम्बिता आदर्शाः ;--

एतत्कोशागारे सङ्गृहीताः ,—

| | | | |
|---|---|---|---|
| I सूत्रपाठे ,— | 2299, 2682, 3758, 4451, | नं तालपत्र | कोशाः |
| | A 129, C 1442, C 2059 | „ कागदमयाः | „ |
| II भाष्ये ,— | B 11–12, C 1369, | „ „ | „ |
| „ | 2328, 2690, | · तालपत्रमयौ | „ |
| III भाष्यवृत्त्योः ;— | 160, 1128, 2280, 4346. | „ „ | „ |
| „ | A 361, A 549, C 1371. | „ कागदमयाः | „ |

मद्रपुरादानीतः कागदमयः कोशः ङ–संज्ञया परिगृहीतः क्वचित्संवाचनायाद्रियत ।

क्वचिद्विषये अहोबलसूरिविरचिता श्रौतसूत्रवृत्तिरपि भाष्यवृत्त्यनुसारिणी समाद्रियत ।

एवमेतेषां सूत्रभाष्यवृत्तिकोशानामवलम्बनेन आदितः पञ्चप्रश्नीभागमुद्रणं निरवाक्ष्म । अत्र च प्रेक्षावतां सौकर्याय प्रतिपृष्ठं खण्डसूत्रयोस्सङ्ख्या अपि न्यवेशयाम । भाष्यवृत्त्योः प्रतिविषयं शिरोलेखं च जिघृक्षितवाक्यार्थधारणसौकर्याय न्यवीविशाम । आपस्तम्बीयश्रौतसूत्राणां रुद्रदत्तवृत्तेर्मुद्रिताया दुर्लभतया प्रतिसूत्रं तत्रत्यविषयान् प्रायष्टिप्पणे प्रादर्शयाम ।

तत्र च सीसकाक्षरयोजकानां तच्छोधकस्य मम च मानुषदुर्वारेणानवधानेन संभावितान् दोषान् क्षाम्यन्तः दुर्लभतमपरमोपकारिनिबन्धप्रचारकृतसंमोदा अनुगृह्णन्तु सन्तः ।

देवो वर्षतु संपदस्तु जगतां जागर्तु धर्मश्चिरं
लोकास्सन्तु दृढं स्वधर्मनिरताः श्रीचामराजे रताः ।
आस्तिक्यं प्रथतां चिरं नृपमणेश्श्रीचामराजस्य ताः
हृद्यास्संप्रसरन्तु दिग्गजशिरोभूषायिताः कीर्तयः ॥

इत्यावेदयति,

सो. नरसिंहाचार्यः,

महिशूरपुरीप्राच्यकोशागारपण्डितः.

## आपस्तम्बश्रौत धूर्तस्वामिभाष्य तद्वृत्ति विषयसूचनी.

प्रथमः प्रश्नः 1—149

विषयाः पृष्ठसङ्ख्या

पञ्चमी खण्डिका.

षष्ठी खण्डिका

सप्तमी खण्डिका

विषयाः | पृष्ठसंख्या

एकादशी खण्डिका

द्वादशी खण्डिका



त्रयोदशी खण्डिका

चतुर्दशी खण्डिका

अष्टादशी खण्डिका

विषया पृष्ठसंख्या

चतुर्दशी खण्डिका ॥

पञ्चदशी खण्डिका ॥

विषया पृष्ठसंख्या



षोडशी खण्डिका ॥



सप्तदशी खण्डिका

## तुरीयः प्रश्नः— 352-435.

प्रथमा खण्डिका



द्वितीया खण्डिका

तृतीया खण्डिका

चतुर्थी खण्डिका



पञ्चमी खण्डिका



षष्ठी खण्डिका

विषया | पृष्ठसंख्या

एकादशी खण्डिका

विषया | पृष्ठसङ्ख्या

तृतीया खण्डिका

तुरीया खण्डिका

विषया पृष्ठसङ्ख्या

विषया. पृष्ठसंख्या



त्रयोदशी खण्डिका



चतुर्दशी खण्डिका

सप्तदशी खण्डिका



अष्टादशी खण्डिका.

विषया पृष्ठसङ्ख्या



एकोनविंशी खण्डिका

द्वाविंशी खण्डिका

त्रयोविंशी खण्डिका

चतुर्विंशी खण्डिका

सप्तविंशी खण्डिका

अष्टाविंशी खण्डिका.

एकोनत्रिंशी खण्डिका.

नानाशाखास्थकल्पावगतविधिभिदायोगितत्तद्विशेषैः
आपस्तम्बीयकल्पोऽभिमतपथयथायोगहृद्यव्यवस्थः ।
तत्रास्मिन् भाष्यवृत्ती सुविवरणपरे तत्तदुक्तेषु सम्यक्
मीमांसासक्तबुद्धेः सुखमवधृतये कल्पतां संग्रहोऽयम् ॥

तदिह मम संजिघृक्षोः
परिचयदोषं ह्यवश्यसंभविनम् ।
क्षाम्यन्तो यदि वा स्यात्
गुणग्रहो याज्ञिका मयि दयन्ताम् ॥

इत्यभ्यर्थयते,

सो. नरसिंहाचार्यः,

महीशूरपुर प्राच्यकोशागारपण्डितः.

# आपस्तम्बीयकल्पसूत्रधूर्तस्वामिभाष्यतद्वृत्त्योः कपर्दिभाष्ये चोदाहृतानि प्रमाणवचनानि

---

पृ

१०८ (भा) अक्षमात्रं स्रुव (स्य द्वारम्) स्योदरं स्रुगञ्जल्याकारा।
आयामः पञ्चभागस्स्यात् द्विभागः पात्रमुच्यते।
त्रिभागो दण्ड इत्याहुरेतदायामलक्षणम्॥
विस्ताराद्विगुणं पात्रं ग्रीवा विस्तारमर्धतः।
ग्रीवार्धे तु बिलं कुर्यादेतत्पात्रस्य लक्षणम्॥
बिलस्योच्छ्रायो विंशत्यंशः॥
इति स्रुचां शास्त्रान्तरम्॥ इति॥

,, अग्निदेवत्या इति तु स्थितिः; भक्तिमात्रमितरत्।
(निरुक्तम् अध्या ८ खं. २२ महाराष्ट्रपाठे)

५७३ (वृ) अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥ (ई. उ ११)

९५ (सू.) *अष्टाशीतिशतमीषा तिर्यगक्षश्चतुश्शतम्।
षडशीतियुगं चास्य रथश्चारण उच्यते॥

९२ ,, रथाक्षमात्री पश्चात्तिर्यगीषया प्राची। विपथयुगेन पुरस्तात्।

३८० (वृ) अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च॥
(भ. गी. ९-२४)

,, आतमितोः प्राणमायच्छेत् नियमातिक्रमे चान्यस्मिन्।
(आप धर्म. २-१२-१८)

५७४ इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया॥
(वि. पु. ६ ६-१२)

---

*इति इयं कारिका; 'एवं चोदाहरन्ति रथशास्त्रविदो रथकाराः। इति भाष्यकृताऽवतार्यते॥
तक्षशास्त्रे गार्ग्यागस्त्यादिभिरङ्कुलिसङ्ख्ययोक्तं रथ-परिमाणश्लोकमुदाहरति' इति करविन्दाधिपेनावतार्यते॥

पृ

(बृ) उपोद्घातः पदच्छेदः पदार्थः पदविग्रहः ।
आक्षेपश्च समाधिश्च व्याख्या षोढा प्रकीर्तिता ॥

५७४ एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति (कौषी. ३-९)

,, कण्वं तु बधिरं विद्यात् सुरापं कश्यपं विदुः ।
(उपदेशनिगमः ?)

५७४ कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्
(भगवद्गीता १८, ५)

,, कर्मणामल्पमहतां फलानां च स्वगोचरे ।
विभागः स्थानसामान्यात् अविशेषेऽपि चोदिते ॥
(तन्त्रवार्तिकम् १-२-१७)

५७३ कामात्मता खल्वपि न प्रशस्ता (महाभा)

,, गुणलोपेऽपि मुख्यस्य । (जै. सू १०-२-६३)

,, गृहमेधिनोर्व्रतं कालयोर्भोजनम् । (आप ध २-१-२)

(भा) चतुरश्रो ब्रह्मचमसो होतुस्तु परिमण्डलः
पृथुस्तु यजमानस्य त्र्यश्रिरुद्गातुरुच्यते ॥
प्रशास्तुरवतष्टस्स्यात् उत्तष्टो ब्रह्मशंसिनः ।
होतुरग्रे विशाखी स्यात् नेष्टुर्दक्षिणवक्रकः ॥
आच्छावाकस्य रास्नावान् आग्नीध्रस्य मयूखकः ।
एते दण्डविकाराश्च चमसानां प्रकीर्तिताः

३८० (बृ) चतुर्होतारो यत्र संपदं गच्छन्ति देवैः ।
(तै आर ३-११-२)

५७३ ,, सर्वे वेदा यत्रैकं भवन्ति (तै. आर ३-११-१)

,, ,, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति+केन
(बृ उ ६-४)

,, ,, तमेवं विद्वानमृत इह भवति (तै आर ३-१२-१७)

,, ,, तमेव विदित्वाऽतिमृत्युमेति(श्वे उ ३-८)

दाहयित्वाऽग्निहोत्रेण स्त्रियं वृत्तवर्तीं पतिः ।
(याज्ञ-स्मृ १-८९)

,, दुर्भिक्षे राष्ट्रसंबाधे देहनित्यात्य (यादिषु) येषु च ।
(आपल्लक्षणम् )

५७३ (वृ) न कर्मणा न प्रजया-श्रुः (तै आर ६-१०-२१)

द्वितीयां वै तु यो भार्या दहेद्वैतानिकाग्निभिः।
जीवन्त्यां प्रथमायां तु सुरापानसमं भवेत् ॥
नित्यनैमित्तिकं काम्यं प्रक्रान्तं कार्यमेव तत्।

३८० ,, नारायणः परं ब्रह्म आत्मा नारायणः परः।
नारायणं महाज्ञेयम्—(नारायणोप) (तै आर ६-२५)

,, पय एव घनीभूतमामिक्षेत्यभिधीयते।

,, प्रक्रान्तमग्निहोत्रादि यत्किं च श्रुतिबोधितम् ॥
आर्तवाभिप्लुतां नारीं विहाय कुरुते द्विजः ॥

,, प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा।
कर्तव्याग्रयणेष्टिश्च चातुर्मास्यानि चैव हि ॥

(याज्ञ. स्मृ १-१२५)

३८० ,, ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥

(भ गी. ४-२४)

,, ब्राह्मणः काममश्नीयात् श्राद्धे व्रतमपीडयन्।

६०२ भार्यायै पूर्वमारिण्यै दत्वाग्नीन् (मनु ५-१६८)

,, मन्त्रो हीनस्स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुस्स्वरतोऽपराधात् ॥

(पाणिनि शिक्षा ५२)

,, *मातॄणां तु भवेत्पूर्वं पितॄणां तदनन्तरम्।
ततो मातामहानां तु ॥ (प्रचेतस्स्मृतिः)

,, *मृगभवनादि राशिद्वयदिनकरभोगस्थिति समानाः।
शिशिरवसन्तग्रीष्मा वर्षाश्शरदो? हिमागमाःक्रमशः॥

---

1 *'मातृश्राद्धं तु पूर्वं स्यत्' इति प्रथमपादे पाठः निबन्धेषु दृश्यते. (यमार्या कतिपयपदव्यत्यासेन ब्रह्मगुप्तीये सिद्धान्ते पठ्यते.

पृ.

३८० (बृ) य आत्मनि तिष्ठन्नात्मनोऽन्तरो+स आत्मा
(बृहदा-माध्यन्दिनपाठे ३-७-२२)

" यजुरन्तरयेऽन्वाहारं धानञ्जय्यः उपेक्षणं शाण्डिल्यः
(द्राह्यायणश्रौतम्)

५७४ यज्ञेन यज्ञमयजन्त+देवाः (तै आ ३)

३८० " यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
(भ गी ९-२७)

५७४ यथा वा रथोऽन्यतरेण चक्रेण न वर्तते यथा ह वा
पक्षेणैकेन पक्षी (ताण्डायनिश्रु).

५७४ यदेव विद्यया करोति ॥ (छां १ १-१०)

" यस्य वेदिश्च वेदी च विच्छिद्येते त्रिपूरुषम्।
स वै दुर्ब्राह्मणो नाम न सोमं पातुमर्हति ॥

" " यश्च पौनर्भवो भवेत् (इति चतुर्थपादेपाठां)
" यश्च वै वृषलीपतिः "
(कपर्दिभाष्ये ७३ मे पत्रे)

३८० " येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
(भ गी ९-२३)

३८० " यो देवानां नामधा एक एव
(तै. सं ४ का ६-२-२)

" रजस्वला चेच्छ्रौताग्निमज्ञानात् स्पृशते यदि।
इष्टिरष्टाकपालेन कर्तव्या शुचयेऽग्नये ॥

" वसाशुक्रमसृङ्मांसं मूत्रविट्कर्णविण्णखाः।
श्लेष्माश्रुपूयिका स्वेदा द्वादशैते नृणां मालाः ॥
(मनु ५-१३५ किंचिद्यत्यासेनपठ्यते)

विहितं यदकामानां कामात् तद्विगुणं भवेत्
(मिताक्षरायां वचनमिदं दृश्यते ३-२२६)

" शुचिना कर्तव्यम्

पृ

(वृ) श्यामलाम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला ।
श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम् ॥
(आयुर्वेदे)

३८० ,, स एतांश्चतुर्होतृनात्मस्परणानपश्यत् ।
(तै ब्रा ३-७-१)

स ब्रह्मा स शिवः ((तै आ ८)

१० (भा) सङ्गवान्तः प्रातः (आश्वलायनसू)

(वृ) सावित्री मात्रसारोऽपि नासौ दुर्ब्राह्मणो भवेत् ॥

१० (भा) सोमान्तानि तु नित्यानि (वासिष्ठगृ)

(वृ) स्पृष्ट्वा तु वैदिकाग्निं या प्रमादाद्वा रजस्वला ।
नष्टं तमाहुर्विद्वांसो ह्यग्न्याधेयं भवेत्पुनः ॥
(कौण्डिन्यस्मृ)

(भा) सोमो न विक्रेतव्यः ॥

५७४ हिरण्मयश्शकुनिर्ब्रह्मनाम + संपराये (काठ)

श्रीमते हयग्रीवाय नमः

श्रीरामाग्निचिद्वृत्तिसहितधूर्तस्वामिभाष्यभूषितम्

# आपस्तम्बश्रौतसूत्रम्

## श्रीकौशिकरामाग्निचिद्विरचिता वृत्तिः

नमस्त्रैलोक्यनिर्माणसंहृतित्राणकर्मणे ।
चित्सदानन्दरूपाय विष्णवे परमात्मने ॥ १ ॥

[ग्रन्थावतारः]

आपस्तम्बं नमस्कृत्य धूर्तस्वामिप्रसादतः ।
तद्भाष्यवृत्तिः क्रियते यथाशक्ति निरूपिता ॥ २ ॥
न व्यवस्थाप्यते वस्तु स्वबुद्धिस्तु नियम्यते ।
को वा समर्थो वेदार्थनिर्णयेऽत्यन्तगह्वरे ॥ ३ ॥
कौशिकेन तु रामेण श्रद्धामात्रविजृम्भितः ।
वेदार्थनिर्णये यत्नः क्रियते शक्तितोऽधुना ॥ ४ ॥
यथाभाष्यं यथाप्रज्ञं कृतां [1] वृत्तिमिमां मया ।
विद्वांसस्त्वनुगृह्णन्तु प्रसन्ना वीतमत्सराः ॥ ५ ॥
[2] वेदभाष्यानुसारेण यथाशक्ति प्रकल्पितम् ।
अल्पार्थमपि मद्वाक्यं श्रद्दधानस्य शोभते ॥ ६ ॥

---

[1] व्याख्यामि—घ. [2] वेदंमागानु—क

हरि ओम्

(सू.) अथातो दर्शपूर्णमासौ व्याख्यास्यामः ॥ १ ॥

(भा) [1]अथेत्युपोद्घात —'यज्ञं व्याख्यास्यामः' इति परिभाषाया [2]यज्ञजातिशब्देन एकविंशतिसंस्थस्य यज्ञस्य व्याख्या प्रतिज्ञाता ।

[यज्ञभेदाः]

[3]सप्त पाकयज्ञसंस्थाः ,—औपा[4]सनहोमो वैश्वदेवं [5]पार्वणमष्टका मासिश्राद्धं सर्पबलिरीशानबलिरिति ॥

---

[यागकालः]

(वृ) अत्र दर्शपूर्णमासादीनां काला उच्यन्ते—यदहश्चन्द्रमाः पूर्ण उत्सर्पेत् इत्याद्यौपवसथ्यकालानुसारेण द्वितीयेऽहनि यागः । श्वः पूरितेति पूर्वाह्णेऽल्पपञ्चदशीपक्षे । खर्विकां तृतीयामुपवसेदित्ययं पक्षः प्रतिपदि पूर्वाह्णे संधिपक्षे उत्तरेऽहनि सङ्क्रान्त प्रतिपत्संभवपक्षे । सद्य-[6]स्कालता तु पूर्वाह्णेऽल्पपञ्चदशीसन्निपाते केवलप्रतिपत्प्रथमांशसंभव एव । विकृतीनां तु रात्रावपराह्णे वा संधिपक्षे तस्मिन्नहन्यनुष्ठानम्; सद्यः पूर्वेद्युरारभ्य वा । पूर्वाह्णे संधिपक्षे प्रकृतिं कृत्वा पश्चात्सद्यस्कालैव विकृतिः । तत्र न खर्विकोपवासः । यदहर्न [7]दृश्यते तदहरमावास्यायामिति मध्यन्दिनात्परतस्संधिपक्षे । श्वो न द्रष्टार इत्युत्तरेद्यु. पूर्वाह्णे संधिपक्षे । विकृतिकालः पूर्ववत् । पिण्डपितृयज्ञस्तु संधिमदहोरात्राप[8]राह्णादौ ॥

**अथातो—स्यामः** । अत्र भाष्यम्; अथेत्युपोद्घात इति;—

---

[1] अथोपोद्घातः—ख. ग. [2] यज्ञ जाति वचन शब्देन—ख. ग. जातिशब्देन—ज. [3] कथमेकविंशतिसंस्थो यज्ञ इति चेत् सप्त—क. ख. ज. [4] सनाग्नि—ज. [5]पार्वणा—ग. [6] स्काला—घ. [7] दृश्येतेति मध्यन्दिना—क. घ. दृश्येति मध्यन्दिना—ख. [8] राह्ण एव—घ.

(भा) सप्त हविर्यज्ञसंस्थाः ;—अग्निहोत्रं दर्शपूर्णमासौ आग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणिः [1]पिण्डपितृयज्ञादयो दर्वीहोमा इति ॥

सप्त सोमसंस्थाः ; — अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यष्षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति ॥

[पशुहविर्भेदाः]

तत्र यज्ञसाधनानि हवींषि ;—[2]पशुप्रभवं दशविधं पयो दध्याज्यमामिक्षा वाजिनं वपा त्व[3]ङ्मांसं लोहितं पशुरस इति ॥

---

[उपोद्घातनिर्वाहः]

(वृ) अथशब्दस्यानन्तर्यार्थत्वात् पूर्ववृत्तापेक्षायां 'यज्ञं व्याख्यास्यामः' इति परिभाषा पूर्ववृत्तोपोद्घातरूपोच्यते । [4]तदानन्तर्यमथ[5]शब्दस्यार्थः ॥

[दर्वीहोमताहेतुः]

दर्वीहोमा इति—यज्ञशब्दवाच्यत्वेऽपि पिण्डपितृयज्ञस्य वषट्कारप्रदानत्वाभावाद्दर्वीहोमता । आदिशब्देन [6]चतुर्होतृहोमादिग्रहणम् ॥

[अत्यग्निष्टोमपदार्थः]

[7]सप्तसोम—र्याम इति—अग्निष्टोमे यस्मिन् राजन्यस्य षोडशी गृह्यते सोऽत्यग्निष्टोमः । ब्राह्मणस्याप्यत्यग्निष्टोमो लभ्यते चत्वारिंशत्संस्कारनियमात् ॥

[तत्तद्धविस्स्थानानि]

तत्र — वींषि —[8] ससाधनकयज्ञव्याख्याप्रतिज्ञानाद्यज्ञसाधनहवींष्युच्यन्ते । पशुप्र—[9] पशुरस इति—अश्वमेधे त्वचं उत्कृत्य वपाना-

---

[1] पिण्ड पितृ यज्ञ इति—ख. ज. [2] पशुप्रभवानि दशविधानि—ग. [3] त्वचोमांस—घ [4] वृत्तस्य कस्यचिदनन्तरस्यानुपलम्भात् नेहानन्तर्यार्थोऽथशब्द इति रुद्रदत्तः [5] शब्दार्थ —क. [6] चातुर्होत्र—क. [7] वृत्तिरियं प्रायो व्याख्येयाव्याख्येयानिखिलानुपूर्व्यनुवादपरा । तत्रानुपयोगिता निखिलानुवादस्यालोच्य आद्यन्तभागमात्रं संगृह्य प्रतीकतया प्रदर्शयामः [8] तत्साधनक—क. (मु. रा) [9] मुद्रिते तु वसा इति पशुरसस्थाने पाठः

[औषधहविर्भेदा]

(भा) औषध द्वादशविध ;—ओषधयस्तण्डुला पिष्टानि [1] फलीकरणाः पुरोडाश ओदनो [2] यवागू. पृथुका लाजा धानास्सक्तवस्सुरेति ॥

[अन्यानि हवींषि]

[3] आकाशो वायुरापो मधु सोम [4] कृष्णलानि किंशुकानि समिध शकलानि बर्हि करीराणि खर्जूराणीति स्वाहाकारवषट्कारप्रदानानि[5] ॥

[गौणं हविः]

अग्निश्शरीर [6] वायुश्शरीरी तुषा इत्येतान्यपि यज्ञसाधनानि हवींषि देवतार्थत्वात् ॥

---

(वृ) मिति [7] वचनात् । अश्वम्य लोहित [8] स्विष्टकृदर्थमिति च । पशुरसोवसा । [9] वचनादन्यानि हवींषि—आकाशो—खर्जूराणीति—आकाशो मनो(ग्रहे)होमे । वायुर्वातनामहोमे । आपस्ससृष्ट (हविषि) होमे । मधु मधुना जुहोतीति । कृष्णलानि प्राजापत्यायाम् । किंशुकानि सर्पबल्याम् । शकलान्याधाने । करीराणि खर्जूराणि च कारीर्याम् । [10] स्वाहाकारवषट्कारप्रदानान्येतानि हवींषि ॥

अग्निः शरी- र्थत्वात् इति—एतेषामपि यज्ञसाधनत्वम् । तुषग्रहणेन [11] शकृल्लोहितादीनामनुनिष्पन्नानामहोमसाधनानां ग्रहणम् ।

[उपचार हेतु.]

हवीं—र्थत्वात् ;—हविश्शब्दो देवतायै त्याज्येषु वर्तते पयःप्रभृतिषु खर्जूरान्तेषु ॥

1 णानि–क. ज. 2 यवागू पृथुकलाजा –ग 3 अन्यान्यपि हवींषि–ख 4 कृष्णला.–ग 5 नीति–ज. 6 प्राणश्श–ज 7 विधानात् 8 स्विष्टकृदर्थं निदधातीति च–घ. 9 अन्यानिचह–घ. 10 एतानिहवींषि–नानि -घ. 11 शकृ-ल्लोमादी–घ.

[नित्या यज्ञाः]

(भा) सोमा[1]न्तानि तु नित्यानि[2] 'नैयमिक ह्येतदृणसंस्तुतम्' इति वसिष्ठवचनात् ॥

[नित्यताहेतवः]

सोमावराध्यानि यानि श्रूयन्ते तानि कर्तव्यान्यवश्यमिति । अतोऽफलार्थिनापि कर्तव्यानि ऋणश्रुतेः अभ्यासविधानात् अक्रियायां च

[हेतुविवरणम्]

(वृ) **सोमान्तानि तु—वचनात् इति**—'त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्य प्रजया पशुभ्य.' इति । यज्ञश(ब्दस्य) ब्द सामान्यवचनतया एकविंशतिसंस्थयज्ञपरत्वाभिप्राय. ॥

**सोमावरा—वश्यमिति**—आपस्तम्बेन वानप्रस्थधर्मे 'विद्यां समाप्य दार कृत्वा' इत्यादिना[3] नित्यकर्तव्यकर्मकाण्डे 'सोमावरा-ध्यानि यानि श्रूयन्ते' इति निर्देशाच्च ।

**अतोऽफला—श्रुतेः**—अत अफलार्थिनाऽपि कर्तव्यत्वान्नित्यता । निमित्तानपेक्षत्वाच्च ऋणसंस्तुते । सर्वेषा नित्यत्वे हेत्वन्तरमाह—**अभ्यासविधानात्**—'घर्मो वा एषोऽशान्त । अहरह प्रवृज्यते । यदग्निहोत्रम्' इति, 'तं संततमुत्तरेऽर्धमास आलभेत । तं कालेकाले आगते यजते । अर्धमासेऽर्धमासे प्रवृज्यते' इति, 'ताभ्यां यावज्जीव यजेत' इति च । 'यो वै सोम भक्षयित्वा' इत्यारभ्य 'पुनर्भक्षोऽस्य सोमपीथो भवति' इति सोमस्य 'वसन्ते वसन्ते ज्योतिष्टोमेन यजेत' [4]इत्यादिना चाभ्यासविधानात् । काम्यत्वे कामनाया सत्यामेव प्रयो-गादभ्यासविधानमनर्थकम् । तथा निमित्ते सत्येव नैमित्तिकमिति ॥

**अक्रियायां—धानात्**—अक्रियाया केषाचिदैन्द्राग्नपशुवैश्वान-

---

[1] न्तानि च–ख घ. न्तानिनित्यानि–ग [2] न्तानिकर्माणि–ज.
[3] दिनाकर्तव्य–घ. [4] इत्यादिनाभ्यास–क.

(भा) ऐन्द्राग्नपशुविधानात् सोमस्यात्मस्परणार्थत्वाच्च 'स एतांश्चतुर्होतृनात्मस्परणानपश्यत्' इति । अतो व्याख्यातव्यानि ॥

[दर्शपूर्णमासप्राथम्यम्]

शाखादौ दर्शपूर्णमासमन्त्राणा[1]मेव पूर्वमाम्नानात् आधानेष्टीनामपि दर्शपूर्णमासप्रकृतित्वात् आधानादपि पूर्वं दर्शपूर्णमासव्याख्या क्रियते ॥

---

(वृ) रेष्ट्यादिप्रायश्चित्तविधानाच्च । काम्यस्याकरणे प्रायश्चित्ताभावाच्च । तथा दर्शपूर्णमासयो· 'परमामेव काष्ठा गच्छति' इति अपवर्गार्थत्वात् । 'स्वर्गकामो दर्शपूर्णमासाभ्याम्' इत्यादिषु च स्वर्गशब्दस्य अपरिमितनिश्रेयसरूपमोक्षपरत्वेनापि सभवात् । 'पञ्चहोतार चाग्नीध्रे पशुकामस्य' इत्यत्र भाष्यकारेण स्वर्गशब्दस्य तथा व्याख्यानात् अत्रापि मोक्षपरत्वम् । अत· स्वर्गफलत्वश्रवणेऽपि नित्यत्वमुपपद्यते । 'वसन्ते वसन्ते ज्योतिष्टोमेन' इति [2]उक्थ्यादिसस्थानामपि ज्योतिष्टोमत्वान्नित्यत्वम् । पाक्षिकस्त्वभ्यासः 'अपुनर्भक्षोऽस्य सोमपीथो भवति' इति लिङ्गादिति वक्ष्यति । अभ्यासपक्षे तु पशुकामादिगुणफलार्थिनापि कर्तव्यानि ॥

**सोमस्या—इति**—आत्मनिष्क्रयणार्थत्वादवश्यंभाविता । अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धसोमान्ताना निर्देशात् ।

[मूलोक्तहेतूपपत्तिः]

**अतो—व्यानि**—सर्वाधिकारिणां नित्यकर्तव्यत्वात् । अव्याख्याने च स्वरूपाज्ञानान्नित्यवदनुष्ठानानुपपत्तेः ।

**शाखादौ-क्रियते**—ननु च अन्वाधानाद्येव वक्तव्यम्; किमर्थं

---

[1] णा पूर्व. [2] उक्थ्यादीनामपि—क.

[अधिकारावश्यकता]

(भा) [1] यदि न क्रियेताधिकार· यान्यङ्गान्युत्तरत्र वक्ष्यन्ते तानि कस्येति न ज्ञायेरन् । [2] ततो दर्शपूर्णमासाधिकार क्रियते । इदानीं पदादि [3]—अथ अत दर्शपूर्णमासौ वि आख्यास्याम ॥

[अथ शब्दार्थ ]

अथशब्दो मङ्गलार्थ ; 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते! अध्येतार श्रोतारश्चायुष्मन्तो भवन्ति' इति श्रुतेः । आनन्तर्यार्थो वा लोकवेदवत् , ॥

[व्याख्याऽऽवश्यकी]

सक्षेपतो यज्ञो व्याख्यात· परिभाषायाम् ; विस्तरेण दर्शपूर्णमासा-

---

(वृ) अथातो दर्शपूर्णमासा[4]वित्यादि सूत्रम् [2] उच्यते—**यदि न—क्रियते।**

उपोद्घात. पदच्छेद· पदार्थ पदविग्रह. ।
आक्षेपश्च समाधिश्च व्याख्या षोढा प्रकीर्तिता ॥

इति व्याख्यानप्रकारा· । अत्र उपोद्घातरूप यज्ञ व्याख्यास्याम इत्याद्युक्तम्।

**इदानीं पदादि**—पदच्छेदा [5] द्युच्यते । उपरितनसूत्राणामपि पदच्छेदादिरूप व्याख्यान कर्तव्यमित्येतत्प्रदर्शनार्थं प्रथमसूत्र [6] एव व्याख्यान क्रियते ॥

**अथ—स्यामः**— इति पदच्छेद· । अथ पदार्था उच्यन्ते— **अथ शब्दो—श्रुतेः**—आदौ मङ्गलं कार्यम् ; अथ श्रुतिर्हि मङ्गलम्! तस्य कोऽर्थ इत्यत्राह—**आनन्त—वत्**—लोके स्नातःअथेदानीं भुङ्क्ष इति ; वेदे 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस इति । **संक्षेपतो—व्याख्यायेते**—इति आन[7]न्तर्यं प्रकटितम् ॥

---

[1] यदि न क्रियते—**क.** यदि चनादित क्रियेता—**ख. घ** [2] अतो—**ज.** [3] पदानि इति पा [4] वित्यधिकार—**घ.** [5] द्यप्युच्यते—**घ.** [6] एवं—**घ.** [7] र्यप्रकटनम्—**घ.**

(भा) वनन्तर[1] व्याख्यायेते। अतश्शब्दो [2]हेत्वर्थ । यस्माद्दर्शपूर्णमासावव्याख्यातावशक्यौ[3] प्रयोक्तुम्, अक्रियाया च दोष , अत उच्यते॥

[दर्शशब्दार्थ.]

दृश्यते यस्मिन् क्षणे सूर्येण सङ्गतश्चन्द्रमा सिद्धै स क्षणो [4]दर्श । तद्योगादहोरात्रम् । तत्कालवर्तित्वात्प्रधानसमुदाय । कानि पुनस्तानि[5] प्रधानानि ? आग्नेयैन्द्राग्नयोराग्नेयसान्नाय्ययोर्वा होम इत्युपदेशः । होमसाध्यो धर्म फलकरणमिति न्याय ॥

(वृ) अतश्शब्दो— [6]उच्यते—इति अतश्शब्दार्थ ॥

दृश्यते—होरात्रम्—अस्यार्थ — प्रातरन्वादधाति ' श्वो

[दर्शशब्दस्य गौणताहेतु]

भूते यजते ' इत्यादिना अहोरात्रद्वयवर्तित्वावगमात् ' अमावास्यायाममावास्यया यजेत ' इति मुख्यपर्वसन्धिक्षणेऽनुष्ठानाशक्ते तद्युक्ततिथिद्वययुक्ताहोरात्रद्वय लक्षणयावगम्यत । तत प्रतिपदोऽप्यमावास्यात्वात् । तत्काल—दायः—इति [7]कर्मणि लक्षणोपपत्ति. ॥

कानिपुनः—पदेशः—इति होमक्रियामात्र प्रधानमित्युपदेशपक्ष । उपदेश इति सर्वत्र सूत्रब्राह्मणे उच्येते ' यथोपदेश प्रधाना

[न्यायपक्षाशयः]

हुतीः' 'तस्य ज्ञानमुपदेश ' इति दर्शनात् । होमा—न्यायः—इति ' दर्शपूर्णमासाभ्यामिति ' करणविभक्तिनिर्देशस्य फलसाधक(न)त्वनिबन्धनत्वाद्धोमसाध्यापूर्वाधीनफलसिद्धिनिबन्धन यागकणत्वमिति नामधेयोपपत्ति. न केवलक्रियामात्रकरणत्वाभिप्रायेणेति न्यायपक्ष ॥

---

[1] न्तरमुच्येते—ख. [2] हेत्वपदेशार्थ —ख ग [3] तौ नशक्यौ—ज [4] चन्द्रदर्शनस्य सर्वदर्शसाधारण्यात् नायमन्वर्थसंज्ञाशब्द इति रुद्रदत्त [5] स्तानि आग्नेयं—ख. ग [6] होमाराध्यो धर्म —ज राध्या फल—क राध्यधर्मो फल—क. ख. उच्येते—क. [7] कर्मलक्षणो- क.

(भा) [1] मास इति चन्द्रमस आख्या, [2] मासाना मानात्। [3] स पूर्यते यस्मिन् क्षणे स क्षण पूर्णमास। तद्योगादहोरात्र [4]। तत्कालवर्तित्वात्प्रधानसमुदाय। [5] कानि पुनस्तानि प्रधानानि? आग्नेयोपांशुयाजाग्नीषोमीयाणा [6] होम इति। सर्वहोमेषु [7] फलक्लृप्तिरिति न्याय [8]।

[पूर्णमासपदार्थनिर्वाह]

दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ इति पदविग्रह। अल्पाच्तर पूर्वं निपततीति वचनात् पश्चात्प्रयोगिणोऽपि दर्शस्य [9] पूर्वपातस्समासे।

(वृ) पूर्णमासशब्दं व्याचष्टे—**मास इति—होमः इति।** पूर्ववद्व्याख्या। **सर्वहो—न्यायः**—फल कल्प्यते—साध्यतेऽनेनेत्यपूर्व

[सर्वशब्दाभिप्रायः]

फलक्लृप्ति। तदधीनकरणभूतयागनामधेयं पूर्णमासशब्द। अथवा सोमयागादूर्ध्वमग्नीषोमीयसपत्ते [10] करणभूताग्नीषोमीयकरणत्रयसाध्यापूर्वस्य च [11] उत्तरकालत्वात् पाश्चात्यकरणत्वाभिप्रायेण पूर्वमपि प्राधान्यनिर्देश इति सर्वशब्दाभिप्राय ॥

[दर्शस्य पश्चात्प्रयोगे हेतुः]

**दर्शश्च—समासे**—कथ दर्शस्य पश्चात्प्रयोग.? [12] उच्यते—सारस्वतहोमब्राह्मणे 'यत्पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावालभेत' इति पौर्णमास्या प्रथमप्रयोग सिद्धवदनूद्य प्रातिलोम्यमाशङ्क्य सारस्वतहोमाभ्यां प्रातिलोम्यपरिहारात् पूर्णमासस्य प्रथमप्रयोग। तथा 'त्वष्टा हतपुत्र' इत्यनुवाके पूर्वमग्नीषोमीयोत्पत्तेः हुतानुमन्त्रणे चैन्द्राग्नसान्नाय्ययो पश्चात्पाठात्। सूत्रकारेण चामावास्याधाने दर्शारम्भमनुक्त्वा

---

[1] मा इति—ग. [2] मासार्धमासाना—क. घ ख ग. ज [3] स च पू. [4] त्रम्—ख [5] कानि पुनस्तानि—क ख [6] णासर्वहो—क. [7] धर्मक्लृप्ति—ज. [8] न्यायात्—ख. [9] पूर्वं निपात—क ख [10] त्ते करणत्रय—घ. [11] भाविकत्वात्—घ. [12] इति चेत् सारस्वत—ग

[व्याङोर्भावः]

(भा) विशब्दो [1] विस्तारार्थे ; ये त्वधिकविषय शास्त्रान्तरस्थाः तानपि वक्ष्याम इति । आङ् बलवदर्थे [2]; श्रुत्यर्थसशय[3]कारणैर्बलवाद्भि [4] रुपपाद्य [5] विधिं [6] वक्ष्याम इति । [7] ख्याम्याम इति चक्षिञो व्यक्तवागभिधायिन. ख्याञादेशोऽयम् ॥

[सारार्थः]

तत्र पिण्डितार्थ·—परिभाषानन्तर [8] दर्शपूर्णमासौ [9] वक्ष्याम· ; यस्मादेतावन्तरेण सकल श्रौत[10] न प्राप्यत इति ॥

[अगतार्थता]

तत्र कश्चिद्ब्रूयात् मन्त्रब्राह्मण[11]व्याख्यातत्वाद्दर्शपूर्णमासयोरनर्थकस्सूत्रकारयत्न इति, [12] तच्च न, [13]दुर्ज्ञानत्वाच्छ्रुत्यर्थस्याद्यतनै अधिक-[14] विध्युपसंहारस्य [15] च । अतो नानर्थक [16] इति ॥

(सू) **प्रातरग्निहोत्रं हुत्वाऽन्यमाहवनीयं प्रणीयाग्नीनन्वादधाति ॥ २ ॥**

(भा) प्रातरिति कालवाच्यव्ययम् । 'सङ्गवान्त प्रात ' इति आश्व-

---

(वृ) अन्यत्र पूर्णमास्याधाने पौर्णमास्यारम्भस्योक्तत्वाच्च । तथा च भगवता भारद्वाजेन 'पौणमासीं पूर्वाम्' इत्युक्तत्वाच्च । **यस्मादे—प्राप्यत इति**—इष्टिपशूनां सोमाङ्गानां च बहूनां तद्विकारत्वात्सकलशब्दः ॥१॥

---

1 विस्तरा–ज 2 दर्थे –घ 3 संशयेसति अर्थकारणैर्बलवाद्भिर्विस्तरेणव–ज. 4 द्भिरुपपाद्य विस्तरेण–ख. 5 विस्तरेण वक्ष्याम–क 6 वक्ष्याम इति व्याख्यास्यामो वक्ष्याम इत्यर्थ चक्षिङो–क. 7 व्याख्यास्याम इति वक्ष्याम इत्यर्थ· । चक्षि–ज. 8 न्तर विस्तरेणदर्श–क. ज. 9 क्ष्याम इति–क. 10 श्रौतं श्रेयो न. 11 णयोर्व्या–क. 12 तन्न–ग. 13 दुर्विज्ञेय–ज 14 विध्युपसहाराच्च–क. 15 चाशक्यतात्–ख. 16 र्थस्सूत्रकारयत्न इति–ख, ख.

[प्रातः पदार्थः]

(भा) [1] लायनेनोक्तम् । [2] स उषस आरभ्य ॥

[नामताहेतुः]

अग्निहोत्रमिति कर्मनाम, अग्नये [3] तस्सायमाहुतिरिति । 'स एतद्भागधेयमभ्यजायत यदग्निहोत्रम्, तस्मादग्निहोत्रमुच्यते' इति निर्वचनात् । तदग्निहोत्र हुत्वा— होमेनाराध्य[4] ॥

[आहवनीयपदार्थः]

आहूयन्तेऽस्मिन्नाहुतय [5] इत्याहवनीय. । इतरेभ्यो भूयस्य इति तत्रैवाहवनीयशब्द । नार्थान्तरवचनता सञ्ज्ञाशब्दानाम् । प्रणयनं—

---

[निर्वचननिर्वाहः]

(वृ) **अग्निहो—निर्वचनात् इति**—'प्रजापतिरग्निमसृजत' इत्यनुवाके, प्रजापति प्रविष्टेऽग्नौ जायस्वेत्युक्ते तेनाग्निना 'किं भागधेयमभिजनिष्ये' इति पृष्टे 'तुभ्यमेवेद् हूयातै' इत्युक्तत्वात् । अग्नेरेव होमे प्राप्ते 'तद्धूयमानमादित्योऽब्रवीत्' इत्यादिना 'सूर्याय प्रात.' इत्यन्तेन प्रातर्होमे सूर्यो देवताऽवगम्यते । तस्मादग्नेस्साय होमात् अग्निहोत्रमिति निर्वचनोपपत्तेरुभयकालवर्तिहोमस्य नामधेयम् ॥

[याज्ञिकानां यागस्वरूपम्]

**तदग्नि—राध्य**—यद्यपि मीमासकमत्या न देवताया· प्राधान्यम्, तथाऽपि देवताराधनरूपयागस्यैव प्राधान्यात् होमेनाराध्येत्युच्यते । आराधन देवतायाः कर्मा[6]णि इति स्वाभिप्रायः ॥

**आहूयन्तेऽस्मिन्निति आहवनीयः**;—ताः क्षिप्यन्त इत्या-

[आहवनीयशब्दरूढता]

हवनीयः । नन्वग्न्यन्तरेऽप्याहुतयो विद्यन्ते' अत आह—**इतरेभ्य इति । नार्थान्तर — ब्दानामिति** — अस्यार्थः—

---

[1] लायन आह–ज [2] उषस–ज. [3] येत्र–क. ख. ग घ च ज.
[4] राध्याग्निम्–ग. क. [5] हुतय इतरेभ्यो भूयस्य इत्याहवनीय· नार्थान्तरानुगमनम्–क. ज. [6] कर्मणि–क. ख ग

(भा) पुरस्तान्नयनम्, तदस्याहवनीयस्य कृत्वा अग्नयोऽग्रे[1] यज्ञेषु [2]नीयन्ते इति। अन्वाधान— आनुपूर्व्येण बलवदिन्धनमर्थ[3]

|क्त्वाश्रुतिफलम्|

सम(र्थानाम्) र्थम्। प्रातश्शब्दोऽन्वाधानेन सबध्यते। [4]प्रातरन्वाधान क्रियते। अग्निहोत्र हुत्वेत्यानन्तर्यार्थम्, माभूदहुते प्रवृत्तिरिति॥

|अन्यप्रणयनहेतु|

इतरथा तस्मिन्नेव[5] हूयेत। यथा [6]सायहोम। अर्थान्यत्वात्सिद्धे प्रणयने [7]पुनर्वचन चतुर्होत्रर्थ प्रणीते माभूत्पौर्णमास। कथमन्य एव प्रणीयेत[8] चतुर्होतुस्सर्वदर्शपूर्णमासार्थत्वात्। [9]एकफलार्थत्वाद्दर्श-

(वृ) आहवनीयशब्दस्य यौगिकत्वेऽपि पङ्कजादिशब्दवत् नियतवृत्तित्वान्नाग्न्यन्तरवचनता। **अन्वाधा—समर्थमिति**— आङो बलवदर्थत्वादग्निधारणसमर्थ बलवदिन्धनम्। एव पदार्था उक्ता। **प्रात—ध्यते**—तस्य कालापेक्षत्वात्तेन सबन्धे सत्यनन्तरवृत्ततयाऽ-

|क्त्वार्थ हेतुविवरणंच|

र्थात्प्रातर्होमावगते। **प्रात—रिति**—क्त्वाप्रत्ययस्य पूर्ववृत्तानन्तर्यार्थत्वात्। **इत—येत**—इष्ट्यर्थ एव हूयेत। **अर्था—यने इति**— 'अर्थायार्थायाग्निं प्रणयतीति सिद्धे प्रणयने। **पुनर्व—मास इति**— अन्यमाहवनीय प्रणीयेति पुनर्वचनम्॥

अन्यप्रणयनहेतुनिर्वाह.

**कथमन्य एव प्रणीये[9]तेति**—चतुर्होतु दर्शपूर्णमासार्थत्वात् एककाल[10]त्वाद्दर्शपूर्णमासयो साधारणाग्निप्रणयनशङ्कानिवृत्त्यर्थ अन्यमाहवनीय प्रणीयेत्युच्यते। **चतुर्हो—र्थत्वात्** प्रथमपौर्णमास्या न सहप्रयोग उपपद्यते। [11]अत पृथक्प्रणयनोपदेश। अथवा; **एकफला—दर्श**

[1] अग्र-ख [2] प्रणीयन्ते-क ज [3] र्थमिति—ख. [4] कथ प्रातरन्वाधान क्रियेतेति-ज. [5] व हूयते-ग व म-येह्-क ज [6] सायमग्निहोत्रम्—क. ज. [7] रुद्रदत्तएतन्नेच्छति किन्तु माऽग्निहोत्रार्थोऽग्निरन्वाधायीति इति। [8] एकफलत्वा—ज [9] यत इति—ख ग घ [10] त्वाच्चतयोश्चतुर्होतृदर्श—क ख ग [11] नेद प्रयोजनमिति रुद्रदत्त

(भा) पूर्णमासयो पैर्णमास्यर्थं प्रणीते माभूद्द[1]र्श इति, कालभेदात् ॥

[अग्न्यन्तरसंग्रहः]

[2]आहवनीयग्रहण प्रदर्शनार्थम्, दक्षिणाग्नेरपि नयन यथा स्यात्, [3]यद्येकयोर्निर्दक्षिणाग्नि। आहार्यस्य च[4]पुनराहरण [5]यथा सभ्यावसथ्ययोः॥ उद्धृत आहवनीये अस्थापिते दक्षिणाग्नेर्निधान आधाने तथा

[अन्यग्रहणफलम्]

दृष्टत्वात्[6] [7]सर्वत्रेति केचित्। अन्यग्रहण प्रातरग्निहोत्र हुत्वाऽन्यस्य प्रणयन न सायामग्निहोत्र[8] हुत्वा इष्टौ। नक्तमाहवनी[9] यधारणे

[आहवनीयपदफलम्]

नान्य प्रणीयते। आहवनीयग्रहणेऽक्रियामाणे [10]गतश्रियो धार्या अपि[11] देशान्तर प्रणीयेरन्. अत क्रियते। अग्नीनन्वादधातीत्यधिकारात् ॥

---

(वृ) इति—फलैक्यात्प्रधानानाम्। अङ्गितन्त्रताशङ्कायां परिहार उच्यते,— **कालभेदात्** — साङ्गप्रधानप्रयोगस्य प्रतिकालमनुष्ठेयत्वादग्निभेद। **आहवनीयग्र**—**दक्षिणाग्निः**। तदा, **आहार्य**—**योः**। **उद्धृतआ**—**दृष्टत्वात्** — क्रमापेक्षत्वात्प्रकृतित्वाभावेऽपि वैदिकत्वसामान्यात्।

[केचिद्ग्रहणभावः]

**सर्वत्र (अत्रापी)ति केचित्**—[12]केचिद्ग्रहणात् आहवनीय प्रतिष्ठाप्य वा दक्षिणाग्ने प्रणयनम्। उद्धरणादिस्थापनान्तस्यैकपदार्थत्वात्। वचनादृते तन्मध्येऽन्यस्यासभवात्। **अन्यग्रहणं**—**हुत्वाइष्टौ**—**निशीष्ट्यादौ**। **नक्तमा**—**यते**—अन्यग्रहणमपि न्यायप्राप्तप्रदर्शनार्थमिति। **आहवनीय**—**क्रियते**—[13]तद्ग्रहणम् ॥

---

[1] र्शो कालभे—ज [2] अयं ग्रन्थ **ग** पुस्तके न दृश्यते [3] यस्यैक—**ज.** [4] पुन पुनरा—ज [5] तथा स—ज [6] त्वात्, अन्यग्र—**ग** [7] अत्रापि केचित्—**क. घ** [8] होत्रहोम—ख [9] धारणपक्षे—घ [10] गतश्रयादेर्धार्यमाणे—**ग घ** माणेधार्या—**ज.** [11] अप्यग्नयो—**क ग घ.** [12] धारणाग्रहणा—**क** [13] पृथगाहव—

[अन्वाधानं निवर्तते]

(भा) 'देवा गातुविद' इति [1] जपोऽप्यङ्गमन्वाधानस्य । अतोऽस्य सोमेष्टिषु निवृत्ति । तत्र सक्षेपतोऽर्थ —अग्निहोत्र हुत्वा [2] प्रणीयान्यमाहवनीय प्रात[3]रन्वाधान कर्तव्यमिति ॥

[वाक्यार्थभेद· अन्यशब्दस्वारस्य अन्वाधानपदार्थश्च]

त्री[4]णि चैतानि सूत्राणि हुत्वा प्रणीय अन्वादधातीत्येवमन्तानि । [5]अर्थान्तरवाचक[6]त्वात् [2] उपदेश परिहार । अन्यशब्देन अग्निहोत्रविहरणविधिस्तूष्णीको भवति । अन्या वा 'यजुषोत्पूय' इति वचनात् । बलवत्करणमन्वाधानम् ॥

(सू) न गताश्रियोऽन्यमग्निं प्रणयति ॥ ३ ॥

(भा) गता[7]प्राप्ता श्रीर्यस्य स गतश्री ।स उत्तरत्र[8]व्याख्यास्यते । न तस्यान्य

---

(वृ) सोमेष्टिषु—प्रायणीयादिषु । त्रीणि—न्तानि ;—क्त्वाप्रानमप्यप्राप्तार्थत्वेन विधिपरतया निरपेक्षत्वाद्भिन्नार्थमिति । अर्थान्तरवाचकत्वात्—प्रत्येक भिन्नार्थवाचकत्वात् । अन्यश—वचनादिति—

[उपदेशपदयजु·पदयाः भावः]

उपदेशमतेन अन्यशब्दस्य न्यायसिद्धानुवादत्वेन आनर्थक्यशङ्का परिहरति । यजुर्ग्रहणेन मन्त्रनिवृत्तावप्यप्सु तूष्णीं प्रणीताधर्माणा प्राप्तिरस्तीत्यभिप्राय ॥

स—स्यते—त्रयो वै [10] गतश्रिय [11] इत्यत्र ॥

---

[1] जपोऽप्यन्वाधानाङ्गम्—क ज जपोऽप्यन्वाधानस्य ग. गातुविदजपोऽप्यङ्गमन्वा—ख. [2] त्वाऽन्यमाहवनीयं प्रणीय—ख. प्रणीयाहवनी—ज. [3] रग्नीनामन्वा [4] त्रीणिवैतानि—ख. [5] अन्यार्थ- क [6] त्वानुपदेश—ज. त्वादुपदेशपरिहार —क अत्र कोशे 'सूत्रत्याग' इति उपदेशपरिहारपदसूचनेन लिखित दृश्यते। [7] गताश्रार्यस्य—क. गता यस्य श्री —ज. [8] रत्रोच्यते—क. [9] स्यान्यमग्निं—प्र. ज. [10] स्वयं सूत्रकृदनु संध्यास्यतीत्यतो रुद्रदत्त एतन्नेच्छति [11] इत्युक्तमित्यत्र—घ.

(भा) प्रणयति। 'नित्यो गतश्रियो भ्रियत' इति वचनात् नारब्धव्य इह

[गतश्रीशब्दार्थः अन्यपदफलं च]

गतश्रिय प्रतिषेध·[2] [1]वरुणप्रघासेषु प्रतिप्रस्थातुः प्रणयन मा भूत् आहवनीयस्य विभागो यथा स्यादिति। अन्यग्रहणमतिप्रणीते माभूदन्योपलक्षितस्य प्रतिषेध[2] इति। [2]अग्निग्रहणं[3] अन्योपलक्षणेऽप्यपां प्रणीतादीना प्रणयनप्रतिषेधो मा भूदिति॥

(सू) 'देवा गातुविदो गातुं यज्ञाय विन्दत।
मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम्'॥
इति जपित्वा 'ममाग्ने वर्चो[4] विहवेषु,' इत्याहवनीयमुपस[5]मिन्धे; उत्तरया गार्हपत्यमुत्तरयाऽन्वाहार्यपचनम्॥ ४॥

[जपेस्थानंस्वरश्च]

(भा) जपत्युत्तरतो विहारस्य। चातुस्स्वर्येण सर्वे जपाः। अन्ये मन्त्रा

---

(वृ) **नित्यो—प्रतिषेधः**—इति चेदुच्यते.—**वरुण—स्यादिति;**—गतश्रिय. प्रतिषेध क्रियते। आहवनीयद्वयाभावा[6]देतस्यैव विहार-

[प्रतिषेधव्यवस्था]

द्वये विभज्य निधानम्। **अन्यग्र—षेध इति**—अन्यं प्रणीयेति निर्दिष्टस्यैव प्रतिषेधः; न पिण्डपितृयज्ञे नाहिताग्नेर्गतश्रियोऽति [7]प्रणीतप्रतिषेध। इह पूर्वोक्तप्रणयनविषयत्वात्प्रातिषेधस्य। **अग्निग्र—माभूदिति**—अन्यशब्दोपलक्षणेऽपि प्रणीतादीनामपां प्रणयनप्रतिषेधो माभूत्॥ ३॥

**जपत्यु—रस्य**—'उत्तरत उपचारो विहार' इति वचनात्॥
**चातु—श्रुत्या**—'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति स्मृतेः॥

---

[1] स्पष्टार्थमिति तु रुद्रदत्त [2] अग्निग्रहणमपा प्रणीतादीना—ख. ग. [3] ग प्रणीतादीना—ज. [4] ष्वास्त्वित्या—क [5] काष्ठैर्दीपयति (रु) [6] देकस्यैव—क घ. [7] प्रणयन—क घ.

(भा) एकश्रुत्या। केचित् यज्ञयोगार्थत्वाद्विहरणात्पूर्वं जप कुर्वन्ति, तद-

पक्षान्तरदोपश्च

नुपपन्नम्, विहरण[1]मुक्त्वा परिपाठात्। तैश्च समिष्टयजु सर्वान्ते प्रयोक्तव्यम्[2]। धारणाय समर्थमिन्धनमुपसमिन्धनम् महत्काष्ठाधानम्। तदाहवनीयस्य कृत्वा पूर्वम्, गृहपतिना मयुक्तोऽग्निर्गार्हपत्य तस्यानन्तरमुपसमिन्धनम्। क्रूर —[3] बीजवधादिसयुक्तम्। विलिष्ट — यदयथाकृत

।अन्वाहार्यादिपदनिर्वचनम्।

तदन्वाहरति — प्रणाशयतीत्यन्वाहार्य। स यस्मिन् पच्यते सोऽन्वाहार्यपचन। सभाया भव सभ्य। आवसथे भव आवसथ्य। [4]तयोस्तूष्णीमिन्धनम्। यजमानोपस्थानदर्शनात्[5]॥

(वृ) केचित्तु — कुर्वन्ति — 'वाताय यज्ञ प्रयुज्यताम्' इति लिङ्गात्। यज्ञयोगार्थत्वाद्विहरणस्य च यज्ञाद्यपदार्थत्वत्॥

तदनुपपन्नम् — व्यम् — 'गातु यज्ञाय वित्त्वा' इति यज्ञसमाप्तिलिङ्गात्। [6]अतो यथापाठ प्रयोग। धारण—धानम्—

।गार्हपत्यपदरूढता।

सर्वेषा गृहपतिसयोगेऽपि पङ्कजादिवदेकत्र वर्तते॥

इदानीमन्वाहर्यपचनशब्दनिर्वचनम्. — क्रूरं — पचनः—'यद्वै यज्ञस्य क्रूर यद्विलिष्ट' इत्यादिब्राह्मणस्य व्याख्यानम्। सभाया —

।अधिकग्रहणनिदानम्।

थ्यः—सभ्यावसथ्ययोरिह सूत्रकारानुपादानेऽपि यजमानोपस्थानदर्शनात्तयोस्तूष्णीमुपसमिन्धन कर्तव्यम्, तदर्थं तच्छब्दयोरप्यत्र निर्वचनम्। तयोस्तूष्णी—दर्शनात् —[7]व्याहृत्यन्तेषु तयोस्तूष्णीमुपसमिन्धनम्। दक्षिणाग्नेरूर्ध्वम्॥ ४॥

[1] मुक्त्वोपरि—क [2] व्य स्यात्—क. [3] हिंसास—ज. [4] सर्वविकल्पेषु तयो —ख ग घ [5] सर्वविकल्पेष्वितस्यात्र पाठ —क [6] यतो—क तयोरपि तूष्णीमुपस [7] सर्वविकल्पेषु व्याहृ—क. घ

(सू) **तिसृभिस्तिसृभि[1]र्वोत्तमां तु जपेत् आहवनीये वाऽऽदध्यात् ॥ ५ ॥**

[जपे विहव्यस्यापवर्गे व्यवस्था च]

(भा) [2]सर्वविकल्पेषु तिसृभिस्तिसृभिर्विहव्यस्यापवर्ग । अवधारणादस्मिन्नेव पक्षे उत्तमाया जप ॥

(सू) **व्याहृति[3]भिरन्वाधानमेके समामनन्ति ॥ ६ ॥**

(भा) एकैकया [4]व्याहृत्याऽन्वाधानम् । स्वयमातृण्णोपधाने समस्तोप

[एकैक-व्याहृतिग्रहहेतुः]

दिष्टाना विभागकरणात् । [5]अत्र तु गार्हपत्यादि । वाजसनेयिना प्राक्स-

---

(वृ) **तिसृभिस्त गः**-ममाग्ने वर्च इत्यनुवाकसमाप्तिस्तिसृभिरिति पक्ष। **अवधार—जपः**– [6]अत्र तूत्तमा जपेदित्यर्थ [7]। नैकैकपक्षे।

[स मि सङ्ख्या]

आहवनीये वा सर्वास्समिध आदध्यात् पश्चापि। सर्वसमिधामुपलक्षणार्था सङ्ख्या नेतरेषु ॥ ५ ॥

**एकैकया नम्**–यद्यपि व्याहृतिभिरित्युपादेयगतत्वेन बहुत्व-

[बहुवचनाविवक्षा]

विवक्षा प्राप्ता, तथाऽपि भिन्नार्थत्वात् । **स्वयमा करणात्** - भूर्भुवस्सुवरितिस्वयमातृण्णा उपदधातीति समस्तोपदिष्टाना सूत्रकारेण भूरिति-चैतया व्याहृत्येति विभागोपदेशात् । **अत्रतु— वचनात्**—व्याहृतिपक्षे

---

[1] तिसृभिस्तिसृभिर्वा इत्यन्त पृथक्सूत्र रुद्रदत्तस्य । विहव्यानुवाकस्य दश र्चस्य तिसृभिस्तिसृभिपञ्चभिरन्ध इति तन्मते त्वऽन्वय [2] सर्वकल्पेषु—ज खीनग्नीन् एकृत्सकृदु [3] ताभि—ख [4] व्याहृतीरन्वा— ?ज [5] तत्र तु—ञ [6] तु शब्दात् । अ।—**क. ख ग घ** -तुशब्दप्रयोगात्—घ [7] नचैकस्मिन् पक्षे—घ ञनैकैक स्मिन् मु पु )

(भा) स्थावचनात्। तिसृभिस्तिसृभिरेकैकस्योपदेश.[1] । अथ [2]कर्मानु-

[सकल्प.]

पूर्वम्—सारस्वतहोमयो. पुरस्तात् दर्शपूर्णमासावारप्स्य ताभ्या यावज्जीव यक्ष्ये स्वर्ग लोकमवाप्नवानि इति सकल्प । सर्वकामाना[3] वा कामनम्। सारस्वतान्वारम्भणीयाचतुर्होतृणा सर्वदर्शपूर्णमासार्थत्वात् । [4]यदा त्वा[5]हारपृथक्त्वे काम तदापि सारस्वतहोमयो (योश्चिन्ता)पुरस्तात् दर्श-

---

[बहुवचनभावः]

(वृ) वाजसनेयिना समस्तोपदिष्टाना विभागकरणात्प्राक्सस्थावचनात्। **तिसृभिस्तिसृभि—देशः**—व्याहृतिपक्षेऽपि पूर्वोक्तबहुत्वविवक्षान्यायेनाहवनीयाद्येव[6]। **अथकर्मानुपूर्वम् संकल्पः**—यद्यपि मानसव्यापार-

[सकल्पोवाचिक एव]

रूपस्सकल्प , तथाऽपि तद्वाचकशब्दोच्चारणपर्यन्त एव। 'यो यक्ष्य इत्युक्त्वा न यजते' इत्युच्चारणपर्यन्तनिर्देशात् ॥

[नित्यकामनोपपत्ति]

नित्याधिकारेऽपि फलनिर्देशो मोक्षार्थत्वात्। तस्मिन्नपि स्वर्गनिर्देशस्याविरोध । अपरिमितनिश्रेयसरूपमोक्षवाचित्व स्वर्गशब्दस्येत्युक्त पूर्वम्। निश्रेयसार्थिना तदपि नाभिसधातव्यमित्यमी पक्षा । **सर्वकामनम्**—युगपत्कामनापक्षे ॥

ननु किमिति सारस्वतहोमयो पूर्व सकल्प ? यावता पौर्णमास्यारम्भ[7]काले युक्त ? उच्यते- **सारस्व—र्थत्वात्।** सकलप्रयोगसाधा-

[पुरस्तात्संकल्पहेतु]

रणसकल्प कृत्वैव तानि कर्तव्यानि । **यदात्वा—रप्स्ये**- इति सकल्प ।

[1] सस्थावस्थावास्थाया तूष्णामुपसमिन्धनार्या (क) [2] कर्मानुपूर्व्यम—ज. ञ ञ [3] नाकामनम—ञ [4] यथा तथा (इति मुद्रितेति पाठ ) [5] त्वाभाग पृ— ञ [6] मयोश्चिन्ता । दर्श—ञ [7] सकालेन—क स काले ञ [8] न तदाम—क

(भा) पूर्णमासावारप्स्ये ताभ्यां यावज्जीवं यक्ष्ये त्रिंशतं वा वर्षाणि [1] जीर्णो वा विरमणं करिष्ये इत्येतावदुक्त्वा हुते चतुर्होतरि [2] परित्यक्ते चाग्नौ दर्शपूर्णमासाभ्यां यक्ष्ये स्वर्गं लोकमवाप्नवा[3]नीत्येवमादयः कामाः ॥

[वपनकालः]

पौर्णमास्यादौ वपनम् ॥

[प्रथमद्वितीयादिप्रयोगभेदेन तद्विशेषः]

ततो विद्युदसीत्य[4]त्राम्नानात् ॥

---

(वृ) [5]नात्र कामः फलनिर्देशः । **ताभ्यां–करिष्ये** — [6]एतावदुभयत्र साधारणम् ॥

**इत्येताव–कामाः**—पौर्णमासीप्रयोगादौ सारस्वतहोमयोः पुर-

[संकल्पवैलक्षण्यं प्रयोजनं च]

स्तान्नित्याधिकारं संकल्प्य प्रयोगादौ कामसंकल्पः । तदा[7]कामा[8]धिकार[9]प्रसङ्गेन नित्याधिकारस्यापि सिद्धिः ॥

[वपनस्य फलं सकृत्त्वं च]

**पौर्ण — नम्** — [10] वपनस्यापूर्वाश्रयपुरुषयोग्यता [11] पादनेन पुरुष[12]संस्कारत्वाद्दर्शपूर्णमासाभ्यामेकापूर्वसिद्धेः तद्योग्यता पौर्णमास्यादौ [13] सकृत्कृतेनैव सिद्धेति नोभयत्र वपनम् । अत एव ' अप्यल्पशो लोमानि वापयते ' इति प्रतिपर्व वपनं वाजसनेयिमतेन विकल्पेनोपदिष्टम् ॥

[वपनादूर्ध्वं विद्युदसि]

**ततो विद्यु-म्नानात्**—पर्वणि च केशश्मश्रु वापयत इत्युक्त्वा उपस्पर्शनाम्नानात् वपनादूर्ध्वं विद्युदसीत्युपस्पर्शनम् ॥

---

1 जीर्णोविर–ख 2 तारित्यक्ते–ञ 3 नीत्यादयः–झ ञ 4 त्यत्राना-म्नानात्–क त्याम्नानात् ख 5 नात्र फलान–झ 6 इतिसाधारणम्–घ. 7 काम्याधिकार–क 8 धिकार प्रयोगप्र–घ 9 प्रसङ्गे–क 10 पौर्णमास्या पूर्वाश्रय–क 11 पा·नद्वारेण पुरुष–घ 12 संस्कारकत्वा क 13 संस्कृत नैव–ख. ग घ

(भा) ततो [1] विहरणं जपः समिन्धनमिति [2] क्रमः प्रथमे । [3] अन्येषु हुत्वाऽग्निहोत्रं अमुना यक्ष्ये इत्युक्त्वा कामाः वपनम् । [4] विद्युदसि ततो विहरणादि ॥

[सङ्कल्पप्राक्फलम्]

[5] यदि त्वसङ्कल्पिते क्रतौ [6] विद्युदसिकामो वा [7] क्रियेत न ज्ञायेत कस्य क्रतोरारम्भ इति । उपदेशो वपनं विद्युदसि क्रतुसङ्कल्पः कामो [8] विहरणमिति ॥

(सू.) [9] संनयतः पलाशशाखां शमीशाखां वाऽऽहरति बहुपर्णां बहुशाखामप्रतिशुष्काग्रामसुषिराम् ॥ ७ ॥

[साम्नाय्यशब्दार्थः]

(भा) यस्मात्पशुभिरोषधीभ्य इन्द्रस्येन्द्रियं सन्नीतमात्मनि तस्मा[10]द्दधि च पयश्च साम्नाय्यम् । 'यत्समनयन् तत्साम्नाय्यस्य साम्नाय्यत्वम्' इति । तेन यो यजते स सन्नयन्नित्युच्यते । तस्य सन्नयतः । पलाशस्य

---

[प्रयोगारम्भस्सङ्कल्पः]

(वृ) ततो णम्—यक्ष्यमाण इति प्रयोगारम्भात्पूर्वत्वमवगम्यते । अतः सङ्कल्पात्प्रागेव युक्तम्, सङ्कल्पस्य प्रयोगारम्भरूपत्वादिति ॥ ६ ॥

[साम्नाय्यनिर्वचनाकरः]

यस्मात्पशुभिरो—य्यत्वम्—इन्द्रस्य वृत्रं जघ्नुष इत्यादि

---

[1] विहरणं जपः—क ख गार्हपत्यात् अग्निमाहवनीयं ... प्रणीय दक्षिणाग्निस्तदायतने निधानं विहरणम् । (श्रा १. नि.) [2] क्रमः अन्येषु तु—ग ज. क्रमः प्रथमोऽन्येषु—ख [3] अन्येषु तु हु—झ [4] ततो विद्युदसि—ख ग घ [5] यदि त्वसङ्कल्पिते ख ग ज. [6] विद्युदसि—ख. ग. विद्यु...—झ. [7] वा यजमाने प्रथममुक्तत्वात्किं—झ. [8] विहरणम् झ. [9] साम्नाय्ये न सदार्भिके दधिपयसी । ताभ्यां प्रवृत्तेज्य सन्नयन्नित्युच्यते (क) [10] दधि पयसोस्साम्नाय्या—ख्या—क.

(भा) शाखा -पलाशशाखा। शम्याश्शाखा- शमीशाखा [1] तामाहर[2]ति। पर्णानि—पत्राणि ॥

[सनयन् इत्येतत्फलम्]

सनयत इति वचनात् सान्नाय्यार्था शाखा नोपवेषार्था ।

लोकप्रसिद्धानां द्रव्याणा[3]मुपादानमिहानुपदेशात् । बहूनि पर्णानि बह्व्यश्च शाखा [4]यस्याश्शाखायाः । अग्रं प्रत्यशुष्का[5] अप्रतिशुष्काग्रा । असुषिरा -- यस्या नान्तश्छिद्रम् ॥

(सू.) [6] यं कामयेतापशुस्स्यादित्यपर्णां तस्मै शुष्काग्रामाहरेदपशुरेव भवति ॥ ८ ॥

**यं कामयेत पशुमान् स्यादिति बहुपर्णां तस्मै बहुशाखामाहरेत् पशुमन्तमेवैनं करोतीति विज्ञायते॥**

[सूत्रसमतः श्रुतिभावः]

(भा) अपशुत्वादयः प्रतिषेधा अनिष्टत्वात् । न ह्यशुभमृत्विक् चिन्तयेत् ! सूत्रकारमतिश्च पदाभ्यासप्रतिषेध[7] इति ॥

---

(वृ) ब्राह्मणे सान्नाय्यशब्दस्य निर्वचनमुक्तमित्यर्थः । **पर्णानि—पत्राणि** इति बहुपर्णामिति पर्णशब्दस्यार्थः ॥

[उपवेषादानम्]

**लोक प्रसि—पदेशात्**—इह विशेषानुपदेशात् पौर्णमास्यामुपवेषकाष्ठाद्युपादानं शाखाभावेऽपि ॥

**अपशुत्वा—चिन्तयेत्**—यजमानस्य ॥

[वाक्यस्य प्रतिषेधपरता]

**सूत्रकारमति—षेधः ;**—'यं कामयेतापशुस्स्यादिति पराचीं

---

[1] तामानयति—क [2] तामाहरति सनयत -ग [3] द्रव्याणां कार्यार्थानाम्—च [4] अस्याश्शा—क. ग [5] ष्का असु—ञ. [6] यं कामयेतापशुस्स्यादित्यशुणायात्रजनार्थं न तु अध्वर्युकामवशात्तस्या एव ग्रहणम् । यजमानपरिक्रीतस्यर्त्विजः तदहिते प्रवर्तनायोगादिति तु रुद्रदत्त, [7] प्रतिषेधास्त्विति,

[श्रुतिन्यायसाध्यानिर्वाह·]

(भा) उपदेशोऽध्वर्युकाम इति । बहुपर्णप्रशंसार्थमिति न्याय· ।

(सू) सा या प्राच्युदीची प्रागुदीची वा भवति इषे त्वोर्जे त्वेति [1] तामाच्छिनत्ति ॥ १० ॥

[ग्राह्याशाखा]

(भा) उत्तरा सैव केवला यस्या नान्यदुत्थितम् । वृक्षस्य [2]प्राची उदीची वा ब्राह्मणऽधिकृतत्वादिति ॥

---

(सू) तस्येडामुपह्वयेत ' इत्यस्य प्रतिषेधपरत्वेन [3]पदाभ्यासप्रतिषेध इति सूत्रकारेणोक्तत्वात् [4] ॥

[न्यायसमन्वय.]

उपदे—कामः ;—सूत्रकारेण कामोपदेशात् ॥

बहु—न्यायः—उत्तरविधिप्रशंसार्था पूर्वस्य निन्देति । तस्माद्बहुपर्णाप्यापदि ग्राह्या ॥

[ग्राह्यशाखाविशेषविवरणम्]

उत्तरासै—त्थितम्—सा या प्राच्युदीचीति सेत्युपादानं यस्या [5] नान्यदुत्थित सैव केवला ग्रहीतव्येत्येवमर्थम् । उत्तरेति बहुपर्णामित्युक्त्वा पूर्वनिषिद्धापेक्षयोत्तरा ॥

[दिग्वधिः]

वृक्षस्य—धिकृतत्वात्—ब्रह्म वै पर्ण इति प्रकृत्य यत्प्राचीमाहरेदिति वृक्षापेक्षया प्राच्याद्यवगतेः ॥

---

[1] एव गुणा आहार्या शाखा यस्य वृक्षस्य प्रागादिषु दिक्षु प्रवृत्ताभवति तामाच्छिनत्ति । भवत्यन्तेन वाक्य भेत्तव्यम् (रु) [2] प्राचीवोदीची–अ. [3] पदाभ्यासप्रतिषेध इति वाक्यस्यार्थ इडाहोत्रकल्पे भाष्यवृत्तिभ्या विशदीभविष्यति. [4] एतत्सूत्रतुल्यश्रुतिस्थले निषेध एव सूत्रकारेणोक्त इत्यधिकम् (मु.रा ) [5] न्यदुपस्थित शुषिरत्वादि–मु पु. पा.

(भा) लोके यदनर्थकं तत्पुनरुक्तं तद्वच्च सूत्रकारव्यवहारः । अतोऽन्वादेशेषूपसर्ग[1]बहुत्वे च न दोषः । उपदेश [2]मतादुच्यते परिहारः ।

[शाखाच्छेदक्रमः]

या त्वविरुद्धा [3]तामेवाच्छिनत्ति यथाऽन्या न छिद्यते । पर्णमपि आच्छिनत्त्येकयत्नेनाविश्रान्तः ॥

(सू) **अपि वा इषे त्वेत्याच्छिनत्त्यूर्जे त्वेति [4]सन्नमयत्यनुमार्ष्टि वा ॥ ११ ॥**

इति प्रथमाखण्डिका ॥

---

[संक्षेपः क्वचिन्नादृतस्सूत्रकृता]

(वृ) **लोकेयदन—न दोषः**—अस्यार्थः—या प्राची तामाच्छिनत्तीत्याद्यनुबन्धानां प्राप्तार्थानुवादित्वेऽपि न दोषः । उपसर्गशब्दोऽनुबन्धपरः ॥

[यत्तत्पदकृत्वम्]

**उपदेशमता—नाछिद्यते**—या तामितिपदयोः प्रयोजनं यस्यां शाखायां छिद्यमानायां शाखान्तरं न छिद्यते ॥

[यथेत्यादिनियमफलम्]

**पर्णमपीति**— तथाचामावास्यायां छेदननिषेधस्मृतिरप्यनुग्रहीष्यते ॥

[छेदव्यतिक्रमेविशेषः]

**आच्छिनत्त्ये—न्तः**—अविरुद्धशाखाच्छेदना[5]भावे एकयत्नेनैकपर्णमात्र [6]स्याच्छेदनमित्युपदेशपक्षः ॥

---

[1] उपसर्गबहुत्वेऽपि—झ बहुत्वेऽपि—क बहुत्वेषु च—ख [2] मतात्तूच्यते—ग [3] तामाच्छि—ञ [4] सन्नमयति—ऋजूकरोतिवक्रत्वे । इतरथा अनुलोममनुमार्ष्टि (रु) [5] दने—घ. [6] स्यापच्छे—झ

[कर्तव्यस्वरूपं अध्याहारनिषेधश्च।

(भा) सन्नमनमृजूकरणम्। मूलादारभ्याऽऽग्रात् स्पर्शनमनुमार्जनम्। छिनद्मीति सन्नमयामीति केचिदध्याहारं कुर्वन्त्यपूर्णार्थेषु, न तु तत्, [1]सूत्रकारानुपदेशात्॥

इति प्रथमाखाण्डका॥ (सू ११)

---

(सू) [2]इमां प्राचीमुदीचीमिषमूर्जमभिसंस्कृताम्। बहुपर्णामशुष्काग्रां हरामि पशुपामहमित्याहरति॥१॥१२

[प्रागुदीचीरूपदिग्व्यवस्थाहेतुः।

(भा) आहरणमन्त्र [3] प्रागुदीच्या[4]मेवेति केचित् लिङ्गात्[5]। [6]अनिवृत्तिर्वा,[7] कथम्? उच्यते.--भाविप्राक्तुमुदक्तुमत्याधान इति। अनूहश्च

(वृ) सन्नमनमृ—नम्—छेदनभेदनेत्यादिविधानात्।

छिनद्मि—र्थेषु—इषे त्वा छिनद्मि ऊर्जे त्वा सन्नमयामीति॥

न तु—शात्—यथा महेन्द्र महेन्द्रयाजिन इत्युपदेक्ष्यते॥

इति प्रथमा खण्डिका॥

---

[दिङ्नियामकविवरणम्।

आहरणम—लिङ्गात्;—इमां प्राचीमुदीचीमित्युभयनिर्देशात् केवलप्राच्यामुदीच्यां वा नोपपद्यत इति॥

[अनिवृत्त्यनूहहेतुविवरणम्]

अनिवृत्तिर्वा—त्याधाने; तस्यां प्रागग्रेऽ शाखापवित्रमत्यादधात्युदक्प्रातरित्याधाने यद्भावि प्राक्तुमुदक्तु तदनेनोच्यत इति सर्वपक्षेषु मन्त्र इति। अनूहश्च—संस्तवनात्;—केवले प्रातर्दोहात्मके वायव्य पयो भवतीत्यादौ प्रकृतिस्थस्य संस्तवात॥

---

[1] सूत्रकारेणानु-ञ  [2] प्रागुदीचीलिङ्गत्वेऽपि मन्त्रस्य प्राच्युदीच्योर निवृत्ति शाखाजात्याभिप्रायात् (रु)  [3] मन्त्रा -ख  [4] मेवशाखायां-घ. [5] लिङ्गात्केचित्-क. [6] अनुवृत्तिर्वा ख [7] र्वा उच्यते-क ञ.

[दिग्द्वयेऽपि मन्त्रानिवृत्तिः अनूहस्तद्धेतुश्च]

(भा) केवलेऽपि प्रातर्दोहे[1] प्रकृतिस्थस्य[2] सस्तवनात्। जात्यैक्याच्च सस्तवः, यथा नवेषु लाङ्गलेषु एभिर्वय जीवाम इति[3]। 'त्वया होता सतनोत्यर्धमासान्' इत्यर्धमाससतान प्रकृतिस्थ उच्यते। विकृतावपि[4] तदेव। कालान्तरे वर्तमाना स्तुतिरिति ॥

(सू) **वायवः स्थोपायवः स्थेति[5] [6]षडवराध्यान् वत्सानपाकरोति ॥ २ ॥ १३ ॥**

**दर्भैर्दर्भ[7]पुञ्जीलैर्वा ॥ ३ ॥ १४ ॥**

[मन्त्रावृत्तिस्तद्धेतुश्च]

(भा) पृथक्करण मातृभ्योऽपाकरणम्। तत्र मन्त्रावृत्ति प्रतिवत्सम्। एकयत्नेनाशक्यत्वात्; यद्यपि बहुवचनम् ॥

---

(वृ) कथ वैकृतशाखाया तत्सस्तवोपपत्ति ?–**जात्यैक्याच्च संस्तवः;**–शाखाजात्यैकत्वात् ॥

[दृष्टान्तार्थः]

लोके, **यथा—जीवाम इति;** अप्रवृत्तेष्वपि कर्षणे पूर्व-लाङ्गलसजातीयत्वा[8]त्सस्तव ॥

तथा, **—त्वयाहोता — स्तुतिः;**—तथा च,—इषमूर्जम-भिसऽस्कृतामिति भूतनिर्देश उपपद्यते ॥

[आवृत्तिहेतुविवरणम्]

**तत्र—क्यत्वात्;**—यद्यपि बहुवचनात् सख्यायुक्तत्वम्, तथापि सकृदनुष्ठाना[9]शक्ते असभवता मन्त्रावृत्तिरिति भवत्यावृत्ति।

---

[1] हे साय दोहे च–क [2] स्थस्य प्रागुदक्त्वस्य स–ञ. सस्तवनादिति–ख. [3] इति। यथा वा वेदे, त्वय–ख इत। यया वा त्वया–ञ [4] वपि वेदाकृते कालान्तरे वर्तमानाया स्तुतिरिति–ख. ञ (विकृतावपि वेदस्यकालान्तरे वर्तमानस्य स्तुति –सु–पु–पा) [5] स्थेति तया–क [6] अत्रार्धशब्द स्थानवाची बहुवचन तूपरमन्त्रवत् सर्वापेक्षम्। (रु) [7] पुञ्जीलं स्तम्ब (रु) –ञ [8] त्सस्तव। वेरेच–ग [9] शक्ते बहुवचनस्याविवक्षा अस–क

[षडवरार्ध्यपदार्थं मतान्तरं च]

(भा) अवरो भागष्षट्कृत्व । कुम्भी परार्ध्येति सूत्रान्तरे । पुञ्जील [1]--स्तम्ब. [2] ॥

(सू) **देवो वस्सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति ॥ ४ ॥ १५ ॥**

(भा) गावो यत्र चरन्ति स गोचर. । तदर्थं प्रस्थापयति ।

[मन्त्रयत्तातदनावृत्तिहेतुश्च]

अघशग् सान्तेन [3]मन्त्रेण देवभागामित्यपि लभ्यते न तूपदेश [4] ।

---

(वृ) बहुवचनस्याविवक्षा । **अवरोभागष्षट्कृत्वः** ;—षडवरार्ध्यानित्यर्ध-शब्दो भागवचन· । अवरार्धसंबन्धिनो वत्सानवरार्ध्यानिति ॥

[मतान्तराशयः]

**कुम्भी परार्ध्येति सूत्रान्तरे** ;—अवरभागे निर्दिष्टे परभागा-पेक्षायां [5] यावत्कुम्भीपूरणदोहनसमर्थगवा वत्सानपाकुर्यादिति सूत्रान्तर-वचनम् ॥

[अनुपदेशताहेतुः]

**अघशं लभ्यते** ;—आर्षपाठस्य [6] ह(स्प)ष्टार्थत्वात् । **न तूपदेश इति** ; ब्राह्मणे देवेभ्य एवैना इन्द्रायाप्याययतीतीन्द्रसंबन्धावगमात् ॥

[गोप्रस्थापन इत्रात्रापि व्यवस्थापनम्]

[7] अत्र इन्द्रग्रहणं प्रदर्शनार्थम् । तेषा महेन्द्रो देवतेति महेन्द्रस्यापि स्वशाखोक्तत्वात् मन्त्रपाठे देवताविशेषानिर्देशाच्च यथाविकारं व्यवस्थया देवतोपलक्षणम् । बहु दुग्धीति वाग्विसर्गविधिविशेषे यथा-देवतमेव प्रसौतीति [8] दर्शनाच्च ॥

---

[1] पुञ्जील -स्तम्ब (मु-पु-पा). [2] स्तम्बं—क. ख. [3] मन्त्रे देव—अ. [4] दश इति- ख अ. [5] यावत्कुम्भीपूरणसमर्थदोहन गवां—क. [6] दृष्टार्थत्वात्—य. घ. [7] तत्र—घ. [8] प्रदर्शनाच्च—क.

(भा) नावर्तते प्रतिगु ; [1] यद्येकयत्नेन प्रतिष्ठन्ते गाव ॥

(सू) **प्रस्थितानामेकां शाखयोपस्पृशति दर्भैः दर्भ-पुञ्जीलैर्वा ॥ ५ ॥ १६ ॥**

शाखयोपस्पर्शन तूष्णीम् ॥

[गोप्रस्थापनमन्त्रपाठपक्षौ]

(सू) **[2] आप्यायध्वम [3] घ्निया इन्द्राय देवभाग [4] मेके समामनन्ति । महेन्द्रायेत्येके ॥ ६ ॥ १७ ॥**

समामनन्ति—परिपठन्त्यन्ये शाखिन ॥

(सू) **इन्द्रं [5] निगमेषूपलक्षयेदिन्द्रयाजिनो महेन्द्रं महेन्द्रयाजिनः ॥ ७ ॥ १८ ॥**

निगमा —मन्त्रा । उपलक्षणं क्षेप· ॥

(सू) **शुद्धा अपस्सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः । रुद्रस्य हेतिः परिवो वृणक्त्विति प्रस्थिता [6] अनुमन्त्रयते ॥ ८ ॥ १९ ॥**

---

(वृ) **नावर्तते—गावः ;**—यत्नान्तरेण प्रस्थापने मन्त्रावृत्तिः ॥

**इन्द्रायदेवभा—त्येके ,**—इति शाखान्तरोपदेश । तस्मिन्नपि पक्षे व्यवस्थयोपलक्षणम् ॥

---

[1] वत्साविनाकृताना युगपत् शक्यनिष्कासनत्वान्नमन्त्रावृत्ति (रु) [2] प्रस्थापनमन्त्रस्य शाखान्तरीयौ पाठविकारौ दर्शयति । (रु). [3] घ्नया—क. [4] मित्येके—क [5] निगम्यन्ते येषु हविष प्रतियोगित्वेन रूपेण देवतास्ते मन्त्रा निगमा (रु). [6] अनुपूर्वोऽभिपूर्वश्च मन्त्रयति तदभिसधाय मन्त्रोच्चारणे प्रयुज्यते अभिपूर्वस्तु तस्मिन्नेवाभिमुख्याधिक (रु)

[महेन्द्रनिषेधस्य हेतुश्च]

(भा) इन्द्राय शरद इति,—नात्रमहेन्द्र[1] ॥

अवर्तमानप्रयोगो यस्मादु[2]च्यते । अनुमन्त्रणम् [3]तमनुमधाय वचन तन्मुखेनैव ॥

(सू) ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यज-
मानस्य गृहानभिपर्यावर्तते[4] ॥ ९ ॥ २० ॥

[अभिपर्यर्थः]

[5]गृहानभिमुख· पर्यावर्तने ॥

(सू) यजमानस्य पशून् पाहीत्यग्निष्ठेऽनस्यग्न्यगारे
वा पुरस्तात्प्रतीचीं शाखामुपगूहति [6]पश्चात्प्राचीं
वा ॥ १० ॥ २१ ॥

[मन्त्रव्याख्या]

(भा) अग्न्यगारे यत्तिष्ठति निर्वपणार्थमनः तदग्निष्ठम । अग्नीना-
मगार अग्न्यगारम् । पुरस्तात्–अनसोऽग्न्यगारस्य वा पुरस्तात् ।

(वृ) [7]नात्रमहेन्द्रः;—उपलक्षणीय ॥

[महेन्द्रप्रतिषेधहेतुविवरणम्]

अवर्तमानप्र–दुच्यते;—शतमिन्द्राय शरदो दुहाना इति शतसंवत्सरसंबन्धिदोहनाभिधानेना[8] वर्तमानप्रयोगानिर्देशात् असमवेता-भिधायित्वात् ॥

[1] महेन्द्र । वर्तमान–ग आवर्तमान –क. न्द्र वर्तमान -ग [2] यस्मा उच्यते–क. ग. [3]तदभि–क तमभि ग तदनु -ञ [4]अभिमुख प्रतिनिवर्तेत (रु). [5] गृहायाभिमुख –क. गृहाभिमु–ञ [6] पश्चाद्वा–क. [7] इदं भाष्य तद्वृत्ति च भारद्वाजमतेन महेन्द्रोपलक्षणमिच्छन् निरस्यति रुद्रदत्त । शतमिन्द्रायेत्यस्य दोहदेवता संबन्धबोधकतया निगमत्वमपीच्छति । भाष्यवृत्तिकारौ तु आशासनीय भाव्यनेक-दोहानिर्देशेन प्रयोगासमवतबोधकत्वं मन्वाते ? [8] अवर्तमान -क. ञ. ग, घ.

(भा) प्रतीचीं–[1] प्रत्यगग्राम्, अपरतो वा प्रागग्रामुपगूहति—अप्रकाश करोति ॥

[ मन्त्रनियमनम् ]

मूलतो निधान सस्कारो गो[2] कालने [3] कृतार्थायाश्शाखायाः [4] [5] अत पशौ निवृत्ति ॥

(सू) **यो वा अध्वर्योर्गृहान्वेद [6] गृहवान् भवति । आचतुर्थात्कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामीत्येते वा अध्वर्योर्गृहा य एवं वेद गृहवान् भवतीति विज्ञायते ॥ ११ ॥ २२ ॥**

इति द्वितीया खण्डिका ॥

---

प्रथम पटल ॥

[ अध्वर्युशब्दार्थः कर्माङ्ग ज्ञानम् ]

(भा) अध्वर्युरध्वरस्य नेता । तस्य यो यजमानो गृहान् वेद कर्माणि, तस्याऽपि गृहा भवन्तीति [7] फलस्तुति ॥

---

(वृ) **गोका–निवृत्तिः;**—पशूना गोपीथायेति लिङ्गात् । उपगूहन सस्कारो गोप्रस्थापनार्थशाखाया ॥

यो वा अध्वर्योर्गृहान् वेदेत्यस्यार्थमाह,—**तस्ययो–कर्माणि;**—गृहशब्द कर्मणि वर्तते । अध्वर्यो कर्मणा यजमानेन वेदन कर्माङ्गम् ॥

**तस्यापि–न्ति;**—कर्माणि भवन्तीति ॥

**फलसंस्तुतिः**—फलविधि ॥

---

[1] प्रत्यग्गता प्राग्गतामिति तु रुद्रदत्त [2] पालने–**ख** [3] कृतार्थाया अत –**अ.** [4] शाखानिधान भाव्युपयोगार्थम्, न वत्सापाकरणशेष । अत पाशावपि भवत्येवेति रुद्रदत्त [5] तस्मात्–**क** [6] गृहवानव [?]–**क** [7] वदनस्य परार्थत्वात्फलवचन प्ररोचनार्थं ततश्च यजमानस्यैवेदमेव विदुष फलमिति न शङ्कितव्यमिति (रु)

(भा) कर्माङ्गत्वात् ज्ञानस्य, न ह्युभय कुर्यात् क्रतूपकारं फल चान्तरेण वचनम् ॥

[सूत्रानुक्त व्यवस्था]

यानि त्वनिबद्धानि सूत्रकारेण यो वै सप्तदशमित्येवमादीनि तान्यपि याजमानानि[1] अनियतानि फलसम्तुते । कर्माङ्गत्वेनाविधानात् ॥

[अवधानम्]

समीक्षण---अध्वर्यो स्वकर्मणां ध्यानम् ॥

[अध्वर्युकर्मगणनम्]

प्रणयन कृत्वा अग्नीनन्वाधास्ये ततश्शाखाऽऽहरणम् ततो वत्सापाकरण [2]करिष्ये इत्येव [3]चतुर्णां चतुर्णामिष्टि [4]पशुबन्धेषु । एवमेते कर्मपदार्था अध्वर्योर्गृह्या इति ॥

---

(वृ) कर्माङ्गत्वा-वचनम्;—अतो नित्यवद्यजमानेन कर्मवेदनं कर्तव्यम् फलेच्छया विनापि ॥

[अनैयत्यविवरणम्]

यानित्वनि-नाविधानात्;—य एव वेद प्रतियज्ञेन तिष्ठति न यज्ञाद्भ्रंशत इति सप्तदशत्ववेदनस्य फलसबन्धावगमाद्याजमानत्व सूत्रकारेणानिबन्धनादनित्यत्वम् । यो वा अध्वर्योरिति तु सूत्रकारेण बन्धनेऽपि कर्मणामङ्गतयाऽनित्यत्वात्फलभाव. ॥

[अध्वर्युकर्मव्यवस्था]

एवमेते—गृह्या;—अभिसमीक्षणमाध्वर्यवम् । वेदन याजमानम् । तत्र वेदने चतुस्सङ्ख्यानियमो नास्ति ॥

---

[1] फलस्तुतेरनियतानि । समीक्षण-ख ग. ञ. [2] करिष्यामीत्ये—ङ. ञ [3] चतुर्णामिष्टि—ख ङ [4] पशुबन्धेषु ध्यानम्-क ख ग. घ.(ग्रं-लि-पु)

[सूत्रशैलीविशेषपरिचयः]

(भा) यत्राविकृत ब्राह्मणमुच्चारयति तत्र विज्ञायत इत्याह ॥

[सौत्रक्रमशब्दार्थाध्वर्युशब्दानुगुण्ये]

उक्त चेति पदार्थप्रमाण कर्म । उचितपदमध्वरवाचीति ॥

इति धूर्तस्वामिभाष्ये प्रथम पटल ॥

---

(सू) **उत्तरेण गार्हपत्यं असिदोऽश्वपर्शुरनडुत्पर्शुर्वा निहिता ॥ १ ॥ २३ ॥**

---

(वृ) **यत्रावि—यति**;—प्रत्यक्ष पठ्यमानम् । **इत्याह**;—सूत्रकार ॥

**उक्तं च**—त्रयो वै गतश्रिय इत्यादिषूक्तमिति निर्देशेऽपि प्रत्यक्षब्राह्मणपाठोपन्यास. । उक्त चेति—[1] उक्तमित्यत्रापि चेत्यर्थ ॥

[सौत्रस्य कर्मपदार्थस्य निर्देशः]

**पदार्थप्र—कर्म**; —आचतुर्थात्कर्मण इति कर्मशब्द. पदार्थ पर । अत शाखाहरणपदार्थ छेदनाद्याहरणान्त । एवमन्येऽपि पदार्था. साङ्गप्रधाना एकैक कर्म ॥

[प्रकृते अध्वर्युशब्दानुगुण्यनिर्वाहः]

**उचितप—चि**;—अध्वरशब्दस्य सोमयागवाचित्वात् अध्वर्युरध्वरस्य नेतेति दर्शपूर्णमासादिकर्तरि गौणतया औचित्येन वर्तत इति ॥

इति द्वितीया खण्डिका

---

इति कौशिकेन रामेणाग्निचिता विरचितायां धूर्तस्वामिभाष्यवृत्तौ प्रथम पटल

---

[1] उक्त चेत्यत्रापि चे—घ अत्रापिचेत्यर्थ (मु रा)

(भा) उत्तरेण गार्हपत्यमित्येनबदूरवाची । अदूरेणोत्तरतो गार्हपत्यस्य असिदो–दात्रक । [1] पर्शु --पार्श्ववङ्कि । अनो वहतीत्यनड्वान् ॥

(सू) **देवस्य त्वा सवितुः प्रसव इत्यसिदमश्वपर्शुं वाऽऽदत्ते । तूष्णीमनडुत्पर्शुम् ॥ २ ॥ २४ ॥**

[विशिष्योक्तिफलम् आदानक्रमश्च]

यदि [2] नोच्येत तूष्णीमनडुत्पर्शुमिति [3] अर्था [4] न्नीयेतान्येनापि । [5] अतोऽध्वर्युराददयात् तूष्णीमितिविधि । वाग्यत आदत्त इत्युपदेश. ॥

(सू) **यज्ञस्य घोषदसीति गार्हपत्यमभिमन्त्र्य प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वाऽसिदं प्रतितपति ॥ ३ ॥ २५ ॥**

[अन्यत्राप्यभिमन्त्रण, विशेषशब्दफलादि च]

(भा) अभिमन्त्रण प्रतितपनार्थम् । तस्मादाहवनीयस्यापि, यदि तस्मि-

---

यदित्यादिनिर्दिष्टतात्पर्यम् ।

(वृ) **यदिनोच्येत–न्नीयेतान्येनापि ;**—अन्येनापि लवनार्थम् । नाध्वर्युराददयादादानकाले ॥

[वाग्यतस्थाल्लाभ ।]

**अतोऽध्व त्युपदेशः ;**—तूष्णी ग्रहण वाग्यमनार्थम् । अर्थ-प्राप्तमादानमनूद्य असिद मन्त्रनियमात । एष हि त्वष्टानां कर्ता भवतीति वचनादन्तरेणापि तूष्णीग्रहणमध्वर्युणैवानडुत्पर्शुरादीयते मन्त्राश्च निवर्तन्त इति ॥

---

[1] पर्शु पार्श्वास्थि (रु) वक्रीरश्वस्य–क. [2] नोच्यते–अ. [3] मिति तदर्थान्नी–ख. मिति अथादानार्थततदध्वर्यु–अ [4] नीयेत नाध्वर्यु–क. [5] तद ध्वर्युराददयादितिविधि । वाग्यत आदद्यादि–ख I तदध्वर्युराददातीति विधि । वाग्यत आददाती–ग II.

(भा) स्तपनं क्रियते तस्यैव चोत्तरतो निधानम् । गार्हपत्यग्रहण त्वासि-दाभिमन्त्रणनिवृत्त्यर्थम् । [1] प्रतितपन एव वा विकल्प । निधानमुत्तरतो गार्हपत्यस्यैवाभिमन्त्रण च [2] ॥

(सू) **न पर्शुम् ॥ ४ ॥ २६ ॥**

[प्रतिषेधप्रयोजनविशेषः]

(भा) [3] पर्शोस्तपनप्रतिषेधात् [4] वैकल्पिकेऽप्येकस्मिन्नपि विधिरुपदिष्ट सर्वार्थो भवतीति [5] ख्याप्यते ॥

(सू) **प्रेयमगादित्युक्त्वा उर्वन्तरिक्षमन्विहीति प्राची-मुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति ॥ ५ ॥ २७ ॥**

---

[निवृत्तिहेतुः]

(वृ) **गार्ह—निवृत्त्यर्थम्** ;—प्रकृतत्वात्तदभिमन्त्रण[6]प्राप्ते , उपवेषमादाय रक्षसं पार्णिं दहाहिरसि बुध्निय इतिवत् ॥

[विकल्पव्यवस्थाहेतुः]

**प्रतित — ल्पः** ;—यत आहवनीये हविश्श्रपणपक्षे शूर्पाग्नि-होत्रहवण्यो [7] स्तत्रैव प्रतितपनेऽपि परत एव प्रयोगदर्शनम् । आहवनीय-होमपक्षे [8] च होमाङ्गानामपि शुन्धनपरिस्तरणादीनामितरयो दर्शनात् हिरण्यकेशिमताच्च ॥

[ख्यापना नापेक्ष्यते]

**पर्शोस्तपनप्रति—ख्याप्यते** ;—उपदेश [10] एव साधारण , यथा व्रीहिधर्मोपदेशो यवेषु ॥

---

1 प्रतिताप एव वा—ञ  2 च हिरण्यकेशिमतात्—ञ  3 पर्श्वोस्त—ञ.
4 अनेकसाधनविकल्पेषु मुख्ये कृतो विधि सर्वार्थो भवतीति (रु)  5 ज्ञाप्यते—ग
6 प्राप्ति —झ  7 स्तत्रैव तथा प्रयोग—क (मु-रा) तत्रैव तप्यपरत एव 2—झ.
8 क्षे होमा—क (मु-रा)  9 दर्शनम्—घ. दर्शनत्वात् झ  10 उपादान एव—झ

[मन्त्रस्य नियमानियमौ]

(भा) [1] स्त्रीलिङ्गनिर्देशा(त्वा)त् प्रेयमगादि[2]त्यसिद्दे मन्त्रनिवृत्ति मानवी हि पशुः स्वधाकृतेति लिङ्गात् । केचिदनिवृत्तिर्वा । असिदाकृतेरपि मनुना कृतत्वादन्नमयत्वाच्च । द्रव्यगुणो हि लिङ्गम्' अतो न लिङ्गादर । उभौ गमनार्थौ मन्त्रौ [3] उभौ गमनाविति वचनात् ॥

[मन्त्रलिङ्गनैकलिङ्गम्]

(वृ) **स्त्रीलिङ्गनिर्दे—लिङ्गात् ;**—पशुलिङ्गात् स्त्रीलिङ्गनिर्देशाच्च असिद्दे मन्त्रनिवृत्ति ॥

**केचिदनिवृत्तिर्वा—ऽसिद्दे ;**—[4]असिद्दमन्त्रस्य इत्याहु' ॥

[मन्त्रनिवृत्तिहनृपपत्ति.

**असिदाकृते च ;**—मनुना कृतेति मनुष्यकृतत्वात् अन्नमयत्वाच्च अन्नसाधनत्वात । स्वधाकृतति—स्वधामन्न लवनादिना करोतीति [5]कर्तृनिष्ठा। मनुना कृतेत्यसिद्ध एव मुख्यत्वादिति पशौ मनुजातेति [6]योगेन प्रजापतौ वर्तत इति ॥

[लिङ्गानादरहेतु]

[7]**द्रव्यगु—दरः;**—[8]अदितिः पाशानितिवत् प्रकृत्यर्थान्वयोपपत्ते ॥

प्रेयमगादित्युक्त्वा उर्वन्तरिक्षमन्विहीति प्राचीमुदीचीं वा दिशमभिप्र[9]व्रजतीत्युर्वन्तरिक्षमन्त्रस्यैव प्रव्रजनार्थत्वमित्याह,—**उभौ ;—वचनात्** —

[उभयोस्तथात्वे हेतु ।

प्रतिगमने यौ गमनाविति [10] प्रकृतद्वित्वानिर्देशात् ॥

---

[1] स्त्रीलिङ्गत्वात—ञ [2] तृणगामनडुत्पशुं न पशुमित्यभिप्रेतविशेषवचनात् अवचनाच्चात्र विशेषस्य स्त्रीलिङ्गविरोधादरभावात्विशेषणाविशेषाच्च मन्त्रानिवृत्तिं वदन भाष्ये कश्चिल्यादिनोक्त पक्षमेव समर्थयत रुद्रदत्त [3] गमना—ञ [4] अन्विधिरुपदिष्टस्सर्वो असिद्दे' झ [5] कर्तरि—झ [6] योगेन वर्तत इति—क घ [7] द्रव्यगुणो-क. [8] 'अदिति· पाशान प्रमुमोक्तु' इति मन्त्रे एकस्मिन् पशुपाशमात्रेन बहुवचनमनादृत तद्वत इत्यधिक दृश्यत (मु रा) [9] व्रजेत्यु- घ [10] प्रकृतत्वानि—झ

[दर्भेषु दिगनियमः]

(भा) उक्त्वेति मन्त्रयो[1]रनुसधानार्थम् । अस्माक तु अथो यदेतदुक्त्वेति गम्यते उर्वन्तरिक्षमन्विहीति [2]प्रत्यायन गत्या इत्येव भारद्वाजमति [3] [4]इति यत कुतश्चेति दिङ्नियमो नास्ति ॥ ५ ॥

(सू) **देवानां परिषूतमसीति दर्भान् परिषौ- ति[5] ॥ ६ ॥ २८ ॥**

(भा) परिषवण—लवनाय परिग्रह चिह्नै ॥ ६ ॥

(सू) **विष्णोः स्तूपोऽसीत्यभिप्रेतानामेकं स्तम्ब[6]मु- त्सृजति ॥ ७ ॥ २९ ॥**

---

[प्रकृतेऽनुसन्धानपदार्थ ]

(वृ) **उक्त्वेति–धम् ;**—पाठतो मन्त्रविच्छेदेऽपि [7]एककार्यत्वादुभयो- स्सश्लिष्टप्रयोगशङ्काया विच्छिद्य प्रयोगार्थ उक्त्वेति निर्देश । अतोऽन्यत्रै- ककार्याणां मन्त्राणां नानादेशाधीतानामपि प्रश्लिष्ट[8]पाठोऽवगम्यते ॥

[दिगनियमहेतु.]

**अस्माकं तु–गम्यते ;**—वाक्यशेषेण । पुरस्ताद्देवेभ्यो जुष्ट- मिति मन्त्रे पुरस्तादितिवचनात् दिगन्तरे बर्हिराहरणे मन्त्रस्याप्राप्ति- शङ्काया मन्त्रप्रयोगेणैव प्राचीत्वसपादनम् ॥

[भारद्वाजसंमतहेतु.]

**उर्वन्तरिक्ष--नास्ति ;**-लवनोत्तरकालप्रतिनिवर्तने विनि[9]योगा- दिति ॥

---

[1] रसधा -झ [2] प्रत्यायानाङ्गत्वात् इत्येव- झ [3] गतिश्चयत–झ ञ
[4] यत कु–ञ झ [5] यावतापर्याप्त तावत्परिगृह्णाति(रु) [6] यथानलूयते तथा बहिष्करोति (रु) [7] एकवाक्यत्वा–झ [8] पाठो गम्यते–झ [9] योगात्– झ

(भा) अभिप्रेता. परिगृहीता । अच्छिन्नस्योत्सर्ग.[1]। पशूनामितिलिङ्गात्।

(सू.) **एकं वा स्तम्बं [2]परिषूय [3]तं सर्वं दाति॥८॥३०॥**

[उत्सर्गाभिमर्शनव्यवस्था।]

(भा) एकस्तम्बपरिषवणे नोत्सर्गो नाभिमर्शनमिदं देवानामिति असंदेहात्। यथा इदमग्नेरित्याग्नेये केवले [4] केचित्कुर्वन्ति। हविषोर्युगपदव[5]च्छेदात्संदेह इह [6]त्वसंदिग्धेन क्रियत इति ॥ ८ ॥

---

[अच्छिन्नस्योत्सर्गहेतुः।]

(वृ) **आच्छिन्नस्यो—लिङ्गादिति**—पशूनां भक्षणार्थत्वादच्छिन्नस्यैव मनसोत्सर्ग इदं पशूनामिति ॥

[उत्सर्गादिनिषेधे हेतुः।]

**एकस्तम्बपरि—असंदेहात्**—[7]कृत्स्नस्य देवतार्थत्वात् ॥

[दृष्टान्तः।]

**यथा इदमग्ने—केवले इति** - यथा अमावास्यायां सनयत. इदमग्नेरित्यभिमर्शननिवृत्तिः ॥

[संदेहतदभावहेतु. दृष्टान्तार्थश्च]

**केचित्कुर्वन्ति**—इहाभिमर्शनम् ॥

**हविषोर्युगप—त्संदेह इति**—हविर्द्वयस्य युगपद्विभागात्संदेहो भवति। अतस्तत्परिहाराय पृथग्देवतानिर्देशविधानात् असंदेहार्थस्य इदमग्नेरित्यस्यैकपुरोडाशे निवृत्तिः असंदेहात् ॥

[पक्षान्तरम्।]

**इह त्वसं—क्रियत इति**—बर्हिषि तूत्सृष्टादन्यस्य लवनार्थस्य देवतार्थत्वेऽसंदिग्धेऽपि इदं देवानामिति निर्देशविधानात् अदृष्टार्थत्वादेकस्तम्बपरिषवणेऽपि इदं देवानामिति निर्देश. कर्तव्य इति केचित् ॥

[1] गोबुद्ध्या इदं पशूना—ख ग [2] अन्यत्रपरिप्लता एव लूयन्त इत्यर्थ (रु).
[3] परिप्लुत सर्व—क ग. ज [4] केचित्तु—अ [5] युगपदप—अ [6] त्वसंदिग्धे क
[7] इद—घ पुस्तके न दृश्यते ख ग घ अ

(सू) अतिसृष्टो गवां भाग इति वैकां द्वे तिस्रो वा नाडीरुत्सृजति* । इदं देवानामिति परिषूतानभिमृशति इदं पशूनामित्यतिसृष्टान् ॥ ९ ॥ ३१ ॥

(भा) [1] नाडी — मुष्टि शलाका वा । एकस्तम्बपरिषवण[2] नोत्सृज्यते

(सू) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां बर्हिर्देवसदनमारभे इति [3] विशाखेषु दर्भा [4]नारभते ॥ १० ॥ ३२ ॥

(सू) देवबर्हिर्मा त्वाऽन्वङ्मातिर्यगिति [5] संयच्छाति ॥

(भा) सयच्छति—गृह्णाति [6]सव्येन हस्तेन ॥

(सू) पर्व ते राध्यासमित्यासिद[7]मभिनिदधाति ॥११

(भा) यत्परुषि दिनमिति लिङ्गात् पर्वण्यधि[8]निदधाति ॥ ११ ॥

(सू) आच्छेत्ता ते मारिषमित्याच्छिनत्ति * । [9] सं नखं मुष्टिं लुनोति* [10]स प्रस्तरः ॥ १२ ॥ ३४ ॥

---

[ पुनरुक्तिफलम् ]

(वृ) **नाडीमुष्टिःश—त्सृज्यते**– पुनरुपन्यास किमर्थं ? उच्यते ;— तत्सर्व दातीत्युक्त्वा अतिसृष्टो गवा भाग [11] इति वैकामिति विकल्पेनोत्सर्जनविधानादेकस्तम्बेऽपि पाक्षिकोत्सर्गशङ्काया पुनरुपन्यासः । अतिसृष्टो गवा भाग इत्यादेरनेकस्तम्बेष्वन्यतमोत्सर्गे मन्त्रविकल्पार्थत्वान्नैकस्तम्बपरिषवणे प्राप्तिः ॥

---

[1] नाडि —ख ग [2] वण विकल्पेनो—क [3] विशाखा —प्रकाण्डादूर्ध्वभागा यत शालाका पृथग्भवन्ति (रु) [4] स्पृशति (रु) [5] लवनानुगुण सव्यमुष्टिना गृह्णाति (रु) [6] सव्यहस्तेन—मु पु पा लिखित—ग पुस्तके इद सूत्रेण सकलित दृश्यते [7] मार्यानि—क [8] पर्वण्यापिनि—ग [9] सनख—क. सगताङ्गुल्यङ्गुष्ठनखम् तावत्प्रमाणामित्यर्थ । (रु)- [10] प्रथमलूनोमुष्टि (रु). [11]इति विकल्पेनो—घ.

**(सू)** **कुल्मिमात्रोऽ[1]रत्निः [2]प्रादेशः ऊर्वस्थि जान्वस्थि स्रुग्दण्ड इति वा [3]तिर्यक्प्रमाणानि ॥ १३ ॥ ३५ ॥**

इति तृतीया खण्डिका ॥

---

[तिर्यक्प्रमाणानि]

(भा) कुल्मिर्गोपुच्छो गोग्रासो वा । अरत्नि[4]रन्तरस्थौल्यम् । द्वादशाङ्गुलिविस्तार प्रादेश सामर्थ्यात् । ऊरोरस्थि–ऊर्वस्थि । जानोरस्थि जान्वस्थि । स्रुचो दण्ड· स्रुग्दण्ड इति तिर्यक्प्रमाणानि—[5]स्थौल्यस्य न [6]दीर्घत्वस्य ॥ १२ ॥

**(सू)** **पृथिव्यास्संपृचः पाहीत्यनधो निदधाति ॥ १ ॥ ॥ १४ ॥**

[निधानादिविशेष.]

(भा) अध.—[7]भुवि । नाधोऽनध –उपरिष्टात् निदधाति न तु भूमौ ॥

**(सू)** **अयुजो मुष्टीन् लुनोति[1] । तथा [8]निधनानि ॥ २ ॥ १५ ॥ ३७ ॥**

(भा) न युज —अयुज विषमाणि निधनानि—चूडा. लुनोति लुनाति ॥ २ ॥

---

[तिर्यक्प्रमाण विशेषग्राहकच्च]

(वृ) **कुल्मिर्गो—रस्थौल्यम्**—प्रस्तरस्य मध्यमस्थौल्यमरत्निस्थौल्यप्रमाणम् ॥

**द्वादशाङ्गु—सामर्थ्यात्**-- तदर्थं प्रादेश इति निर्देशसामर्थ्यात् ॥

**लुनोति ;**—लुनातीतिवक्तव्ये ओकारश्छान्दस ॥

---

[1] अरत्नि –हस्तस्य पूर्वभाग (रु) [2] प्रादेश –प्रदेशान्यङ्गुष्ठयोरायाम. सचात्रसामर्थ्यान्मण्डलीकृतस्सन्निश (रु) [3] तानि च सन्नखप्रमाणेन विकल्पन्ते (रु) [4] रन्तस्स्थौल्यम्–क ग. [5] प्रस्तरस्थौल्यस्य (क. ख ग घ वृ). [6] न तुदी–अ [7] भुवि–अनध.–अ [8] निधनानि–मुष्टीना गाशय. (रु)

(सू) **तेषां प्रस्तरोऽयुगर्थ इत्येके**[1] ॥ ३ ॥ १६ ॥ ३८ ॥

[प्रस्तरफलम् परमतेन]

(भा) [2]अयुजो वा [3]प्रस्तरेणैके समा मुष्टयो निधनानि च प्रस्त-[4]रेण विषमत्वम् ॥ ३ ॥

[स्वमतम्]

(सू) [5]**प्रस्तरे** [6] **याथाकामी** ॥ ४ ॥ १७ ॥ ३९ ॥

[यथाकामशब्दार्थः कामभेदाश्च]

(भा) यथाऽस्य काम इच्छा तथा प्रयुङ्क्त इति कर्तुर्याथा[7] कामित्वम् । इह वा प्रस्तर प्रथम मुष्टिं करोति । विष्णोस्तूपोऽसीति वा पूर्वस्मा[8] द्भागात् प्रस्तर गृह्णातीति । अन्ये त्वाहु ,—प्राकृतेभ्योऽपि परिमाणे-भ्योऽन्यत्परिमाण लभ्यते इति सर्वस्य कृत्वा परिषवणम् ॥ १४ ॥

---

(वृ) **अयुजोवा—विषमत्वम्**—इति 'तेषा प्रस्तरोऽयुगर्थ इत्येके' इत्यस्यार्थः ॥

प्रस्तरे याथाकामी इत्यस्यार्थ उच्यते,—

**यथास्यकाम—मित्वम्**—अध्वर्यो ॥

**इहवा—करोति**—इह वा—लवनकाले ॥

**विष्णो-गात्**—परि[9]गृहीतबर्हिष पूर्वभागे प्रस्तरलवन विष्णो-स्तूपोऽसीति स्तरणकाले वा ॥

**पुरस्तात्—ह्णाति**—वेदे पूर्वस्या दिशि पुरस्तात् प्रस्तर गृह्णाति । इयन्त गृह्णातीति श्रुते ॥

---

[1] अयुग्भावार्थ । न तु प्रस्तररहितानामयुक्त्वमित्येके मन्यन्ते न तथावय-मित्यर्थ (रु) [2] अयुज प्रस्तरण-**के** (**क ख ग घ** वृ), [3] ञ प्रस्तरेण एकेन-**ग** अन प्रस्तरेणैके—**ञ** [4] णास्य यथा न विषयत्वम्—**ग** [5] कथ यूय मन्यन्ते अत आह । (रु) [6] यथाकामी—**क** सहवाप्रस्तरेणायुक्त्वमस्तुनवा, नत्वेकतरनिर्णय प्रभवाम (रु) [7] कामित्वमध्वर्यो—(**क ख, ग, घ** वृ) [8] द्भागात्पुरस्तात्—**ञ** [9] परिघूतबर्हिष—**घ**

(सू) **यदन्यत्परिषवणादुत्सर्जनाच्च [1] तत्सर्वत्रावर्तते*। प्रस्तरमेव मन्त्रेण दाति [2] तूष्णीमितरदिति वाजसनेयकम् ॥ ५ ॥ १८ ॥ ४० ॥**

(सू) **सर्वं लूत्वा देव बर्हिश्शतवल्शं विरोहेत्याल[3]वानाभिमृशति ॥ ६ ॥ १९ ॥ ४१ ॥**

[लवने नियमः]

(भा) प्रस्तर एव[4] लूयते। एकस्तम्बपरिषवणेऽपि अ (णेत्व) परिगृहीता अपि मन्त्रेण लूयन्ते। आलवा —स(टा)च्छेदा ॥ ६ ॥

(सू) **सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानम्*[5]। अदित्यै रास्नासीति त्रि[6]धातु पञ्चधातु वा [7] शुल्बं करोति ॥ ७ ॥ २० ॥ ४२ ॥**

---

[मन्त्रनियमे भरद्वाजपक्ष]

(वृ) **एकस्तम्ब—लूयन्ते**—भगवता भरद्वाजेनैवमुक्तम्,—'छिन्ने छेदनमन्त्रा. लूने लवनमन्त्रा. दुग्धे दोहनमन्त्रा पिष्टे पेषणमन्त्रा प्रयोक्तव्या इति।

[निवृत्तिव्यवस्था]

अत्रा(तत्रा)र्थलुप्ता. पदार्था निवर्तन्ते। अतोऽत्रैव बर्हिराहरणे [8] असिदादीनि निवर्तन्ते। छिन्ने छेदनाभावात्। दृष्टार्थत्वाच्छेदनस्य। [9] तन्निवृत्तेस्तत्संस्काराश्च निवर्तन्ते। एवं सर्वत्र ॥

**आलवाः—सच्छेदाः—** छिन्नानि मूलानि ॥

---

[1] सर्वेषु मुष्टिषु दर्भालम्भनाद्यावर्तते (रु) [2] इतरत्–मुष्टिजातम् (रु) [3] येषु काण्डेष्वालनाद्दर्भास्त आलवा (रु) [4] एव मन्त्रेण लूयते–(क ख ग घ. वृ) [5] अभिमृशतीति शेष इति आत्मशब्दार्थान्वयिपूरण दृश्यते (मु रा.) [6] धातु –सधि (रु) [7] शुल्ब—एकसरा रज्जु (रु) [8] असिदादानादीनि–ख ग. [9] तन्निवृत्तौ–क. घ. तत्संस्कारश्च निवर्तते–क वृ

(भा) अदित्यै रास्नासीति रज्ज्ववयवाभिधानात् मन्त्रावृत्ति ॥ ७ ॥

(सू) **अयुपिता योनिरिति [1]प्रतिदधाति ॥ ८ ॥ २१ ॥ ४३ ॥**
**आदित्यै रास्नासीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्य अलुभिता योनिरित्युत्तमे निधने प्रस्तरमत्याधाय इन्द्राण्यै संनहनमिति संनह्यति ॥ ९ ॥ २२ ॥ ४३ ॥**

[प्रस्तरनिधानक्रम.]

(भा) सुसभृतेति च अलुभितेत्यन्त्यस्य [2] निधनस्योपरिष्टात्प्रस्तर निदधाति ॥ ९ ॥

(सू) **पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति ॥ २१**
**स ते मा स्थादिति पुरस्तात्प्रत्यञ्चं [3]ग्रन्थिमुपगूहति [4] पश्चात्प्राञ्चं वा ॥ १० ॥ २३ ॥ ४५ ॥**

(भा) प्रत्यञ्च—प्रत्यक् क्रियापरिसमाप्ति ॥ १० ॥

(सू) **आपस्त्वामाश्विनौ त्वामृषयस्सप्त मामृजुः । बर्हिस्सूर्यस्य रश्मिभिरुषसां केतुमारभे इति बर्हिरारभते इन्द्रस्य त्वा बाहुभ्यामुद्यच्छे इति बर्हिरुद्यच्छते । बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधि निधत्ते ॥ ११ ॥ २४ ॥ ४६ ॥**

इति चतुर्थी खण्डिका ॥

---

(वृ) **आदित्यैरा**—**वृत्तिः**—प्रतिनिधानव्यवायाच्च ॥
**सुसंभृतेतिच**—आवृत्तिः प्रतिनिधानम् ॥
**प्रत्यञ्चं**—ग्रन्थिम् ॥

---

[1] निदधाति—**क** प्रतिदधाति—सन्दधाति (रु) [2] त्यन्तस्य—(मु रा)
[3] प्रत्यञ्चमुपगूहति—**ग** [4] शुल्बादध पुरस्ताद्भागेन प्रत्यग्गमयति ग्रन्थिम् प्राग्वा पश्चाद्भागेन (रु).

(भा) आरभते—आलभते । [1] शिरस्येव निधानम् ॥ २२ ॥

(सू) प्रेयमगादुर्वन्तरिक्षमन्विहीति यौ गमनौ तौ [2] प्रत्यायनौ ॥ १ ॥ २५ ॥ ४७ ॥

(सू) अदित्यास्त्वोपस्थे सादयामीत्यन्तर्वेदि [3] परिधिदेशेऽनधस्सादयति ॥ २ ॥ २६ ॥ ४८ ॥

(भा) अन्तर्वेदि—वेदि[4]समीपे, यः परिधिदेशे[5] । मध्यमस्य पश्चिमे प्रदेशे निदधाति ॥ २ ॥

(सू) बर्हिरसि देवंगममित्यासन्नमभिमन्त्रयते ।

(सू) देवंगममसीत्यनधो निदधाति [6] यथा प्रागुपसादयेत् ॥ ३ ॥ २७ ॥ ४९ ॥

(भा) यथोपसादने क्रियमाणे उत्तरं बर्हिः प्राग्भवति ॥ ३ ॥

(सू) या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । तासां पर्व राध्यासं परिस्तरमाहरन् । अपां मेध्यं यज्ञियं सदेवं शिवमस्तु मे । आच्छेत्ता वो मारिषं जीवानि शरदश्शतम् । अपरिमितानां परिमिताः सनह्ये

[ग्रन्थकारव्याख्यातव्यम्]

(वृ) शिरस्येवनिधानम्- [7] न दर्भेण्वादिव्यवधानेन ॥

यथा प्रागुपसादयेदित्यस्यार्थः,—

यथोपसा—ग्भवति—[8] अनधो-[9] निधानदेशात् ॥

[1] शिरस्येव-ञ [2] प्रत्यगगमनेऽपिदात्र्वपिर्ता भवत न तु क्रमानुसाराद्दिताग्र एव (रु) [3] मध्यमपरिधिस्थानसमीपे (रु) [4] समीपेऽध -क. [5] देश [6] यथा प्राकुप-क. ग ग —उपसादनकाले प्राचीनमुपसादयितु येनाग्र यथाभवति । आहृत वा यजमानकरोतीति बौधायन । खातलूनाच्छन्नावहर्तापरिदुरवदग्धपु यजुष्क्रियासभवादिति कात्यायन (रु) [7] नदर्भादि. (मु-रा) [8] अग्रयोस्तानधो-क (मु-रा). [9] विधान

(सू) **सुकृतायकम् । एनो मानिगां कतमच्च नाहं पुनरुत्थाय बहुला भवान्त्विति परिस्तरणानामधिनिधान्याच्छेदनी संनहनीति [1]यथालिङ्गम्॥४॥ २८॥५०॥**

[परिस्तरणाधिनिधानेयथालिङ्गत्वोक्तिफलविचारः]

(भा) परिस्तरणानाम[2]धिनिधा[3]नाच्छेदनसनह[4]नानि [5]यथा लिङ्गेषु क्रियन्ते न मन्त्रान्त इत्युपदेशः । अथवा यथालिङ्गवचनमनुवादमात्रम् । मन्त्रान्त एव क्रियानुष्ठानम्। अन्तरेणापि लिङ्गवचनं यथालिङ्गं विनियोगो भवति । यथा अग्नये त्वाग्नीषोमाभ्यामित्याह व्यावृत्त्यै इत्यभिमर्शने वैकल्पिकं भवति ॥ ४ ॥

---

[यथालिङ्गवचनस्यागतार्थत्वफलम्]

(वृ) **परिस्तरणाना—उपदेशः इति** — अधिनिधान्याच्छेदनीति निधान[6]क्रमादेव मन्त्रव्यवस्थासिद्धौ परिभाषासिद्धमन्त्रान्तकर्मादिसान्निपातस्यापवादत्वेन यथालिङ्गवचनम् । अतस्तल्लिङ्गाभिधानसमये क्रियानुष्ठानमिति ॥

[तस्यैव निर्वाहान्तरम्]

**अथवा यथा—भवति—**सूत्रकारेणानुक्तेऽपि मन्त्रसामर्थ्येन विनियोगो भवति ॥

[अनुवादत्वाद्युपपत्तिः]

**यथा अग्नये—वैकल्पिकं भवतीति** - इदमग्नेरित्याग्नेयमित्याद्यभिमर्शनमन्त्रेण विकल्पते । अग्नये त्वाग्नीषोमाभ्यामितिमन्त्रस्य करणत्वात् । अग्नीषोमाभ्यामित्यत्रापि त्वेत्यनुषङ्गेणार्थावगमः । तद्वदत्राऽपि

---

[1] यथालिङ्गवचनं लिङ्गविनियोगं दर्शयितुम् विस्पष्टार्थं वा (रु) [2] मासिदादविनिधानाच्छेदनसनहनानीति–**क** [3] धानच्छे(रापा) [4] नानिलिङ्गेषु–**ञ** [5] यथालिङ्गमलिङ्गेषु–**पा** अथवा अन्तरेणापि लिङ्गवचनं विनियोगो भवति–**ञ,** [6] क्रमादेव–**क,**

(सू) **खादिर पालाशं[1] वा एकविंशतिदारुमिध्मं[2] करोति ॥ ५ ॥ २९ ॥ ५१ ॥**

[इध्मदार्वादिव्यवस्था]

(भा) अभिन्न दारुशकल दारूणि[3] वाहरान्निति व्यपदेशात् एकविंशति दारुरिध्म खादिर पालाशो वा[4]। अत पुनर्वचनात् वैभीतक [5]इध्मे परिधयोऽपि वैभीतका एव । अवभृथे च निवृत्ति । सर्वत्रैवम् ॥ ५ ॥

---

(वृ) सामर्थ्यतो विनियोगसिद्धे यथालिङ्गवचनमनुवाद । अतो मन्त्रान्तेन क्रियादिसन्निपात । लिङ्गविनियोगेऽपि कृत्स्नमन्त्रस्य करणत्वात् ॥

**अभिन्नंदारु – व्यपदेशादिति** – दारुशकलयो पृथग्व्यपदेशात् ॥

[पुनर्वृक्षविधानफलम्]

**अतःपुन—तका एवेति**—परिधीना पालाशकार्ष्मर्य खादिरति वृक्षनियमे सत्यपि पालाश खादिर वा एकविंशतिदारुमिध्ममिति परिधिसहितस्येध्मस्य पुनर्वृक्षाविधानादिध्मवृक्ष. परिधीनामपि भवति । अतो वैभीतक इध्मे ब्राह्मणस्पत्य तूपरमित्यादिषु परिधयोऽपि वैभीतका. ॥

[निवृत्तिहेतु.]

**अवभृथेच निवृत्तिः**– इध्मेन सहैकविंशतिसख्यानिर्देशात् अवभृथे परिधिसभवेऽपि इध्माभावान्निवृत्ति ॥

**सर्वत्रैवम्**—इध्माभावे गृहमेधीयादिष्वपि ॥

---

[1] चैक–क. [2] दार्वभिन्न काष्ठम् मन्त्रकलान दारूणिवेति दर्शनात् (रु) [3] दारूणवेति–क. [4] वा पुनर्वचनात–क. वात पुन–अ. [5] इध्म·प–अ.

(सू.) त्रयः [1]परिधयः * पालाशकार्ष्मर्य खदिरोदुम्बराबिल्वरो[2]हीतकविकङ्कतानां ये वा यज्ञिया वृक्षाः ॥

[परिधिकल्पा·]

कार्ष्मर्य — श्रीपर्णी। रोहीतको — वटाकृतिर्ह्रस्वपर्ण । विकङ्कत —गो[3]कर्ण । उक्तानामभावे यज्ञिया. ॥ ६ ॥

(सू.) आर्द्राः शुष्का वा [4]सत्वकाः ॥७॥ ३१ ॥ ५३ ॥

[परिधिस्वरूपम्]

आर्द्राश्शुष्का वेति मिश्रप्रतिषेध [5]। सह त्वग्भि. सत्वकाः ॥ ७ ॥

(सू.) [6]स्थविष्ठो मध्यमोऽणीयान् द्राघीयान् दक्षिणार्ध्योऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यः ॥ ८ ॥ ३२ ॥ ५४ ॥

[देशादिव्यवस्था]

स्थविष्ठ —स्थूलतम [7] मध्यम परिधि । मध्यमाद्दक्षिणस्तनु [8]। अणीयान् द्राघीयान् दीर्घतम मध्यमादेव । दक्षिणार्धे भव दाक्षिणार्ध्य· । अणिष्ठ [9]—पूर्वाभ्या तनु· । ह्रसिष्ठो—ह्रस्वतम.[10] । उत्तरार्धे भव —उत्तरार्ध्य. ॥ ८ ॥

---

[अनिध्मवृक्षोपदेशफलम्]

**कार्ष्मर्यः श्री—कर्णः**—अनिध्मवृक्षस्यापि कार्ष्मर्यादे परिधिषूपदेशात् पालाशादिभिर्विकल्प ॥

[विकल्पव्यवस्था]

**आर्द्राश्शुष्का वेति मिश्रप्रतिषेधः**—त्रयोऽप्यार्द्राश्शुष्का वा। नैकश्शुष्क इतरावार्द्रौ इतर अर्द्रोऽन्यौ शुष्कौ वा ॥

[परिधिप्रमाणव्यवस्था]

**स्थविष्ठः—स्थूल—भवः उत्तरार्ध्यः**—बाहुमात्राः परिधय-

---

[1] परिधानार्थो। तत्र पालाशखादिरयो पुनरुपादान तौपरिध्यर्थेऽपि यथास्याता नेतरैर्बाध्येयातामिति (रु) [2] रोहित—क [3] घण्ठ —ख गोघण्ट —क [4] नचेद्दलितत्वच । अथवा अनिन्धनार्थत्वात्परिधीनामार्द्रानुज्ञानार्थमुभयवचनम्—रु [5] षेधार्थ —ञ [6] प्रादेशमात्राणीध्मकाष्ठाणि बाहुमात्रा परिधयइति तन्त्रान्तरकारा —रु [7] तम मध्यमाद्—ञ [8] स्त्वणु —क णष्ठस्सर्वेभ्यस्तनु —ञ [10] तमस्सैव भ्य —ञ

**(सू) द्वे आघारसामिधावनूयाजसमिदे[1] कवि<[2] शीति ॥ ९ ॥ २२ ॥ ५५ ॥**

[इध्ममन्त्रादिव्यवस्था]

(भा) प्रथमस्येध्ममन्त्रस्यानूहः । न च निवृत्ति काष्ठविवृद्धौ । आख्यान वादादेकावि<शतिधाऽवस्थितत्वादग्नेस्सभरामीति न [3] काष्ठाभिधानम् आघारसमित् आघारार्थत्वात् तदभावे [4] निवर्तते । तथाऽनूयाजसमित् ।

---

(वृ) इशम्या च भरद्वाजमतात् । तत्पक्षे सर्वे समायामा । अस्माक उत्तर-परिधिराहवनीयायतनायाम [5] । इतरौ तस्मादेकाङ्गुलेन चतुरङ्गुले-नायतौ ॥

[काष्ठविवृद्धिहेतुः]

**नचनि —विवृद्धौ—** सप्तदशानुब्रयाद्वैश्यस्येत्यादिसामिधेनी-विवृद्धौ ॥

[काष्ठानाभिधाननाहेतुविवरणम]

काष्ठविवृद्धिपक्षेऽपि ,—

**आख्यानवादा—भिधानम्—**अग्निर्देवेभ्यो निलायत कृष्णो रूप कृत्वा इति दर्शनात । यत्कृष्णो रूप कृत्वा प्राविशस्त्व वन-स्पतीन् इति कथानुवादादेकविंशतिधाऽवस्थिस्याग्नेरभिधानान्न काष्ठ-सङ्ख्यानिर्देश. । अतो न विकारो न च निवृत्ति ॥

[निवृत्तिहेतुः]

**आघारसमित्—निवर्तते—**आघारार्थत्वादाघारसमिद्व्यपदेश. । तदभावे—आघाराभावे निवृत्तिस्समिधः ॥

**तथानूयाजसमिति—**अनूयाजाभावे निवर्तते ॥

---

[1] तस्या परिशेष्यान्सर्वान्तोविनियोगाच्चैकविंशत्ववाद (ङ). [2] विंशतिरि-ति—क [3] काष्ठानामभिधा—अ [4] निवृत्ति —क [5] नायामसमित —घ

(भा) गणनाया द्वे युगपत् क्षिप्येते । एकविंशी चानूयाजसमित् ॥ ९ ॥

(सू.) [1]समूलानामृतेऽमूलानां वा दर्भाणां पूर्ववच्छुल्बं कृत्वोदगग्रं वितत्य ॥ १० ॥ ३४ ॥ ५६ ॥

॥ इति पञ्चमी खण्डिका ॥

---

[सूत्रे द्विशब्दस्वारस्यम्]

(वृ) **गणनायां—क्षिप्येते** — द्वे आघारसमिधाविति द्विशब्द आघारसमित्सम्भरणे युगपत्सम्भरणार्थं । [2]अत उपसत्स्वपि आघारसमिधावुपादातव्ये । तथा च तत्राघारसमिधमाधाये[3]त्येतावता सिद्धे एकसमिदाधाने [4]एकामिति वचनं द्वयोः सभृतत्वादेकामनूयाजसमिधमवशिष्येति वचनवदिति । अन्यथा आघारसमिधमिति वचनस्याविवक्षितत्वात् द्विवचनस्याविवक्षितत्वात् द्वयोरप्यविरुद्धमाधानं भवतीति तन्निवृत्त्यर्थं भवति । तस्यास्सभृताया आहवनीये दारुमयाणीति स्वकाले प्रक्षेपः । इतरथोभयत्रापि सङ्ख्याग्रहणमनर्थकं स्यात् । उपदेश एकामनूयाजसमिधमव[5]शिष्येति[6]वत् ॥

**एकविंशी चानूयाजसमित्**—क्षिप्यते ॥

---

[1] समूलामूलवचनं समूलप्राप्त्यर्थम् । अन्यथा समूलस्य पैतृकत्वादमूला एव गृह्येरन् । अत्र दारुपरिधिसमित्सङ्ख्यावाचिनां शब्दानां विकृतिषु यथायथमूहः । कामिनैमित्तिकानामित्यादि केचित्, तन्न, तूष्णीं मृन्मयं कसमिति न्यायप्रदर्शनात् (रु) [2]अत युगपदिध्मसाम–**मु रा** [3]त्येतावतैव–**मु. रा** [4]एका समिध मिति वचन -**घ** एकामाघारसमिधमाधायेत्येका–**मु रा.** समिधामितिवत्समिध मिति वचनस्यावि समिधमितिवत्समिधामेति–**मु रा** [5]शिष्येति–**ख ग** [6]वदिति–**क**

[नियमफलं शुल्बपदार्थश्च]

(भा) समूलामूलनियमो मिश्रप्रतिषे[1]धार्थः । एकसरश्शुल्ब इत्युपदेश । अनियमो [2] वा एकसराभिरिति काचिद्विधानात् । पूर्ववत् उदगग्र [3]वितत्य मन्त्रेण करणमुदगग्रस्येति[4] ॥ १० ॥

(सू.) यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् । ततस्त्वामेकविꣳशतिधा संभरामि सुसंभृता । त्रीन् परिधीꣳस्तिस्रस्समिधः [5]यज्ञायुरनुसंचरान् । उपवेषं मेक्षणं धृष्टिꣳ संभरामि सुसंभृतेति शुल्ब इध्मं संभरति ॥ ११ ॥ ३५ ॥ ५७ ॥

[नियमफलविवरणम्]

(वृ) समूलामूल---त्युपदेशः---क्वचिद्दर्शनात् । यानि शुल्बानि न समस्यन्ते इत्यसमस्ते शुल्बशब्ददर्शनात् ॥

[अनियमपक्षः]

अनियमोवैक---द्विधानादिति ---सम्राडासन्द्या [6]एकसराभिरिति नियमादन्यत्रानियम ॥

[अमन्त्रक समन्त्रक च शुल्बकरण मतभेदन]

पूर्ववत् उद---ग्रस्येति---मन्त्रेणादगग्रनिधान[7] करणम् । पूर्ववदुदगग्रं वितत्येति सूत्रान्वय. । अतस्तूष्णीं शुल्बकरणम् । केचिच्छुल्बकरणमपि मन्त्रेणेत्याहु । शुल्बकरणात्प्रागेव पूर्ववदिति प्रयोगात् । इतरथा शुल्ब कृत्वा पूर्ववद्वितत्येति भविष्यतीति ॥

[1] षेध –अ. [2] वाक्वचिद्विधानात् एकसराभि –अ [3] वितत्येति मन्त्रेण– अ [4] गग्रस्य–अ [5] परिधिसमिधामभिधायकोऽयं शब्दः –रु [6] डाभन्द्यामेक– ग घ [7] निधान न करणम्–घ.

[एतन्मन्त्रोहव्यवस्थादि]

(भा) काम्यनैमित्तिकानां नित्यविकारत्वात् यत्कृष्णो रूपमित्यस्य प्रकृतावप्यूह [1] इति न्याय । [2] अनूह आपस्तम्बस्य । बहुयाज्या [3] दीनामप्य प्रधान [4] विकारत्वात् । निवृत्तिस्तु प्रथमस्येध्ममन्त्रस्य [5]; व्रीहिमन्त्रस्य यवेष्विव । तूष्णीं कस मृन्मय चेति दर्शनात् काम्येष्वपि ॥

[ऊहस्तत्रासत्त्वे तत्र न्यायश्च]

(वृ) **काम्यनैमि — न्यायः** — एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य यां बहुयाज्यपरिमितमनुब्रूयादित्यादिगुणकाम्यनैमित्तिकाना नैमित्तिकतुल्यत्वादसमानविधान स्यादिति न्यायेन नित्यविकारत्वाद्यत्कृष्णो रूप्यामित्यत्र दर्शपूर्णमासयोरप्यूह [6] एकाविंशतिधेत्यस्येति न्यायसमवेताभिधानार्थः । सप्तदशानुब्रूयाद्वैश्यस्येत्यादौ गुणकाम्यनैमित्तिकरूपत्वाभावात्प्रकृतावूहनिषेधान्निवृत्तिरेव ॥

**अनूह आपस्तम्बस्य**—प्रकृतौ ॥

**बहुयाज्यादीनामपि**—काम्याना च ॥

**अप्रधानविकारत्वादिति** — गुणमात्रविकारत्वात् प्रधानाविकारादनूह । [7] प्रधानविकारादिति केचित्पठन्ति । अस्यार्थ —प्रधानविकारादूहो भवति न गुणमात्रविकारादिति ॥

**निवृत्तिस्तु—यवेष्विव**—काष्ठविवृद्धौ । काम्येष्वपि समवेताभिधानात् । **व्रीहिमन्त्रस्य**—तस्मिन् सीदेत्यस्य । **यवेष्विव**—गुणविधौ दृष्टान्त ॥

[दृष्टान्तसगमनम्]

**तूष्णीं—दर्शनात् काम्येष्वपि**—काम्यविधौ दृष्टान्त. । इडान्तपक्षे द्वयोर्मन्त्रयोर्निवृत्ति अनूयाजसमिधोऽभावात् ॥

---

[1] न प्रकृ-मु रा [2] अनूह उपदेश आप—ग [3] दीना कामाना च प्र—क ख. ग घ [4] विकारात्—क [5] ध्ममन्त्रस्य । तूष्णीं कस—ञ [6] रप्यनूह—मु रा [7] प्रधानविकारत्वादिति—मु रा

(भा) अनूहो वा प्रथमायास्सर्वत्राख्यानाभिधानात् अग्निर्देवेभ्यो निला·यत कृष्णो रूप कृत्वा स वनस्पतीन् प्राविशदिति [1]। त्रीन् परिधीन् इति [2] द्वितीया ऋक् यथार्थमूह्यते विकृतौ ॥

[अनूहपक्षाशयः।

(वृ) **अनूहोवा प्रथमायाः–भिधानादिति**—विकृतिष्वपि काष्ठ-ह्रासविवृद्धावनूह । तथाहि–**अग्निर्देवेभ्यो–प्राविशदिति**–इतिहासरूप-कथाप्राप्तस्य यत्कृष्णो रूपमित्यस्यानुवादात् । ततस्त्वामेकविंशतिधा संभरामि सुसभृता इत्यग्नेरेव प्रकृतिस्थैकविंशतिकाष्ठावस्थित[3]स्यानु-वादान्न सङ्ख्याविशिष्टकाष्ठाभिधानपरत्वमित्यनूहः ॥

[पुनरुक्तिनात्पर्यम्।

ननु पूर्वमेवायमर्थ उक्तः प्रथमस्येध्ममन्त्रस्यानूहो न च निवृत्ति काष्ठविवृद्धावाख्यानवादात्' इति? सत्यमुक्तम् . अयमर्थो भाष्यकार-स्याभिप्रेतः ;— काम्यनैमित्तिकाना नित्य[4] विकारत्वात्प्रकृतावूह [5] इति । न्यायपक्षेऽपि प्रकृतौ समवेताभिधायित्वाभावात्प्रथममन्त्रस्यानूह इति । तस्मात्प्रकृतौ समवेताभिधायिनामेव विकृतावूहो नासमवेताभिधायिनाम् । विकृतावूहपक्षस्तु समवेतसङ्ख्याविशिष्टकाष्ठद्वारेण[6] । एवमेवाग्नेरेकविंश-तिधासभरणोपपत्ति[7] नाग्नेः स्वरूपेणैकविंशतिधात्वामिति दृष्टार्थसभवे नादृष्टार्थता न्याय्येति ॥

ऊहस्थलम् ।

त्रीनूपरिधी—विकृतौ—पितृयज्ञादौ ॥

---

[1] तस्याभिधानात–क. ग. [2] द्वितीयो यथार्थमूह्यते–क. ग [3] स्योपादाना–क स्यानुपादाना–मु ग. [4] विकारत्वान्नप्रकृतावूह –मु. ग. [5] तूष्णीं मृन्मयं कंस च इति न्यायप्रदर्शनादिम पक्षमयुक्त मन्यन्त–क. [6] णैवाग्नेः–क. ख ग पुस्तकयोस्तु लेखक्षोभ –घ पुस्तकतु .– द्वारेण एवाग्नेरिति दृश्यते उत्तरत्र नाग्नेरित्यादि च लिखितम् अत 'एवमेव' इत्येवपाठस्स्यादित्यूह्यते [7] पत्तेः

(भा) उपवेषादीनीध्माभिधानानि गौणानि प्रकृतार्थाभिधानात् । अर्थलक्षण इध्मो वर्षीयानर्थादितिलिङ्गात् । [1]त मण[2]यित्वा युगपत्सभरति सर्वम् ॥ १ ॥

(सू) कृष्णोऽस्याखरेष्ठो देवपुरश्चर सध्यासं त्वेति संनह्यति । पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा । अनधो निदधाति । इध्मप्रव्रश्चनानि निदधाति ॥ २ ॥ ३६ ॥ ५८ ॥

[उपवेषस्यानिध्मता]

(वृ) **उपवेषादीनि—र्थाभिधानादिति**—इध्मसभरणमन्त्रे उपवेष मेक्षण धृष्टिम् इत्युपवेषस्याभिधानत्रयनिर्देशादुपवेषादीनीति पदभेदाभिप्रायेण बहुवचनम् । ते शब्दा. गौण्या वृत्त्या इध्ममेव प्रतिपादयन्ति काष्ठसामान्येन। न तूपवेषस्ये[3]ध्मान्तर्भाव । प्रकृतार्थाभिधानादिति गौणत्वे हेतु , मन्त्रस्य प्रकृतेध्माभिधानपरत्वात्। अनुष्ठेयार्थप्रकाशका हि मन्त्रा ॥

[इध्मस्यार्थलक्षणताहेतु·]

**अर्थलक्षणइध्म–लिङ्गादिति**—पितृयज्ञे हविर्बहुत्वे वर्षीयस्त्वदर्शनात् सर्वत्रार्थलक्षण इध्म । आघारप्रभृतिप्रज्वालित इध्मस्तत्कर्मणि स्विष्टकृदन्त हविर्यावता स्थौल्येन युक्तश्शक्नोति दग्धुम् तावता स्थौल्येन युक्तो ग्रहीतव्य [4] । स च प्रादेशायाम । अनूयाजसमिध आघारसभेदात्प्रागाहवनीयदेशपरिमितत्वावगते ॥

**तंगणयित्वा – सर्वम्**—त–इध्मम् । सभरतीति ॥

[1] गणयित्वा–ञ [2] यित्वा शुल्बम् (मु रा) [3] ध्मन्तर्भाव –क

[4] ग्रहातव्यो भारद्वाजमतात् । द्विप्रादेश इध्मो बैलीकेरती बैलीकिमतेन दीर्घत्व लक्षणम् । पूर्वमर्थलक्षण इति स्थूलत्वे । अन्यस्य तु अर्थलक्षण इति । दीर्घत्वमप्यर्थलक्षणमन्येषा मतेन । इत्यधिकम् । (मु रा) इद तु उत्तरत्र वत्सज्ञुसूत्र भाष्यवृत्तिग्रन्थरूप दृश्यते इह त्वस्थानमुद्रित स्यात्

[इध्मग्रहणफलम्]

(भा) [1] पुनरिध्मग्रहणात् [2] इध्मव्रश्चनानि -- छेदनानि। तेषा निधान पदार्थगणनायामन्तर्भवतीति [3] ॥ २ ॥

(सू) त्वया वेदिं विविदुः पृथिवीं त्वया यज्ञो जायते विश्वदानिः। अच्छिद्रं यज्ञमन्वेषि विद्वान् त्वया होता संतनोत्वर्धमासानिति दर्भाणां वेदं करोति॥३॥

[वेदकरणनियम.]

(भा) यज्ञसतानस्यार्थवादत्वात् विकृतावपि मन्त्रेण वेदकरणम्। जात्येकत्वाद्दर्शपूर्णमासस्थो वाऽर्धमाससतान उच्यते ॥ ३ ॥

(सू) वत्सज्ञुं पशुकामस्य [4] मूतकार्यमन्नाद्यकामस्य त्रिवृच्छिरसं ब्रह्मवर्चसकामस्य [5] ॥४॥३८॥६० ॥

[वेदाकृतिविकल्पा]

(भा) वत्सज्ञु —वत्सजानुतुल्य.। मूतकार्यः—मूतवत्क्रियते [6]।

[विकृतावपि मन्त्रेण वेदकरणम्]

(वृ) यज्ञसं—वेदकरम्—वेदकरणमन्त्रे त्वया होता सतनोत्वर्धमासानिति निर्देशस्य विकृतिष्वर्धमाससतानाभावेऽपि यज्ञमेव तत्सतनोत्योत्तरस्मादर्धमासादिति होतु सततस्तरणार्थवादप्राप्तस्याप्रकृतिस्थस्यानुवादात् विकृतावपि मन्त्रेण वेदकरणम्।

जात्येकत्वा— उच्यते —जात्येकत्वात्प्रकृतिविकृत्यो [7] र्वेकजातित्वा[8] त्प्रकृतिस्थानुवादोपपत्तेर्विकृतावपि ॥

[मूतपदार्थः]

मूतवत्क्रियते—यत्र धान्य निधीयते।

[1] इद नदृश्यते–अ पु [2] इध्मव्रश्चनप्रभवाश्शकला (रु). [3] तीति-यज्ञधान्यनीयते?–ग. [4] मूत—धान्यावपनार्थं तृणपुञ्जसंनिवेशविशेष. (रु). [5] नित्यास्वेवाकृतिष्वमीकामा आकृत्यन्तरानुपदेशात् (रु) [6] त्क्रियते यत्र धान्य निधीयते–क ग अ [7] र्वेदक–क वेदजात्येकत्वा–ख. ग [8] त्प्रकृतिनत्स्था–क.

(भा) त्रिवृदेकशिरा त्रिवृच्छिरा। त्रीणि शिरांसीति केचित्। कामाभावेऽप्येता [1]एवाकृतयः। [2]अकाम्यस्यान्यस्या[3]विधानात् भारद्वाजमताच्च। द्विप्रादेशो बैलिकेरिध्म[4] इति। अन्यस्य त्वर्थलक्षणः ॥ ४ ॥

(सू) शल्बात्प्रादेशे [5]रिवास्य वेदपरिवासनानि निदधाति ॥ ५ ॥ ३९ ॥ ६१ ॥

(भा) वेदपरिवासनानि— [6]सर्वाण्येव वेदाग्राणीति ॥ ५ ॥

(सू) अन्तर्वेदि शाखायाः पलाशान्यसर्वाणि प्रशात्य मूलतश्शाखां परिवास्यो[7]पवेषं करोत्युपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन्। इन्द्राय हविः कृण्वन्तः शिवश्शग्मो भवासि नः ॥ ६ ॥

---

[इध्मप्रमाणादौ मतभेदौ]

(वृ) द्विप्रादेशो बैकेरिध्म इति—बैलिकेर्मतेन दीर्घत्वलक्षणं पूर्वमर्थलक्षण इति स्थूलत्वे ॥

अन्यस्य त्वर्थलक्षण इति—दीर्घत्वमप्यर्थलक्षमन्येषां मतेन।

[वेदपरिवासन पदार्थः]

वदपरि–ग्राणीति—मूलानां कार्यान्तराभावादनादरः।

---

[1] आकृतय –क [2] आकामस्यान्यस्या–ग [3] स्याभिधानात्–ञ
[4] रिध्म अन्यस्त्वार्थ–ञ [5] परिवास्य—छित्वा (रु) [6] सर्वाणि वेदाग्राणि–ञ
[7] उपवेष —अङ्गारप्रेषणार्थं काष्ठमुपवेष इति समाख्यायते स। च सान्नाय्यार्थमुत्पन्नः प्रभुत्वात्पुरोडाशस्याप्युपकरोति यस्तु न सनयति तस्यान्यत उत्पाद्य। चोद्यमाने कर्मणि द्रव्यमुत्पादयेत् यथा पौर्णमास्यामुपवेष इति भरद्वाज। मन्त्रे तु इन्द्राय हवि कृण्वन्त इति परकृतिवादेनोपवेष स्तूयते। तस्मादविकार (रु).

उपवेषकरणविधिः

(भा) वेदिं[1] कृत्वा प्रशातनममावास्याया पलाशानामल्पान्यवशेषयति परिवासन कुर्वन् पर्णवल्क [2]पातयति। इन्द्राय हवि.कृण्वन्त इत्यनूह. आख्यानवादात् ॥ ६ ॥

**(सू) [3]तृतीयस्यै दिवो गायत्रिया सोम आभृतः सोमपीथाय संनयितुं वकलमन्तरमाददे इति परिवासनशकलमादाय अज्ञातं निदधाति ॥ ७ ॥**

**(सू) त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्र-**

---

[परिवासनोपवेषकरणे न क्रियाद्वयम्]

(वृ) **वेदिंकृत्वा–पातयति**—परिवास्योपवेष करोतीति न क्रियाद्वय पौर्वापर्येण। एकेन परिवासनयत्नेनोपवेषेण सहैव पर्णवल्कपातनम्। [4]शाखाया उपवेषात्पृथक्करण[5] परिवासनम्। न शकलार्थम्। अत. प्रमादादिना शकलानुत्पादे न[6] पुनः परिवासनम् अनुनिष्पादितत्वात्।

[मन्त्रविनियोग.]

उपवेषार्थो मन्त्र. उपवेषोऽसीति लिङ्गात्। अत· पौर्णमास्यामपि मन्त्रेण तदुपादानम् ॥

[आख्यानवादतानिरूपणम्]

**इन्द्राय—वादात्**—उपवेषाभिधानपरत्वाद्देवतासबन्धहविःकरणाभिधानपरत्वाभावादाख्यानवाद·। अतो महेन्द्रयाजिनोऽपि न महेन्द्रायेति।

---

[1] वेदंकृत्वा—अ [2] शातयति—ग. [3] लिङ्गादादाने मन्त्र तूष्णीं निधानम्। तेन शमीशकले निवर्तते (रु). [4] शाखायामुप—झ. [5] करणार्थं पारि—अ. [6] त्वाद- नेन—झ

(सू) **मसीति शाखायां शिथिलमवसजति मूले मूला-न्यग्रेऽग्राणि न ग्रन्थिं करोति ॥ ८ ॥ ४२ ॥ ६४ ॥**

[पवित्रकरणमन्त्रव्यवस्था]

(भा) पवित्र–प्रादेशमात्रम् मन्त्रलिङ्गात् । अवसजति [1] लिङ्गयति । त्रिवृत्पलाशे दर्भ [2] इति लिङ्गात् शमीशाखाया[3] लोप । अनिवृत्तिर्वा पवित्राभिधानात् ॥ ८ ॥

---

[पवित्रप्रमाणमानम्]

(वृ) **पवित्रं–लिङ्गात्**—त्रिवृत्पवित्र प्रादेशमात्रम् । त्रिवृत्पलाशे दर्भः इयान् प्रादेशसमित' इति मन्त्रलिङ्गात् । नवगुणित त्रिवृत्स्तोत्रं इति [4] निदर्शनात् । दर्भश्चैक' मन्त्रलिङ्गादेव । **मूले मूलानीति**–मूलोपलक्षि-

[कल्पान्तरम्]

ताभ्यस्तदर्भभागाः [5] । तथा—**अग्रेग्राणीति**–अथवा त्रिगुणमेव त्रिवृत् [6] त्रिगुणायां पशुरशनाया त्रिवृता यूप परिवीयेति त्रिवृच्छब्दप्रयोगात् । दर्भ इत्येकवचन [7] सजात्यभिप्रायम् ।

[मन्त्रप्रवृत्तिनिवृत्तिनियामकम्]

**त्रिवृत्पलाशे–लोपः**—[8] मन्त्रस्य । [9] पवित्रपलाशयोरभिधानपक्षे शमीशाखायां निवृत्तिः । कथ [10] पवित्रे विशेषणभूताप्रधानपलाशाभि-धानानभिधानाभ्या प्रवृत्तिनिवृत्ती मन्त्रस्य ? उच्यते; पयासि चरु दधानि चरु इतिवदुभयप्राधान्यात् । तथा च दृश्यते,—इमौ पर्णं च दर्भं च देवाना हव्यशोधनौ इति ॥

[शमीशाखायां मन्त्रानिवृत्तिपक्षः]

**अनिवृत्तिर्वा पवित्राभिधानादिति**—पलाशे दर्भ इति पला-

---

[1] लङ्गयति । (रामा-पा) लिङ्गयतीति–क [2] इति वैलिङ्गात्–**ग झ** ? [3] या वा लोप –**ग** लोपश्च–**क** [4] इति लिङ्गाद्दर्शनात्–**झ.** [5] भागात्–**झ** [6] त्रि-गुणाया पशुरशनायात्रिवृता–**क** [7] स्वजात्य–**झ** [8] ऋच –**ख ग ञ** [9] इति पवित्र–**झ** [10] पवित्रविशेषणी–**झ**

(सू.) त्रिवृत्पलाशे [1]दर्भः इयान् प्रादेशसंमितः। यज्ञे पवित्रं पोतृतमम् पयो हव्यं करोतु मे। इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः। आप्याययन्तौ संचरतां पवित्रे हव्यशोधने। इति क्रियमाणे यजमानोऽनुमन्त्रयते ॥ ९ ॥ ४३ ॥ ६५ ॥

[अनुमन्त्रणविषय]

(भा) क्रियमाणे—शाखायामवसज्यमाने त्रिवृत्पलाश इति त्रिवृत इमौ प्राणापानाविति सशाखस्यानुमन्त्रणम् ॥ ९ ॥

(सू.) [2]समू[3]हन्त्यग्न्यगारं उपलिम्पन्त्यायतनानि। अलङ्कुर्वाते[4] यजमानः पत्नी च ॥ १० ॥ ४४ ॥ ६६ ॥

[समूहनादिकर्तार.]

(भा) समूहन्तीति [5]बहुवचने चोदिते यजमान पत्नी च प्रवृत्ते[6] कर्मादौ। [7]बहव ऋत्विज कुर्वन्ति [8]अलङ्करणमायतनाना यजमान पत्नीच ॥ १० ॥

---

(वृ) शम्याधिकरणत्वेन निर्देशात पवित्रपरत्वान्मन्त्रस्यानिवृत्ति। शमी शाखायामप्युभयोरुपयोगतुल्यत्वेपि अत्र पवित्रस्यैव सम्स्कार इत्यर्थ ॥

[अनुमन्त्रण विशय.]

**क्रियमाणे—ज्यमाने**—[9]त्रिवृत्पलाश इति [10]त्रिवृतमनुमन्त्रयते। पवित्राभिधानपक्षे—**इमौप्रा—स्यानुमन्त्रणम्**—सर्वदा।

[बहुवचनविषयप्रदर्शनादि]

**समूहन्तीति—र्मादौ**—अध्वर्योस्सहायभूतौ। ऋत्विजामभावात्।

---

[1] यज्ञ –क [2] समूहन्ति समृजन्ति (रु) [3] बहुवचनमध्वर्य्वादीनामन्यतमप्राप्त्यर्थम् (रु) [4] कर्त्रभिप्रायार्थादात्मनेप.ात् न कर्त्रन्यसंस्कार इत्याह परम्परयाकर्त्रभिप्रायता निरस्यति च (रु) [5] बहुवचनचो–ञ [6] प्रवृत्तौ–ग प्रवृत्तौक्रमात्–झ [7] ऋत्विजोवाबहव –ञ [8] विहितविधानायोगादमयल्ङ्करपरत्वमयुक्तमिति (रु) [9] पलाशलिङ्गत्वान्मन्त्रदशम्याया निवर्तते (र) [10] शाखा पवित्रंचानु मन्त्रयेत (रु) त्रिवृत इति पाठे अनुमन्त्रणमित्यनुषज्यते. त्रिवृतमप्यनुमन्त्र–झ.

(सू) नवे सांनाय्यकुम्भ्यौ [1]यावच्छर्करगोमयेनानुलिप्ते भवतः ॥ ११ ॥ ४५ ॥ ६७ ॥

इति षष्ठी खण्डिका ॥ द्वितीय पटल ॥

[नवत्वादिव्यवस्था]

(भा) नवत्व कुम्भ्यो [2]प्रथमप्रयोगे । गोमयालेपन तु सर्वत्र । [3]यावच्छर्कर —यावच्छर्करया बुध्नमालिप्त कुलालेन ॥ ११ ॥

इति धूर्तस्वामिभाष्ये प्रथमप्रश्ने द्वितीय पटल ॥

(वृ) चत्वार ऋत्विज इति परेद्युर्विधानात् । अमावास्यायां च आग्नीध्र [4]एव तु पक्षे [5]पूर्वं सभवति । ऋत्विजो वा बहव कुर्वन्तीति । यद्यपि श्वोविधानवरणमविशेषेण[6] [7]अवृता. कर्म कुर्वन्तीति दर्शनात् । अस्मिन् पक्षे ब्रह्मा आग्नीध्रश्च। ऋग्वेदेन होता करोतीति नियमादितरयोरनियमाच्च॥

[अलङ्कार्यम्]

अलङ्करणमायतनानाम् । यजमान. पत्नी च कुरुत नात्मनोः, कुर्वाते इत्यात्मनेपददर्शनात् । केचिद्दम्पत्योरेवात्मनोरलङ्करणमिच्छन्ति, तन्न, आदधीयातामिति दर्शनात्, अग्निसमवेतत्वेऽप्याधानस्य ॥

[नवत्वादौ विशेषः]

**नवत्वं कुम्भ्योः प्रथमप्रयोगे इति**—आधानप्रभृति पात्राणां प्रथमप्रयोगदर्शनार्थत्वात् । तथाचाग्निहोत्रस्थाल्यादीनामग्निहोत्रारम्भप्रयुक्ताना भेदनादौ प्रायश्चित्तदर्शनात्[8] ॥

[सार्वत्रिकताहेतुः]

**गोमया—र्वत्र—**तेषा प्रतितन्त्र सस्कार इति ।

इति श्रीकौशिकरामाग्निचित्कृताया धूर्तस्वामिभाष्यवृत्तौ प्रथमप्रश्ने द्वितीय पटल ॥

---

[1] यावच्छर्कर यावानंश उपरिष्टात् शर्कराभिरञ्जित कुलालेन (रु) [2] रुद्रदत्तास्त्विदमनूद्य विरराम [3] यावच्छक्य यावत्कुम्भ्याबुध्नमा—ञ [4] एवेति तु—मु. रा. [5] पूर्वं पक्षे—ग पूर्वे पक्षे मुरा पूर्णेव पक्षे?—क [6] मपि विशेषण—झ [7] आवृता कर्म—झ. [8] दर्शनम्—झ.

(सू) अमावास्यायां यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञं कुर्वते[1]ऽप[2]राह्णे ॥ १ ॥ १ ॥ ६८ ॥

[पिण्डपितृयज्ञकालौ]

(भा) यदहश्चन्द्रमस न पश्यन्तीति वचनात्[3] दृष्टचन्द्राया प्रतिपद्यपराह्णे । तस्मान्मासि पितृभ्य· क्रियते इति लिङ्गात् ॥ १ ॥

---

[पिण्डपितृयज्ञकाले विशेष·]

(वृ) यदहश्चन्द्र— ह्यपराह्णे इति—चतुर्दशीमिश्रणेन पूर्वेद्यु· । पुरस्ताच्चन्द्रदर्शने सति उत्तरेद्यु· पूर्वाह्णे पर्वसन्धौ तदपराह्ण एव प्रयोग । यदहश्चन्द्रमस न पश्यन्तीतिवचनात् पर्वसन्धावव[1] अत्यन्तचन्द्रादश[5]नात् । तद्युक्ताहोरात्रापराह्ण एव ॥

तस्मान्मासि—लिङ्गादिति—[6]तल्लिङ्गानुरोधेन सूत्र वर्णनीयमित्यर्थ । मासे पूर्णे पितृभ्य [7] क्रियते इति ब्राह्मणस्यार्थ । परिपूर्णो मासोऽमावास्यान्तिमक्षणे । तस्मात्तद्योगिनोऽहोरात्रस्यापराह्ण एव पिण्डपितृयज्ञः । अतश्चतुदशीमिश्रणेऽपि क्षये तदहोरात्रे पर्वसन्धौ तस्यापराह्ण क्रियते पिण्डपितृयज्ञ· । चतुर्दश्यभावेऽपि वृद्धौ श्वस्सन्धौ तस्यापराह्ण एव ॥

[पिण्डपितृयज्ञस्य एतन्मध्ये कथनहेतुः]

स्वतन्त्रस्यापि पिण्डपितृयज्ञस्य दर्शपूर्णमासप्रयोगमध्ये कथनमौपवसथ्येऽहनि सन्धौ बद्धक्रमेषु दर्शपूर्णमासपदार्थेषु स्थाननियमार्थम् । अत· प्रमादादिना कुम्भ्यालेपनान्ते[8] कर्मण्यकृते अन्तरितप्रायश्चित्त भवति ॥

---

[1] अपराह्णे इत्येतदुत्तरसूत्रादि· रुद्रदत्तमते [2] अपराह्णः— नवधा कृतस्याह्न सप्तमो भाग· (रु). [3] वचनादृष्ट—मु रा [4] वेवाद्यन्तचन्द्रदर्शनाद्युक्ता—ह्म [5] चन्द्रदर्शना—मु रा· [6] एतल्लि—ह्म· [7] पितृभ्यः पूर्वेद्यु —मु रा· [8] न्ते कर्मण्यकृतेपरस्मिंश्च कर्मणिकृतेऽन्तरित ?—ह्म·

(सू) **अधिवृक्षसूर्ये वा पिण्डपितृयज्ञेन चरन्ति* ॥२॥**

[पिण्डपितृयज्ञशब्दार्थः क्रमादिच]

(भा) अधिवृक्षसूर्य[1] इति वृक्षाणामुपर्येवोष्मा[2] न पृथिव्याम् ।

पिण्डैस्साध्य पितृयज्ञ. पिण्डपितृयज्ञ । पिण्डपितृयज्ञेन यक्ष्ये इत्युक्त्वा विद्युदसि[3]। [4]आरम्भात्प्रभृति प्राचीनावीती अन्यत्र वचनात् ॥

(सू) **अपां मेध्यं यज्ञियमिति समूलं सकृदाच्छिन्नं बर्हिराहरति* सकृदाच्छिन्नानि [5]तृणान्युपमूलदिनानि ॥ ३ ॥ ३ ॥ ७० ॥**

---

[निर्वचनभाव. फले मतभेदश्च]

(वृ) **अधिवृक्षसू—पितृयज्ञ इति**—तिस्र आहुतीर्जुहोति त्रिर्निदधाति षट्थ् सपद्यन्ते इति पिण्डप्रदानस्यापि होमतुल्यत्वनिर्देशेन तस्यापि प्रधानत्वात् पिण्डैस्साध्य इति निर्वचनम् । स्वर्गार्थं पिण्डपितृयज्ञ इति [6]मीमांसका ॥

सूत्रकारमतिस्तु,—पितृभ्य एव तद्यज्ञ निष्क्रीय यजमान' प्रतनुते इत्यमावास्यानिष्क्रयणार्थत्वान्नित्य इति । अत एव पिण्डपितृयज्ञेन यक्ष्ये इत्युक्त्वा विद्युदसीति भाष्यकारेणोक्तम् । न फलनिर्देश' कृत । [7]मीमासकपक्षे तु पिण्डपितृयज्ञानारम्भे न दोष । आरब्धस्य विच्छद एव प्रायश्चित्तम् ॥

[प्राचानावीतप्रवृत्तिचिह्नम्]

**आरम्भात्प्र— वचनात् इति**—[8]अध्वर्युरुपवीती इति वचनाभावे प्राचीनावीती ॥

---

[1] सूर्येयत्र वृ—ञ [2] येवैष—ञ. [3] न च विद्युदसीत्यपामुपस्पर्शन दर्विहोमत्वात् । (रु) [4] आरम्भप्रभृति—क [5] दर्भादन्यान्यपि याज्ञियानि तृणानि इत्येके इति रुद्रदत्त [6] 'फलवच्चेद कल्प्येत स्वर्गेण' (शाब-भा.) (जै सू. ४-४-१९) [7] (६-२-१३-१५ जै सू.) [8] उपवीतवचनादन्यत्र—घ

[विद्युदस्यादिव्यवस्था]

(भा) अपां मेध्यं यज्ञियमित्याच्छेदनलिङ्गात् । न विद्युदसि दर्वि-[1]होमेष्वित्युपदेश । नाहवनीयप्रणयनमर्थाभावात् । चरन्तीति बहुवचन पत्न्या सह ॥ ३ ॥

(सू) दक्षिणाप्रागग्रैर्दर्भैर्द[2]क्षिणाग्निं परिस्तीर्य दक्षिणतः पश्चाद्वा दर्भान् संस्तीर्य [3]दक्षिणा[4]प्राञ्चयेकैकशः पिण्डपितृयज्ञपात्राणि प्रयुनक्ति स्फ्यं मेक्षणं कृष्णाजिनमुलूखलं मुसलं शूर्पमाज्यस्थालीं चरुस्थालीं येन चान्येनार्थी भवति ॥४॥४॥७१॥

---

[मन्त्रनियमः]

(वृ) अपां मेध्यं—लिङ्गादिति—[5]सकृदाच्छिन्नं बर्हिराहरतीत्युक्तेऽपि आच्छेत्ता वो मारिषामिति लिङ्गादाच्छेदने मन्त्र नाहरणे ॥

[विद्युदस्यभावहेतुः]

न विद्यु—देशः—यक्ष्यमाणो वेष्टा वेति वचनात् ।

[निषेधस्य कालिकता]

नाहवनीयप्र—भावात्—[6]यदि प्रतिपद्यपराह्णे क्रियते ।

[सहत्वपुनर्वचनफलम्]

चरन्तीति—सह—[7]सहाधिकारार्थम् । सामान्यतस्सहाधिकारे सिद्धे पुनर्वचनमनालम्भुकायामपरुध्य करण न भवतीति ॥

[1] होम इत्यु—अ. [2] दक्षिणमग्निं—क [3] दक्षिणाप्राञ्चीति कोणदिगपवाद (रु) [4] प्राच्यैकैक—क. [5] आहरतिनान्वयेऽप्याच्छेत्तावो—ङ [6] यदाप्रति—ङ
[7] सहेतिसामान्यत – ख. ग घ.

[उपचारेदिक् अन्यच्च]

(भा) दक्षिणाप्रागग्रा —कोणाग्रा । उपचारोऽपि दक्षिणापवर्ग [1] । अर्थी भवति—उपस्तरणाभिघारणार्थी [2] दर्वी मृन्मय च निर्वपणार्थम् [3] ॥ ४ ॥

(सू) दक्षिणतः प्रागीषं व्रीहिमच्छकटमवस्थितं भवति * अध्वर्युरुपवीती स्थालीमेकपवित्रेणान्तर्धाय तया दक्षिणतश्शकटादधिनिर्वपत्युत्तरतो वा । [4]तां पूरयित्वा निमार्ष्टि * मृन्मये निर्वपति पितृभ्यो वो जुष्टं निर्वपामीति तूष्णीं वा * अपरेणान्वाहार्यपचनं प्रत्यगुदग्ग्रीवे कृष्णाजिने उलूखले प्रतिष्ठिते दक्षिणाप्राची तिष्ठन्ती पत्न्यवहन्ति परा[5]पावम[6]विवेकम् ॥ ५ ॥ ५ ॥ ७२ ॥

[मन्त्रवन्निरुप्तव्रीह्यवहननदिक्]

(भा) दक्षिणाप्राचीति [7]कोणदेशवाद पत्न्याश्च ।

---

[प्रमाणं अपिशब्दार्थश्च]

(वृ) दक्षिणाग्रा—र्गः इति—दक्षिणापवर्गाणि पित्र्याणीति वचनात् । [8]अपिशब्दात्प्रसव्य च परिस्तरणादि ॥

[चशब्दार्थः अन्यापेक्षाच]

अर्थीभवती—र्वपणार्थम्—चकारान्मेक्षण [9]स्थतण्डुलनिधाना[10]र्थम् । कशिप्व[11]ञ्जनाभ्यञ्जनादिपात्राण्यप्यासाद्यन्ते ॥

[दिङ्नियम उभयोरपि]

दक्षिणाग्रा—वादः पत्न्याश्चेति—दक्षिणाप्राची तिष्ठन्ती

---

[1] ग इति—ग [2] र्थी दर्वी—अ [3] निर्वापार्थम्—अ [4] प्राचीनावीतीता-क [5] परावपनम्—शूर्पेणतुषप्रोहणम् (रु) [6] विवेक —सतुषवितुषाणा पृथक्करणम् (रु) [7] दिक्कोणदे—अ [8] अपसव्यात्प्रसव्य च—झ [9] न्मेक्षणतण्डुल—क [10] र्थपात्रकशिप्वा— (मुरा) र्थकशिवा—क [11] ञ्यञ्जनपा—झ

[पिण्डपितृयज्ञोऽनाहिताग्नेरपि]

(भा) अनाहिताग्नेरप्यध्वर्यु[1]ग्रहणात् । परापाव—परापूय परापूय । अविवेक—अविविच्याविविच्य ॥ ५ ॥

(सू) [2]सकृत्फलीकरोति दक्षिणाग्नौ [3]जीवतण्डुलꣳ श्रपयति । अपहता असुरा रक्षाꣳसि पिशाचा वेदिषद इत्यन्तरा गार्हपत्यान्वाहार्यपचनौ दक्षिण-पूर्वेण वाऽन्वाहार्यपचनं दक्षिणाप्राची[4]मेकस्फ्यां पराचीं वेदि[5]मुद्धृत्य शुन्धन्तां पितर इत्यद्भिर-[6]वोक्ष्य आयन्तु पितरो मनोजवसः इत्यभिमन्त्र्य सकृदाच्छिन्नं बर्हिरूर्णामृदु स्योनं पितृभ्यस्त्वा भराम्यहम् । अस्मिन् सीदन्तु मे पितरस्सोम्याः पितामहाः प्रपितामहाश्चानुगैस्सह इति सकृदा-च्छिन्नेन बर्हिषा वेदिꣳ स्तृणाति ॥ ६ ॥ ६ ॥७३॥

इति सप्तमी खण्डिका ॥

---

(वृ) पत्न्यवहन्तीति कोणदेशमुखता पत्न्या अपि न क्रियामात्रस्य ॥

[अध्वर्युग्रहणभावोपपादनम्]

**अनाहिताग्ने—रिति**—यजमानोऽत ऊर्ध्वमित्युत्तरत्र नियमात् पूर्वत्राध्वर्युकर्तृत्वस्य प्राप्तत्वादनाहिताग्न्यर्थमध्वर्युग्रहणम् । यजमानशब्दस्याहिताग्नौ प्रसिद्धत्वादनाहिताग्ने पिण्डपितृयज्ञे स्वयं कर्तृत्वप्राप्तावध्वर्युविधिः ॥

[1] र्युरध्वर्यु—ग [2] फलीकरणम्—कणापाकरणार्थस्तण्डुलावघातः (रु) [3] तण्डुलमिव—क जीवतण्डुलम्—यथा तण्डुला ईषज्जीवान्ति (रु) [4] एकस्फ्या—एकस्फ्यकृतालेखा (रु) [5] मुद्धृत्य—क [6] अवाचीनेनकरेणोक्षणमवोक्षणम् (रु).

[वेदिकशिप्वादिव्यवस्था]

(भा) [1]जीवत्पितुरपि वेदिरपिण्डार्थत्वात् । न [2]कशिप्वादीनामासादनम् पिण्डार्थत्वाविहिता· ? ॥ ६ ॥

(सू.) **उत्पूतेन नवनीतेनानुत्पूतेन वा सर्पिषा स्थालीपाकमभिघार्य एकस्फ्यायां मेक्षणमासाद्य स्थालीपाकमासादयति* दक्षिणतः [3]काशिपू[4]पबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसादयति ॥ ७ ॥ ७ ॥ ७४ ॥**

(भा) उदकार्थः कुम्भ —उदकुम्भः[5] ॥ ७ ॥

(सू.) **अध्वर्युरुपवीती दक्षिण जान्वाच्य[6] मेक्षण[7] उपस्तीर्य तेनावदायाभिघार्य सोमाय पितृपीताय स्वधा नम इति दक्षिणाग्नौ जुहोति ॥ ८॥८॥७५ ॥**

[अध्वर्यु ग्रहणफलम्]

(भा) अध्वर्युरध्वरस्य नेता कथ स्यादिति पुनरध्वर्युग्रहणम् ।

---

[वेदिफलम्]

(वृ) **जीवत्पितु—ण्डार्थत्वात्**—हविरासादनार्थत्वात् ।

[व्यवस्थाहेतुः]

**न कशिप्वादीनामासादनम्**—तेषां स्वातन्त्र्येण पदार्थतया न विधानम् । पिण्डभोक्तृपित्रर्थत्वात् । यथाभागमेवैनान् प्रीणातीति निर्देशात् । [8]जीवत्पितुस्तु पिण्डाभावात्काशिप्वादीनि न भवन्ति ॥

**अध्वर्युर—ग्रहणमिति**—अध्वर्युरुपवीती दक्षिण जान्वाच्येति

---

1 जीवपितुर—ञ 2 न कशिप्वादीनि विहितानि—ग 3 काशिपु—शयनम् (रु) 4 उपबर्हण—उपधानम् (रु) 5 न तु प्रणीतावत्—क ख ग घ
6 आच्य सङ्कोच्य—रु 7 णमुप—क 8 जीवपितुस्तु—ञ

[नमस्कारोपयोग.]

(भा) नमस्कार [1]प्रदानार्थ नमस्कारो हि पितॄणामिति लिङ्गात् ॥ ८ ॥

(सू) यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम् । अग्नये कव्यवाहनाय स्वधा नम इति तृतीयाम् । ये मेक्षणे तण्डुलास्तान् हुत्वा तूष्णीं मेक्षणमादधाति ॥ १ ॥ १ ॥ ७६ ॥

[उपस्तरणादौ विशेषः]

(भा) यमायाऽप्युपस्तरणाभिघारणे । [2]उभयशेषात कव्यवाहनस्य ।

---

(वृ) अध्वर्युग्रहण दर्शार्थाध्वर्युरेवात्रापि यथा स्यादिति । [3]देवभूतर्त्विक्पक्षेऽपि दर्शाद्धि प्रयोगेऽपि ॥

[नमःपदप्रकाशान्तरम्]

नमस्कारः -र्थ इति—अत स्वाहाकारो [4]निवर्तेन नमस्कारो हि पितॄणामिति लिङ्गात् ॥

[यमायोपस्तरणं तु]

यमायाप्यु —रणे—द्वितीयामिति निर्देशात् । यथा गोर्द्वितीयेनार्थ इत्युक्ते नाजो बध्यते गोरेव बध्यते तथाऽत्रापि ॥

[उपस्तरणादि कव्यिघ्न]

कव्यवाहनस्य न ते भवत शेषप्रतिपत्तित्वात् ॥

[तस्य भाष्यस्पष्टता]

उभयशेषात्कव्यवाहनस्येति—ये मेक्षणे तण्डुला इत्युभयशेष मेक्षणे निधाय कव्यवाहनहोम । उपस्तरणाभिघारणवर्जम् । शेषप्रतिपत्तित्वाच्छेषाभावे निवृत्तिरपि ॥

---

[1] प्रदर्शनार्थ—क अ. [2] उभयविशेषात्—ग [3] देवहृत—क. [4] जुहोति चोदनत्वात्, लिङ्गात् बोधायनमताच्च स्वाहान्तैर्मन्त्रैर्होमा इति रुद्रदत्त

[ मेक्षणे विशेषः ]

(भा) मेक्षणाधान वाग्यतेन [1] ।

(सू) न यमाय जुहोतीत्येके ॥ १० ॥ १० ॥ ७७ ॥

(सू) अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति । परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्वस्मात् । ये देवाः पितरो ये च मानुषा ये गर्भे मम्रुरुत ये परास्ताः । य उद्धता उत ये निखातास्ते सम्यश्च इह मादयन्ताम् । ये रूपाणि प्रतिमुञ्चमाना असुरास्सन्तः स्वधया चरन्ति परापुरो निपुरो ये भरन्त्यग्निष्टाल्लोकात्प्रणुदात्वस्मात् । ये ज्ञातीनां प्रतिरूपाः पितॄन् माययाऽसुराः प्रविष्टाः परापुरो निपुरो ये भरन्त्यग्ने तानस्मात्प्रणुदस्व लोकादिति दक्षिणाग्नेरेकोल्मुकं [2] धूपायद्धरति ॥ ११ ॥ ११ ॥ ७८ ॥

[पिण्डपितृयज्ञे जीवपितृककृत्यावधिः]

(भा) [3] एकोल्मुक—असंसृष्टमन्यै । एतदन्त जीवपितु ॥ ११ ॥

---

[ विशेषोपपादनम ]

(वृ) मेक्षणाधानं वाग्यतेनैवेति —मन्त्रानुपदेशादेव मन्त्रनिवृत्तौ तूष्णीं ग्रहण लौकिकवाङ्निवृत्त्यर्थम् ॥

[ एकशब्दफलम् ]

एकोल्मुकं असंसृष्टमन्यैः—एकवचनादेकत्वसिद्धावेकशब्दग्रहणात् । यावत्कर्मसमाप्ति धारणम् ‘ अवाड्ढव्यानि सुरभीणि कृत्वा ’ इति लिङ्गात् । पिण्डदानात्पूर्वं नाशे मन्त्रेण पुनर्हरण सर्वप्रायश्चित्त [4] चाहव-

---

[1] वाग्यतेनैव–ग ञ [2] धूपायत्–धूमायमानम् -रु [3] इद्–ग पुस्तके न दृश्यते [4] श्चित्तत्वम्–झ.

(सू.) दक्षिणपूर्व[1]मवान्तरदेशं सकृत् स्फ्येनोल्लिख्य उदीरतामवर इत्यद्भिरवोक्ष्य उल्लिखितान्ते निदधाति ॥ १२ ॥ १२ ॥ ७९ ॥

(सू.) यजमानोऽत ऊर्ध्वं [2]प्राचीनावीती कर्माणि करोति * । मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहा इत्येकस्फ्यायां त्रीनुदकाञ्जली[3]न्निनयति । प्रसव्यं वा त्रिः [4]परिषिञ्चति * त्रीनुद[5]पात्रान् वाजसनेयिनस्समामनन्ति * ॥ १३ ॥ १३ ॥ ८० ॥

उत्तरकर्मारम्भणिकं ॥

---

(सू.) सव्यं जान्वाच्यावाचीनपाणिः सकृदाच्छिन्ने बर्हिषि दक्षिणापवर्गान् पिण्डान् ददात्येतत्ते त[6]ताऽसौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् । *तूष्णींचतुर्थम् । [7]स कृताकृतः । [8]प्रपितामहप्रभृतीन्वा ॥ १ ॥ १४ ॥ ८१ ॥

जीवपितृकनिषेधः पक्षान्तरं च

(वृ) नीये । एतन्न जीवपितु । अथवोल्मुकधारणान्त एव होम । अस्मिन् पक्षे अवाड्ढव्यानीति होमसमवेनाभिधानम् । [9]अत्र न पुनर्हरणम् । अस्माकं तु 'ये ज्ञातीना+लोकात्' इति मन्त्रलिङ्गात् ज्ञातिभ्यः पिण्डान्

[1] अवान्तरदेश कोणादक–क [2] अ । एव य जनादेन पूर्व उपवीत्येव भवति (रु). [3] निनयति -क ग निनयान ध्यामाग्रानि (रु) [4] परित सिञ्चत्येकस्फ्याम् (रु) [5] अञ्जलिस्थाने पात्रमेव भवति, (रु) [6] मन्त्रेषु अदसा स्थाने पित्रादिनामानि संबुद्ध्या गृह्णन्ति (रु) [7] वक्तव्यः (रु) [8] तान्पिण्डलक्षणा । ते च मन्त्रक्रमप्रातिलोम्यन दक्षिणापवर्गा एव । पिण्डशापत्वादञ्जल्योऽपि तत्प्रभृतयः (रु) [9] अतो न पुन–ञ

[ अजीवपितृकस्यप्राचीनावीतं तद्वध्यादिच]

(भा) अत ऊर्ध्वं प्राचीनावीती यजमानः । प्राचीनावीत[1] वचन श्रौतप्रायश्चित्तार्थम् । जीवन्त पितर इति विग्रहात् जीवपितामहो जीवप्रपितामहोऽपि[2] होमान्तम् । [3]प्रपितामहप्रभृतीनपि दक्षिणापवर्गान् । अञ्जलयोऽपि प्रपितामहप्रभृति दक्षिणापवर्गा ।

---

(वृ) दास्यन् ज्ञातिरूपेण [4]पिण्डेष्वसुरप्रणोदनमर्थयते । [5]अग्निमित्यग्नेः पिण्डदानार्थत्वमेव ॥

[पुन॰ प्राचीनावीतविधिफलम्]

**अत ऊर्ध्वम्—श्चित्तार्थम्** इति —प्राचीनावीतिना प्रसव्यमिति परिभाषासिद्धेऽपि प्राचीनावीते पुनर्वचन तद्भ्रेषे यजुर्भ्रेषप्रायश्चित्तार्थम् । सा हि परिभाषा श्रौतस्मार्तसाधारणी तद्भ्रेषे सर्वप्रायश्चित्तमेव स्यादिति[6] पुनरुपदेश ॥

आहोमात्कृत्वा विरमेदित्येतद्धोमाङ्गभूतमेक्षणाधानान्त कर्तव्य नास्मात्प्रागित्येतद्दर्शयितु जीवपितेत्याद्याकृष्य व्याचष्ट ,—

[होमान्तत्वेहेतु॰]

**जीवन्तःपित—होमान्तम्** इति—मनुष्याः पितरोऽनुप्रपिपते । त्रिर्निदधातीति यजमानपितृपितामहप्रपितामहाना पिण्डनिधा[7]नात्पिण्डत्रयनिधानात्मकस्यैकशास्त्रार्थत्वात्त्रयाणामन्यतमे जीवति पिण्डत्रयनिधानानुपपत्तेर्होमान्तमेव ॥

[विशेषविवरणम्]

**प्रपितामहप्र—पवर्गाः** — [8]अत्र पितामहादूर्ध्वं त्रयाणा पिण्ड-

---

[1] ग्रहणं—ग [2] पिहोमान्तमेव—क [3] प्रपितामहाद्यपि [4] पिण्डादित्स्वसुरप[?]—झ [5] अग्निरित्य—झ [6] स्यादितिइत्येतदन्नमेव दृश्यते-झ [7] नात्मकस्यैव—घ [8] तत्र—मु. रा

(भा) एतद्वां ततौ देवदत्तयज्ञदत्तौ ये च युवामनु । एवं पितामह-प्रपितामहावपि ॥ १ ॥

(सू.) नानामगृहीतं गच्छति । यदि [1]बन्धू न विद्यात्स्वधा पितृभ्यः पृथिविषद्भ्य इति प्रथमं पिण्डं दद्यात् । स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयम् । स्वधापितृभ्यो दिविषद्भ्य इति तृतीयम् । यदि [2]द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौद्वावुपलक्षयेत् ॥ २ ॥ १५ ॥ ८२ ॥

(सू.) यदि [3]जीवपिता दद्यादाहोमात्कृत्वा विरमेत् ॥ ३ ॥ १६ ॥ ८३ ॥

---

(वृ) दानम् । प्रभृतीनिति द्वितीया तत्सम्बन्धिपिण्डदानाभिप्रायेण । अथवा त्रिषु पिण्डेषु प्रपितामहप्रभृती[4]नन्वाचष्ट इति ॥

यदिद्विपितृत्वाद्व्यवस्थापनम्

एतद्वां -महावपीति- पिण्डदानमन्त्रप्रसङ्गेनापकृष्य [5]द्विपितुरुपलक्षणप्रकार उपदिश्यते ॥

(नामग्रहणनियमः)

नानामगृहीतं गच्छतीति—पित्रादिनामग्रहणरहितपिण्ड[6]दाने तत्पिण्डदानं पितॄन्न प्राप्नोतीति ॥

---

[1] बन्धु न विद्यात्-क ग. मु बन्धुनामशब्दौ पर्यायौ -अथवा बन्धु नामतो न जानीयादित्यर्थः -रु [2] पितृशब्देनात्र पितामहादीनामपि ग्रहणम् । तेषामन्यतमो यस्य द्वौ यस्य क्षेत्रजादेः स द्विपिता बीजक्षेत्रवचनात् न्यायसाम्याच्च । (रु) [3] पितास्यात्तर्-क. [4] नन्वा आचष्ट?-झ. [5] द्विपित्रुप-झ. [6] दाने कृतेतत्पि-झ कृतेतद्दा -घ

(सू) [1]यन्मे माता प्रममाद यच्चचारानुव्रतम्। तन्मे रेतः पिता वृङ्क्तामाभुरन्योपपद्यताम्। पितृभ्यस्स्वधा विभ्यस्स्वधा नमः। पितामहेभ्यस्स्वधा विभ्यस्स्वधा नमः प्रपितामहेभ्यस्स्वधा विभ्यस्स्वधा नमः इत्युपस्थायात्र पितरो यथाभागं मन्दध्वमित्युक्त्वा पराङावर्तते ॥ ४॥१७॥८४॥

[ऊहनिषेधतद्धेतू]

(भा) पिता वृङ्क्तामिति[2] अनूह सर्वपितॄणामभिधानात् ॥ ४ ॥

(सू) ओष्मणो [3]व्यावृत उपास्ते * ॥

अमीमदन्त पितरस्सोम्या इति व्यावृत ऊष्मण्यभिपर्यावर्ततेऽ[4]व्यावृ[5]त्ते वा ॥ ५ ॥ १८ ॥८५ ॥

(भा) गतार्थं ॥ ५ ॥

(सू) यस्स्थाल्यां शेषस्तमवजिघ्रति। ये समानाः समनसः पितरो यमराज्ये। तेषां लोकस्स्वधा नमो यज्ञो देवेषु कल्पताम्। वीरं धत्त पितर

---

[पितेति एकवचनोपपत्ति ]

(वृ) [6] **पिता वृङ्क्ता-मभिधानादिति**–पितृभ्यस्स्वधाविभ्य इति बहु-

---

[1] प्रथमस्योपस्थानमन्त्रस्यावृत्तिरूहश्च। पितामहप्रपितामहयोर्मासिश्राद्धे तथा दर्शनात् लिङ्गविरोधाच्च। न च पितृशब्देन त्रयाणामभिधानान्नोह इति वाच्यम्, एकवचनात् मातृशब्दसमभिव्याहाराच्च। तस्मादूह पितुरेवोपस्थाने प्रथमेन (रु)

[2] मित्यत्रोह १–ग [3] व्यावृत्–व्यावृत्ति–साच उद्गच्छत ऊष्मण न तु आन्तरस्यापि (रु) [4] अव्यावृत्तेवा इत्येतन्न दृश्यते–क [5] व्यावृत्त्यव्यावृत्योरन्यतोऽवगम। पराङ्मुखत्वादात्मन (रु) [6] अत्र–मु रा पुस्तके यदि विरमेदित्यन्तस्य, सूत्रस्य 'प्रसङ्गात्पूर्वं व्याख्यातम्' इति वृत्तिर्दृश्यते। नान्यत्रक्वापि पुस्तके.

(सू) इति*। [1] आमयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽलमन्नाद्याय सन्नाद्यथात्तेन वा [2]प्राश्यात् ॥ ६ ॥

। अलम्भावनिवरणम् ।

(भा) योऽलमन्नाद्यायेति नैमित्तिकम्। [3] यस्य नास्ति [4] भोजनशक्तिः। सत्य [5]न्ने भोजनकामो वा ॥ ६ ॥

(सू) पूर्ववदेकस्फ्यायां त्रीनुदकाञ्जलीनुपनिनीय अञ्जनाभ्यञ्जने वामश्च त्रिरनु[6]पिण्डं ददाति*। [7]आङ्क्ष्व ततामावङ्क्ष्व पितामहामावङ्क्ष्व प्रपितामहासावित्याञ्जनम्। [7]एवमभ्यञ्जनमभ्यङ्क्ष्वेति मन्त्रं संनमति ॥ ७ ॥

(भा) स्पष्टार्थ ॥ ७ ॥ २० ॥ ८७ ॥

(सू) [8]यदि [9]बन्धु न विद्यादाञ्जतां मम पितर आञ्जतां मम पितामहा आञ्जता मम प्रपितामहा

---

(वृ) वचनात्सर्वपितृणामुपस्थानपरत्वान्मन्त्रस्य सर्वपितृणा पिता वृङ्क्तामित्यभिधानम्। जात्यभिप्रा[10]येण चैकवचनम् ॥

। प्राशननियमे तात्पर्यम् ।

योऽलमन्ना-कामो वा इति—यदि भोक्तु न शक्नुयात्। [11]नैमित्तिकत्वाद[12]वश्य [13]शेष प्राश्यम्। द्वितीयालोपश्छान्दस. ॥

---

1 आमयाविनानुग्रमानन प्राश्योनावेत्र्य (रु) 2 प्राश्य क रुद्रदत्तीयपाठ स्त्वयमेव 3 यस्य नास्तिनैमित्तिक स्यर्थे 4 भोजनशक्तिश्च यश्चोभोजनत्वमेव 2—ख. 5 सत्यन्नेऽभोजन—क 6 त्रिरनुपिण्डमित्रिरित्यानित्यर्थं। अन्यथा त्रिग्रहणवैयर्थ्यात (रु) 7 मन्त्राक्रन्मन्त्र। पिण्डेषु त्रिपितृस्त्रहश्च पूर्ववत् (रु). 8 यदि नामानि (रु) 9 बन्धुन—क. 10 प्रायण्व—घ. 11 स नैमित्ति—प्राश्यात्—मु. रा. 12 वश्यमशेषं—ख. 13 शेष प्राश्य -क. दवश्यमशेष प्राश्य—ख.

(सू) इत्याञ्जनम् । एवमभ्यञ्जनमभ्यञ्जतामिति मन्त्र
संनमति ॥ ८ ॥ २२ ॥ ८८ ॥

[बन्धुपदार्थ.]

(भा) बन्धु न विद्यादिति नामानि [1]बान्धवानाम् ॥ ८ ॥

इति नवमीखण्डिका ॥

---

(सू) [2]एतानि वः पितरो वासांस्यतो नोऽन्यत्पितरो मा योष्टेति वाससो दशां छित्वा निदध्यात्यूर्णा[3]-स्तुका वा पूर्वे वयसि [4]उत्तर आयुषि स्वं लोम ॥ १ ॥ २३ ॥ ८९ ॥

(भा) एतानि व पितर [5]इति [6]सर्वत्र उहेनैवोपदेश ॥ १ ॥

---

[बन्धुपदार्थविवृति]

(वृ) बन्धु - न्धवानाम् —न [7]विद्यादिति शेष । बन्धन बन्धु [8]नाम्ना हि पितर पिण्डै सबध्यन्ते । नानामगृहीत गच्छतीति दर्शनात् । पित्रादीनां नामैव बन्धुशब्देनोच्यत इत्यर्थ । नात्र बन्धुशब्दो बान्धववाची विलिङ्गत्वात् ॥

एतानिवः- र्वत्रेति—बहुवचनान्तस्यैव पाठात् प्रतिपिण्ड वासोनिधानस्य कर्तव्यत्वात् अनूह । ऊहे आर्षपाठस्य क्वचिदप्यनुपयोगात् ॥

---

[1] यथा ।लङ्ग ग समन्त्रोभवति (रु). [2] अनूह्योमन्त्र पितर इति सर्वत्र पित्रभिधानात् । आवर्त्यस्त्वा-भुत्वात्कर्मण । बोधायनस्तूहमाह (रु). [3] ऊर्णास्तुका—अ ।लोम्ना कलाप (रु) [4] उत्तरमायु —पञ्चाशतऊर्ध्वं (रु)— उत्तरमायु -षट्षष्टेश्चवर्षेभ्योऽष्ट+योमासे+यश्चऊर्ध्वं (बो) [5] इति सन इति—**ग.** [6] सर्वत्रैवो—**क** ऊहेनो ।दश —**झ** ऊह उपदेश —**अ** [7] विद्यादिति ।—**झ.** [8] नामतापितर ?—**झ**

[विषयव्यवस्था]

(सू) वीतोष्मसु पिण्डेषु नमो वः पितरो रसायेति नमस्कारान् [1]जपति[1]। [4]गृहान्नः पितरो दत्त सदो व पितरो [2]देष्मेति पितृनुपतिष्ठत ॥ २ ॥ २४ ॥ ९० ॥

(भा) स्पष्टम् ॥ २ ॥

(सू) ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधास्थ तर्पयत मे पितॄन् इत्युदकं निनयति ॥३॥

[निनयनकर्म

(भा) उदकुम्भस्थस्य निनयनम् ॥ ३ ॥

(सू) मनोऽन्वाहुवामह इति मनस्वतीभिरुपतिष्ठते [4] उत्तिष्ठत पितरः प्रेत शूरा यमस्य पन्थामनुवेता [1] पुराणम्। धत्तादस्मासु द्रविणं यच्च भद्रं

निर्देशापपत्तिरूहप्रकारः नमस्कारश्च

(वृ) उहेनैवोपदेश इति—समुदायाभिप्रायोऽय पाठ इति सर्वत्र पिता वृङ्क्तां पितृभ्यस्स्वधा विभ्यस्वधा इत्यत्रापि बहुवचनं चोपपद्यते। पितर पितामहा इति लिङ्गात्। तस्मादार्षपाठोपयोग। पिता वृङ्क्तां पितामहो वृङ्क्तां पितृभ्यस्स्वधा पितामहेभ्यस्स्वधा प्रपितामहेभ्यस्स्वधा पितरो वासांसि पितामहा वासासीति। उत्तरमायु पश्चाशत उर्ध्वमिति [5]वक्ष्यति ॥

[निनयनप्रकारः]

उदकुम्भ—यनम् - जलस्य। ऊर्जं वहन्तीरिति प्रसव्यम् ॥

---

[1] नमस्कुर्वन जपति (रु) [2] दत्तसदोव पितरो—क [3] निनयत्येकस्फ्यायाम् (रु). [4] मनुरे पुराणम—ग [5] वक्ष्यते—घ.

(सू.) प्रणो ब्रूताद्भागधां देवतासु इति पितॄ[1]नुत्थापयति ॥ ४ ॥ २५ ॥ ९२ ॥

(सू.) परेत पितरस्सोम्या इति [2]प्रवाहण्या पितॄन् प्रवाहयाति ॥ ५ ॥ २६ ॥ ९३ ॥

(सू.) प्रजापते न त्वदेतानीति यज्ञोपवीती गार्हपत्यदेशं [3]गच्छाति * । यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते ॥ ६ ॥ २७ ॥ ९४ ॥

[उपवीतव्यवस्था]

(भा) गार्हपत्य[4]प्रभृत्यु[5]त्तर कर्म यज्ञोपवी[6]त्येव[7] । नेत्युपदेश उपस्थानान्तमिति न्याय ॥ ६ ॥

---

[यज्ञोपवीतहेतुः]

(वृ) **गार्हपत्य—त्येवेति**—यजमानोऽत ऊर्ध्वं प्राचीनावीतीत्यस्य बाधकतया यज्ञोपवीतस्य प्रस्तुतत्वादत ऊर्ध्वं यज्ञोपवीत्येव ॥

[उपदेशाशयः]

**नेत्युपदेशः**—अत ऊर्ध्वमिति विहित[8]स्याऽऽसमाप्ते [9]प्राप्तत्वाद्यावद्वचन बाधो युक्त इति । अथवा प्राचीनावीतिना प्रसव्यमिति माङ्के पित्र्ये प्राप्तस्यात ऊर्ध्वं प्राचीनावीतीति श्रौतप्रायश्चित्तार्थं तस्यैवानुवादात् अत ऊर्ध्वं यत्र परिभाषया प्राचीनावीत[10] तत्र प्राचीनावी[11]त्येवेति । अत परिभाषाया[12] एव बाधादूर्ध्वमिति न विवक्ष्यते ॥

[न्यायोपपत्ति ]

**उपस्थानान्तमिति न्यायः इति**—उपस्थानार्थत्वाद्गार्हपत्य देश[13] प्रति गमनस्य उपस्थानान्त यज्ञोपवीत्येव ॥

---

[1] तादा॰र्थ्येनमन्त्रोच्चारणमेवोत्थापनम्--(रु) [2] प्रवाह्यन्ते प्रस्थाप्यन्तेऽनया पितर इति प्रवाहणी (रु) [3] उभयमेतद्गार्हपत्योपस्थानार्थं यज्ञोपवीत गमन च (रु) [4] गार्हपत्यदेशप्र—क [5] त्युत्तर यज्ञो—अ [6] पवीती—क [7] त्येवेत्युपदेश —अ [8] स्याप्राप्ति —क झ. [9] प्राप्तपूर्वत्वाद्या—क [10] तत्व—क. [11] वीततेति—क [12] षायाबा—क [13] देशे गमनस्य—घ.

(सू.) अपां त्वौषधीनाꣳरस प्राशयामि भूतकृतं गर्भं धत्स्वेति [1]मध्यमं पिण्डं पत्न्यै प्रयच्छति[2]। आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् [2]यथेह पुरुषोऽसदिति तं पत्नी प्राश्नाति पुमाꣳसꣳ ह [3]जानुका भवतीति विज्ञायते ॥ ७॥

(भा) पत्नीबहुत्वे [4]पिण्डविभागो मन्त्रावृत्तिश्च ॥ ७ ॥

(सू.) ये सजातास्समनसो जीवा जीवेषु मामकाः।
तेषाꣳ श्रीर्मयि कल्पतां अस्मिन् लोके शतꣳ [समाः ॥ ८ ॥

(सू.) इत्यवशिष्टानामेकं यजमानः प्राश्नाति न वा[1]। स्थाल्यां पिण्डान् [5]समवधाय ये[6]समाना इति सकृदाच्छिन्नमग्नौ प्रहरति । अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा प्रादाः पितृभ्यः स्वधया ते अक्षन् प्रजानन्नग्ने पुनरप्येहि देवान् इत्येकोल्मुकं [7]प्रत्य[8]पिसृज्य प्रोक्ष्य पात्राणि द्वन्द्वम[9]भ्यु[10]दाहरति ॥ ९ ॥ ३० ॥ ९७ ॥

(सू.) संतिष्ठते पिण्डपितृयज्ञः ॥ १० ॥ ३१ ॥ ९८ ॥

(भा) गतार्थं । संतिष्ठते-समाप्यते ॥ ९ ॥

आवृत्तिकर्म]

(वृ) पत्नीबहुत्वे—वृत्तिश्च—प्रदानमन्त्रस्य प्राशनमन्त्रस्य च ॥

[1] द्वितीयपिण्डवत्तृतीयमध्यमोऽपि प्राश्नन्ति न तृतीयः पत्न्यर्थत्वात् (रु)
[2] यथायमरपा अस्मदिति क. [3] जानुका-जननशीला-(रु). [4] पिण्डे वि—अ.
[5] समवधाय-सहक्षिप्त्वा (रु) [6] ये समाना इति मन्त्रे बर्हिः प्रहरति न बर्हिः धत्स्वेति यजुषापि । तस्या एवादिप्रदर्शनात् (रु) [7] प्रत्यपिसृज्य-पुन. क्षिप्त्वा (रु). [8] पुन क्षिप्ता (रु). [9] अभ्युदाहरति-उपादत्ते-(रु) [10] उपादत्ते (रु)

(सू.) अपः पिण्डा[1]नभ्यवहरेद्ब्राह्मणं वा प्राशयेत् ॥ ११ ॥ ३२ ॥ ९९ ॥

(सू.) सोऽयमेवं विहित[2] एवानाहिताग्नेः ॥ औपासने[3] श्रपणधर्मा होमश्च[4] अतिप्रणीते वा जुहुयात् यस्मिन् जुहुयात्तमुपतिष्ठेत ॥ १२ ॥ ॥ ३३ ॥ १०० ॥

[ बहुवचनस्वारस्यम् ]

(भा) श्रपणधर्मा इति बहुवचननिर्देशादतिप्रणीते होममात्रमेव । उभयोरपि परिस्तरणम् ॥ १२ ॥

(सू.) [5]तत्र [6]गार्हपत्यशब्दो लुप्यते संस्कारप्रतिषेधात् ॥ १३ ॥ ३४ ॥ १०१ ॥

इति दशमी खण्डिका ॥ तृतीय पटल ॥

---

[श्रपणादेरुल्मुकातिरिक्तस्यातिप्रणीते निवृत्तिहेतु ]

(वृ) **श्रपणधर्मा—मेवेति**—श्रपण धर्माश्चेति श्रपणधर्मा । न षष्ठीसमास. । जुहुयादित्येतावन्मात्रोपदेशादितरेषामौपासन एव प्राप्ति । उल्मु[7]काहरण त्वतिप्रणीतादपि लभ्यते । 'अभून्नो दूतो हविषो जातवेदा' इति लिङ्गात् ॥

**उभयोरपि परिस्तरणम् इति**—परिस्तरणस्य सर्वकार्यार्थत्वात् ॥

---

1 अभ्यवहरेत्–क्षिपेत् (रु) 2 अन्यूनाधिक पिण्डपितृयज्ञोऽनाहिताग्नेरपि भवतीत्यर्थ (रु) 3 दाक्षिणाग्निस्थानीये औपासने श्रपणहोमौ भवत (र) 4 अतिप्रणीते औपासन एव श्रपयित्वा ततोऽग्निं दक्षिणाप्राञ्च प्रणीय तस्मिन् वा जुहुयात् । आश्वलायनेनाप्युक्तम् (रु) 5 अत्र–क 6 अत्र अनाहिताग्नि मासिश्राद्ध पिण्डपितृयज्ञ च करोति । आहिताग्निस्तु मनुवचनद्वयाद्विकल्प । एक ब्राह्मणभोजनरूपश्राद्धपर अपरं होमपिण्डप्रतिषेधपरमित्यविरोध इति केचित् । नेगमोक्त चैतत् (रु)
7 कहरणम्–घ

[गार्हपत्यपदलोपतद्धेतुविचार ]

(भा) गार्हपत्यशब्दस्य लोप । सस्काराणामाधानिकानामभावात् । तस्मिन्नग्नौ सस्कारनिमित्तत्वाच्च गार्हपत्यशब्दस्य । कथंपुनस्तेषामभाव ?

---

गार्हपत्यशब्दलोपौचित्यविचार ।

(वृ) **गार्हपत्यश—मभावादिति**— सोऽयमेव विहित एवानाहिताग्नेरिति आधानसस्काररहितस्य विधानात् यदन्तरिक्षमित्युपस्थानमन्त्रे गार्हपत्यशब्दस्य लोप. । न च तूष्णीं कस मृन्मय चेनिवत् कृत्स्नस्य मन्त्रस्य लोप । तत्र मुख्यस्य वानस्पत्यशब्दस्य कसमृन्मययो[1] निवृत्ते । मुख्यनिवृत्तेरितरेषा पदानामपि निवृत्तिर्युक्ता । अत्र तूपस्थानमन्त्रे अग्निर्मा तस्मादिति विशेष्यभूताग्निप्रकाशनपरत्वान्मन्त्रस्य विशेषणवाची अप्रधानो गार्हपत्यशब्दोऽसम्भवान्निवर्तते । [2] प्रधानानुरोधेन प्रवर्त[3]त इति विशेष । अग्नि गृह्णामीति तु मन्त्र श्वश्शब्दप्राधान्यात्तस्य मन्त्रस्य सद्यस्कालाया लोप. । ताश्श्वोभूते यजत इति श्वो[4]रमणप्रार्थनार्थत्वात् एवमन्यत्रापि मन्त्रपदलोप[5] ऊहनीय । सस्कारप्रतिषेधादिति हेतुव्यपदेशात ॥

गार्हपत्यशब्दस्याधानाभिज्ञपरत्वसमर्थनम् ।

**तस्मिन्न—शब्दस्येति**—प्रवृत्तिरिति शेष । न केवल गृहपतियोगमात्रात् । अथवा "[6]गृहशब्द श्रौतकर्मण्येव [7]रूढ. 'सगृह प्रयास्यन्' 'यो वा अध्वर्योर्गृहान् वेद' इत्यादिदर्शनात । तस्य पतिर्गृहपति तद्योगाद्गार्हपत्य इत्यभिप्राय. ॥

**कथं पुनस्तेषामभाव ? इति—**अस्यार्थ - सस्काराभावो हि

---

[1] योरप्रोक्त ? घ रवृत्ते –क झ. [2] प्राधान्यानुरोधेन पवर्तत शेष –झ. [3] प्रवततेशेष –घ [4] वरण–घ [5] लोपभाग उह–घ [6] गृहपतिशब्द:—क. [7] सहढ –ख.

(भा) [1] अप्यनाहिताग्निना कार्या इति। ते हि प्रतिषिध्यन्ते। यदि क्रियेरन्नाहिताग्निरेव स्यात्। अतस्संस्कारप्रतिषेधाद्गार्हपत्यशब्दस्य[2] लोप ॥१२॥

॥ इति धूर्तस्वामिभाष्ये तृतीय पटल ॥

---

[यजमानकार्यहोमव्यवस्था]

(सू) **अमावास्यायाꣳ[3] रात्र्याꣳ स्वयं यजमानो यवाग्वाऽग्निहोत्रं जुहोत्यग्निहोत्रोच्छेषणमातञ्चनार्थं निदधाति ॥ १ ॥ १ ॥ १०२ ॥**

---

(वृ) गार्हपत्यशब्दनिवृत्तौ हेतु । औपासनेऽपि संस्कारा विद्यन्त एव। कथं पुनराधानसंस्काराणामभावो हेतुरुक्त' ? इति ॥

**अप्यना—षिध्यन्ते**—सोऽयमेव विहित एवानाहिताग्नेरिति प्रकृत्य संस्कारप्रतिषेधादिति निर्देशात् आधानसंस्कारप्रतिषेधानुवाद इत्यर्थ' ॥

[आधानप्राप्तिनियमो न सूत्राभिमतस्स्यात्]

ननु एव विहित एवेति वचनादाधानपिण्डपितृयज्ञयोरङ्गाङ्गिभावाभावेऽपि साधिकारश्रौतविधिप्रयुक्तत्वादाधानस्यात्रैवकार[4]निबन्धनादन्यून प्रयोक्तव्यत्वावगतेश्चाधानसंस्कारा' प्राप्नुयु , अत. संस्कारप्रतिषेधोऽन्योऽन्वेष्टव्य इत्यत आह—

**यदि क्रियेरन्—लोप इति ॥**

इति कौशिकेन रामाग्निचिता कृताया धूर्तस्वामिभाष्यवृत्तौ तृतीय पटल ॥

---

[1] अनाहिताग्निना (इति रामाण्डारपाठ ) [2] स्थाऽप्रयोग इति घ

[3] अमावास्याशब्देन कर्मोच्यते । तस्या च सायमग्निहोत्रस्य नियमविशेषो विधीयते । यवागूस्सान्नाय्यप्रयुक्ता । न चेयमुच्छेषणप्रातिपत्ति तदभावे प्रतिनिध्युपदेशात् (रु).

[4] निबन्धनेनान्यूनम्–क घ.

(भा) स्वय विधानादेधोद[1]कादीनामाहरण [2]यजमान एव करोति। पर्वणि वेति सिद्धत्वाद्यजमानस्य [3] अपर्वण्यपि सान्नाय्यविकारे स्वय होम.। यथा राजसूये ऐन्द्रे दधनि। यवागूहोमो दधिप्रयुक्त। अतो [4]न भवत्यसन्नयत ॥ १ ॥

(सू) **नास्यैता८ रात्रिं कुमाराश्चन ' पयसो लभन्ते ॥ २ ॥ २ ॥ १०३ ॥**

---

।यजमानकर्तव्यताग्राहकं पर्वनियमायोगश्च।

(वृ) **स्वयंविधाना—न्द्रे दधनीति** अस्यार्थ - अहरहर्यजमानस्स्वय-मग्निहोत्र जुहुयात्पर्वणि"वेति यजमानानियमे सिद्धे पुनरिह स्वयग्रहणादे-धोदकादीन्यपि यजमान एवाहरति। ननु पर्वण्ये‌त्यत्रापि स्वयशब्दोऽ-नुवर्तेत ! न, ब्रह्मचर्यादिपक्षेऽप्यनुवृत्तिप्रसङ्गात। तत्राप्यनुवृत्तौ स्वय यजमान इध्मानाहरतीत्यस्यानर्थक्य भवति। यजमानग्रहणादपर्वण्यपि सान्नाय्यविकारे कर्माणि क्रियमाणे राजसूये ऐन्द्रे दधनि दर्शे चापर्वणि पथिकृन्मुख मध्ये सायमग्निहोत्र' यजमान एव करोति ॥

।यवागूहोमनियमोपपत्ति

**यवागूहोमो — त्यसन्नयतः**- अग्निहोत्रोच्छेषणमभ्यातनक्तीति नित्याग्निहोत्राङ्गतया पक्षसिद्धाया अपि यवाग्वा पुनर्विधानात् तया होमो दधि प्रयुक्त न कालप्रयुक्त, दधिप्रयुक्तयजमाननियमसमभिव्याहा-रात् सनिपत्योपकारित्वाच्च अनस्सान्नाय्याकरणे यवागू"होमो न भवति। असन्नयत' पथिकृन्मुखे यजमानस्यानियम.[10] असन्नयतस्तत्र यवाग्वा नियम.। अमावास्याया चैधोदकादीना स्वयमाहरणनियम. ॥

[1] दकानामा—अ [2] याजमाना र्शनस्यैकयानि यजमान -क [3] स्यपर्व-ण्यपि—अ. [4] भवतिसनयत –ख [5] चनेति निपातोऽर्थे (रु) [6] चेति -क. [7] होत्रे—घ [8] होत्रतया—क [9] गूनियमो—क. [10] स्यानियम। अमावा—घ

[विनियोगान्तराभावपरता]

(भा) कुमारा अपि न लभन्ते। [1]सर्वं दुह्यते यथा सम्भवति कुम्भी॥ २॥

(सू) **हुते सायमग्निहोत्रे सायन्दोहं दोहयति ॥ ३ ॥**

[कालावधारणम्]

(भा) [2]साय दोह इति वचनाद्दोहश्च सायकाल एव ॥ ३ ॥

(सू) **अग्नीन् परिस्तीर्या[3]ग्निमग्नी वा[4] ॥ ४ ॥**

[परिस्तरणादिव्यवस्था]

(भा) परिस्तरण न सभ्यावसथ्ययोरकिञ्चित्करत्वादित्युपदेश [5] ।

---

(वृ) **कुमारा—कुम्भीति**—षडवराध्यानिति न्यूनसख्यानिषेधात्

[विनियोगान्तरव्यावृत्तिहेतु ]

उत्तरावधेर्याव[6]त्सभवार्थत्वात्कुमारा पयो न लभन्ते [7]। यावद्वत्स दोहन-

[विनियोगान्तरसभवपक्ष ]

विधानात् । सूत्रान्तरे कुम्भीपराध्यविधानात्कुम्भीपरिमितपय पर्याप्ता घेनव उत्तरावधिरिति। अस्मिन् पक्षे अधिक पय [8]कुमाराणा लभ्यते। पूर्वस्मिन् पक्षे कुम्भ्यन्तर सर्वा यजमानस्य गा दोहयित्वा हविश्शेषभक्षण काले ऋत्विज एव प्राश्नीयु ॥

[आतञ्चनकाल ]

**सायंदोह—काल एवेति**—निशाया [9]सायहोम कुर्वतः पुरस्ताद्दोह उद्वासनान्त । पश्चादातञ्चनम् ॥

[होमान्वयाभावस्सभ्याद्यग्नयपरिस्तरणहेतु.]

**परिस्तर—त्युपदेश इति**—अग्नीनिति बहुवचन त्रिष्वेव

---

[1] सर्वं दुहन्ते—क ख ग घ [2] सायदोहयति वच—ञ [3] अग्नि-गार्हपत्य तस्यैवकर्मसंयोगात्। अग्नीगार्हपत्याहवनीयो प्राधान्यात् (रु) [4] अग्नीन् इत्यादि प्रयुनक्तीत्यन्तमेक सूत्र- रु [5] उपदेश कार्य —ख [6] त्संभवात्—घ [7] नलभन्ते सूत्रान्तरे—ख ग घ [8] कुमारा न लभन्ते—क कुमाराणा न लभ्यते (मु-रा) [9] सायं साय—घ

(भा) अग्नीनित्यविशेषवचनात् कार्याभावेऽपि [1]संस्कृतानामेवाग्नयन्तरसाह[2]चर्यादेकादशिन्यामुप[3]शयवदिति न्याय [4]। अग्नि [5]यस्मिन्नग्नौ श्रपयति। अग्नी गार्हपत्याहवनीयौ। अधिश्रयणमाहवनीये[6]ऽपि लभ्यते बहुवचन निर्देशात् ॥ ४ ॥

---

(वृ) पर्यवस्यति कपिञ्जलानितिवत्। कार्याभावान्नोत्कर्ष तयोर्होमादिकार्याभावात्। संस्कृतस्य कार्यान्तरोपयोगाभावाच्च संस्कार। अनयोरन्वाधान [7] तु तूष्णीं क्रियते। [8]याजमानदर्शनादित्युक्तम् ॥

।न्यायपक्षे परिस्तरणपरिसंख्यादौर्लभ्यम्।

**अग्नीनित्यविशेषव—न्यायः इति**—अग्नेरग्न्योर्वा प्राधान्य कार्य वा [9] भवति। तदतिक्र[10]म्याविशेषणो[11]पादीयमानशब्दास्त्रिषु न पर्यवस्यति। कार्यान्वयश्च त्रिषु [12]नैकान्त। दृष्टान्तपक्षेऽन्वाहार्यपचनस्याप्यभावात्। [13]धार्याणा च संस्कारास्सम्भवन्ति धारणमेवोपयोग इति प्रणीता [14]वच्चानौषधे ॥

**पक्षभेदाभिप्राय सूत्रम्**

**अग्नि—यस्मिन्नग्नौ श्रपयतीति**—अग्निमितिपक्ष इत्यर्थ. ॥

**अग्नी—गार्हपत्याहवनीयौ**—अग्नी इति पक्ष इत्यर्थ· ॥

।आहवनीयेऽधिश्रयणलाभ. प्रकाशिकाव्यवस्था च।

**अधिश्रयण-निर्देशादिति**—दर्शपूर्णमासयोर्नित्यवत् बहुपुरोडाशाभावेऽप्याहवनीये गार्हपत्ये वा हवींऽपि श्रपयतीति बहुवचननिर्दे-

[1] संस्कृतानामग्न-ज [2] चर्यमेकाद-घ [3] मुपशयवदिव—ञ सुपर्णावद-ञ. यस्मिन श्रप-घ [4] अग्नीनित्याद्यन्यन्याय इत्यन्तो ग्रन्थ· क पुस्तकेनदृश्यते [5] यस्मिन श्रप-घ. [6] प्यत्र श्रपर्यंत इत्यपीति च ञ [7] नं तूष्णी क च [8] यज-मान-घ. [9] वा सम-घ [10] म्याविशषेण श्रूयमाणशब्द-घ [11] णोपादान-शब्द.—क णोपदधान.—ञ [12] नैकान्तत -सु रा. [13] धान्याना सस्कारश्च सभवति-ञ. [14] यच्चानौ—ञ.

(सू) सान्नाय्यपात्राणि प्रक्षाल्य उत्तरेण गार्हपत्यं दर्भान् [1]सꣳस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ॥ ५ ॥ ५ ॥ १०६ ॥

(भा) स्पष्टार्थ ॥ ५ ॥

(सू) कुम्भीꣳ शाखापवित्र[2]मभिधानी [3]निदाने दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वाऽपिधानार्थमग्निहोत्रहवणीमुपवेषं च ॥ ६ ॥ ६ ॥ १०७ ॥

(भा) अभिधानी [4]—रज्जुर्वत्सबन्धनार्था । निदाने नियोगौ ॥ ६ ॥

(सू) समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रे पवित्रे कुरुते ॥ ७ ॥ ७ ॥ १०८ ॥

(भा) समौ—[5]पृथुत्वेन ॥ ७ ॥

---

(वृ) शात्, [6]तथा यदेनयोरश्शृतकृत्याथान्यत्रावभृथमवैतीति सिद्धवदनुवादाच्चाहवनीयेऽपि सायंदोहाधिश्रयणम् । तदाऽग्निमिति[7]पक्षे तस्यैव परिस्तरणम् ॥ ४ ॥

[नियोगपदार्थः]

**अभिधानी—नियोगौ**—बन्धनसाधनभूते [8] ॥ ६ ॥

[साम्यनियामकम्]

**समौ—पृथुत्वेनेति**—[9]पवित्रयोर्दीर्घत्वस्य प्रादेशमात्रसमत्वादायामतस्समत्वसिद्धे· पृथुत्वन समत्वम् ॥ ७ ॥

---

[1] परिस्तरण प्रकारश्चोपरिष्टाऽद्वक्ष्यते—(क) [2] अभिधानी वत्सबान्धिनी-रज्जु —रु [3] निदाने गोपादसम्बन्धिन्यौ रज्जू—रु [4] अभिधानी वत्स—ग [5] पृथक्त्वेन—ञ [6] तदा—झ [7] पक्षस्यैव ?—झ [8] भूतो—ग [9] उभयोर्दीर्घत्वस्य - प्रादेशमात्रसमत्वा—घ

(सू.) पवित्रे स्थो वैष्णवी वायुर्वो मनसा पुना तु इति तृणं काष्ठं वाऽ[1]न्तर्धाय छिनत्ति [2]* न नखेन। *विष्णोर्मनसा पूतेस्थ इत्यद्भिरनु[3]मृज्य पवित्रान्तर्हितायामग्निहोत्रहवण्यामप आनीयोदगग्राभ्यां पवित्राभ्यां प्रोक्षणीरुत्पुनाति देवोवस्सवितोत्पुनात्विति प्रथमम् अच्छिद्रेण पवित्रेणेति द्वितीयम् वसोस्सूर्यस्य रश्मिभिरिति तृतीयम् ॥ ८ ॥ ८ ॥ १०९ ॥

(भा) गतार्थ. ॥ ८ ॥

(सू.) आपो देवीरग्रे पुव इत्यभिमन्त्र्योत्तानानि पात्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्ष्य प्रज्ञाते पवित्रे निदधाति। आपो देवीश्शुद्धास्थ इमा पत्राणि शुन्धत उपातक्क्याय देवानां पर्ण[4]वल्कमुत शुन्धत देवेन सवित्रोत्पूता वसोस्सूर्यस्य रश्मिभिः गां दोहपवित्रे रज्जुम् सर्वा पात्राणि शुन्धत इति प्रोक्ष्यमाणान्यभिमन्त्र्य एता आचरन्ति मधुमद्दुहानाः प्रजावतीर्यशसो विश्वरूपाः बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गाव इति गा आयतीः प्रतीक्षते यजमानः ॥ ९ ॥ ९ ॥ ११० ॥

॥ इत्येकादशी खण्डिका ॥

---

[1] दर्भयोर्दात्रस्य च मध्ये कृत्वोंतनसहछिनत्ति। उत्पवनेत्वाहाश्वलायन नानन्तयोर्गृहीत्वाङ्गुष्ठोपकानष्ठिकाभ्यामुत्तानाभ्यामिति—(रु) [2] छिनत्तिविष्णो'—क. [3] अनुमार्जन पवि।क्रियाङ्गम्—(रु). [4] अस्माल्लिङ्गात् परिवासनशकलस्यापि प्रोक्षण मिष्यते। प्रातर्दोहेऽभिमन्त्रणनिवृत्तिरत एव लिङ्गात्। तथा शमीशकले मन्त्रनिवृत्ति. पूर्ववत् (रु).

[अनुमन्त्रणादिव्यवस्था]

**(भा)** [1]पर्णवल्कस्यापि प्रयोग· पर्णवल्कमुत शुन्धतेति लिङ्गात् । प्रोक्ष्यमाणाभिमन्त्रण न प्रातर्दोहे उपातङ्क्याय देवानामिति[2] लिङ्गात् । प्रातर्दोहे आतञ्चनाभावात् । आयती· अग्निसमपिम् । अत· [3]प्रातर्दोहेऽपि । न तूपदेश· । गो·[4] प्रस्थापनादि [5]शाखास्थापनान्त ·न प्रातर्दोहे वत्सापाकरणस्य पुनर्विधानात् ॥ ९ ॥

**(सू)** **निष्टप्तꣳ रक्षो निष्टप्तोऽघशꣳस इति गार्हपत्ये सान्नाय्यपात्राणि प्रतितप्य धृष्टिरसि ब्रह्म यच्छे-**

---

[प्रातर्दोहवर्जनहेतुविवरणम्]

**(वृ)** **आयतीरग्नि—न तूपदेश इति**—प्रस्थापिताना गोचराद्यजमानस्य [6]गृहमागच्छन्तीनामनुमन्त्रणम् । अतो न प्रातरिति । प्रोक्ष्यमाणान्यभिमन्त्र्य एता आच[7]रन्तीत्यादिना प्रतीक्षणस्य समानकर्तृकत्वावगमात् । प्रोक्ष्यमाणाभिमन्त्रण च याजमानत । प्रोक्षणाभिमन्त्रणाभावे प्रतीक्षणस्यापि निवृत्ति· ॥

स्वपक्षे च—

**गोप्रस्थानादि—दोह इति**—पक्षद्वयेऽपि [8]नित्यधर्मोपदेश-प्रसङ्गेनात्रैषा निवर्तनमुक्तम् । **वत्सापा—धानादिति**—प्रात·कालापाकृतानां सायदोहे ससर्जनात । प्रातर्दोहार्थमर्थप्राप्तमपि वत्सापाकरण पुनर्विधीयते । अत इतरेषा [9]निवृत्ति· । [10]उपगूहनस्यापि तदङ्गत्वान्निवृत्तिः ॥ ९ ॥

---

[1] लिङ्गादित्यन्त—ञ कोशे नदृश्यते [2] मितिमन्त्रलिङ्गात्—**ञ** [3] I प्रातर्दोहनतू?—**ञ** [4] गोप्रस्था—घ **ञ** [5] शाखा प्रस्थापनान्त—**ग ञ** [6] गृहग—**झ** [7] रन्तीतिप्रती—**घ.** [8] न पत्यध? **झ** [9] निवृत्तिारिति—**घ** निवृत्ति पातर्दोहात्प्राक् गवा भक्षणार्थ प्रस्थापनाभावात्तन्निवृत्ति निवृत्तिरिति—**क ख ग** [10] इदं वाक्यं—**घ. झ** योर्न दृश्यते

(सू.) त्युपवेषमादाय निरूढं जन्यं भयं निरूढास्सेना अभीत्वरीरिति गार्हपत्यादुदीचोऽङ्गारान्निरूह्य[1] मातरिश्वनो घर्मोऽसीति तेषु कुम्भीमधिश्र-यति ॥ १ ॥ १० ॥ १११ ॥

[निरूहणनियमोमानं च]

(भा) अङ्गारनिरूहण[2] न बहिरायतनात् [3]गार्हपत्येऽधिश्रयतीति वच-नात् ॥ १ ॥

(सू.) अप्रस्रंसाय यज्ञस्योखे[4] उपदधाम्यहम् । पशुभिस्सन्नीतं बिभृतमिन्द्राय शृतं दधीति च[5] ॥ २ ॥ ११ ॥ ११२ ॥

मन्त्रनियमादि।

(भा) महेन्द्राय शृतं दधीति[6] । नायं प्रातर्दोहे दाधित्वाभावात् ।

---

[1] नियमहेतुविवरणम् ।

(वृ) अङ्गारनिरू—वचनादिति—बहिरायतनान्निरूढे गार्हपत्यत्वं न विद्यत इति । अग्निहोत्रे व्यन्तान् गार्हपत्येन कृत्वेति [7]विशेष-दर्शनाच्च ॥ १ ॥

महेन्द्राय शृतं दधीति—महेन्द्रयाजिनः ॥

नायं प्रातर्दोहे—भावात्—अप्रस्रंसायेति[8] मन्त्रो न [9]प्रात-र्भवति ॥

[1] अन्तरायतनमेव निरूहणम् कांचिद्व्यन्तकरणात (रु). [2] निरूपणम्—ख. [3] गार्हपत्ये- श्रपयन्तीति—क. गार्हपत्ये श्रपयतीति (रामा) [4] प्रातर्दोहकुम्भ्यपेक्षमुखे इति द्विवचनम् । तेन केवले पयसि दधनि च यथायथमूहः (रु). [5] दधीति वा—क. ग. [6] धीतिमहेन्द्रयाजिन ख [7] शेषद—क [8] येत्ययंमन्त्रो—घ. दुभे- ख. ग [9] भवति—ख.

(भा) एकस्यामप्युखायां द्विवचनम् । सर्वासां दोहनियमा[1]दुखे [2] अपि लभ्येते ॥ २ ॥

(सू.) **भृगूणामङ्गिरसां तपसा तपस्वेति प्रदक्षिण-मङ्गारैः पार्यूह्य वसूनां पवित्रमसीति तस्यां प्रागग्रं शाखापवित्रमत्यादधाति* *उदक् प्रातः कुम्भी-मन्वारभ्य [3]वाचं यच्छति पवित्रं वा धारयन्नास्ते[4]॥ ॥ ३ ॥ १२ ॥ ११३ ॥**

(भा) स्पष्टम् ॥ ३ ॥

(सू.) **अदित्यै रास्नासीत्यभिधानीमादत्ते[5]* ॥**

**त्रयस्त्रिंशोऽसि तन्तूनां पवित्रेण सहागहि शिवेयं रज्जुरभिधान्यग्नियामुपसेवतामित्यादीय-मानमनुमन्त्रयते यजमानः* *पूषासीति वत्स-माभि[6]दधाति ॥ ४ ॥ १३ ॥ ११४ ॥**

---

[द्विवचनादिनिर्वाहोपपत्तिः]

(वृ) **एकस्यामप्युखायां द्विवचनमिति**—एकस्मिन् काले कुम्भी-[7]द्वयप्रयोगाभावादुखे उपदधामीति द्विवचनमविवक्षितम् । नमः स्वरुभ्य इतिवत् व्यत्ययो वा ॥

**सर्वासां दोहनियमादुखे अपि लभ्येते इति**—यजमानस्य बहुगुत्वाद्यदा सर्वा यजमानस्य गा दोहयित्वेति नियमादेककुम्भ्यधिक पयस्तदाऽस्य मन्त्रो व्यवतिष्ठत इत्यर्थ ॥ २ ॥

---

[1] दुभे—ख ग [2] इत्यपि लभ्येते (रामा) [3] मन्त्रादन्यस्याव्याहरणम् वाग्यमन (रु) [4] कुम्भ्यन्वारम्भेणेद विकल्प्यते (रु) [5] इय दोहचेष्टा गोकर्तृका सामर्थ्यात् (रु) [6] अभिदधाति—बध्नाति (रु) [7] द्वयाभा—घ झ

[जपव्यवस्था]

(भा) अभिधान्यादानादि दोग्धु. । वत्सबन्धनमभिधान्या । लिङ्गस्य चाविवक्षा ॥ ४ ॥

(सू) उपसृष्टां मे प्रब्रूतादिति संप्रेष्यति[1]* *उपसृजामीत्यामन्त्रयते अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीरिति वत्समुपसृजति* *गां चोपसृष्टां विहारं चान्तरेण मा संचारिष्टेति संप्रेष्यति ॥ ५ ॥ १४ ॥ ११५ ॥

[संप्रैषकर्त्रादिव्यवस्था]

(भा) [2]उपसृष्टामिति संप्रैषोऽध्वर्यो । उपसृजामीति दोग्धुः । वत्सोपसर्गो[3]ऽर्धर्चेन । द्वितीयेन निदानेन गो. पादे वत्सबन्धनम् ।

[रज्जुमन्त्रव्यवस्थाहेतुः]

(वृ) अभिधान्यादा-- विवक्षा-[4]अस्यार्थः--वत्सबन्धनमन्त्रे शिवेयꣳरज्जुरभिधानीतिलिङ्गात् । सा च सूक्ष्मा मृदुः श्लक्ष्णा शिवेति लिङ्गात् । त्रयस्त्रिꣳशोसीति पुल्लिङ्गस्याविवक्षा । [5]वत्साभिधान्यभिधानावत्समभिदधाति [6] दोग्धा बध्नाति ॥ ४ ॥

उपसृष्टा--र्धर्चेन---उत्तरार्धे उपवस्सदेयमि [7] त्युपसदनलिङ्गात् अर्धर्चपाठाच्च । अन्यथा आदिं वा कृत्स्नं वा गृह्णीयात् ॥

द्वितीयेननि-बन्धनम्---उपसृष्टो वत्सः स्तनप्रदेशादपनार्थ[8] गोः पादे बध्यते । प्रथमेन गोः पादौ [9]बध्नाति । अभिधान्या तु

---

[1] उपसृष्टा---उपगतवत्सा मे प्रब्रूहीति दोग्धारं संप्रेष्यत्यध्वर्युः (रु).
[2] उपसृष्टवत्सबन्धन यदा प्राप्नुयाद्वत्सो गां तदा ग चापसृष्टामित्यध्वर्युर्यजमानायाचष्टे ? इति पाठः-ञ [3] गोऽयक्ष्माव इ-ञ [4] अस्यार्थः इत्यंशः-घ. ङ. कोशयोर्न दृश्यते । [5] अभिधान्या ऽभि-घ. अभिधाभिधानात्-ङ. [6] धाति बध्नाति-घ. ङ. [7] त्युपादान ? ङ. [8] दपकृष्य-घ. [9] दपनीय बध्यते.

(भा) [1] यदा [2] प्राप्नुयात्तदा गां चोपसृष्टामित्यध्वर्यु[3]र्यजमानायाचष्टे ॥ ५

(सू) यद्युपसृ[4]ष्टां व्यवेयात्सान्नाय्यं [5]माविलोपीति ब्रूयात् ॥ ६ ॥ १५ ॥ ११६ ॥

(भा) स्पष्टम् ॥ ६ ॥

(सू) उपसीदामीत्यामन्त्रयते [6] अयक्ष्मा वः प्रजया सꣳसृजामि रायस्पोषेण बहुला भवन्तीः ऊर्जं पयः पिन्वमाना घृतं च जीवो जीवन्तीरुपवस्सदेयमिति दोग्धोपसीदति* न [7]शूद्रो दुह्याद्दुह्याद्वा* *दारुपात्रे दोग्धि ॥ ७ ॥ १६ ॥ ११७ ॥

[दोहपात्रव्यवस्था]

(भा) [8] उपसीदामीति [9] दोग्धा । दारु पात्रे दोग्धि

---

(वृ) प्रथममपाकृतप्रदेशे वत्सबन्धनम् ॥

**यदा प्राप्नु–चष्टे**—मा सचारिष्टेत्येकवचनात् (अभिधान्या तु) यजमानस्य कर्मसबन्धितया सनिहितत्वात् [10] दोग्धुश्च दोहनदेशेऽवस्थितत्वात् ॥ ५ ॥

**उपसीदामीति—दोग्धा**—अध्वर्युमामन्त्रयते ॥

[व्यवस्थोपपत्तिः]

**दारुपात्रे दोग्धि**—काममेव दारुपात्रेणेति प्रतिप्रसवात् ।

---

[1] यदा प्रस्नुता तदा–**क ग** [2] प्राप्नुयाद्वत्सोमातरं तदा गा–**घ** I प्राप्नुयाद्वत्सो गा तदा गा–**ङ**. II [3] र्यजमानो वाचष्टे–**ग.** [4] सृष्टी–**क** [5] यदि कश्चिरन्तरागच्छेत् तत्र प्रायश्चित्तार्थमेतद्यजुर्जपेत् (रु) [6] दोहयाजमानार्थं यजमानमामन्त्रयते तत उपसीदति (रु) [7] ब्राह्मणे तस्य निषेधादनुज्ञानाच्चेति । शूद्रस्यापि दोग्धुर्मन्त्राभवन्तीति वचनात् (रु) [8] उपविशामीति–**ग** [9] दोग्धाऽदारुमात्रे–**ग.** [10] दोग्धुश्चेत्यादिक–**घ** पु. न दृश्यते

(भा) अदारुपात्रे दोग्धि शूद्रः ॥ ७ ॥

(सू) उपसृष्टां दुह्यमानां धाराघोषं [1] च यजमानोऽनुमन्त्रयते । अयक्ष्मा वः प्रजाया संसृजामीत्युपसृष्टाम् । द्यौश्चेमं यज्ञं पृथिवी च संदुहातां धाता सोमेन सह वातेन वायुः यजमानाय द्रविणं दधात्विति दुह्यमानाम् ॥ ८ ॥ १७ ॥ ११८ ॥

इति द्वादशी कण्डिका ॥

---

(भा) स्पष्टम् ॥ ८ ॥

(सू) उत्सं दुहन्ति कलशं चतुर्बिलमिडां देवीं मधुमतीं सुवर्विदम् । तादिन्द्राग्नी जिन्वतं सूनृतावत्तद्यजमानममृतत्वे दधात्विति धाराघोषम् ॥ १ ॥ १८ ॥ ११९ ॥

(भा) स्पष्टम् ॥ १ ॥

(सू) दुग्ध्वा हरति* [2] । * तं पृच्छति कामधुक्ष प्रणो ब्रूहीन्द्राय हविरिन्द्रियमिति* । * अमूमिति निर्दिशति यस्यां देवानां मनुष्याणां पयो हितमिति प्रत्याह ॥ २ ॥ १९ ॥ १२० ॥

(वृ) अदारुपात्रेणशूद्रः—[3]अग्निहोत्रमेव न दुह्यादिति अग्निहोत्र एव शूद्रनिषेधात् । [4]अत्र शूद्रस्याभ्यनुज्ञानाच्छूद्र एव न दुह्यादिति प्रतिषेधः प्रकृतदारु[5]पात्रनिषेधपरः ॥ ७ ॥

[1] चानुमन्त्रयते—क. [2] हरत्यध्वर्युर्वेदोग्धा—(ङ). [3]अग्निहोत्र एव शूद्र निषेधादत्रशूद्रस्याभ्यनुज्ञाना—ङ. [4] अन्यत्राभ्यनु—घ. [5] पात्रपरः—क ख. ग.

[प्रष्टुर्दोग्धृमन्त्रविभाग ]

(भा) [1] महेन्द्राय हविरिन्द्रियम् । [2] अमूमिति दोग्धु ॥ २ ॥

(सू) सा विश्वायुरित्यनुमन्त्रयते [3] ॥ ३ ॥

(भा) सा विश्वायुरित्यध्वर्यो ॥ ३ ॥

(सू) देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुपुवेति कुम्भ्यां तिरःपवित्रमासिञ्चति[4] हुतस्स्तोको * । * हुतो द्रप्स इति विप्रषोऽनुमन्त्रयत इति * । * द्वितीयां तृतीयां च दोहयति * [5] । * सा विश्वव्यचा इति द्वितीयामनुमन्त्रयते सा विश्वकर्मेति तृतीयाम् ॥ ४ ॥ २१ ॥ १२२ ॥

(भा) स्पष्टार्थ. ॥ ४ ॥

(सू) तिस्रो दोहयित्वा बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति त्रिर्वाचं विसृ[6]ज्या[7]न्वारभ्य[8] तूष्णीमुत्तरा दोहयित्वा ॥ ५ ॥ २२ ॥ १२३ ॥

---

(वृ) महेन्द्राय—मिति—महेन्द्रयाजिन ॥

[प्रतिवचनपरिष्कारः]

अमूमिति दोग्धुः—अमू यस्यां देवानामिति प्रश्लिष्टपाठादमूमिति द्वितीयान्त नाम निर्दिश्य गङ्गामिति प्रतिवचन पयो हितमित्यन्त दोग्धु ॥

साविश्वायुरित्यध्वर्योः—गोरनुमन्त्रणम् ॥ ३ ॥

---

[1] इन्द्राय महेन्द्राय हविरीत–क महेन्द्रायहविरीत–घ [2] अमू यस्यामिति–क [3] निर्दिष्टागामध्वर्यु –(रु) [4] पय आदायानयत्यध्वर्यु –(रु) [5] रज्ज्वादानस्य सर्वार्थत्वात् वत्साभिधान्यद्यावर्ततो(रु) [6] बहुदुग्धीति सप्रेष त्रिरुक्त्वा तत पर वाङ्नियमा न्निवर्तत इत्यर्थ (रु) [7] ऽनन्वारभ्य–क [8] कुम्भीमिति शेष (रु).

(भा) [1]बहुदुग्धि महेन्द्रायेति [2]वोक्ष्यमा(णो)ण गवार्थम् । अतो न गृष्ट्याम् [3] महेन्द्रायदधीति[4] ॥ ५ ॥

(सू) दोहनेऽप आनीय संपृच्यध्वमृतावरीरिति कुम्भ्यां संक्षालनमानीयाविष्यन्दयन्[5] सुश्रृतं करोति * *दृꣳह गादृꣳह गोपतिं मा वो यज्ञपतीरिषदिति [6]वर्त्म कुर्वन् प्रागुद्वासयत्युदग्वा * *एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथादातञ्चनार्थं दोहयित्वा[7] संतत[8]मभि दुहन्त्योपवसथात्* *तेन [9]शीतबुध्नमातनक्ति॥६॥

(भा) स्पष्टार्थः ॥ ६ ॥

(सू) सोमेन त्वाऽऽतनच्मीन्द्राय दधीति दध्ना[10] ॥ ७ ॥ २४ ॥ १२५॥

(भा) [11]महेन्द्राय दधि ॥ ७ ॥

[नियमानिर्वाहः]

(वृ) बहुदुग्धि-गवार्थमिति—तिस्रो दोहयित्वा बहुदुग्धीति पुनर्दोहनविधानाद्धव्यमाप्यायता पुनरिति हविर्वृद्ध्यर्थत्वाच्च ॥

अतो न गृष्टामिति—नक्षत्रेष्ट्यां वायवे निष्ट्यायै गृष्ट्यै दुग्धामित्यत्र [12]गवान्तर [13]दोहाभावाद्बहुदुग्धीत्यस्य निवृत्तिः ॥ ५ ॥

[सोमेनत्वादिमन्त्रनियमः]

महेन्द्रायदधीति—महेन्द्रयाजिनः । [14]अयमपि न गृष्ट्या

---

1 बहुदुग्धीति—घ. 2 योक्ष्यमाणो—ख ग. 3 गृष्टयां भवतीति—क. 4 इन्द्रायदधीति—घ. 5 यत् सुश्रतं—क. 6 वर्त्म कुर्वन्—कर्षन् (रु). 7 संतत-सायं प्रातरविच्छेदः (रु) 8 अभिदोह:—उपरिदोह प्रथमं महत्यां कुम्भ्यां दोहयित्वा तस्यामेव कालेकाले दुहन्तीति यावत (रु) 9 शीतं अनुष्णं बुध्न—कुम्भीपृष्ठं यस्य तत् (रु) 10 ऽऽतनार्क्मि—क. 11 'महेन्द्राय' इत्येतावन्मात्रम्—अ. 12 गवान्तरे—घ. 13 दोहना—घ. 14 एतदपि—घ.

(सू) यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनुसंतनोमीत्यग्निहोत्रोच्छेषणमन्ववधाय अयं पयस्सोमं कृत्वा स्वां योनिमपि गच्छतु । पर्णवल्कः पवित्रं सौम्यस्सोमाद्धि निर्मित[1] इति परिवासनशकलमन्ववधाति ॥ ८ ॥ २५ ॥ १२६ ॥

(भा) स्पष्टार्थ ॥ ८ ॥

इति त्रयोदशी खण्डिका ॥

---

(सू) ओषधयः [2] पूतीकाः [3] क्कलास्तण्डुलाः [4]पर्णवल्का इत्यातञ्चनविकल्पाः ॥ १ ॥ २६ ॥ १२७ ॥

(भा) स्पष्टार्थः ॥ १ ॥

(सू) [5]उच्छेषणाभावे तण्डुलैरातञ्चयात्तण्डुलाभाव ओषधीभिः ॥ २ ॥ २७ ॥ १२८ ॥

(सू) आपो हविःषु जागृत यथा देवेषु जागृथ एवमस्मिन् यज्ञे यजमानाय जागृतेत्ययस्पात्रे दारुपात्रे वाऽप आनीय अदस्तमसि विष्णवे त्वा यज्ञायापि दधाम्यहम् । आद्भिररिक्तेन पात्रेण याः पूताः

---

(वृ) आतञ्चनाभावात् ॥ ७ ॥

ओषध्या—विकल्पन्ते— यत्पूतीकैरित्युपक्रम्य यद्दध्नाऽऽतनक्ति सेन्द्रत्वायेत्युपात्तानां समानार्थत्वाद्दध्नाऽऽतनक्तीति पुनर्विधानात्तस्य मुख्यत्वम् । इतरेऽनुकल्पाः ॥ २ ॥

---

[1] द्वितीयमन्त्रस्य पलाशलिङ्गत्वात् शम्यानिवृत्ति पूर्ववत् (रु) [2] पूतीकाः—लता विशेषा (रु) इद भाष्यं—ख ग, कोशयोरेव दृश्यते [3] क्कला—बदरीफलानि (रु) [4] पर्णवल्का.—पलाशशकलानि (रु) [5] असत्युच्छेषणे न तत्पुनरागमयितव्यम् । न च लोप कर्मण । अपि तु तण्डुलैरातञ्चयात् । तदभावे व्रीह्यादिभिरित्यर्थः । एतेन सैमिक पयस्यादावपि द्वितीयातञ्चन व्याख्यातम्(रु)

(सू.) परिश्रेरते इति तेनापिदधाति । अमृन्मयं देवपात्रं यज्ञस्यायुषि प्रयुज्यताम् । तिरः पवित्रमतिनीता आपो धारय मातिगुरिति यजमानो जपति । यदि मृन्मयेनापिदध्यात्तृणं काष्ठं [1]वाऽपिधानेऽ[2]नुप्रविध्येत्[3] ॥ ३ ॥ २८ ॥ १२९ ॥

। अपिधानपक्षभेदौ ।

(भा) अमृन्मयमिति न मृन्मये । मृन्मयेऽपीत्युपदेश· ॥ ३ ॥

(सू.) विष्णो हव्यं रक्षस्वेत्यनधो निदधाति ॥ ४ ॥

(सू.) इमौ पर्णं च दर्भं च देवानाꣳ हव्यशोधनौ प्रातर्वेषाय गोपाय विष्णो हव्यꣳ हि रक्षसीति प्रज्ञातं शाखापवित्रं निदधाति ॥ ५ ॥

। मन्त्रानियमः फलंच ।

(भा) शाखापवित्रनिधान प्रातर्दोहार्थम्[4] । [5]अतो न केवलद्दधि । पय-

---

।भाष्याशयः।

(वृ) अमृन्मयमिति न मृन्मये । मृन्मयेऽपीत्युपदेशः—अनुप्रविद्धतृणकाष्ठाभिप्रायेण । आपो धारयेत्यपां धारणप्रकाशनात् । अमृन्मयमिति च पात्रोपलक्षणार्थत्वाद्पां धारणे तत्सहायमात्रं मृन्मय करोतीति ॥ ३ ॥

[ नियमोपपादनम् ]

शाखाप–दोहार्थे—प्रातर्वेषायेति लिङ्गात् ॥

---

[1] न्तर्धाय–क. [2] नेन–क. [3] क्षिपेत् । तत्रामृन्मयमिति मन्त्रो लिङ्गविरोधान्निवर्तते (रु). [4] इदं तु 'तत्रोपयोगात् प्रातर्वेषायेति लिङ्गाच्च । तेन तद्विकारे पशुपयस्यादौ सद्यस्कालेऽपि भवत्येव, इति पूरितं रुद्रदत्तेन, [5] महेन्द्राय दधीति न केवले–ग.

(भा) सि तु केवलेऽपि भवति। पर्णवल्कमुतेत्यत्र पर्णवल्क· पवित्र इमौ पर्णमिति च शमीशाखाया निवर्तते । पवित्राभिधाना[1]दनिवृत्तिरित्युपदेश. ॥ ५ ॥

(सू) **तयैव[2] शाखया दर्भैर्वा सायंदोहवत्प्रातर्दोहाय वत्सानपाकरोति ॥ ६ ॥ ३१ ॥ १३२ ॥**

(भा) स्पष्टम् ॥ १०२ ॥

(सू) **उपधाय कपालानि सायंदोहवत्प्रातर्दोहं दोहयति । आतञ्चनापिधाने निधान च निवर्तते॥ ७ ॥**

[दोहकालपक्षौ]

(भा) उपधाय कपालानि प्रात[3]र्दोह [4]कृत्वाऽङ्गाराध्यूहनमित्युपदेश [5]अकृत्वाध्यूहनमितिन्याय ॥ ७ ॥

---

(वृ) **पर्णव–त्तिः**—पर्णवल्कमुते[6]त्यत्र ग्रहणान्मन्त्रैकदेशलोप. । इतरयो[7] कार्त्स्न्येन निवृत्तिः । पर्णवल्कशब्दयोगात् । अतश्शमीशाखाया पर्णवल्कनिवृत्तिरेव ॥

**पवित्राभिधानादनिवृत्तिरित्युपदेश इति**—पवित्रपर्णयोरुभयो प्राधान्यात्पवित्राभिधानमाश्रित्यानिवृत्तिरिति ॥ ५ ॥

[पक्षद्वयोपपत्तिः]

**उपधायकपा — त्युपदेशः**— [8]उपधाय दोह इत्यानन्तर्यविधानात् ॥ ६ ॥

**कृत्वाध्यूहनमिति न्याय इति**—कपालसस्कारतया तदङ्ग-

---

[1] दनिवृत्तिरुपदेश –ग [2] तयैवेति शाखान्तरस्य निरास पवित्रस्यैवेत्येके। गवा प्रस्थापनादित्वर्थलोपान्निवृत्त रात्रावसञ्चारात् (रु) [3] दोहोऽकृत्वाङ्गारा– घ [4] ध्यूहनमित्युपदेश [5] अकृत्वोपदेश –ग [6] त्यस्य (मु रा) [7] इतरयो 'अथ पर्णस्सोम' 'इमौ पर्णमिति' 'आपो देवी 'रिति मन्त्रे कार्त्स्न्येन (मु रा) [8] उपधाय दोहदोषह? इ–घ.

(सू) **नासोमयाजी संनयेत् संनयेद्वा ॥ ८ ॥**

[सान्नाय्याग्नीषोमीयविकारव्यवस्था]

(भा) असन्नयतस्सान्नाय्यविकारा अपि न भवन्ति । अग्नीषोमीयविकाराश्चासोमयाजिनः । वचनात्तु भवन्ति यथा पशुचातुर्मा[1]स्यानीति क्रमात् ॥

---

(वृ) त्वादध्यूहनान्त उपधानसमाप्ति[2]रिति ॥ ७ ॥

[भाष्योक्तव्यवस्थोपपत्तिः]

**असन्नयतः–याजिनः इति–अस्यार्थः**—सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवदिति न्यायात् । सोमयाज्येव सन्नयेदाग्नेयो वै देवतया ब्राह्मणस्स सोमेनेष्ट्वाग्नीषोमीयो भवतीति च सोमयागोत्तरकालस्य सान्नाय्याग्नीषोमीयाङ्गत्वात् [3] तद्विकाराणा चा[4]धिकारस्तत्कालसंपादनसमर्थस्यैवेति । विकृतिष्वपि तत्काल[5]प्राप्तस्तत्संपादनसमर्थस्यैवेति[6] । असोमयाजिन इति वक्तव्ये असन्नयत सान्नाय्यविकारा इति वचनमसोमयाजिनोऽपि सन्नयनविधानात् ॥

**वचनात्तु भ—क्रमात्**— अस्यार्थः — असोमयाजिनोऽपि भवन्ति वचनाद्विकृतयः ; यथाऽऽग्रयणपशुचातुर्मास्यान्याधानोत्तरकाल क्रमेणोपदेशाद्भवन्ति । नैष क्रमोऽनुष्ठाने प्रमाणम् आधानात्प्रागेव दर्शपूर्णमासोपदेशादिति न वक्तव्यम् ; दर्शपूर्णमासयोः स्वरूपमात्रं प्रागुक्तम् ; [7] अनुष्ठान तु दर्शपूर्णमासावारप्स्यमान इत्यत्रोपदिश्यते । तथा चाश्वलायन· ‘दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेन’

---

[1] स्यानि च–क. ख. [2] रित्युपदेश –ग [3] तद्विकाराणा च नाधिकारस्तत्कालप्राप्तिस्तत्कालसं (मु रा) [4] धिकारस्य तत्कालप्राप्तिस्तत्कालसंपादनसमर्थस्यैवाधिकार इति-क. [5] लप्राप्तेस–क. [6] स्यैवाधिकार इति–क. [7] अनुष्ठानक्रमस्तु–घ.

[इन्द्रमहेन्द्रयोगयोर्नियमः]

(सू) [1]नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रिय इत्युक्तम् ॥ ९ ॥ ३४ ॥ १३५ ॥

(भा) शुश्रुवान्-[2]त्रिवेद·। ऋचस्सामानि यजूꣳषि साहि श्रीरिति, श्रुतवा-

---

(वृ) इति। सोमयाजिनो [3]मृतभार्यस्य पुनर्दारग्रहणोत्तरमग्नीषोमीयसान्नाय्ये भवत एव न [4]पत्न्यधिकारान्निवर्तते। [5]स्त्रीणां पतिप्रयुक्ताधिकारोपजीवनात्। तथा च क्षत्रियाया अग्नीषोमीयेऽधिकारदर्शनम्, अप्रधानत्वाच्च। यदा वाऽङ्गेन विधुरतां नीयादिति यजमानस्याङ्ग पत्नीति दर्शनात्। तथा त्रयोदशरात्रमहतवासा यजमान स्वयमग्निहोत्र जुहुयात्। अप्रवसन्नैव सोमेन [6]पशुना वेष्ट्वेति पशु ॥

[गतश्र्यादि पदार्थो भाष्योक्तव्यवस्थोपपत्तिश्च]

त्रयो वै गतश्रिय इत्यस्य व्याख्या—

**शुश्रुवान्—श्रीरिति**—गता प्राप्ता श्रीर्यस्य स गतश्रीरिति निर्वचनाच्च। श्रीशब्देन वेदत्रयाभि[7]धानाच्च ॥

**श्रुतवांश्च**—'शुश्रुवासो वै कवय·' '[8]कवि क्रान्तदर्शी' इति वचनात्। [9]य एव त्रिवेद स एव शुश्रुवान् गतश्रीर्भवति। श्रुतत्रय्यर्थ इत्यर्थ· ॥

---

[1] अथ सान्नाय्यदेवताव्यवस्था ब्राह्मणोक्ता दर्शयतीत्यवतारयाते रुद्रदत्त। सा हि श्रीरित्यत्र ऋगादिसमुच्चयग्राहकतामानाभावात् गोहिरण्याद्यैकैककृतधनित्वपरलोकोक्तिनिदर्शनेन च अत्रत्यभाष्यकृदभिप्रेतमर्थमविस्रब्धव्यं चाह स एव [2] इद रुद्रदत्तो नेच्छति किं तु एकवेदविदमपि गतश्रिय मन्यते त्रिवेदी (रामा) त्रिवेदो ब्राह्मण—क [3] न पुनर्दार-घ झ [4] न पत्न्यधिकाराग्निर्वर्तते [2]—झ [5] स्त्रीणा तु—झ [6] पुशुनावेति—घ [7] धानाच्च। श्रुतवांश्च, शुश्रुवा—घ. [8] कविर्वेदप्रान्त—क. [9] य एव (सु रा)

(भा) श्व। ग्रामणीर्महत्तरो वैश्यानाम्। [1] राजन्य –अभिषिक्तस्य क्षत्रियस्य पुत्र'। यो वै स्वा देवतामित्यत्र गतश्रियो वाद। व्रातपतीं कृत्वा इन्द्रयाजिन इन्द्रो महेन्द्रो वा। इतरस्य महेन्द्र एव ॥ १०५ ॥

(सू) [2] **और्वो गौतमो भारद्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन् ॥ १० ॥ ३५ ॥ १३६ ॥**

[3] और्वादयोऽकृतसोमा इन्द्रयाजिन एव ॥ १० ॥

---

(वृ) **ग्रामणीर्महत्तरो वैश्यानामिति**- श्रीशब्दस्य लोके धनसमृद्धौ वृत्तेः तद्वानपि गतश्री ॥

**राजन्योऽभिषिक्तस्य पुत्रः**—तस्यापि धनयोगाद्गतश्रीत्वम् ॥

**यो वै स्वां - वादः**–संवत्सरमिन्द्रामिति नियम विविशेषत्वात् ॥

**व्रातपतीं–महेन्द्रोवा**-- इज्येत इति शेष'। ततोऽधिकाम यजेतेत्यस्या श्रुतेरर्थः ;—संवत्सरमिन्द्रयाजनो व्रातपत्युत्तरकालं [4] इन्द्र महेन्द्र वा। तयोरनियमः।

**इतरस्य महेन्द्र एव**—गतश्रिय.। तथा महेन्द्रो देवतेति नियमात् ॥ ९ ॥

**और्वादयो- याजिन एव**–गत[5]श्रियः। [6] एषामग[7]तश्रीणामपि सोमादूर्ध्वं महेन्द्र एव ॥ १० ॥

---

[1] अभिषिक्तस्यान राजन्य I क. माभिषेकस्यक्ष त्रियस्य पुत्र II ख. आभिषिक्तस्य पुत्र –ञ. [2] अथ गतश्रियामपि मध्ये केषां चिच्छाखान्तरोक्तं विशेषमहित्यवतारयति रुद्रदत्त' [3] रुद्रदत्तस्तु इदमेवोपपाद्य ' मचाय कल्पः पूर्वोक्तेन वा विकल्पते शाखान्तरत्वात। व्यवस्थितोऽयं विकल्प और्वादीनामित्यन्ते ' इत्याह. [4] इन्द्रमहेन्द्रयोरनियम -क. ख ग. घ ञ. [5] श्रियोऽपि–क ख. ग घ. ञ [6] अगतश्रीणामेषामपि–(मु रा.) [7] तश्रियोऽपि–ञ.

(सू) [1]यो वा [2]काश्चित्[3] ॥ ११ ॥ ३६ ॥ १३७ ॥

(सू) [4]ततः संप्रेष्यति परिस्तृणीत परिधत्ताग्निं परिहितोऽग्निर्यजमानं भुनक्तु। अपाꣳ रस ओषधीनां सुवर्णो निष्का इमे यजमानस्य सन्तु कामदुघा अमुत्रामुष्मिन् लोके इति ॥ १२ ॥ ३७ ॥ १३८ ॥

(सू) [5]परिस्तरणीमेतामेके समामनन्ति ॥ १३ ॥

[परिस्तरणी पक्षे विशेषः]

(भा) प्रत्यग्नि मन्त्रावृत्तिर्यदि परिस्तरणी ॥ १३ ॥

(सू) [6]उदगग्रैः प्रागग्रैश्च दर्भैरग्नीन् परिस्तृणाति* [7]

* उदगग्राः पश्चात्पुरस्ताच्च ॥ १४ ॥

---

(वृ) योवाकश्चित्—इत्यस्य द्विधा योजना,—और्वादिव्यतिरिक्तानामगतश्रीणामपि सोमादूर्ध्वं महेन्द्र एव। अथवा और्वादीनामेव गतश्रीरगतश्रीर्वा सोमादूर्ध्वं महेन्द्रं यजेतेति ॥

[संप्रैषोद्देश्यादि]

सप्रेष्यतीति वचनादाग्नीध्रं प्रति संप्रेष्यति। संप्रैषस्तु पक्षार्थ एव ॥ १२ ॥

---

[1] अथेमं विधिं सर्वेषा गतश्रियामगतश्रिया च विकल्पयतीत्यवतारयामास रुद्रदत्त [2] काश्चित्तु—क [3] अनन्तरमित्यादेरनुषङ्गोयजेतेति विपारिणामश्च (रु). [4] अध्वर्योरन्यस्य परिस्तरितुरवचनात्स्वयमात्मानमनुजानीयादितिवत् आत्मन एव सस्कारार्थस्सप्रैष। तेनाध्वर्युरेव परिस्तृणाति। सप्रैषमन्त्रस्तूच्चैरेकश्रुत्या सकृद्भवति। (रु) [5] अस्मिंस्तु कल्पे मन्त्र करणत्वादुपांशुत्वातुस्वर्येण प्रत्यग्नि भवति (रु). [6] तेषु पश्चात्पुरस्ताच्च ये दर्भा ते उदगग्रा भवन्ति। तत्र दक्षिण पक्ष उपरिष्टात् भवत्यधस्तादुत्तर इति भरद्वाज (रु) [7] आधानक्रमेण परिस्तृणातिसर्वान् द्वयोरेव तु परिस्तरणमुक्त ब्राह्मणे (रु)

[परिस्तरणे क्रमाविवक्षादि]

(भा) [1] न क्रमार्थः । पश्चा [2] त्पुरस्तादपि परिस्तरणम् । तदा चाहवनी-[3] यादि परिस्तीर्य. पूर्वश्चाग्निरपरश्चेति ॥ १४ ॥

(सू) [4] एतत्कृत्वोपवसति ॥ १५ ॥ ४० ॥ १४१ ॥

[उपवासेवर्ज्यम्]

भा एतत्कृत्वाऽऽग्राम्येभ्य उपवसति [5] आरण्याशन करोति ॥ १५ ॥

---

[क्रमाविवक्षाफलम्]

(वृ) **न क्रमार्थः**—पश्चात्पुरस्ताच्चेति वादो न क्रमपर. । अत. परिस्तरणसमाप्तिः प्राग्वोदग्वा । उदगग्रानियमार्थः । अत्रोदगग्रानियमादन्यत्र प्रागग्रैर्दर्भैरग्निं परिस्तृणातीत्यर्थात्सिध्यति । द्वयोरपि परिस्तरण-पक्षे—

**तदाहवनीयादि परिस्तीर्यः**—पूर्वश्चापरश्चेति क्रमनिर्देशात् ॥

[एतत्कृत्वेति पदस्य फलम्]

**एतत्कृत्वा** [6] आग्राम्येभ्य **उपवसति**। उपदेशादेव क्रमे सिद्धे एतत्कृत्वेति पुनरुपादानं अन्यत्र यजमानस्य रात्र्युपवासनिषेधार्थम् ।

[परिस्तरणोपवासकर्त्रैक्याविवक्षा]

यदनाश्वानुपवसेत्पितृदेवत्यस्स्यादिति दर्शनान्न समानकर्तृतापरिस्तरणोपवासयो॰ । साय परिस्तीर्यमाणेषु जपतीति कार्यान्तरविधानात् ॥

---

[1] न क्रमार्थो—ख. ञ [2] नक्रमार्थ पश्चात्पुरस्तादिति द्वयोरापि—ख ञ
[3] नीयादि॰—क ग. [4] यदेतदग्रथन्वाधानाादपरिस्तरणान्त कर्मोक्ति एतावति कृते यजमान उपवसति । अथवा एतत्परिस्तरण कृत्वेत्यर्थ । श्वोयागार्थोऽग्निसमीपे नियमविशिष्टोवास उपवास । नियमाश्च वक्ष्यन्ते (रु) [5] आरण्यान्वाश्नाति—ग
[6] त्वाग्राम्येभ्य ?—घ

(सू.) [1] अग्नयन्वाधानं [2] वत्सापाकरणमि[3]ध्माबर्हिर्वेदो वेदिः [4]। प्रागुत्तरात्परिग्राहात्कृत्वा श्वोभूते आप्यलेपं निनीयोत्तरं [5] परि[6]गृह्णीयात्परिस्तरणं च पूर्वेद्युरमावास्यायां पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः [7] १६ ॥ ४१ ॥ १४२ ॥

[ वेद्यादिषु कालक्रमव्यवस्था ]

(भा) वेदि· परिस्तरण च पूर्वस्मिन्नहनि अमावास्यायाम् । वेदिसस्कारांश्च प्रागुत्तरात्परिग्राहात् [8] आप्यलेप निनीयोत्तरपरिग्रहणम् [9] ।

---

(वृ) वेदिः परिस्तरणं च पूर्वेद्युरमावास्यायामिति—वेदिः परिस्तरणं च पूर्वेद्युरिति सूत्रान्वय । वेदिसंस्कारश्च प्रागुत्तरात्परिग्राहात् कृत्वेति—वेदो वेदिरित्युक्तस्य वेदिकरणस्यावधिनिर्देशः ॥

आप्यलेपं–ग्रहणमिति—न्यायप्राप्तानुवाद· ॥

---

[1] एवं तावद्यथाब्राह्मणमुपवासप्रकार उक्त तत्रैवेदानीं शाखान्तरीय विधिं दर्शयतीत्यवतारयति (रु) [2] वत्सापाकरणशब्देनात्र सर्वपूर्वोक्तदोहतन्त्रलक्षणा. [3] बर्हि· प्राथम्येऽपीध्मशब्दस्याजाद्यदन्तत्वात्पूर्वनिपात . [4] वेदानन्तरं वेदिकर्म तच्चोत्तरपरिग्राहात्कृत्वा विरम्य शेषं श्वोभूते आप्यलेपनिनयनानन्तरं कुर्यात् । तत उत्तरकाले परिस्तरणं चेति । पौर्णमास्या त्वन्वाधानादित्रयमेव पूर्वेद्यु । सर्वमन्यदिध्माबर्हिराद्युत्तरेद्यु (रु) [5] परिग्राहं परिगृ–क [6] ग्राह्यं परि–ज. [7] अत्र 'एतौ कल्पौ किमिति वैकल्पिकौ व्याख्यायेते? विषयव्यवस्थयेमाविव नित्यौ भवितुं युक्तौ विकल्पलिङ्गाभावात्' इति आशङ्क्य 'पूर्वत्र वेदेरनुक्तत्वात् पुरा बर्हिष आहर्तोरिति लिङ्गविरोधात् मन्त्रब्राह्मणयो अनन्तरमाम्नातक्रमाया वेदेरमावास्याया प्रतिकर्षविरोधात् अविशेषश्रुतयोरिध्माबर्हिषो पौर्णमास्यां उत्तरेद्युरुत्कर्षविरोधाच्च कल्पान्तरक्रमादिनियमविकल्पाभ्या चतुर्णामपि कल्पानामुपन्यासाच्च यथोक्तव्याख्या साधीयसी' इत्याह रुद्रदत्त [8] ग्रहात् कृत्वा आप्य–ग [9] ग्राह –ख. घ. परिग्रहादि·–ग.

(भा) अन्वाधानादि पूर्वेद्युश्श्वोभूते इध्माबर्हिर्वेदिश्च । उपदेशश्च[1] पूर्वेद्युरिध्मा बर्हिः करोतीत्यविशेषवचनात् पुरा बर्हिष आहर्तोरिति लिङ्गाच्च एतान्यपि लभ्यन्ते पूर्वेद्यु. । पूर्वेद्युर्वेदिकरणपक्षे न सादनप्रोक्षणे ; स्फ्यवेदयोः पाठक्रमबाधात् ॥ १६ ॥

(सू) **सद्यो वा सद्यस्कालायां सर्वं क्रियते**[2] **॥१४३॥**

॥ इति चतुर्दशी खण्डिका ॥ चतुर्थ पटल ॥

---

**[सद्यस्कालपदार्थः कृत्यव्यवस्था च]**

(भा) [3] सद्यस्काला–अपर्यावर्त आदित्ये यस्यां पर्वकाल. सद्य –

---

[श्वोभूतेकृत्यक्रमः]

(वृ) **अन्वाधानादीनि–वेदिश्च—श्वो**भूते पाणिप्रक्षालनात्पूर्वं इध्माबर्हिर्वेदान् कृत्वा पाणिप्रक्षालनादि आप्यलेप निनीय वेदिकरणम् ॥

[बाधहेतुः]

**उपदेशस्तु–क्रमबाधादिति**-पात्रासादनप्रोक्षणयोरुत्तरेद्यु पाठात्॥

**सद्यस्काला–अपर्या–वेद्युर्वा इति** — अग्न्यन्वाधानादीनि

[विकल्पविषयः]

क्रियन्त इति शेष. । अतोऽन्वाधानादेरेव कालविकल्प. नेज्याया. ॥

**[सद्यस्कालत्वे विषयव्यवस्था]**

प्रमादादौपवसथ्येऽतिक्रान्ते प्रधानभूतयागकालानतिपत्तौ तस्मिन्नेवान्वाधानादीनि क्रियन्त एवाविरोधात् । अमावास्यायां तु दध्यनिवृत्तेः

---

[1] शस्तु–क [2] आनन्तर्यादत्र पौर्णमास्यामित्येव सबध्यते एकवचनात् भरद्वाजादिभिर्व्यक्तमुक्तेश्च। सद्यस्कालानुवादेन शाखान्तरीयसद्यस्कालविधिस्सूचित । सद्यः समानेऽहनि प्रधानस्य काले यजनीयेऽहनि सर्वमग्न्यन्वाधानादिक्रियते न किंचिदपि पूर्वेद्यु (रु) [3] केचित्तु पूर्वाह्णे पूर्यमाणचन्द्रा प्रतिपद सद्यस्कालेत्याचक्षते तत्र मृग्यं प्रमाणम् (रु)

(भा) समानेऽहनि यस्यां पौर्णमासी प्रतिपच्च तस्यां [1] सद्यो वैतानि,

(वृ) प्रधानविरोधादापद्यपि न सद्यस्कालत्वम् । दुग्धे दोहनमन्त्रा इति भरद्वाजमतात् । लौकिक [2] एव वा दधनि मन्त्रप्रयोगोपपत्तेरमावास्याऽपि सद्यस्कालाऽपि लभ्यते ॥

[उक्तार्थाक्षेपः]

ननु सन्धिमभितो यजेतेति श्रुते· कर्ममध्ये यथापर्वसन्धिस्तथा कर्तव्यम् । अपि च पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्ययेति प्रतिपत्पर्वसन्धौ यागविधानेनानुष्ठानासभवाद्धि तत्सबन्धिकालान्तरे यागसंभव इति? सत्यम्;

[उक्तवचनतात्पर्यम्]

एतानि वचनानि सधिलक्षितपूर्वापरतिथिपराणि । इष्टिपश्वादीनाममावास्यादि सत्यपि श्व. पूरितादिपक्षे श्व. प्रकृतिमिष्ट्वा आरम्भमध्ये सन्ध्यभावे अनुष्ठानविरोधात् ॥

[न तेषां सन्धिमदहोरात्रत्वम्]

तथा आवर्तनात्परत. पर्वसधौ पशुनेष्ट्वा प्रकृत्यारम्भे मध्ये सन्ध्यभावेऽपि प्रकृत्यनुष्ठानदर्शनाच्च न सन्धिमदहोरात्रपराणि । औपवसथ्ये पर्वसंधौ श्वो यागे सध्यभावेऽपि पौर्णमास्या पौर्णमास्येत्यसंगतेः ॥

[यागकालनिष्कर्षः]

अतो मध्याह्नादर्वागेव पर्वसन्धौ पञ्चदश्या यागानुज्ञानात् मध्याह्नात्परतः कलामात्रे सन्धिपक्षे चोत्तरेद्युर्यागविधानाच्च पर्वणश्चतुर्थो भागः प्रतिपद आद्यास्त्रय. पादाश्च यागकाल. ॥

[दर्शे पक्षान्तरे विशेषः]

अमावास्याया श्वो न द्रष्टार इत्यस्मिन् पक्षे अतिक्रान्त औपवसथ्येऽपि श्वस्सन्धिसद्भावान्मुख्यकालानुवृत्तिरेव ॥

---

1 क्रियन्ते—क 2 एव दधनि—ख, ग.

(भा) क्रियेरन् अग्न्यन्वाधानादीनि पूर्वेद्युर्वा। सर्वं च क्रियते। [1]शय्वन्ता [2]द्यः खण्डसंस्था [3] उपदेशस्सद्यो वेति [4]सर्वत्र विकल्प सद्यस्काला विकृतिः। तस्यां च सर्वं क्रियते कपालविमोचनान्तम् ॥ १७ ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये तुरीय पटल ॥

---

[आपदि विशेषः]

(वृ) अङ्गगुणविरोधे च तादर्थ्यादिति न्यायाच्चोत्तरेद्युः राजभयदेशविप्लवदेहविनाशादिसभावनायां पञ्चदश्यां चतुर्थांशादिकालालाभे पूर्वेद्युरपि यागः। अथ आपदि प्रक्रान्तेऽपि यागकालानागमे विरम्य आपदि गतायां यथाविधानमनुष्ठानम् ॥

[विकल्पनीया.]

**सर्वं च क्रियते—सर्वत्र विकल्प इति**—सद्यस्कालायामपि खण्डसंस्थाः सर्वा विकल्पन्ते।

[विशेषपरिग्रहनिदानम्]

**सद्यस्काला विकृतिरिति**—तस्यां सर्वं क्रियत इति वक्तव्ये सद्यस्कालायामिति पुनरुपादानात् यदीष्ट्या यदि पशुना इति पाक्षिकसद्यस्काला विकृतयो न गृह्यन्त इत्यर्थः।

[सर्वपदार्थसङ्कोच.]

**तस्यां च सर्वं—चनान्तम्**—अशनमुभावग्नी अरण्याशनमित्यादि निवर्तते ॥

इति. श्री. कौशिकेन रामेणाग्निचिता विरचितायां धूर्तस्वामिभाष्यवृत्तौ तुरीय. पटल

---

[1] न शंय्वन्ता.—क ख. ग [2] य्वन्तादीनि—क तेन लभ्यन्ते शंय्व—क. नलभ्यन्ते—ज झ. अ. [3] सस्थान्तराणि—क. [4] सर्वस्या—क.

**(सू.) उदित आदित्ये पौर्णमास्यास्तन्त्रं [1] प्रक्रमयति प्रागुदयादमावास्यायाः ॥ १ ॥ १ ॥ १४४ ॥**

[तन्त्रपदार्थः]

(भा) तन्त्रमित्य[2]ङ्गाना समुदाय । तत्प्रक्रमयति आरभते ॥ ॥ १ ॥

**(सू.) [3] चत्वार ऋत्विजः ॥ २ ॥ २ ॥ १४५ ॥**

[चतुर्ग्रहणफलम्]

(भा) कर्तृसंख्याग्रहणाद्बहुवचनचोदिता[4]नां चतुर्णामृत्विजां बहुत्वम्। यथा हविश्शेषभक्षणे ॥ २ ॥

---

**तन्त्रमित्यङ्गानां—आरभते—**[5] कर्तुम् ।

**कर्तृसंख्या—बहुत्वम्—**नान्यबहुत्वमिति । चत्वार ऋत्विज इति सख्याग्रहणान्नान्य आगमयितव्यो यजमानः पत्नी वा । न च त्रिभिरेव समाप्यते प्रथमं वा नियम्येत इति न्यायात् ॥

[दृष्टान्तार्थः]

**यथा—क्षणे**—ऋत्विजो हविश्शेषान् भक्षयन्तीत्यादौ ऋत्विजो भवन्तीत्येतावतैव अर्थप्राप्ता ऋत्विजो व्रियन्त एव । ब्रह्मणोऽप्यत्रैव, तूष्णीं वरण मानुषस्य । उत्तरत्र तु दैवस्य । भूपते इत्यादि मन्त्र-लिङ्गात् होतृवत्[6] ॥

---

[1] प्रक्रमयति यजमानोऽध्वर्युणा स्वार्थिकोवाणिच् । 'गत्यार्थाश्चेति' चुरादौ, पाठात् । तत्रोदितहोतुरपि प्रागुदयात्प्रक्रमोऽमावास्याया । होष्यते तु तन्त्रमध्येऽपि स्वकालेऽग्निहोत्रम् । एवमन्यत्र विप्रक्रान्त इति लिङ्गात् (रु) [2] त्यङ्गसमु—क [3] यजमानेन परस्परेण चासमासार्थं वचनम् ब्राह्मणानुकरणार्थं वा (रु) [4] चोदिताङ्गु ख ग. [5] (मु. रा न दृश्यते) [6] 'अत्रैव होतृवरण आग्नीध्रवरणं च । अमावास्यायास्तन्त्रे तु आग्नीध्रवरणं वेदकरणानन्तरम्' इत्यधिकं दृश्यते मु. रा.

(सू) पूर्ववदग्नीन् परिस्तृणाति [1] यद्यपरिस्तीर्णा भवन्ति ॥ ३ ॥ ३ ॥ १४६ ॥

[यदि शब्दस्वारस्यम्]

(भा) यद्यपरिस्तीर्णा भवन्तीति सद्यस्कालायाम् । असद्यस्कालायामपि प्रमादे प्रायश्चित्त न भवतीत्युपदेशः ॥ ३ ॥

(सू) कर्मणे वां देवेभ्यश्शकेयमिति हस्ताववनिज्य यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संतता-[2]मुलपराजीꣳ स्तृणात्याहवनीयात्तूष्णीं दक्षिणामुत्तरां च ॥ ४ ॥ ४ ॥ १४७ ॥

[स्तरणाशक्तिकल्पः]

(भा) कर्मणे वामिति लिङ्गात् अशक्तौ हस्तद्वयेन कर्म । उलपाः उशीरतृणानि [3] लूनतृणानि वा । तेषां स्तरण संततम् ॥ ४ ॥

(सू) दक्षिणेनाहवनीयं ब्रह्मयजमानयोरासने प्रकल्प-

---

(वृ) [4]यद्यपरिस्ती—त्युपदेशः—इति परिहार । सद्यस्कालायामिति विशेषानुवादात् सद्यस्कालायां हस्तावनेजनात्प्रागेव परिस्तरणप्राप्तेः परिस्तरणस्य विधानानर्थक्यशङ्कायाम् [5] ॥

कर्मणेवां—कर्म—कर्तव्यम् ॥

[राजशब्दस्वारस्यम्]

उलपाः—संततम्—यथा राजित्रय व्यक्त भवतीत्येवाशिथिलम् राजिशब्दात् ॥

---

[1] यद्यपरिस्तीर्णा भशान्ति इत्यनेन परिस्तरणस्य कालविकल्पस्सूच्यते । अर्थान्तरस्यानिरूपणात् भरद्वाजादिभिरत्रैव परिस्तरणवचनाच्च (रु). [2] उलप – शुष्कं बर्हिस्तृणम् उशीरतृणमित्यन्ये (रु) [3] उलूकतृणमनिवा—क विशेषनुपादानात्–अ. [5] शङ्काया –घ. तत्परिहारभूतमिद सूत्रम् । (मु. रा पा).

(सू) यति पूर्वं ब्रह्मणोऽपरं यजमानस्य ॥ १४८ ॥

(भा) गतार्थः ॥ ५ ॥

(सू) उत्तरेण गार्हपत्याहवनीयौ दर्भान् संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि [1]प्रयुनक्ति दशापराणि दश पूर्वाणि ॥ ६ ॥ ६ ॥ १४९ ॥

[द्वन्द्वत्वमतिभेदः]

(भा) द्वन्द्वं प्रकरणधर्मः । केचित् द्वन्द्वं दशसंख्याया [2] एवेच्छन्ति संख्याया अर्थवत्त्वाय । एककार्याणां बहूनामप्येकत्वम् । यथा कपालानां दशत्वसंख्या ॥ ६ ॥

---

[प्रकरणधर्मतास्वरूपम्]

(वृ) द्वन्द्वं प्रकरणधर्म इति—सर्वपात्राणामत्र साद्यमानानां अन्वाहार्यस्थाल्यादीनामपि द्वन्द्वत्वम् ॥

[भाष्योक्तपक्षान्तराशयः]

केचित् द्वन्द्वत्वं दशसंख्यायामेवेच्छन्ति । संख्याया अर्थवत्त्वाय—दशापराणि दश पूर्वाणीति दशभ्योऽधिकानामपि साद्यमानत्वात् सङ्ख्यानियमोऽनर्थकस्स्यात् । अतो दशानामेव द्वन्द्वनियमार्थं सङ्ख्योपादानमिति ॥

एककार्याणां बहूनामप्येकत्वम्—[3]द्वन्द्वनिधाने ॥

[दृष्टान्तोपपत्तिः दृष्टान्तान्तरं च]

यथा कपालानां दशत्वसङ्ख्या — स्फ्येन सह कृत्वेति यथा कपालानां स्फ्येन सह द्वन्द्वकरणे कपालानामेकत्वं कृत्वा दशसङ्ख्यानिर्देशः । दोहसंस्कारार्थत्वात्प्रातर्दोहपात्राणां उपवेषेण सह प्रयोगः । शम्ययाऽऽहननपक्षेऽश्मनो निवृत्तिः । पात्रप्रयोगात्प्राक्प्रणी-

---

[1] प्रक्षाल्यैव प्रयुनक्तीति कल्पान्तराणि (ट) [2] ख्यायामेवे–ग. [3] त्वम्, आद्वन्द्वनिधानात्–क.ख. व्यमापाद्वन्द्वनिधान –झ.

(सू) [1]**स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुवं जुहूमुपभृतं ध्रुवां वेदं पात्रीमाज्यस्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि ॥ ७ ॥ ७ ॥ १५० ॥**

[स्फ्यादिस्वरूपादि]

(भा) स्फ्योऽस्याकृतः। [2]भिन्नस्य कपालानि। अभिन्नस्यापि रौहिणकपालवदेके। शूर्पमैषीकम् ; वर्षवृद्धा इषीका इति लिङ्गात्। वैणव

---

(वृ) तानयनपक्षेऽन्वाहार्यस्थाल्या सहेडापात्रप्रयोग. ॥

**स्फ्योऽस्याकृतिरिति**—असेरिवाकृति. स्फ्यस्य ॥

**भिन्नस्य**—घटादे ; **कपालानि**—लौकिकार्थपरिग्रहणात्।

**अभिन्नान्यपि—वदेके**—एतस्या एव मृदो रौहिणकपाले करोतीति दर्शनात् मृदा कपालानि **कर्तव्यानीत्येके** ॥

[श्रौतलिङ्गनिर्वाहः स्वाशयश्च]

**शूर्पमैषीकम्—वर्षवृद्धा इषीका इति लिङ्गादिति**—वर्षवृद्धमसीति शूर्पो[3]पोहने विनियोगात् वर्षवृद्धा इषीका इति वाक्यशेषादैषिकि शूर्पम्। चातुर्मास्ये त्वैषीकशूर्प इति दर्शनात् अन्यत्र लोकसिद्धमिति सूत्रकारमतिः ॥

---

[1] एवमत्र संख्येयोपदेशादेव सिद्धे पूर्वसूत्रे दशत्वसख्यावचन विकृतिष्वनयोर्दशकयोर्मध्ये पात्रविवृद्धै सत्या तैस्सहापि दशत्वसपत्तिरेव यथास्यान्नाधिकासख्येति। तत्र च लिङ्ग कपालभूयस्त्वेऽपि 'एतानि वै दशयज्ञायुधानि' इति दश त्ववचनम्। तेनाग्रयणादावुलूखलादीना नानात्वेऽपि कपालवत्समानकार्याणां अनेकेषामप्यैकैकवत्करणेन द्वन्द्वप्रयोग। एवं पूर्वदशकेऽपि पश्वादिषु द्वितीया जुहू द्वितीयामुपभृतमित्यादौ जुह्वादीना द्रष्टव्यम् (रु). [2] भिन्नस्य घटादे अभिन्नान्यपि—**ग ख ग घ** [3] पोपहनने (मु. रा)

(भा) नलमयं वेति भारद्वाज.[1] । शम्या युगाग्रे[2] या क्षिप्यते । [3] दृषत्पाट्टिका [4] श्लक्ष्णिका । उपला--पोतिका । अपराणि पूर्वाणीति दिङ्नियम. परस्परं प्रति ॥ ७ ॥

(सू) **तान्युत्तरेणावशिष्टानि[5]* *अन्वाहार्यस्थालीमश्मानमुपवेषं[6] प्रातर्दोहपात्राणीति[7] ॥ १५१ ॥**

(भा) स्पष्टम् ॥ ८ ॥

(सू) *** प्रणीताप्रणयनं पात्रसऽसादनात्पूर्वमेके समामनन्ति ॥ ९ ॥ ९ ॥ १५२ ॥**

(सू) **खादिरः स्रुवः पर्णमयी जुहूराश्वत्थ्युपभृत् वैकङ्कती ध्रुवा । * [8] * एतेषां वा वृक्षाणामेकस्य स्रुचः कारयेत् । * * बाहुमात्र्योऽरत्निमात्र्यो वाऽ-**

---

(वृ) **शम्या–याक्षिप्यते** — अनडुद्ग्रीवासु । **श्लक्ष्णी** —[9] करणिका ॥

[पूर्वापरत्वव्यवस्था]

**अपराणिपू — प्रति** — पूर्वाण्यपेक्ष्य परत्व अपराण्यपेक्ष्य पूर्वत्वम् । दशत्वसङ्ख्यानिर्देशान्नावशिष्टानपेक्ष्यापरत्वम्[10] । नानाबीजे शूर्पोलूखलादिभेदेऽप्यर्थैकत्वेन द्वन्द्वताग्निहोत्रहवण्या ॥

---

[1] भरद्वाजमति –क [2] युगे–ग. [3] दृषत्पट्टक –ग I दृषत् स्पष्टा (रामा) II [4] श्लक्ष्णी–क [5] द्वन्द्वंन्याग्निप्रयुनक्तीत्यन्वय । [6] उपवेषमसन्नयत सन्नयत प्रातर्दोहपात्राणीत्येव सिद्धत्वात् । [7] इति शब्द प्रकारवचन एवं प्रकाराणि वेदयोक्त्र वेदाग्रादीनि. [8] एतेषा वृ–क सर्वेषामलाभे तेषामन्यतमेनापि सर्वास्स्रुच कारयेत् । स्रुग्ग्रहणेन स्रुवोऽपि गृह्यते स्रुचस्संमाष्टिस्रुवमग्रे इति लिङ्गात् एतावसदतामिति लिङ्गाच्च (रु) [9] यराणिकाकृति–क. (मु रा) [10] परत्वं पूर्वत्वं (मु. रा)

(सू) [1] ग्राग्रास्त्वक्त्रो बिला हंसमुख्यः* [2]* स्फ्यश्श-म्याप्राशित्रहरणामिति खादिराणि ॥ १५३ ॥

[स्रुवाद्याकारादि प्रमाणानि मतान्तराणि च]

(भा) अक्षमात्रं [3] स्रुव[स्यद्वारम्]स्योदरम् । स्रुगञ्जल्या[4]कारा ।

आयाम· पञ्चभागस्स्यात् द्विभाग· पात्रमुच्यते ।

पात्र— बिलम् ।

[5] त्रिभा[गो]ग दण्ड[इत्या]मित्याहुरेतदायामलक्षणम् ।

विस्ताराद्द्विगुण पात्र ग्रवाविस्तारमर्धत· ।

आयामात्पञ्चमो भागो बिलविस्तारः । [6] विस्तारार्धं ग्रीवादशमो भागः ।

[7] ग्रीवार्धं तु बिलं कुर्यादेतत्पात्रस्य लक्षणम् [8] ।

बिलस्योच्छ्रायो विंशत्यशः[9] इति स्रुचां शास्त्रान्तरम्[10] । प्राशित्रहरण गोकर्णाकृति चमसाकृति वा [11] विखनसो मतात् । स्फ्य शम्या च बाहुमात्राविति भरद्वाज । त्रिंशदङ्गुला शम्येति बोधायन· ।

---

(वृ) अक्षमा–द्वारम्—अ(क्षं)क्षः–पर्व । अङ्गुष्ठपर्वमात्र स्रुवस्य बिलम् । प्रणयनं चेत्पूर्वं पात्रससादनात् तत्र प्रयोगक्रमः ॥

---

[1] अग्रभागेऽग्रं मुख यासाता वायसपुच्छाहसमुखप्रसेचना इति भरद्वाज· । तथा अङ्गुष्ठपर्वमात्रबिलस्स्रुवो भवत्यर्धप्रादेशमात्रबिला स्रुच इति च (रु) [2] स्फ्योऽस्याकृति आदर्शाकृति प्राशित्रहरणं चमसाकृति वेति कात्यायन । शम्याकृतिस्समाख्यया व्याख्याता । बाहुमात्रा परिधयश्शम्याश्चेति भरद्वाज अङ्गुल्यधिकारे चत्वारोष्टकाश्शम्येति कात्यायन (रु) [3] स्रुवस्य धारा स्रुवस्याकार –ख ग. स्रुवस्याधार –घ [4] ल्याकृति·–क. ख ग घ [5] त्रिभागे दण्ड. [6] विस्तारार्धं ग्रीवामुखादधोभाग –घ [7] विस्तारार्धं (मु रा). [8] लक्षणम् । इति स्रुचा–क [9] त्यंश इति यावत् (मु रा) [10] शास्त्रान्तरं मयमतम् शास्त्रात्वायामात् ?–क ख ग घ. न्तरादायामादिलक्षणम्–घ. शास्त्रान्तरार्यीम् (मु रा) [11] विद्वज्जन-सम्मतात् (मु रा) विद्यमानसमनात् ?–क.

(भा) षट्त्रिंशदङ्गुलेत्यन्ये। प्रणयनं चेत्पूर्वं पात्रसंसादनात् ब्रह्म-यजमानयोरासने कृत्वा ब्रह्मवरण प्रणयन ततो दर्भास्तरणादि उत्तरेण गार्हपत्याहवनीयौ दर्भान् सस्तीर्येत्यादि प्रयोग । एकस्य स्रुच. सहस्रुवेण एतावसदतामिति लिङ्गात् ॥ १० ॥

(सू.) **वारणान्यहोमार्थानि भवन्ति ॥ ११ ॥ ११ ॥ १५४ ॥**

इति पञ्चदशी खण्डिका ॥

---

[पात्र्यां विशेषः]

(भा) वरणेन कृतानि । मृन्मयपात्री निष्टपनविधानात् ॥ ११ ॥

(सू.) **अत्र पूर्ववत्पवित्रे करोति यदि न [1] सन्नयति***
*** सन्नयतस्तु ते विभवतः [2] ॥ १॥१२॥१५५ ॥**

---

[लिङ्गलभ्यार्थः]

(वृ) **एकस्य स्रुचः–लिङ्गात् इति**—अस्यार्थ ,—एता असदन्निति स्रुचोऽभिमन्त्रयेति स्रुचामभिमन्त्रणे विनियुक्तस्य मन्त्रस्य स्रुवेऽपि प्राप्तिमङ्गीकृत्य सूत्रकारेणेहोपदेशात् । ब्राह्मणे स्रुचस्समार्ष्टि इति विधाय क्रमविधानपरे स्रुवमग्रे इति विधानाच्चैकस्य स्रुच. कारयेदित्यत्रापि स्रुक्शब्देन स्रुवस्यापि ग्रहणम् ॥

[नियमस्तत्फलं च]

**सू;–संनयतस्तु ते विभवतः**—कार्यान्तरेऽपि समर्थे । यानि विभवन्ति सकृत्तानीत्येव सिद्धे सनयतस्ते विभवत इति पुनर्वचन सायदोहे प्रयुक्ताना सान्नाय्यपात्राणां विभुत्वेऽपि पुन प्रयोगविधानात् पवित्रयोरपि पुन करणप्रसङ्गनिवृत्त्यर्थम् । अतः कश्चित्सन्नियोगशिष्टा-

---

[1] पात्रप्रयोगान्ते (रुं) [2] सनयतस्तु ये सायदोहार्थे ते एवाद्यापि कर्मणे प्रभवत (रु)

(सू) **वानस्पत्योऽसि देवेभ्यश्शुन्धस्वेति प्रणीताप्रणयनम्। चमसमाद्भिः [1] परिक्षालयति तूष्णीं कंसं मृन्मयं च। कंसेन प्रणयेद्ब्रह्मवर्चसकामस्य मृन्मयेन प्रतिष्ठाकामस्य गोदोहनेन पशुकामस्य। अपरेण गार्हपत्यं पवित्रान्तर्हितं चमसं निधाय तस्मिन् को वो गृह्णाति स वो गृह्णातु कस्मै वो गृह्णामि पोषाय व इत्यप आनयति ॥ २ ॥ १३ ॥ १५६ ॥**

[अधिकारिभेदे विशेषपक्षः]

(भा) गुणकामानामप्रवृत्तिर्विकृतौ । न तूपदेश ॥ २ ॥

(सू) **अपो गृह्णन् ग्रहीष्यंश्च पृथिवीं [2]मनसा ध्यायति॥ ३ ॥ १४ ॥ १५७ ॥**

---

(वृ) नामन्यतरापाये अन्यस्यापि निवृत्ति सूचिता । यथाऽन्वारम्भणीयाविकृतौ न स्यादित्यत्र सारस्वतचतुर्होतॄणामपि निवृत्ति ॥

तूष्णीं कसं मृन्मयामिति तु प्रकृतावूहाभावात् ।

[अप्रवृत्त्युपपत्त्यादि]

**गुणकामानामप्रवृत्तिर्विकृतौ इति**—गुणकामानां विकृतिष्वाश्रयसद्भावनिबन्धनाक्षेपत. प्राप्तिरपि नास्ति । गोदोहनादीनामाश्रयाभावात्। परमार्थतस्तु दर्शपूर्णमासावेवाश्रय इति मीमांसकोक्तेः[3] । तथाहि—गोदोहनादिसाध्यप्रणयनादिद्वारेणाग्नेयादिप्रधानसहितस्यैव गोदोहनादेः पश्वपूर्वसाधनत्वात् विकृतिष्वाग्नेयाद्यभावेन तत्सबन्धिरूप प्रणयनाद्याश्रयाभावात् । नतूपदेश इति । द्रव्यस्यापि प्रणयनादिक्रियामात्रानुरक्तापूर्वविषयत्वेन विधानोपपत्तेः । गोदोहनादीनामपि क्रतूप-

---

1 प्रक्षालयति—क  2 मनसेति वचनान्नवाचाकीर्तयनि । ध्यानं चात्रपृथिव्यापोग्रहीष्यामीति विशिष्टप्रकारं केचिदिच्छन्ति नतदादृत्यम्, यत्र हि विशिष्टध्यानमाचार्योमन्यते तत्र स्वय विशेष दर्शयति 'यददश्चन्द्रमसि कृष्णं तदिहास्तु' इति मनसा ध्यायेत् इत्यादि । अत केवलध्यानविधिषु न कश्चिद्विशेष (रु)
3 (जै. सू ३–६–१०)

(भा) अनयाऽप. पृथिव्यां ग्रहीष्यामि गृह्णामि प्रणयामि इति ध्यानमर्थसम्बन्धेन । अनयैवैनाः प्रणयतीति लिङ्गात् ॥ ३ ॥

(सू) [2] उपबिलं चमसं पूरयित्वा प्रोक्षणीवदुत्पूयाभिमन्त्र्य ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति संप्रेष्यति * *सर्वत्र [3] प्रसव उक्ते करोति ॥ ४ ॥ १५ ॥ १५८ ॥

(सू) प्रणीयमानासु वाचं यच्छतो यजमानश्चाध्वर्युश्चाहविष्कृतः ॥ ५ ॥ १६ ॥ १५९ ॥

---

(वृ) कारित्वादाक्षेपतो विकृतौ प्राप्तिरिति । गोदोहनं प्रणयनार्थं लौकिकं प्रयुज्यते खेलवालीवत् । मृन्मयकांस्येतु तदर्थं सपाद्ये ॥

[ध्यानस्यार्थसंबन्धोपपादनम्]

अनयाऽपः–संबन्धेनेति — [4] ग्रहणप्रणयनादिक्रिया अर्थः । पृथिव्या ध्यान करणत्वेन । [5] पृथिव्या ध्याने [6] क्रियमाणे क्रियासाधनत्वानुगुणेन तृतीयान्तेन ध्यानम् [7] ॥

अनयैवैनाः प्रणयतीति लिङ्गादिति—अनयेति तृतीयानिर्देशात् अपो गृह्णन् ग्रहीष्यन्निति पृथिवीध्यानस्य ग्रहणसबन्धित्वेऽपि अनयैवैना प्रणयतीति श्रुत्या प्रणयनसबन्धावगते साङ्गप्रणयनार्थत्व [8]श्रुत्या व्यवसीयत इति सूत्रकाराभिप्राय । अतो ग्रहणे प्रणयने च ध्यानम् ॥

उपबिलं चमसं पूरयित्वेति—किंचिन्न्यूनं पूरणम् ॥

सर्वत्र प्रसव उक्ते करोतीति—न प्रैषानन्तरम् । [9] प्रैषानन्तर वाग्विसर्गः ॥

---

[2] बिस्तम्–क ॥ उपबिल–आबिलसमीपात्–रु [3] प्रसव -अनुज्ञा–रु
[4] प्रणयनादि–क [5] 'पृथिव्या इत्यादि ध्यानम्' इत्यन्त क पु न दृश्यते ।
[6] क्रियमाणेन (मु रा) [7] ध्यानं करणत्वेन (मु रा) [8] श्रुत्याद्यनुमयित इति क.
[9] इद क पु न दृश्यते ।

(सू) को वः प्रणयति स वः प्रणयत्वपो देवीः प्रणयानि यज्ञꣳसꣳसादयन्तु नः इदं मदन्तीर्घृत-पृष्ठा उदाकुः सहस्रपोषं यजमाने न्यश्वतीरिति [1]समं प्राणैर्धारयमाणः स्फ्यनो[2]पसंगृह्याविषिश्चन् हरति ॥ ६ ॥ १७ ॥ १६० ॥

(सू) पृथिवीं च मनसा ध्यायति ॥ १६१ ॥

(सू) को वो युनक्ति स वो युनक्त्वित्युत्तरेणाहव-नीयमसग्ग् स्पृष्टा [3]दर्भेषु सादयति ॥ १६२ ॥

(सू) नेङ्गयन्ति नेलयन्त्यासग्गॅ् स्थातोर्दर्भैरभिच्छाद्य ॥ ९ ॥ २० ॥ १६३ ॥

(भा) इङ्गन–कम्पनम् । ईलन–क्षेपणम् ॥ ९ ॥

(सू) संविशन्तां दैवीर्विशः पात्राणि देवयज्याया इति सपवित्रेण पाणिना पात्राणि [4]संमृश्य ॥ १६४ ॥

---

[इङ्गनादिनिषेधव्यवस्था]

(वृ) इङ्गनं–क्षेपणं—आसस्थानात् । इडान्तादिखण्डसस्थाया अतः परं कम्पनादौ न दोष. ॥

---

[1] समं प्राणै –नासिकया सम (रु) [2] उपसंगृह्य–स्फ्येन च समुपसंश्लेष्य (रु) [3] द्रव्यान्तरेण (रु) [4] ता आप पिष्टसयवनार्था । तत्र तासा विनियोगात् दृष्टार्था-भविष्यन्ति न त्वदृष्टार्था अदृष्टकल्पनानवकाशात् पशूपसदादिषु संयवनाभावेन द्वारा-दर्शनाच्च । यथा तत्र तत्राह 'पवित्रे कृत्वा यजमान वाच यच्छेति सप्रेष्यति वाग्यत पात्राणि समृशतीति च । इष्टिविधेतुपशौ संयवनाभावेऽपि वचनादित्य-विरोध । तत्रापि पशुपुरोडाशार्थाभविष्यन्ति । तस्मात् पुरोडाशतन्त्रएवप्रणीता नान्यत्रेति सिद्ध भवति । अन्यत्तुमत ब्राह्मणे तासा रक्षश्शान्त्यादिद्वरा यज्ञरक्षार्थत्वेन स्तवनात् पाकयज्ञेष्वपि तद्विधानाच्च अदृष्टार्था एव सत्य प्रभुत्वात् सयवनाभावेऽपि स्मर्यन्ते । तस्मादनिवृत्तिस्सर्वत्रेति । तदुक्त भरद्वाजेन '·सर्वसस्थासु वा प्रणीता ' इति (रु)

[अभिमर्शनानुकल्पः]

(भा) [1] असभवत्यभिमर्शने पात्राणां मन्त्रावृत्तिः ॥ १६४ ॥

इति षोडशी खण्डिका ॥

---

(सू) वानस्पत्यासि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते वेषाय त्वेति शूर्पम् * * प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य यजमान हविर्निर्वप्स्यामीत्यामन्त्रयते ॥ १६५ ॥

(सू) [2]प्रवसत्यग्ने हविर्नि[3]र्वप्स्यामीति ॥ २ ॥ २२ ॥ ॥ १६६ ॥

[आमन्त्रणे पक्षभेदः]

(भा) अग्ने[4] हविर्निर्वप्स्यामीत्युपांशु । तद्विकारत्वादुच्चैरित्यु(रूप)देशः ॥ १६६ ॥

(सू) उर्वन्तरिक्षमन्विहीति [5] शकटायाभिप्रव्रजति ॥ ३ ॥ २३ ॥ १६७ ॥

(सू) अपरेण गार्हपत्यं प्रागीषमुदगीषं वा[6] नद्धयुगं शकटमवस्थितं भवति व्रीहिमद्यवमद्वा ॥ १६८ ॥

---

[पाणिव्यवस्था]

(वृ) असंभव-वृत्तिः सपवित्रेण पाणिनेति दक्षिणेन हस्तेन । 'दक्षिण प्रतीयादनादेशे' इति वचनात् ॥

[उपांशुताहेतुः]

अग्ने हविर्नि-पांश्विति—परपुरुषसंबोधनाभावाद्याजुर्वेदिकोपांशुत्वप्राप्तेः ॥

तद्विकारत्वादुच्चैरित्युपदेशः—तत्स्थानापन्नत्वात्तद्धर्मप्राप्तेः ॥

---

1 असभव इत्यभिमर्शने (सु रा) 2 प्रवसति यजमाने अग्निमामन्त्रयते (रु)
3 यजमान इति शेष (रु) 4 हविर्नि 5 र्वक्ष्यामीति—क शकट प्रति (रु)
6 मक्तानद्धत्कमभिनद्धयगमेवावतिष्ठते (रु)

(सू.) धूरसीति दक्षिणां युग[1]धुरमभिमृशत्युत्तरां वा ॥ ५ ॥ २५ ॥ १६९ ॥

[धूर्द्वयविवक्षापक्षः]

(भा) केचिद्धुरोरभिमर्शन कुर्वन्ति । अत्र दर्शपूर्णमासवद्धुरावभिमृश्येति[2] दर्शनात् ॥ १६९ ॥

(सू.) त्वं देवानामसि सस्नितममित्युत्तरा[3]मीषामालभ्य जपति ॥ ६ ॥ २६ ॥ १७० ॥

(सू.) विष्णुस्त्वाक्रग्ँ स्तेति सव्ये चक्रे दक्षिणं पादमत्याधायाह्रुतमसि हविर्धानमित्यारोहति ॥ ॥ ७ ॥ २७ ॥ १७१ ॥

(सू.) उरुवातायेति [4]परीणाहमप[5]च्छाद्य मित्रस्य त्वा चक्षुषा प्रेक्षे इति पुरोडाशीयान्[6] प्रेक्षते ॥ ॥ ८ ॥ २८ ॥ १७२ ॥

---

[श्रौतैकत्वसंगमनम्]

(वृ) **केचिद्धुरो–दर्शनादिति** — दर्शपूर्णमासयोर्धूर्द्वयसबन्ध्यभिमर्शने सति राजप्रवहणे तद्वदिति निर्देश उपपद्यत इति । अस्मिन् पक्षे धूरसीति दक्षिणामुत्तरां वेति मन्त्रस्यान्यतरसबन्धनियमार्थम् । स्वमते तु अन्यतरसबन्धिनोऽभिमर्शस्य विकल्पविधानमिति ॥

---

1 धूरिति युगच्छिद्रयोरन्तरालमाख्यायते तेद्वेभवतो युगस्य । तयोरन्यतरामभिमृशति नोभयम् । यस्त्वत्र कैश्चित् धुरावभिमृश्येति लिङ्गविरोधश्चोदित स तु तत्र मन्त्रमात्रातिदेशार्थतया तत्रैव परिहारिष्यते (रु) 2 लिङ्गात्–क 3 ईषे–युगशकटयोस्संबद्धे दारुणी (रु) 4 परितो नीड़े नद्ध कट –परीणाह (रु) 5 उद्घाट्य–अ. अपच्छाद्य–आपोद्धृत्य (रु). 6 तदर्थाव्रीहियवा (रु)

[अपच्छाद्यकर्तव्यं मानं च]

(भा) प(रि)रीणाह कट । अपच्छाद्य—उत्पाट्य पुन पातयति । तमसीव वा एषोऽन्तश्चरतीति लिङ्गात् ॥ १७२ ॥

(सू) निरस्तꣳ रक्षो निरस्तोऽघशꣳस इति यदन्यत्पुरोडाशीयेभ्यस्तन्निरस्योर्जायवः पयो मयि धेहीत्यभिमन्त्र्य दशहोतारं [1]व्याख्याय शूर्पे पवित्रे निधाय तस्मिन् अग्निहोत्रहवण्या हवीꣳषि नि-[2] र्वपति तया वा पवित्रवत्या ॥ ९ ॥ २९ ॥ १७३ ॥

[व्याख्यानपदार्थः]

(भा) नाना आख्यान व्याख्यान । वाक्ये वाक्ये छित्वा[3] ॥ १७३ ॥

---

[पुनःपातनलिङ्गत्वोपपत्तिः]

(वृ) परीणाहः कटः—तीतिलिङ्गादिति—परीणाहप्रच्छादने कृते पुनः पातने लिङ्गमिदम् । अन्तश्चरति य. परीणहीति परीणाहप्रच्छादने तदन्तर्वर्तिनां तमसि वर्तमानत्वेनानुवादोपपत्ते· । उद्घाटने कृते पुन· पाटनेऽन्तर्वर्तिनामेव निर्वापार्थम् ॥

अभिमन्त्र्येत्यन्तं गतार्थकम् ॥

[व्याख्याशब्दार्थनिर्वाहः]

नाना आख्यानं—छित्वा—दशहोतार व्याचष्टे । यत्र वाक्यशोऽधीतेषु व्याख्येयेति निर्देशस्तत्रैवम् । यथा चतुर्होतॄन् व्याख्यायेति । यत्र वाक्यशोऽधीतेषु सूत्रकारस्य संततपाठः तत्रान[4]-वानप्रयोग । अन्येष्वनियम. । यत्रानवानप्रयोगस्तत्रार्धर्चेऽवसाय ॥

---

[1] व्याख्यानमिहजपोऽभिप्रेत यत्रजपायाजमाना इति लिङ्गात् । [2] देवतार्थत्वेन पृथक्करण निर्वाप । तया वा पवित्रवत्येति पवित्रनिधानविकल्प (रु)
[3] छित्वाछित्वा ञ. [4] वान (मु रा)

(सू) **व्रीहीन्यवान्वा**[1] **॥ १० ॥ ३० ॥ १७४ ॥**

[पुनर्वचनफलम्]

**(भा)** व्रीहीन्यवान्वेति पुनर्वचनात्[2] व्रीहिकाले[3] यवा लभ्यन्ते इत्युपदेश· ॥ १७४ ॥

(सू) **यच्छन्तां पञ्चेति मुष्टिं गृहीत्वा स्रुचि मुष्टिमोप्य देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टं निर्वपामीति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ११ ॥ ३१ ॥ १७५ ॥**

इति सप्तदशी खण्डिका ॥

---

(सू) **एवमुत्तरं**[4] **यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्याम्। इन्द्राग्निभ्यामित्यमावास्यायाम् ॥१७६॥**

**[अग्नीषोमादिमदफलं कर्तृव्यवस्था च]**

**(भा)** यथादेवतमिति सिद्धेऽग्नीषोमाभ्यामिन्द्राग्निभ्यामिति नियमा[5]-

[उपदेशमताशयः पक्षान्तरं च]

**(वृ)** **व्रीहिकाले—दित्युपदेशः—**व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेतेत्यास्मिन् काले वर्तमानविकृतीनां स्वपक्षोऽप्ययमेव । **केचिन्न**[6] लभ्यत इति पठन्ति ॥

[फलोपपादनम्]

**यथा देवतमिति—भवति—**अग्नीषोमीय एकादशकपाल पूर्वस्यां पौर्णमास्यामिति ॥

---

[1] यद्यपि व्रीहिमद्यवमद्वेति शकटविशेषणात् व्रीहियवयो हविष्ट्व सूचितम्, तथाऽपि स्फुटतायपुनरुपन्यास (रु) [2] विकृतौ व्री–ज ञ [3] लेऽपि ज
[4] पूर्वेणसहनिर्वाप उत्तरत्रविभागवचनात् । सनयदसोमयाजिनोरैन्द्राग्नाग्नीषोमयोर्निवृत्त ; यथादेवतमिति वचनात् । यथादेवतमित्यनेनैवसिद्धे पुनरग्नीषोमाभ्यामिति वचन क्रमप्राप्तमन्त्रविनियोगार्थम् । इन्द्राग्निभ्यामिति तु शाखान्तरमन्त्रप्रदर्शनार्थम् । अथवा व्याकरणार्थम् । तत्रासोमयाजिनस्साम्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवदिति। पशुस्तुवचनाद्भविष्यति (रु) [5] नियम –क ज
[6] अयं ग्रन्थ क घ पुस्तुकयो न दृश्यते

ह्याक्षायणयज्ञे प्रयोजनम् । अग्नीषोमीयोऽसोमयाजिनोऽपि भवति । ऐन्द्राग्नश्च [1] संनयतः ॥ १७६ ॥

(सू) *[2] चतुरो मुष्टीन्निरुप्य [3] निरुप्तेष्वन्वोप्य ॥ २ ॥ ३३ ॥ १७७ ॥

[अन्वावापावृत्ति. मानं पक्षान्तरं च]

(भा) [4] निरुप्तेष्वन्वोप्येत्यावृत्ति प्रतिदेवतम् पुनश्चतुर इति वचनात् । [5] उपदेशक्रमात् सर्वान्ते सकृच्चतुर्ग्रहणा [6] च्चतुर्मुष्टिनिर्वाप एवान्वावाप इत्युपदेशः ॥ १७७ ॥

---

(वृ) ऐन्द्राग्नश्च संनयतस्सर्वत्रेति—वर्णाविशेषेण ॥

[चतुर्ग्रहणलब्धःक्रमः]

निरुप्तेष्व—इति वचनात्—त्रियजुषा तूष्णीं चतुर्थमिति सिद्धे पुनश्चतुरो मुष्टीन्निरुप्येति चतुर्मुष्टिनिर्वापानन्तरमन्वावपनं कृत्वा पश्चाद्धविरन्तरनि[7]र्वापार्थमिति ॥

[उपदेशमताशयः]

उपदेशक्रमात्स— त्युपदेशः—सर्वनिर्वापान्त उपदेशात्सर्वान्ते सकृदन्वावापः । चतुरो निरुप्येति चतुर्निर्वाप एवान्वावापो यथा स्यादिति । तस्मादातिथ्यायामन्वावापो न विद्यते ॥

---

[1] ग्नश्च सनयतस्सर्वत्र–ग ग्नोपि स—अ [2] पुनश्चतुर्ग्रहणात् प्रतिदेवतमन्वावाप [3] निरुप्तैरेवसहेत्यर्थ । अपराव्याख्या,—चतुरोमुष्टीन्निरुप्यान्वोप्यैवमुत्तरान्निर्वपतीति कल्पान्तरकारैरुक्तम् तन्निरासायोच्यते, चतुरोमुष्टीन्निरुप्य ततस्सर्वेष्वपि हविष्षु निरुप्तेष्वन्योप्य तत इद देवानामित्यभिमृशतीति । यत्र चतुर्मुष्टिनिर्वापस्तत्रैवान्वावा ोनान्यत्र तस्मा ातिथ्याया नान्वावाप इत्येतदर्थं निरुप्येत्यन्तम् । सवनीयहविष्ष्वेतदेवानुवदिष्यति (रु) [4] सर्वत्र निरु—अ. [5] अयं ग्रन्थ क ज पुस्तके न दृश्यते. [6] ग्रहण च—अ. [7] निर्वाप इति (मु रा).

(सू) इदं देवानामिति निरुप्तानभिमृशति । इदमुन-स्सहेत्यवशिष्टान्* । *स्फात्यै त्वा नारात्या इति [1]निरुप्तानेवाभिमन्त्र्येदमहं निर्वरुणस्य पाशादित्युप[2]निष्क्रम्य स्वरभिव्यख्यमिति प्राङ् प्रेक्षते[3] ॥ ३ ॥ ३४ ॥ १७८ ॥

[बहुवचनैवकारफलम्]

(भा) इद देवानामिति जात्यभिधानम् [4]प्रकरणोपरोधो मा भूदिति । तस्मादाग्नेये केवलेऽप्यनिवृत्तिः । [5]स्त्रीदेवताया [6]च विकारः । निरुप्ता-नेवेत्यवधारणात्तानेव केवलानभिमन्त्रयते [7]यथावऽशिष्ट न पश्यति । नानाबीजेषु तन्त्रेण ॥ १७८ ॥

(सू) सुवरभिविख्येषमिति सर्वं विहारमनुवीक्षते वैश्वानरं ज्योतिरित्याहवनीयम् । स्वाहा द्यावा-पृथिवीभ्यामिति स्कन्नानभिमन्त्रय दृꣳहन्तां दुर्या द्यावापृथिव्योरिति प्रत्यवरोह्योर्वन्तारिक्षमन्विहीति हराति ॥ ४ ॥ ३५ ॥ १७९ ॥

---

(वृ) इदं देवानामिति जात्यभिधानमिति—देवताजात्याख्याया बहुवचनं मन्त्रस्य ॥

प्रकरणोप—विकारः—विकृतौ ॥

निरुप्तानेवे—तन्त्रेण—सर्वनिर्वापान्ते । निरुप्तावशिष्टाभिमर्श-नयोस्तु नानाबीजेष्वावृत्तिरसभवे ॥ १४९ ॥

---

[1] निरुप्तानेव नावशिष्टात् (रु) [2] उपनिष्क्रम्य-किंचिच्चालित्वा (रु) [3] निरुपप्तानेवावशिष्टान् इत्याधिक दृष्यते—क [4] प्रकरणोपरोधे (रामा). [5] स्त्रीदेव-त्याया—ग. [6] चाविका—अ. [7] यथाशिष्ट—ग. यथशिष्टाश—अ.

(सू) **अदित्यास्त्वोपस्थे सादयामीत्यपरेण गार्हपत्यं यथा[1] [2]दैवतमुपसादयति ॥५॥३६॥१८०॥**

[देवतायां मतिभेदः निधाननियमश्च]

(भा) अग्ने हव्य रक्षस्वाग्नीषोमौ हव्य रक्षेथामिति भारद्वाजपाठात् । न गार्हपत्याभिधानम् । निरुप्त[3]देवतानामेव । यथा भारद्वाजस्य तथास्माकम् । [4]अग्नि· केवलो बोधायनस्येति[5] । केचिदग्ने हव्यं [6]रक्षस्वाग्नीषोमाभ्यामिति कुर्वन्ति[7] । अपरेण गार्हपत्यं निधानं यदि तत्र श्रपणम् ॥ १८० ॥

---

(वृ) **अग्ने हव्यं—रक्षेथामिति**—नायमूहः ॥

**भारद्वाज—धानम्**—अग्निशब्देन ॥

[भारद्वाजमततौल्यहेतुः]

**निरुप्तदे—स्माकम्**—समानब्राह्मणानुसन्धानात् । यथादेवतमिति वचनादविरोधाच्च ॥

[बोधायनाशयः]

**अग्निः केवलो बोधायनस्येति**—गार्हपत्य आहवनीयो वा निर्दिश्यते । यस्य समीपे उपसादन स निरुप्तदेवता । विष्णो हव्यं रक्षस्वेतिवत् ॥

[केचिदित्युक्तपक्षेश्रुत्यर्थः]

**केचिदग्ने—कुर्वन्ति**—अग्ने हव्यमित्यग्निशब्द·[8] समीपाग्नि-

---

1 यथादेवतमिति वचनात् उत्तरत्रापि देवतानुक्रमणीया । तत्र तु मन्त्रस्थमाख्यातमयोग्यान्वयत्वाद्विपरिणतमन्वीयते, यथा अग्ने हव्यं रक्षस्वाग्नीषोमौ रक्षेथामिति । वेमृधे समानतन्त्रे योग्यान्वयमपि तत् व्यवायान्नानुषज्यत इति न्यायेनालब्धान्वयमिति रक्षस्वेति पुन प्रयोग (रु) 2 दैवत–क । 3 देवताया एव–ग देवताया एवाभिधानम्–अ 4 तथाग्निरेव केवलो 5 यनस्य–अ 6 रक्षस्वाग्नयेऽग्नीषोमा–अ 7 न्ति तत्र–क 8 शब्दसमीपा (मु रा).

(सू) [1]आहवनीयं वा यद्याहवनीये श्रपयति ॥१८१॥

(सू) [2]यदि पात्र्या निर्वपेद्दक्षिणतः स्फ्यमुपधाय तस्याऽ सर्वाञ्छकटमन्त्रान् जपेत् ॥ १८२॥

इत्यष्टादशी खण्डिका ॥

[पक्षान्तरं जपादि विशेषश्च]

(भा) यद्याहवनीये श्रपयति आहवनीयस्य पात्रीमालभ्य शकटमन्त्रा [3]जप्यन्ते। निरसनाभिमन्त्रणे क्रियेते[4]। न परिणाहप्रच्छादनम् ॥१८२॥

॥ इति आपस्तम्बश्रौतधूर्तस्वामिभाष्ये पञ्चम पटल ॥

---

(वृ) पर.। निरुप्तदेवतानिर्देशोऽपि चतुर्थ्यन्तनिर्देशेन कर्तव्य इति तत्तद्देवतायै निरुप्त हव्यं रक्षस्वेत्ययमर्थस्सपन्नो भवति ॥ १५१ ॥

[जपस्थानम्]

यद्याहव—नीयस्य—पश्चात् ॥

[जप्यमन्त्रेयत्ता]

तस्या सर्वान् शकटमन्त्रानित्यस्यार्थ ;—

निर—क्रियते—समन्त्रकम् ॥

[निषेधनिबन्धनम्]

न परिणाहप्रच्छादनम्—परिणाहाभावात्। [5]अशकटमन्त्रत्वाच्च ॥

इति श्रीरामाग्निचिता कृतागा धूर्तस्वामिभाष्यवृत्तौ पञ्चम पटल ॥

---

[1] अहवनीयमपरेणोपमादयतात्यन्वय (रु) [2] यदि पात्र्या इति विकल्पविधिरनुवादसरूपः। पात्र्या पुरोडाशीयानोप्य ताशकटस्थानमन्वारभ्यमन्त्रान् जपेत्। न कस्यचिदर्थलोपाल्लोप (रु) [3] जपेत्—अ [4] क्रियते समन्त्रकम्—ग

[5] शकटमन्त्रत्वाभावात् परिणाहाभावाच्च ऊरुवातायेति मन्त्रलोपः (मु रा)

(सू) सशू[1]कायामग्निहोत्रहवण्यामप आनीय पूर्ववदुत्पूयाभिमन्त्र्य ब्रह्मन् प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य देवस्य त्वेत्यनुद्रुत्य अग्नये वो जुष्टं प्रोक्षामीति यथादेवतं हविस्त्रिःप्रोक्षन्नाग्निमभिप्रोक्षेत् ॥ १ ॥ १ ॥ १८३ ॥

[ अभिमन्त्रणप्रोक्षणयोर्विशेषाः ]

(भा) शूक–चूलकम् । अभिमन्त्रण पूर्ववत् । अग्नये वो जुष्ट प्रोक्षाम्यग्नीषोमाभ्या वो जुष्ट प्रोक्षामीति प्रयोग. । एकस्थाननिरुप्तत्वात्[2] उत्तरत्र विभागाच्च । येषां तु तानि सहावघ्नन्ति तानि सहवींषीति श्रुतिः । तेषा पृथक्पृथक् प्रोक्षणम् । केचिदेकस्थानेऽपि कुर्वन्ति पृथक्प्रोक्षणम् , तदयुक्तम् , सावित्रप्रोक्षणे तन्त्रेण मैत्रावरुणीयके पाठत् ॥ १८३ ॥

---

[ पूर्वमन्त्रः ]

(वृ) अभिमन्त्रणं पूर्ववत्;—आपो देवीरिति ।

[ पृथक्सहत्वहेतू ]

अग्नयेवो—पृथक्प्रोक्षणम्—अवघातादिसाहित्यवचनात् प्रागवघातात्पृथगेव ।

---

[1] शूका –धान्यपुच्छानि सकृन्मन्त्र प्रोक्षणे संख्यायुक्तेति न्यायात् । त्रिर्यजुषत्य वचनाच्च । स च सावित्रादिरग्नीषोमाभ्यामित्यन्त पौर्णमासे । दर्शे तु देवतावशाद्धिकर्तव्य । यथादेवतमिति वचनात् । केचित्तु वोजुष्ट प्रोक्षामीत्यस्य त्रिपदस्य प्रतिदेवतमनुषङ्गमिच्छन्ति , तदयुक्तम् , सावित्रप्रसवादिविशिष्टैकप्रोक्षणाभिधायिनो यथोक्तस्यैकमन्त्रस्य सकृत्पठितैरेवतैर्योग्यान्वयैर्निराकाङ्क्षत्वात् । साकाङ्क्षत्वादि लक्षणत्वाच्चानुषङ्गस्य मन्त्रभेदाभ्युपगमे सावित्रस्याप्यनुषङ्गप्रसङ्ग । किंच अभविष्यदप्यनुषङ्गो मन्त्रभेदश्च यदि निर्वापवत् प्रोक्षणमपि पृथगेव हविषामिष्यति , न चैवमिष्यते ससृष्टत्वात् । तेषा एकस्थत्वाच्च । वक्ष्यति च 'यानि विभवन्ति सकृत्तानि क्रियन्ते' इति । तस्माद्यथोक्तमेव युक्त मन्त्ररूपम् । पठन्तिच कल्पान्तरकारा अपि (रु)

[2] उत्तरत्रचविभागात्–क ख ग ञ.

(सू) यं द्विष्यात्त[1]मभिप्रोक्षेत्[2] ॥ २ ॥ २ ॥ १८४ ॥

(सू) उत्तानानि पा[3]त्राणि पर्यावर्त्य शुन्धध्वं दैव्याय कर्मण इति त्रिः प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय देवस्य त्वा सवितुः प्रसव इति कृष्णाजिनमादायावधूतꣳ रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोत्यूर्ध्वग्रीवं बहिष्टाद्विशसनम् ॥ १८५ ॥

[ प्रोक्षणीशेषनिधानफम् ]

(भा) प्रोक्षणीशेषनिधान इध्माबर्हिर्वेदिप्रोक्षणा[4]र्थम् ॥ १८५ ॥

(सू) अदित्यास्त्वगसीत्युत्तरेण गार्हपत्यमुत्करदेशे वा प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति [5]पुरस्तात्प्रतीचीं भसदमुपसमस्यति ॥ ४ ॥ ४ ॥ १८६ ॥

---

[ एतत्फलम् ]

(वृ) प्रोक्षणी — णार्थम् — अतोऽवभृथे बर्हिराद्यभावे निवृत्ति· ॥

---

[1] तस्याभि—क [2] अभिप्रोक्षणे यज्ञघात प्रायश्चित्त च वक्ष्यति । अत न भ्रमितव्यमितिभाव (रु) [3] शुन्धध्वमिति पात्राभिधानाद्विकृतौ यथार्थमूहः । अपामभिधानादनूह इति केचित्, तदयुक्तम्, कर्मणश्श्रुतत्वादिति शोधकद्रव्याभिधायिन. सकर्मकस्यशुन्धतेस्सर्वत्रश्रवणात् । प्राय परस्मैपददर्शनाच्च । तथाशोध्यद्रव्याभिधायिन शुध्यतिपदस्याकर्मकस्य विपर्ययाच्च 'अस्मान्मातरश्शुन्धन्तु' इत्यादि 'शुन्धता लोक' इत्यादि । तस्माद्यथार्थमूह । समानदेशाना च सकृन्मन्त्र पूर्ववत् । प्रोक्षणीशेषनिधानमिध्माबर्हिर्वेदिप्रोक्षणार्थम् । अतोऽवभृथेऽस्य बर्हिराद्यभावे निवृत्ति । बहिष्टाद्विशसनमिति । यथावधूयमानस्य बाहिर्विशसनभागो भवत्यन्तर्लोमभागस्तथेत्यर्थः (रु). [4] र्थं तस्मादवभृथे निवृत्ति—क [5] त पुरस्ताद्भागेनाधस्तात्प्रतीचीं गमयित्वानन्तरप्रदेशेन सह द्विगुणिता करोतीत्यर्थ । पुरस्तादिति सिद्धानुवादो ब्राह्मणानुकरणेन (रु)

[उपसमसनप्रकारः]

(भा) भसत्—कटिप्रदेशः । उपसमस्यति—द्विगुणीकरोति । पुरस्ताच्च यथा भवति न सर्वो [1] गृह्यते ॥ १८६ ॥

(सू) अनुत्सृजन् कृष्णाजिनमधिषवणमसीति तस्मिन्नुलूखमाधि[2]वर्तयति ॥ ५ ॥ ५ ॥ १८७ ॥

(भा) अधिवर्तयति—उपरिवर्तयति ॥ १८७ ॥

(सू) [3]अनुत्सृजन्नुलूखलमग्नेस्तनूरसीति तस्मिन् हविरावपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ १८८ ॥

आद्रिरसि वानस्पत्य इति मुसलमादाय हविष्कृदेहीति त्रिरवहान्ति अनवघ्नन् वा [4]हविष्कृतं ह्वयति ॥ ७ ॥ ७ १८९ ॥

[हविष्कृदादिमन्त्रप्रयोगव्यवस्था]

(भा) हविष्कृदवहननमन्त्र उपांशु प्रयोग· । न च द्वितीयोऽवहनन-

---

[समसनेविशेषः तथासूत्रार्थश्च]

(वृ) पुरस्ताच्च–गृह्यते—कृष्णाजिनस्य पुरस्तात् द्विगुणीकृता यथा दृश्यते न तेन प्रच्छन्ना भसन्मध्ये समस्यते ॥ १५८ ॥

[प्रयोगेस्वरसंख्ययोरुपपत्तिः]

हविष्कृ–प्रयोगः इति—हविष्कृदेहीत्ययमवहननार्थो मन्त्र· अवघातमन्त्रत्वे प्रैषरूपत्वाभात् याजुर्वेदिकोपाशुत्वम् , सकृत्प्रयोग· । न

---

[1] गृह्यते–क ख ग घ [2] अधिवर्तयति–प्रतिष्ठापयति (रु). वामेनानुत्सर्ग सामर्थ्यात् (रु) [4] चातुस्स्वर्येणोपाम्शुसकृच्च मन्त्र करणत्वे । विपर्ययस्त्वाह्वानार्थत्वे । आह्वानं चात्र देवतारूपस्य हविष्कृतो वेदितव्यम् । य एव देवाना हविष्कृत । तान् ह्वयतीति श्रुते । मानुषस्यैवावहन्तुर्वक्ष्यमाणस्याह्वानं सनिधे । तथाच बोधायन —हविष्कृदेहीति पर्जन्य एवैष उक्तो भवति । अथाप्युदाहरन्ति हविस्संस्कारिण मेव तदाहेति (रु).

मन्त्रः [1] उच्चै प्रयोग पुनश्चावहननमन्त्र इत्युपदेश । हविष्कृददृष्टा-देवता । पत्न्यन्यो वा । प्राकृत प्रैषेषु लोकवत् ॥ १८९ ॥

(सू.) **हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदा-धावेति शूद्रस्य ॥ ८ ॥ ८ ॥ १९० ॥**

[अध्वर्युकर्तृकत्व पक्षान्तरं च]

**(भा)** अध्वर्युर्वा, येषु कर्मसु कर्तृनाम नास्तीत्युपदेश. । आत्मसस्कारो

---

**(वृ)** च द्वितीयोऽवहननमन्त्र । अवरक्षोदिवस्सपत्नमित्यय न प्रयोक्तव्य. उभयो. करणमन्त्रत्वेन विकल्पितत्वात् ॥

[उपदेशमताशयः]

**उच्चैः प्र—इत्युपदेशइति**—हविष्कृदेहीत्यस्यावहननमन्त्र[2]त्वेऽपि य एव देवाना॑हविष्कृतः तान्ह्वयतीति देवहविष्कृदाह्वानरूपत्वादुच्चै-रिति । पुनश्चावहननमन्त्रः [2] क्रियाभ्यासापेक्षया मन्त्रसमुच्चयोपपत्ते. ॥

**हविष्कृद्दृष्टादेवता**—आह्वानपक्ष । पत्न्यादिर्वा । अदृष्टा देवता आह्वातव्या । हविष्कृदेहीत्यादयोऽपि प्रैषा. ॥

[अध्वर्युकर्तृकत्वेहेतु ]

**अध्वर्युवा—त्युपदेशइति** –अग्नीदग्नीन् विहरेतिवत् कर्तृनाम-निर्देशरहितेष्वध्वर्यु॰ कर्ता समाख्यानप्राप्ते॰ [3] ॥

**आत्मसंस्का—कात्यायनामितिरिति**,— **विलिङ्गेऽपि—युष्म-**

[कात्यायनाशयः]

दर्थाभावेऽपि । [4] अध्वर्युर्वा प्रैषार्थान् करोत्यविरोधादिति[5] स्वयमात्मान-मनुजानीयादिति लिङ्गाच्च ।

---

[1] उच्चैश्च -क [2] मन्त्रत्वे य एव—क (मु रा) [3] प्राप्त (मु रा)
[4] स्वयमध्वर्युर्वा (मुरा) I स्वयमाध्वर्यवान् प्रैषादीन्—क II. [5] दिति कात्यायन —क (मुरा).

विलिङ्गेऽपि[1] स्वय वाऽविरोधादिति [2]कात्यायन । शूद्रस्य–निषादस्थ-पते· ॥ १९० ॥

**(सू)** [3]**प्रथमं वा सर्वेषाम् ॥ ९ ॥ ९ ॥ १९१ ॥**

**अवरक्षो दिवस्सपत्नं वध्यासमित्यवहन्ति[4] ॥ १० ॥ १० ॥ १९२ ॥**

इत्येकोनविंशखिण्डका

---

**(सू) उच्चैस्समाहन्तवा इति संप्रेष्यति ॥ १ ॥ ११ ॥ १९३ ॥**

[प्रैषफलम्]

**(भा)** उच्चैस्समाहन्तवा इति [5]दृषदुपलासमाहननार्थोऽग्नीत्प्रैषः ॥१९३

**(सू)** [6]**कटरुरसि मधुजिह्व इत्याग्नीध्रोऽश्मानमादा-येषमावदोर्जमावदेति** [7]**दृषदुपले समाहन्ति ॥१९४॥**

**(भा)** इषमावदे[8]ति मन्त्रो यस्मिंश्च परिसमाप्ति [9]तस्मिंश्च पुन-रारम्भः ॥ १९४ ॥

---

[शूद्रशब्दासंकोचहेतुः]

**(वृ)** **शूद्रस्य निषादस्थपतेः**—केवलशूद्रस्यानधिकारात् ।

**प्रथमं वा सर्वेषाम्**— वचनादेकमिति ॥

[समाहननार्थत्वग्राहकम्]

**उच्चैस्समा—ग्नीत्प्रैषः**—आग्नीध्रोऽश्मानमिति वचनात् ॥

---

[1] विलिङ्गेऽपि । शूद्रस्य–ग [2] कात्यायनमति –क [3] यजुरिति शेष (रु). [4] पूर्वं त्रिरवहतमनवहत वा हविर्यावद्वैतुष्यमध्वर्युरवहन्ति (रु) [5] दृषदित्याद्येव घ पुस्तके भाष्ये दृश्यते [6] कुटुरु–क. [7] दृषच्चोपलाच दृषदुपल तास्मिन् समाहन्ति (रु) [8] देतित्रिर्मन्त्रो–क ख. ग घ [9] तत्र पुनरा

**(सू)** **द्विर्दृषदि सकृदुपलायां त्रिस्संचारयन् [1]नव-कृत्वस्संपादयति ॥ ३ ॥ १३ ॥ १९५ ॥**

[प्रयोगसंङ्ख्यानियमः]

**(भा)** सञ्चारयन् मन्त्र [2]क्रिया च प्रतिद्रव्य वा द्रव्यान्तरे [3]क्रिया-तदा चतुः । तदा जेष्मान्तो मन्त्र । वदन—यज्ञायुधानामुद्वदता-मुपाशृण्वन् इति ॥

---

[प्रयोगसंङ्ख्या नियमकालः]

**संचारयन्—न्याय्यमिति तदाचतुः**- तदा चतुर्मन्त्रस्य प्रयोग.। प्रथमोच्चारणेन दृषदि द्विः प्रयोग । द्वितीयोच्चारणेन उपलायां द्विः । तृतीयोच्चारणेन दृषदि द्वि । चतुर्थेनोपलाया सकृत् ॥

**जेष्मान्तो मन्त्रः**—इषमावदेत्यादि [4] ।

[जेष्मान्तमन्त्रवदनहेतुविवरणम्]

**(वृ)** **वदनं–पाशृण्वन्निति**—[5]अस्यार्थ —मनोऽश्रद्धादेवस्य यज-मानस्यासुरघ्नी वाक् यज्ञायुधेषु प्रविष्टासीत् इति असुरघ्न्या वाचो यज्ञा-युधेषु प्रविष्टत्वात् समाहनने दृषदुपलाख्ययज्ञायुधवदनश्रवणेन असुरव-भ्रातृव्याणां [6]पराभवने सति वय सघात जेष्मेति यजमानस्य सगणस्य जयश्रवणात्। यद्यपि [7]द्युमद्वदतेत्यादि ब्राह्मण जेष्मेत्याह भ्रातृव्याभिभूत्यै इति । जेष्मान्तो मन्त्रः ॥

---

[1] सकृदुक्तेन मन्त्रेण द्विर्दृषदिसकृदुपलाया च मन्चारणमेकस्सन्चारणपर्याय । तस्यैव द्विरावृत्त्यानवकृत्वस्समाहनन सपादयति । यत्र तु पर्यायसमाप्तिस्तत्रोपक्रम । पर्यायान्तरस्येत्येके । समाहननंचैतत् दृषदुपलसंस्कारार्थत्वाच्चर्वादितन्त्रे निवर्तते । भरद्वाजोक्तेरिति (रु) [2]क्रिया चेत्यर्थ —क [3]क्रियान्तरं नियतमिति—अ. सावित्र –देवस्यत्येत्यादि । स यत्रादानार्थ तदा आदद इति मन्त्रान्त । आदद ऋतस्यत्वा आददे ग्रावासीत्यादि लिङ्गात् (रु) [4]त्यादे —क [5]यत्रोपकार-स्तद्राक्षस नानुपकारे इत्यपि प्रतीकमत्रैवव्याख्येयतया गृह्यते–क [6]परा-भवने वय–ख ग [7]सावित्र –देवस्यत्वेति मन्त्र –तया शम्यया इति—क ख. ग घ पुस्तकेषु दृश्यतेऽधिकम्

(भा) यत्रोपकारस्तद्राक्षस नानुपकारे[1] ॥ १९५ ॥

(सू) सावित्रेण वा शम्यामादाय तया समाहन्ति ॥ ४ ॥ १४ ॥ १९६ ॥

(सू) वर्षवृद्धमसीति [2]पुरस्ताच्छूर्पमुपो[3] हत्युत्तरतो वा ॥ ५ ॥ १५ ॥ १९७ ॥

(सू) वर्षवृद्धाःस्थेत्याभिमन्त्र्य प्रतित्वा वर्षवृद्धं वेत्त्वित्युद्वपति[4] ॥ ६ ॥ १६ ॥ १९८ ॥

(सू) परापूतꣳ रक्षः परापूता अरातय इत्युत्करे परापुनाति ॥ ७ ॥ १७ ॥ १९९ ॥

(सू) प्रविद्धꣳ रक्षः पराध्माता अमित्रा इति तुषान् प्रस्कन्दतोऽनुमन्त्रयते ॥ ८ ॥ १८ ॥ २०० ॥

(सू) मध्यमे [5]पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात्कृष्णाजिनस्योपवपत्युत्तरमपरमवान्तरदेशम्[6] ॥ ९ ॥ १९ ॥ २०१ ॥

(सू) [7]हस्तेनोपवपतीति बह्वृचब्राह्मणम् ॥ २०२ ॥

---

[राक्षसत्वनिबन्धनम्]

(वृ) [8]यत्रोप—पकारे इति—अस्यार्थः—परापूतꣳरक्ष· प्रविद्धं रक्ष इति रक्षसामुपघातार्थत्वात् न रक्षसामुपकारकत्वनिमित्तमपामुपस्पर्शन भवति ॥

---

1 नानुवर्तते–ञ 2 उलूखलस्य (रु) 3 उपयच्छति (रु). 4 पुरोडाशीयान् (रु) 5 प्रथमोपधेयस्यापि कपालयोगे मध्यमभावित्वादस्य मध्यमत्ववाद । पुरोडाशकपाल इति वचनात् पुरोडाशार्थं प्रयुक्तेनैव कपालेनोपवपति हस्तकपालयोर्विकल्प पुरोडाशतन्त्रेषु । चर्वादितन्त्रे तु हस्तो व्यवतिष्ठते कपालाभावात् (रु). 6 कोणदेश प्रति (रु) 7 इद क पुस्तके न दृश्यते 8 'पुरोडाशमन्त्रे हस्तकपालयोर्विकल्पः' इत्याधिक द (मुरा).

(सू) अग्निः कपालं[1] सं स्पर्श्य प्रज्ञातं निधायाप उपस्पृश्य वायुर्वो विविनक्त्विति विविच्य देवो वस्सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान् प्रस्कन्दयित्वा अदब्धेन वश्चक्षुषाऽव-पश्यामि रायस्पोषाय वर्चसे सुप्रजास्त्वाय चक्षुषो गोपीथायाशिषमाशास इत्यवेक्ष्य [2] त्रिष्फलीकर्तवा इति संप्रेष्यति ॥ ११ ॥ २० ॥ २०३ ॥

[उपस्पर्शनश्रेषपरिहारः]

(भा) अपामुपस्पर्शन[3]विधानात्तस्य श्रे (तच्छ्रे)षे [4]यजुर्श्रेषविहित प्रायश्चित्त भवति । विविनक्ति—सर्वानवहृत्य परापूय सर्वेषा प्रस्कन्दन शूर्पात् ॥ २०३ ॥

---

[भाष्योक्तप्रायश्चित्तलाभः व्यवस्थाच]

(वृ) अपामुप—त्तं भवति—रक्षसा भागोऽसीति तु [5] रक्षसामुप-कारकत्वाद्रौद्रराक्षसेत्युपस्पर्शने प्राप्ते अप उपस्पृश्येति पुनर्वचनात् श्रौत-प्रायश्चित्त भवति । पारिभाषिक[6]स्याकरणे न यजुर्श्रेषप्रायश्चित्तम् । तस्य श्रौतस्मार्तसाधारण्यात् सामान्यविहित सर्वप्रायश्चित्तमेव । प्रक-रणविहिता[7]करणे ह्यन्तरितादि[8]प्रायश्चित्त भवति ।

---

[1] तुषोपवपनस्य राक्षसत्वादेवसिद्धेऽपामुपस्पर्शनवचन क्रमार्थम् । तथा यदेव रक्षसामुपकारकं तदेव राक्षस न तु रक्षस्सबन्धमात्रादिति ज्ञापनार्थं च । अत परापवनादौ न भवति । [2] फलीकरण त्रि कर्तव्यमित्यर्थ (रु) [3] नाभावात्—क [4] यजुर्वेद (रामा) [5] तु शब्द ग पुस्तके एव दृश्यत [6] स्याकरणे तस्या इति-ग व्यतिरिक्तसर्वकोशेषु पाठ [7] हे यदक्त इत्यादि भवति (मु रा.) पाठ [8] ह्यन्तरित्यादि ? भवति क घ, अय पाठ (मु रा.) कुण्डलित

(सू.) या यजमानस्य पत्नी साऽभिद्रुत्यावहन्ति ॥

(सू.) यो वा कश्चिद[1]विद्यमानायाम् ॥ २०४ ॥

इति विंशी खण्डिका

---

(सू.) देवेभ्यश्शुन्धध्वं देवेभ्यश्शुन्ध्यध्वं देवेभ्यश्शुम्भध्वमिति सुफलीकृतान् करोति तूष्णीं वा ॥ ॥ १ ॥ २२ ॥ २०५ ॥

[मन्त्रभेदेकर्मैक्यहेतुः]

(भा) त्रीन् मन्त्रानुक्त्वा फलीकरण[2] वचनादेकं कर्म ॥ २०५ ॥

---

[एककर्मतोपपत्तिः]

(वृ) त्रीनुमन्त्रानु — चनादेकमिति — त्रिरभ्यस्तफलीकरणकर्मत्वात् वचनादेक कर्म बहुमन्त्रमिति ।

---

[1] अविद्यमानाया—अनालम्भुकत्वादिनानिमित्तेन असान्निहिताया अभावे च तस्या इत्यर्थोऽविशेषात्, वक्ष्यति च पत्न्यभावे तेज आदि लुप्यते इति । ननु 'पत्नीवदस्याग्निहोत्र भवति । युक्ता मे यज्ञमन्वासाता' इत्यादिना कर्मण पत्नीवत्त्ववचनात् तदभावे कर्मैव न संवर्तेत? मैवम्,—कर्म न सवर्तेतानङ्गत्वे, अङ्गत्वे तु सवृत्त स्यात्, कुत ? अस्याग्निहोत्र मे यज्ञामिति यजमानस्यैव स्वामित्वज्ञापनाच्च न पत्न्या । तथा व्रीहियवपश्वाज्यपय कपालपत्नीसंबन्धानीति तस्या प्रसिद्धाङ्गसमभिव्याहाराच्च । तथा कर्मचोदना अपि यजमानमेवाधिकुर्वन्ति न पत्नाम् । तस्मादपत्नीकोऽप्यग्निमाहरेदिति बह्वृचब्राह्मणम् । पत्न्यभावेऽप्यग्निहोत्र वदद्भि कल्पान्तरकारैरुद्घाटित चैतत् भरद्वाजजैमिन्याश्वलायनै । तथा आचारोऽप्यत्र दृष्ट शिष्टतमाना पूर्वेषा कण्वविभण्डकभीष्मादीनाम् भगवतश्च दाशरथे । किञ्च सहाधिकारेऽपि पत्न्या यजमानसाम्य नास्त्येव । यथोक्त मीमासकै (६-१-२४),—'यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्' इति । तस्मात्सिद्धमभावेऽपि पत्न्या न कर्मणो निवृत्तिरिति (रु) [2] णवचनादेकमिति—अ, कर्मेति पदं व्याख्यायुक्तेषु मूलपाठेषु न क्वापि

(सू.) प्रक्षाल्य तण्डुलाꣳ स्त्रिष्फलीक्रियमाणानां यो न्यङ्गोऽवशिष्यते रक्षसां भागधेयमापस्तत्प्रवहतादित इत्युत्करे त्रिर्निनयति[1] ॥ २ ॥ २३ ॥ २०६ ॥

(सू.) अत्र कृष्णाजिन[2]स्यादानादि प्रागधिवर्तनात्कृत्वा दिवः स्कम्भनिरसीति कृष्णाजिन उदीचीनकुम्बाꣳ शम्यां निधाय धिषणासि पर्वत्येति शम्यायां दृषदमत्याधाय धिषणासि पार्वतेयीति दृषद्युपलामत्यादधाति ॥ ३ ॥ २४ ॥ २०७ ॥

(भा) [3] कुम्ब—तुण्डं स्थूलं यत्र ॥ २०७ ॥

(सू.) [4] पूर्ववदनुत्सर्गः ॥ ४ ॥ २५ ॥ २०८ ॥

(सू.) [5] अंशवःस्थ मधुमन्त इति तण्डुलानभिमन्त्रय देवस्य त्वेत्यनुद्रुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ५ ॥ २६ ॥ २०९ ॥

[अधिवापमन्त्रस्वरूपम् आम्नानोपपत्तिश्च]

(भा) अग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यां जुष्टमधिवपामीत्यधिवपेत् तथा पाठात् ॥

---

[अधिवापमन्त्ररूपग्रहोपपत्तिः]

(वृ) अग्नये जुष्ट—तथापाठात्—असमासेन एकां देवतां निर्दिश्य जुष्टशब्दस्य पाठात् सूत्रकारेण ।

---

[1] फलीकरणोदकनिनयनमपि तुषोपवपनवद्राक्षसम्, रक्षसा भागधेयमिति मन्त्रलिङ्गात् । तुषैर्वै फलीकरणैर्देवा हविर्यज्ञेभ्यो रक्षांसि निरभजन् इति बह्वृचश्रुतेश्च । तस्मान्निनीयोदकमुपस्पृशति (रु). [2] नादानादि—क. [3] शम्याया. स्थविष्ठोऽन्त कुम्बम् (रु). [4] उलूखलादिवदुत्तरोत्तरस्य निहतस्य शम्यादेस्सव्येनानुत्सर्ग (रु). [5] अधिवपनमन्त्र प्रोक्षणमन्त्रेण व्याख्यात । तद्यथा—अग्नये जुष्टमधिवपाम्यग्नीषोमाभ्यामिन्द्राय वैमृधाय धान्यमसि धिनुहि देवानित्यादि । तण्डुलास्तु यावन्तस्सकृत् पंष्टुमशक्न्ते तावतोऽधिवपति (रु).

(भा) समासेनोपदेशोऽग्नयेऽग्नीषोमाभ्यामिति ॥ २१० ॥

(सू.) **प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति मध्यदेशे व्यवधारयति प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति संततं पिनष्टि ॥ ६ ॥ २७ ॥ २१० ॥**

[**मन्त्रसंस्कार्यनिर्देशः**]

(भा) एकस्य 'पेषणस्य सस्कार शेष पत्नी पिनष्टि। प्रोहति—प्रापयति। सततमविराम पिनष्टि ॥ २१० ॥

(सू.) **दीर्घामनुप्रसितिमायुषेधामिति प्राचीमन्ततोऽनुप्रोह्य देवो वस्सविता हिरण्यपाणिः प्रतिगृह्णात्विति कृष्णाजिने पिष्टानि प्रस्कन्दयित्वा अदब्धेन वश्चक्षुषाऽवेक्षे इत्यवेक्ष्या[1]संवपन्ती पिंषाणूनि कुरुतादिति संप्रेष्यति ॥ ७ ॥ २८ ॥ २११ ॥**

(भा) सर्वेषु पिष्टेषु प्रापयति । प्राचीमसंवपन्ती—न सर्वान् सह क्षिपन्ती पिंषाणूनि कुरुतादिति ॥ २११॥

---

[**यथादेवतं समसनहेतुः**]

(वृ) **समासेनोप—भ्यामिति**—मन्त्रसमाम्नाये केवलमधिवपामीत्येतावन्मात्रनिर्देशात् यथादेवत समस्याधिवाप इति ॥

[**एकसंस्कारताहेतुः**]

**एकस्य—संस्कार इति**—असवपन्ती पिंषेति सहवपननिषेधात्। भागशः पेषणात् पेषणावृत्तौ प्रथमपेषणस्यानुप्रोहणान्तस्य समन्त्रक प्रयोग. ।

[**पेषणे विशेषः**]

**शेषं पत्नी पिनष्टि**—तूष्णीम् ।

**अन्ततः**—सर्वेषु प्रथमोप्तेषु पिष्टेषु प्रापयति प्राचीम् ।

---

[1] असवपन्ती—दृषदि तण्डुलानसगतानावपन्ती। पिंष-पिण्डितानि पिष्टानि चाणूनि कुर्वित्यवशिष्टतण्डुलार्थं पत्न्या दास्या वा सप्रैष (रु)

(सू) [1]दासी पिनष्टि पत्नी[2] वा ॥८॥२९॥२१२॥

(सू) अपि वा पत्न्यवहन्ति शूद्रा पिनष्टि[3] ॥९॥ ३०॥२१३॥

(भा) शूद्रा–अदारा ॥ २१३ ॥

इत्येकविंशी खण्डिका ॥

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये षष्ठ पटल ॥

---

(सू) [4]आहवनीये गार्हपत्ये वा हवींषि श्रपयति ॥१॥१॥२१४॥

(सू) [5]धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय रक्षसः पार्णि दहाहिरसि बुध्निय इत्यभिमन्त्र्यापाग्नेऽग्नि-

---

(वृ) असवपन्ती—न सर्वान् सह क्षिपन्ती पिष्टाणूनि कुरुतादिति पत्न्यादेः प्रैषान्न सहाधिवाप ॥

[दारभिन्नपरताहेतुः]

शूद्रा अदारा—दासी पिनष्टि पत्नी वेति विधानात् न क्रमविवाहप्राप्ता शूद्रा ॥

इति श्री कौशिकेन रामाग्निचिता कृताया धूर्तस्वामिभाष्यवृत्तौ षष्ठ पटल ॥

---

1 पत्नी पिनष्टि दासी वा—क 2 ते अपि कृष्णाजिन एव पिंष्ट (रु) 3 पूर्व पत्नया फलीकरणावघातमुक्त्वा तत पेषणेऽपि दास्या सह विकल्प उक्त । अनेनैव पुन पेषणे दास्या नियमो वर्ण्यते । पत्न्यवघातमेवकरोति, न पेषणम्, तत्तु शूद्रा दास्येव करोति (रु) 4 अधिकारादौषधहविर्विषयोऽयमग्निविकल्प । हवींषीति बहुवचनमैन्द्राग्नापेक्षया सांनाय्ययोस्तूपदेशातिदेशाभ्या गार्हपत्य एव व्यवतिष्ठते श्रपणम् । (रु) 5 अभिमन्त्रणस्याग्निलिङ्गत्वेऽपि कर्मतया प्रकृत उपवेष एव अभिमन्त्रणेनान्वयमर्हति, कर्मान्तरानुपादानात् । नच लिङ्गविरोध, तस्यैवाग्निप्रेरकस्य अग्निवदुपचारात् तथाचैतं मन्त्र उपवेषादान एव सत्याषाढो विकल्पितवान् ।

**मामादं जहीति गार्हपत्यात्प्रत्यञ्चावङ्गारौ [1]निर्वर्त्य निष्क्रव्यादꣳ सेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं निरस्याऽऽदेवयजं वहेति [2]दक्षिणमवस्थाप्य ध्रुवमसीति तस्मिन् [3]मध्यमपुरोडाशकपालमुपदधाति ॥ २ ॥ २ ॥ २१५ ॥**

[दहेति निर्देशोपपत्तिः]

(भा) रक्षसः पाणिमित्युपवेषाभिमन्त्रणम्; तस्याग्निसंपर्कादौष्ण्यमिति;

[अभिमन्त्रणीये पक्षान्तरम्]

केचिद्गार्हपत्यस्य; अहिर्बुध्निय इति लिङ्गात्;

[तत्पक्षदूषणम्]

तदनुपपन्नम् यदाऽऽहवनीये पाक। अन्यतरमेकतरम्। उपवेषादान तन्त्रेण ॥

---

[दहेत्यस्योपपत्त्युपपादनम्]

(वृ) **रक्षसःपाणि—दौष्ण्यमिति,**—तस्याङ्गारनिर्वर्तनेनाग्निसंपर्कादौष्ण्यमिति दहेति निर्देशोपपत्तेः।

[पक्षान्तरस्याशयः]

**केचिद्वा—लिङ्गादिति;**—अहिर्बुध्निय इति प्राजहितमित्यत्र अहिरसीति गार्हपत्यसंबोधनात् अग्ने गृहपते अहे बुध्नियेत्यग्न्याधानमन्त्रे निर्देशाच्च अहिर्बुध्नियशब्दवाच्यगार्हपत्याभिमन्त्रणम्।

[पक्षान्तरदोषोपपादनम्]

**तदनुपपन्नम्; यदाऽऽहवनीये पाकः;**—तदा गार्हपत्याभिमन्त्रणस्यानुपकारकत्वादभिमन्त्रणलोपप्रसङ्गान्नित्यवदुपदेशवैयर्थ्यात्।

---

[1] निर्वर्त्यनिष्कृत्य (ह) [2] निरस्तादन्य दक्षिणतोऽवस्थाप्य—क [3] मध्यमं—क

[अङ्गारनिर्वर्तनादौ पक्षान्तरम्.]

अङ्गारनिर्वर्तनादीनि प्रतिकपालयोगम् । तदर्थत्वात् । केचिदग्निसंस्कार इति सकृत्कुर्वन्ति ॥

[अवस्थापने विशेष.]

अवस्थापन च पुनःपुनर्दक्षिणतोऽवस्थापन निर्वर्तनदेशान्मध्यम यथा भवति तथा कार्यम् ॥ २१५ ॥

(सू.) **निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति [1]पूर्वं द्वितीयं संस्पृष्टं धरुणमसीति [2]पूर्वं तृतीयं चिदसि विश्वासु दिक्षु सीदेति मध्यमाद्दक्षिणं परिचिदसि विश्वासु दिक्षु सीदेति मध्यमादुत्तरम् ॥ ३ ॥ ३ ॥ २१६ ॥**

(भा) [3]अत्याधानमुपरिस्थापनम् ।

(सू.) **यथायोगमित[4]राणि ॥ ४ ॥ ४ ॥ २१७ ॥**

इति द्वाविंशी खण्डिका ॥

---

(वृ) **प्रतिकपा—लयोगम्** ;— प्रतिकपालगणम् ।

**तदर्थत्वात्** ;—निर्वर्तनस्य ।

[पक्षान्तरप्रवृत्तिहेतु.]

**केचिदग्नि—र्वन्ति** ;—तमपहृत्य मध्येऽग्नौ कपालमिति लिङ्गात्।

**अवस्थापनं च** यस्यकस्यचिदङ्गारस्य **पुनः पुनः** -- द्वितीयादिकपालयोगे, **दक्षिणतोऽवस्थापनम्—कार्यम्** ;— तस्य परितः कपालान्तरोपधानम् ।

---

1 पूर्ववद्द्वितीय—क 2 पूर्ववत्तृतीय—क 3 इत परम् ' उपदधातीत्यध्याहार ' इति पूना मुद्रितकोशे दृश्यते 4 अत प्रराणि यथा योगमुपदधाति यथा पुरोडाशप्रतिष्ठापनयोग्योयोगस्संपद्यते तथेत्यर्थ (रु)

(सू) [1] मरुतां शर्धोऽसीति षष्ठम्, धर्मासीति सप्तमम्, चितः स्थेत्यष्टमम्[2] ॥ १ ॥ ५ ॥ २१८ ॥

(सू) [3] एवमुत्तरं [4] कपालयोगमुपदधाति ॥ २१९ ॥

(सू) अपि वा मध्यममुपधाय सव्यस्य पाणेरङ्गुल्या अभिनिधाय निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय धर्त्रमसीति तस्मादपरं धरुणमसीति तस्मात्पूर्वं यथायोगमितराणि ॥ ३॥ ७ ॥ २२० ॥

अभिनिधानमभिपीडनम् ॥ २२० ॥

(सू) [5] तस्यतस्याङ्गुल्याऽभिनिधानमङ्गाराधिवर्तनं च वाजसनेयिनस्समामनन्ति ॥ ४ ॥ ८ ॥ २२१ ॥

(सू) [6] चितस्थोर्ध्वचित इत्यूर्ध्वमष्टाभ्य उपदधाति तूष्णीं वा ॥ ५ ॥ ९ ॥ २२२ ॥

---

(वृ) अभिनिधानमभिपीडनम् ;—अङ्गुल्या ॥

---

[1] इद क पुस्तके न दृश्यते [2] न्युब्जानि सर्वाण्युपधेयानि । उत्तानेषु कपालेष्वधिश्रयतीति क्वचिद्वृथक्दर्शनात् (रु) [3] एवं अङ्गारनिर्वर्तनादिना विधिनोपदधाति । तन्त्रमुपवेषादान विभुत्वात (रु) [4] कालयोग ? क [5] प्रति।पालमित्यर्थ (रु) अत्र सूत्रे पुण्यपत्तनमुद्रिते 'अपाग्नेऽग्निमामादं जहीत्यादि चित स्थेत्यन्तं प्रतिपुरोडाशमावृत्ति । उपवेषादानं च ,प्रतिपालयोगमित्युपदेश पक्ष प्रतिप्रधानगुणावृत्तेर्न्याय्यत्वात्' इति ग्रन्थ दृश्यते । इह संगृहीतेषु न क्वापि । [6] उत्तरकपालेयागविषयोऽय विधि, प्रथमेऽसभवात् तेनाग्नेयविकारेषु न भवति । तत्र तु कपालाधिक्य समश प्रविभज्येति न्यायेन अष्टानामेव मन्त्राणा प्रातिविभागः (रु).

[उपाधानमन्त्रसङ्कोचः पक्षान्तरं च]

(भा) आग्नेयविकारेषु न चितस्थेति आग्नेयानङ्गत्वात् । प्रयोग आग्नेयविकारेष्वपीत्युपदेश । उपवेषादान च प्रतिकपालयोगम् ॥२२२॥

(सू) **भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन [1] कपालेष्वङ्गारानध्यूह्य मदन्तीरधिश्रयति ॥२२३॥**

इति त्रयोविंशी खण्डिका ॥ सप्तम. पटल ॥

[मन्त्रस्यावृत्तिर्हेतुश्च]

(भा) भृगूणामिति प्रतिकपालम्, यदि न सभवति ।

[मदन्त्यधिश्रयणाप्सुविशेषः पक्षभेदश्च]

मदन्त्यधिश्रयण लौकिकीभिरद्भि. । तप्ता आपो मदन्त्य इत्याचक्षते इति बैलिकि. ॥

---

[सङ्कोचनिदानम्]

(वृ) **आग्नेयविका—नङ्गत्वात् ;**—[2] अविकारेणार्थवान् साधारणोपदेश इति प्रयोगः ।

[उपदेशपक्षाभिप्रायः]

**आग्नेयविकारेष्वपीत्युपदेश इति ;**—साधारणोपदिष्टमन्त्राणां सर्वकरणार्थत्वसभवे तदनुग्रहस्य युक्तत्वात् । आग्नेयविकारवैश्वानरादिषु निवेशे सति विकृतिप्राप्ताग्नेयोपकारजनकतया प्रकृतौ साधारणोपदेशस्यार्थवत्त्वमिति ।

**भृगूणामिति—भवति—तन्त्रेण ।**

**मदन्त्यधि—द्भिः**—न प्रणीताभ्य ।

[तत्तत्पक्षप्रवृत्तिनिदानम्]

**तप्ता—चक्षते इति बैलिकिः**—बैलिकिराचार्यो मन्यते । अमीन् मदन्त्याप इत्यत्र वक्ष्यते । मदन्तीरधिश्रयतीति भाविव्यवस्थाभिप्रायेण ।

---

[1] अङ्गाराध्यूहनस्य प्रतिकपालयोगमावृत्ति । आपस्तप्तामदन्त्य इत्याख्यायन्ते । तासामर्थेऽप प्रणीताभ्योऽधिश्रयति प्रणीताभिस्सयौतीति वचनादासामपि सयवनार्थत्वाच्च । लौकिकीभ्य इत्यन्ये । अत्र गोप्रतीक्षणादिविधिना प्रातर्दोह दोहयति । व्याख्यातोऽस्यश्रपणाग्नि, (रु). [2] विकारेणार्थवान् साधारणप्रयोगोपदेश इति ।

(भा) केचित् प्रणीत्याभ्य इति। अनुपरिप्लावनस्यापि हविर्मिश्रीकरणार्थित्वात् ॥ २२३ ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये सप्तम पटल ॥

---

(सू) [1] प्रक्षालितायां पात्र्यां निष्टप्तोपवातायां पवित्रवत्यां पिष्टानि सं[2]वपति यथादेवतं त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ १ ॥ १ ॥ २२४ ॥

[संवापशब्दार्थः]

(भा) उपवाता शुष्का निष्टप्यमाना। सवपति सह क्षिपति सर्वाणि।

[संवापमन्त्रः तत्र उपदेशपक्षश्च]

अग्नये जुष्ट सवपाम्यग्नीषोमाभ्यां जुष्ट सवपामीति ॥

---

[प्रणीताप्पक्षोक्तहेतुनिर्वाहः]

(वृ) केचित्प्रणीताभ्य इति— प्रणीताभिस्सयौतीति दर्शनादिति। अनुपरि— र्थत्वात्—प्रणीताभिस्सयौतीत्युभयत्रापि मिश्रीकरणे प्रणीतानिवेशो युक्त इति प्रणीताभ्यो मदन्तीरिति ॥

इति श्री कौशिकरामाग्निचिद्विरचिताया धूर्तस्वामिभाष्यवृत्तौ सप्तम पटल ॥

---

[संवापस्यधिवापाद्भेदः]

संवपति—सर्वाणि—पिष्टानि। नाधिवापवदेकदेशक्षेपः।

[पक्षयो· प्रत्येकमाशय·]

अग्नये जुष्टं संवपाम्य—जुष्टमिति—देवस्य त्वेत्यनुद्रुत्याग्नये जुष्ट संवपामीत्येकस्य पाठात्, अधिवापवत्।

---

[1] शुद्धायामपि तदानीं प्रक्षालिताया निष्टपनेन शुष्कायां पात्र्या कृष्णाजिनात् पिष्टानि संवपति। शेषस्तु व्याख्यातं (रु) [2] वपति देवस्य त्वेत्यनुद्रुत्याग्नये जुष्ट संवपामीति क

अग्नयेऽग्नीषोमाभ्यामित्युपदेशः ॥ २२४ ॥

(सू) संवपन्वाचं यच्छति ताम[1]भिवासयन् विसृजते ॥ २ ॥ २ ॥ २२५ ॥

(सू) प्रोक्षणीवत्पिष्टान्युत्पूय प्रणीताभिस्सं[2]यौति ॥ ३ ॥ ३ ॥ २२६ ॥

(सू) [3]अन्या वा यजुषोत्पूय यदि प्रणीता नाधिगच्छेत् ॥ ४ ॥ ४ ॥ २२७ ॥

[उत्पवनयजुस्संकोचः पक्षान्तरं च]

(भा) अन्या वा यजुषोत्पूयेत्युत्पवनमात्रं ? नाभिमन्त्रणम् ।

---

(वृ) अग्नयेऽग्नीषोमाभ्यामित्युपदेशः—संवपामि समापो अद्भिरग्मतेत्येतावन्मात्रपाठात् ॥

[यजुषोऽभिमन्त्रणानङ्गताहेतुः]

अन्या वा यजुषोत्पूयेति—उत्पवनमात्र नाभिमन्त्रणम् । पूर्ववदुत्पूयाभिमन्त्र्येत्यत्र अभिमन्त्रणानुपदेशात् ।

---

[1] वक्ष्यति पुरोडाशे भस्माध्यूहतीति, तदभिवासनमित्युच्यते । भस्मनाभिवासयतीति ब्राह्मणानुकारात् (रु) [2] मिश्रयति (रु) [3] यानि प्रणीतारहिततन्त्राणि-प्रसङ्गीनि प्रणीतापेक्षाणि कर्माणि, यथा सोमविधे पशौ पुशु ‌‌ ‌रोडाश । सौमिकेषु पशुषु सवनीयादेविकादेवसुवा हवींषीत्यादि, तद्विषयोऽयं विधि । किमर्थं तर्हि वा शब्द ? प्रणीताभिर्विकल्पार्थ., तदर्थमप प्रणीताभिर्वा संयौत्यन्याभिर्वेत्यर्थ । सत्याषाढस्त्वाह—यदि प्रणीता नाधिगच्छेदित्यापदर्थो वाद इति । नात्रापामभिमन्त्रणम्, उत्पूयाभिमन्त्र्येत्यन्यत्रविशेषवचनात् । चरुषु श्रपणार्थान्यथाज्यदधिपयासि यथार्थमूहेनोत्पूय सपवित्राया स्थाल्यामानीय तेषूत्पूताश्चरव्यानावपति पवित्रवत्याज्येकणानावपतीति लिङ्गात् । तत्र पयोघृतादे चरुश्रपणार्थस्य उहेनोत्पवनमभिमन्त्रण चाह सत्याषाढ । यथा देवस्त्वा सवितोत्पुनात्वित्युत्पवनं सन्नमति पयो देवाग्रेष्वग्रेगवग्र इत्यभिमन्त्रणमिति श्रूते नेदीयसि वा आज्यमानयति इति बोधायन (रु)

केचिदभिमन्त्रणमपि तत्कार्यापत्ते· ।

[यदि शब्दलभ्यार्थः]

[1]प्रणीता नाधिगच्छेदिति·—यदि न प्रणयेदित्यर्थः । अतो विकल्पः ।

[यजुरुत्पूतविधौ व्यवस्था]

च[2]रुषुवाज्यलिङ्गात् पवित्रवत्याज्ये कर्णानाव[3]पन्तीति । पशुपुरोडाशे चाय विधिः ।

[प्रणीताविषये मतभेद·]

प्रणीता निय[4]ता प्रकृताविति हिरण्यकेशिम(तात्)मतिः । घृतवती· प्रणीता आनयन्तीति केचित् ॥ २२९ ॥

---

[पक्षान्तराशयः]

(वृ) केचिदभि—र्यापत्तेः—प्रणीताकार्यापत्तेः । प्रणयनात्प्राचीनधर्मलाभात् ।

यदि–गच्छेत्–विकल्पः—प्रकृतावपि यजुरुत्पूतानां विकल्प· ।

[यजुरुत्पूतव्यवस्थोपपत्तिः फलंच]

चरुषु वाऽऽज्यलिङ्गात्—नावपतीति—प्रकृतौ प्रणयनस्य नित्यवदुपदेशात् शाखान्तरीयस्य यजुरुत्पूतस्य विकृतावुत्कर्षे प्राप्ते चरुष्वेव नियम· पवित्रवत्याज्य इत्युत्पूतमात्रावस्थानुवादस्य चरौ दर्शनात् । यजुरुत्पूतस्यचरावेव निवेशः । प्रकृतौ विकल्पपरिहारार्थं च ।

पशु पुरोडाशे चायं विधिः;—यजुरुत्पूतविधिः सोमविधे ।

[प्रत्येकं पक्षयोराशयः]

प्रणीता—मतिः;—पशवो जगतीरिति लिङ्गात् ।

घृतवतीः—तिकेचित्;—अस्यार्थः ;—स[?]रेवतीजगतीभिरिति संयवनमन्त्रव्याख्यानावसरे आपो वै रेवती· पशवो जगती· ओष-

---

[1] यदि प्रणीता–क, ख [2] चरुषु वास्य [3] वपतीति [4] नियता इति–ख.

**(सू) स्रुवेण [1]प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति पिष्टेष्वानीया[2]द्भिः परिप्रजाता इति तप्ताभिरनु[3]परिप्लाव्य जनयत्यै त्वा संयौमीति [4]संयुत्य मखस्य शिरोऽसीति पिण्डं कृत्वा यथाभागं व्यावर्तेथामिति विभज्य समौ पिण्डौ कृत्वा यथादेवतमभिमृशतीदमाग्नेयमिदमग्नीषोमयोरित्यग्नीषोमीयम् ॥ ५ ॥ ५ ॥ २३० ॥**

(वृ) पयो मधुमतीः इत्युक्तत्वात्, तानेवास्मा एकधा संसृज्य मधुमती· करोतीति पशोस्संसर्गाभावात् पशुसंबन्धिना केनाचित्संसर्ग· प्रतीयते। तत्रच एतद्वै दैव्यं मधु वनस्पते मधुना दैव्येन इति च मधुशब्दस्य घृतवचनत्वदर्शनात् मधुमत· करोतीति दर्शनाच्च घृतवती प्रणीता आनयन्तीति केचित् ॥

[1] प्रणीताभ्योऽप आदाय–क. [2] याद्भ्य –क. [3] परितप्तसिक्त्वा (रु)
[4] संयुत्य पिष्टान्यपश्च मेलयित्वा। तत्र तु संयवनमन्त्रोऽग्नीषोमाभ्यामित्यन्त, उत्तरस्यादिनेतिन्यायात्। स च देवतादिभेदे प्रोक्षणादिमन्त्रवद्यथादेवत विकर्तव्य, अन्यथा लिङ्गविरोधात्। न चार्थवादत्वम्, समवेताभिधायित्वात्। अग्नये त्वाग्नीषोमाभ्यामित्याह व्यावृत्त्या इति श्रुतेश्च। न च यथादेवतमित्यवचनादविकार इति वाच्यम्, प्रोक्षणादिमन्त्रस्वरूपतया तत्तुल्यन्यायतया च तैरेव व्याख्यातविकारत्वाद्व्यक्तवचनाच्च बोधायनेन,—'यथाऽग्नये त्वाग्नीषोमाभ्याममुष्मै इति यथादेवतम्' इति। अन्ये तु जनयत्यै त्वा संयौमीत्यन्त संयवनमन्त्रमिष्ट्वा शेषं विभक्ताभिमर्शने सौत्रेण मन्त्रेण सह विकल्पयन्ति। नाय सूत्रकृतोऽभिप्राय, अपृथग्विनियोगात्। कथ चायमाचार्ये कार्त्स्न्येनैतं मन्त्रसमाम्नाय विनियुञ्जानो मन्त्रमेक भ्रंशितवानिति संभावयाम। तस्मात् सूक्तमैकमन्त्र्येण विकर्तव्यमिति। तदय प्रयोगात्मा जनयत्यै त्वा संयौम्यग्नये त्वाऽग्नीषोमाभ्यामिन्द्राय वैमृधायेत्यादि। मखस्य शिरोऽसीति सर्वमेक पिण्डं कृत्वा ततो विभज्य द्वौ समौ कृत्वा तयोराग्नेयमितरं चाभिमर्शने नियच्छति। वैमृधसमाम्नतन्त्रत्वेतु पुरोडाशगणे यथाभागमित्यादिन्यायेन विभज्योत्तमयोरेव देवतोपदेशन करोति नाग्नेयस्य। तथा न केवलाग्नेयाभिमर्शनं विभागाभावात् (रु).

[सूत्रदर्शितमन्त्रेषु उपलक्षणादिपक्षभेदादिः]

(भा) जनयत्यै त्वा सयौमीत्येतावान् मन्त्रः सयवने उपलक्षणार्थ- उत्तरोऽभिमर्शने विकल्पः । अग्नी [1] षोमाभ्यामित्येवमन्तः सयवनार्थ एवेत्युपदेशः । यथादेवत [2] चोहः । व्या [3] वर्तेथामिति हविरभिधानं न पिण्डाभिधानम् । अतश्चरुपुरोडाशगणे ऊहः ॥ २३० ॥

---

[उपलक्षणताशयः]

(वृ) जनयत्यै त्वा—विकल्पः ;—तथाहि—अग्नीषोमाभ्या- मित्याह व्यावृत्त्यै इति ब्राह्मणे पृथक्कृतयोर्हविषोरभिमर्शने देवतोप- लक्षणार्थत्वम् तत्राग्नीषोमाभ्यामित्यत्र त्वाशब्दानुषङ्गः । अत इदमग्ने [4] रित्यादेर्विकल्पः । व्यावृत्त्या इति ब्राह्मण [5] वाक्यस्यायमभिप्रायः ;— भिन्नदेवतासंबन्धितयाऽभिमर्शनेन शास्त्रीयपृथक्करणं भवति न दृष्टरूप- विभागमात्रेणेति । अतो न यथाभागं व्यावर्तेथामित्यनेन विकल्पः ॥

[संयवनाङ्गत्वपक्षाशयः]

अग्निषोमा—त्युपदेशः—तस्यापि सयवने अन्वयसंभवात् । अन्यत्र च सूत्रकारेणाविनियोगात् । उत्तरस्यादिना पूर्वस्यावसानमिति न्यायात् ॥

[कर्मभेदेन ऊहप्रभेदाः]

यथादेवतं चोह्यते ;—केवलाग्नेये त्वमग्ने त्वेत्येतदन्तः । असनयत ऐन्द्राग्ने सति इन्द्राग्निभ्यामित्यन्तः । उहशब्दश्च यथादेवत- मुपलक्षणपरः । इन्द्रशब्दवन्महेन्द्रशब्दस्य [6] देवतानिर्देशस्य अन्वयि- देवतोपलक्षणार्थत्वात् ॥

[व्यावर्तेथामित्यस्य व्यवस्थातत्फलं च]

व्यावर्तेथामिति—ऊहः इति—नायं मन्त्रः संसृष्टपिण्डपृथ-

---

1 अग्नि जनयत्यै त्वा सयौमीत्येता + षोमाभ्यामित्येवमन्त —ख 2 चोह्यते— क ख ग. घ 3 व्यावर्तेथामग्नीषोमाभ्यामित्येवमन्त संयवहंनिरभि धानम् ?— ख 4 रित्यादिर्विकल्प —ट रित्यादिभिर्विकल्पस्याभिमर्शने पा 5 वाक्यशेषस्या— क 6 देवताशब्दस्य—ट

(सू) [1] **इदमहꣳसेनाया अभीत्वर्यै मुखमपोहामीति वेदेन कपालेभ्योऽङ्गारानपोह्य घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयति ॥ ६ ॥ ६ ॥ २३१ ॥**

**[अङ्गारापोहनमन्त्रावृत्तितन्त्रपक्षौ]**

**(भा)** कपालादङ्गारापोहनमन्त्र· प्रतिकपालयोगम् । यदि न सभवति, सकृदुपदेशः, अत ऊर्ध्वमित्युत्तरत्र वचनात् ।

(सू) [2] **एवमुत्तरमुत्तरेषु ॥ ७ ॥ ७ ॥ २३२ ॥**

(सू) [3] **एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ ८ ॥ ८ ॥ २३३ ॥**

चतुर्विंशी खण्डिका ॥

---

(वृ) करणार्थ·, किं तु ससृष्टहविर्विभागार्थ , अत आधिवपनात्प्राक् चरुपुरोडाशीयगणसंसर्गे अनेन विभाग· । ऊहश्च हविर्बहुत्वे ॥

**अत ऊर्ध्वमित्युत्तरत्र वचनादिति**—अधिश्रयणोत्तरकालमेवमनुपूर्वाण्येवैष्वत ऊर्ध्वमिति वचनादङ्गारापोहन तन्त्रेण यावत्सभवम् ॥

---

[1] अपोहने कपालेभ्य इत्यविशेषवचनादधिश्रयणेऽष्टासु कपालेष्विति विशेषवचनाच्च उत्तरस्मादपि कपालयोगादङ्गारानपोह्य ततोऽधिश्रयणमाग्नेयस्य । तथा दक्षिणस्मादपोह्योत्तरस्मादपोहतीत्येव सत्याषाढ । तत्र प्रतिकपालयोग मन्त्राभ्यासो देशभेदादसम्भवात् । (रु) [2] अधिश्रयतीत्यन्वय । उत्तरत्वमुत्पत्त्यपेक्षया हविषाम् । एवमिति मन्त्रातिदेश । (रु) [3] अधिश्रयणादूर्ध्वं ये सस्कारा प्रथनादय तेऽप्येषु पुरोडाशेषु एवम् अधिश्रयणोक्तेन उत्पत्तिक्रमेणैव कर्तव्या । एष्विति बहुवचनमैन्द्राग्नापेक्षया । समानश्चाय न्यायस्सर्वहविषाम्, विशेषहेत्वभावात् । तेन हविर्गणेषु चरुदोहादिव्यतिषङ्गेऽप्युत्पत्तिक्रमेणैव हविष्षु संस्कारा भवन्ति। अत ऊर्ध्वमिति च अत पूर्वमविभक्तत्वाद्धविषामानुपूर्व्यासंभवादुक्तम् । न तु तत्र न्याय्यत्वात् । अतो विकृतिषु सति सम्भवे पूर्वत्राप्ययमेव न्यायो द्रष्टव्य । यथा नानाबीजादिषु निरुप्ताभिमर्शनादिनम् (रु).

[अतिदेशकर्मक्रमः]

एवमनुपूर्वाणीत्याग्नेयस्य कृत्वा उत्तरस्य सस्कार. प्रथनादिः। एवेत्यवधारणादेकदेवत्येष्वपि यथा [1] प्रथमः कृतस्तथोत्तरस्सस्कार । एषु पुरोडाशेषु अन्येन हविषाऽव्यवेतेषु । व्यवाये तु वायव्यस्य पयस. कृत्वाऽभिघारणोद्वासने [2] तत एककपालस्य सौर्यस्य ; अत ऊर्ध्वमिति वचनात् ॥

[उपदेशपक्षे स्वसंमतिः]

पूर्वं तु प्रोक्षणादयस्संस्कारास्तन्त्रेण [3] भवन्ति ॥ २३३ ॥

( सू ) [4] **समानजातीयेन कर्मणैकैकमपवर्जयति ॥२३४॥**

[समानकर्मसु क्रमव्यवस्था]

( भा ) समानजातीयेनैकप्रकारेण कर्मणैकस्य परिसमाप्ति. । [5] नान्यस्य (स्याकृ) तु कृत्वा प्रथनमन्यः प्रथ्यते ॥ २३४ ॥

---

(वृ) **एवमनुपू—ऽव्यवेतेषु—**यथा अश्वप्रतिग्रहेष्ट्यादिषु । **व्यवाये तु**[6] —शुनासीरीयादौ[7] शुनासीरीयस्योद्वासन कृत्वा ॥

**समानजातीये—परिसमाप्तिः—प्रथ्यते—**[8] अन्यस्येति केषुचित्कपालेषु प्रथने कृते हविरन्तरस्य प्रथनम् । एव(षु) पूर्वेष्वपि कपालो-

---

[1] संस्कार कृत—ट. [2] तत्र—ख [3] सम्भवन्ति—(मु रा) [4] अत्वेव-मुत्पत्तिक्रमेण हविष्षु संस्काराणा प्रवृत्ति । त एव सस्काराः किं काण्डानुसमय-न्यायेन एकैकत्र काण्डश कार्या ? उत पदार्थानुसमयन्यायेन एकैकस्सस्कार सर्वेषु परिनिष्ठापनीय ? इत्यपेक्षायामभिमत न्याय दर्शयति,—समान+र्जयति,—एकविधिचोदित एको व्यापार (समानजातीयं) कर्म । तस्य बहुषु क्रियमाणस्य व्यक्तिनानात्वात् समानजातीयत्वाभिमान । तेन एकैक हविरनुसमेत्यापवर्जयति—निवृत्तार्थं करोति, न तु भिन्नजातीयैरनेकैरेकैकमित्यर्थ । तद्यथा प्रथमस्य कृत्वा प्रथन द्वितीयस्य करोति । तथैव श्लक्ष्णीकरणादीनि । एवं च पदार्थानुसमय एव सर्वत्राभिमत इत्युक्तं भवति, आह च सत्याषाढ । मीमासकाश्चाहु ‘ संयुक्ते तु प्रक्रमात्त दन्त स्यात् इतरस्य तदर्थत्वात्’ (५-२-६) इति (रु) [5] नाद्यस्य कृत्वा प्रधानमन्य —ख ग नार्धस्य कृत्वा—ट. [6] साभिघारणदि—ट [7] व्यवायेषु—ट [8] शुनासीर्यादौ—ट. अर्थस्य—ट

(सू) यानि विभवन्ति सकृत्तानि क्रियन्ते ॥२३५॥

[तन्त्रभूतानिकर्माणि]

(भा) [1] विभवन्तीति बहुवचनात् पूर्वाण्यपि सकृन्निरुप्ताभिमन्त्रणादीनि पर्यग्निकरणान्तानि च नानाबीजेष्वपि ॥

[आवर्तनीयकर्माणि]

अविभवता चावृत्तिः निरुप्ताभिमर्शनादीनाम् ॥ २३५ ॥

(सू) उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन् सर्वाणि कपालान्यभि[2]प्रथयति ॥ २३६ ॥

[प्रथनप्रकारः]

(भा) यथा सर्वाणि कपालानि [3] प्राप्नोति पुरोडाशस्तथा प्रथयति ॥२३६

(सू) [4] अतुङ्ग [5] मनपूपाकृतिं [6] कूर्मस्येव प्रतिकृति-मश्वशफमात्रं करोति ॥ ४ ॥ ७ ॥ २३७ ॥

(भा) तुङ्ग. उच्च ॥ २३७ ॥

(सू) [7] यावन्तं वा मन्यते ॥५ ॥ ८ ॥ २३८ ॥

---

पधानादिष्वेकैकस्य गणस्योपधाने [8] समाप्तेऽन्यस्यारम्भ., कर्मणेति प्रकृतत्वात् ॥

विभवन्तीति—ष्वपि—वरुणप्रघा सादिषु । अपि वा पौष्ण इति पक्षे हविरन्तरव्यवायेऽपि विभवता सकृत्प्रयोग [9] ॥

---

[1] प्रभवान्ति—क 'यदि विभवतीति वक्तव्ये यानि विभवन्तीति' इति पाठ दृश्यते पुण्यपत्तनमुद्रिते यानि कर्माणि सकृत्कृतान्येव सर्वेषामुपकाराय प्रभवन्ति तानि सकृदेव क्रियन्ते नत्वेकैकस्य, यथा' पर्यग्निकरणादीनि । बहुवचनात् प्रोक्षणादीनि च सर्वाणि ॥ (रु) [2] यथा सर्वाणि कपालान्यभितिष्ठति पुरोडाशस्तथा प्रथयतीत्यर्थ (रु) [3] प्राप्नोतीति तथा—ग [4] अतुङ्ग.—अनुच्चपृष्ठ, न चापूपवद्-तिनीच (रु) [5] मनयूपा [2]—क [6] तेऽपश्यन् पुरोडाश कूर्मं भूत सर्पन्तम् इति कूर्मकृतिसस्तवादित्यर्थ (रु) [7] यावन्तमिज्याया शेषकार्याणा च पर्याप्त मन्यते तावन्तमिति शफप्रमाणविकल्प (रु) [8] परिसमाप्ते—ट [9] योग इति- ट

(सू) तं न [1]सत्रा[2]पृथुकरोतीत्येके ॥ ६ ॥ ९ ॥ ॥ २३९ ॥

[पुरोडाशाकृतिपक्षभेद.]

(भा) सत्रापृथुरतिपृथुरित्यर्थः। कूर्मप्रतिकृत्या विकल्प ॥ २३९ ॥

(सू) त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णी करोत्यनतिक्षारयन् ॥ ७ ॥ १० ॥ २४० ॥

(भा) [3]अनतिक्षारयन्—यथा न पतत्युदकम् ॥ २४० ॥

(सू) अन्तरितꣳ रक्षोऽन्तरिता अरातय इति सर्वाणि हवीꣳषि त्रिः [4]पर्यग्नि कृत्वा देवस्त्वा सविता श्रपयत्वित्युल्मुकैः [5]परितपति ॥ २४१ ॥

[पर्यग्निकरणे पक्षभेद.]

(भा) सर्वेषा हविषां त्रि. पर्यग्निकरण दोहयोरपि। ब्राह्मणे पुरोडाश-

---

[विकल्पनीयौपक्षौ]

(वृ) **सत्रापृथुः—विकल्पः**—यावन्त वा मन्यत इत्यस्मिन् पक्षे कूर्माकृतेस्सभवादश्वशफमात्रेण विकल्प्यते। अकूर्मप्रातिकृत्येति केचित्पठान्ति, तस्यार्थश्चिन्त्य॰।

**अक्षारयन्—त्युदकम्**—कपालेषु ॥ २४० ॥

**सर्वेषां—योरपि**—सायदोहमप्यानीय भरद्वाजमतात्।

**ब्राह्मणे—मतात्**—यत्पुरोडाशस्स ईश्वरो यजमानमित्यादिषु

---

[1] अत्यर्थं पृथु न कुर्यात्। अल्प तु पार्थव समतमित्येके मन्यन्त इत्यर्थ (रु) [2] पृथुम्-क [3] अनातिक्षारयन्—यथा पुरोडाशमतीत्य नाप क्षरान्ति तथा (रु) [4] परित उल्मुकनयन—पर्यग्निकरणम्। तद्दोहयोरपि करोति सर्वाणीति वचनात्। तथा च भरद्वाज—पर्यग्निकरणकाले दध्युपदधातीति। तत्र यदाप्याहवनीये हविश्श्रपण भवति तदाऽपि प्रातर्दोहस्य गार्हपत्यस्थत्वात् तेनाग्निना पर्यग्निकरण सामर्थ्यात् [5] प्रति—क परितपति—परितस्तपति पुरोडाशम् (रु).

(भा) ग्रहण प्रदर्शन[1]मापस्तम्बस्य मतात् । * मीमांसकाना [2] द्विबहूनां [3] पुरोडाशानाम् । परितपन—समन्ततस्तपनम् ॥ २४१ ॥

(सू) **अग्निस्ते तनुवं मातिधागिति दर्भै[4]रभिज्वलयति [5] ज्वालैर्वा ॥ ९ ॥ १२ ॥ २४२ ॥**

[अभिज्वलनमस्पर्शे ]

(भा) अस्पृशद्भिरभिज्वलयति उपरि ज्वलयति ॥ २४२ ॥

(सू) **[6] अविदहन्तश्श्रपयतेति वाचं विसृजते ॥ १० ॥ ॥ १३ ॥ २४३ ॥**

[बहुवचनप्रयोगविषय ]

(भा) अविदहन्त इत्याग्नीध्रे बहुवचनम् ॥

---

(वृ) पुरोडाशग्रहण प्रदर्शनार्थम् । अतस्सर्वेषां पर्यग्निकरणम् ॥

[मीमांसकाशयः]

**मीमांसकानां—शानाम्**—एकवचनमात्रा[7]विवक्षाया द्विबहूनां पुरोडाशानां पर्यग्निकरणम् । प्रकृत्यर्थाविवक्षाकारणाभावात् । अतो न दोहयोः ॥ २४१ ॥

[अस्पृशद्भिः इति विशेषण फलोक्ति·]

**अस्पृशद्भि—ज्वलयति**—अग्निस्ते तनुवं मातिधागित्याहानतिदाहाय इति श्रुते· ॥ २४२ ॥

[बहुवचनोपपत्ति·]

**अविदहन्त इत्याग्नीध्रे बहुवचनम्**—पूजार्थम् । पूजितो-

---

[1] मापस्तम्बस्य मीमासकाना—क * (३ १-१५ शाबरभा) [2] बहूना—ग
[3] पुरोडाशानामेव—क [4] अस्पृशद्भि अभिज्वलयति दर्भै उपरि ज्वलयति (रु).
[5] ज्वालै —ज्वलद्भिस्तृणादिभि (रु) [6] तामभिवासयन् विसृजत इति प्रागुक्तस्य वाग्विसर्जनस्यायं काल प्रदर्श्यते । तामभिवासयन् इति लक्षणार्थे । भस्मनाभिवासनात्पूर्वकालस्य लक्षणेत्युक्त भवति । सप्रैषोऽयमाग्नीध्रं प्रत्यविवक्षितबहुवचनस्तस्यैवोत्तरत्र श्रपणविधानात् (रु) [7] क्षायाम्—क

(सू) आग्नीध्रो हवीꣳषि सुश्रृतानि करोति ॥ ११ ॥ १४ ॥ २४४ ॥

[सुश्रृतकरणे विशेषः]

(भा) स चार्थकर्म करोति ॥

(सू) संब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गारं भस्मा[1]ध्यूहति ॥ १२ ॥ १५ ॥ २४५ ॥

[अभिवासनस्वरूपादि तस्याध्वर्यवत्वं च]

(भा) अभिवासन—भस्माध्यूहनमुपरि पाकार्थम् । तमध्वर्युः, तामभिवासयन्निति लिङ्गात् ॥ २४५ ॥

(सू) [2]अत्र वा वाच विसृजेत् ॥ १३ ॥ १६ ॥ २४६ ॥

---

(वृ) ह्याग्नीध्रस्तथा श्रपयति यथा न क्षामस्स्याद्यत्ययो वा ॥ २१३ ॥

[अर्थकर्मतोपपादनम्]

स चार्थकर्म करोति—तूष्णीं सम्यक् श्रपणं करोति । हवींषीति बहुवचनादन्यत्रापि हविश्श्रपणे यदर्थकृत्यं तदाग्नीध्र एव करोति यन्मन्त्रेण तदेवाध्वर्यु ॥ २४४ ॥

[आध्वर्यवत्वोपपत्तिः]

तमध्वर्युः–लिङ्गात् इति—संवपन् वाच यच्छतीत्यध्वर्योर्वाग्यतत्वात् तामभिवासयन् विसृजत इति तस्यैवाभिवासनं कुर्वतो विसर्जनोपदेशादाध्वर्यवमभिवासन नाग्नीध्रकर्म अभिज्वलनदर्भभस्मनामेवाभिवासनम् ॥ २४५ ॥

---

[1] अध्यूहति अध्वर्यु —अभिवासयतीत्यर्थ (रु). [2] इदं सूत्र क–पुस्तके न दृश्यते I अस्मिंस्तु कल्पे तामभिवासयन्निति सन्नाभिवासनोत्तरकालो लक्षितो भवति । तेन अविदहन्तश्श्रपयतेति सम्प्रैषोऽप्यत्रोत्कृष्यते II (रु)

(सू) **अङ्गुलिप्रक्षालनं**[1] **पात्रीनिर्णेजनं चोल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रो लेखा लिखति** [2]**प्राचीरुदीचीर्वा ॥ १४ ॥ १७ ॥ २४७ ॥**

[रेखापवर्गमतिभेदः]

(भा) प्रथन श्लक्ष्णीकरण च कृत्वाऽङ्गुलिप्रक्षालन यथा न लेपससर्ग । अभिवासयन् वर्तमानेऽभिवासने समाप्ते वा प्राचीरुदीचीरिति लेखापरिसमाप्ति प्राच्यामुदीचा वा दिशि प्रागपवर्गा एव तु लेखा । केचिन्निनयनार्थत्वात्प्रत्यगपवर्गा इति ॥ २४७ ॥

---

[अङ्गुलिक्षालननैमित्तिकं उपात्तत्वनिमित्तमुपलक्षणम्]

(वृ) **प्रथन-संसर्ग इति**--एकस्य प्रथने कृते पुनरङ्गुलिप्रक्षालनम् । तथा श्लक्ष्णीकरणे च कृते हविरन्तरलेपससर्गार्थम् । लेपससर्गे हविस्ससर्गनिमित्त नैमित्तिक भवति । एवमुद्वासनावदानेष्वपि अङ्गुलिप्रक्षालनोदकं पात्रीनिर्णेजनेन ससृज्य उल्मुकेनाभिताप· कार्य. अभिवासयन् विसृजत इति वचनात् वर्तमानेऽभिवासने वाग्विसर्गः समाप्ते वा । अध्यूहनोत्तरकालम् । अत्र वा वाच विसृजेदिति वचनात् । अविदहन्तश्श्रपयतेति मन्त्रोच्चारणेन वा वाग्विसर्गः ॥

**दिशीति**—एकैकलेखाग्रसमाप्ति· ।

[लेखापवर्गपरिभाषाविरोधाब्दि· परिहार पक्षान्तराशयश्च]

**प्रागपवर्गा एव तु लेखाः इति**—तिसृणामन्त्यलेखा प्राच्यामेव भवति । यद्यपि परिभाषाया उदगपवर्गत्वमुक्तम् ; तदत्र नोपपद्यते । केचित् निनयनाङ्गत्वात् निनयने प्रत्यगपवर्गनियमात् प्रत्यगपवर्गा इति वदन्ति ॥ २४७ ॥

---

[1] अङ्गुलय प्रक्षाल्यन्ते येन । येन च पात्री निर्णिज्यते तदुभयमपि सहगृहीत जलम् उल्मुकेनोपरि गृहीतेन तापयति । ब्राह्मणेऽप्युक्तम् [2] प्रागायता तथोदीची । ताश्चोभय्योऽपि पश्चिमायामारभ्य पूर्वान्ता लेखा लेखितव्या (रु).

( सू ) तास्वसऽस्यन्दयंस्त्रिर्नि[1]नयति प्रत्यगपवर्गमेकताय स्वाहेत्येतैः प्रतिमन्त्रम् ॥१५॥१८॥२४८॥

( भा ) असस्यन्दयन् यथा न निर्गच्छत्युदक लेखाभ्यः। एकतप्रभृतयोऽद्भ्यो जाता इत्याप्या । [2]तेभ्योऽपनीयोत्तरपरिग्रह ॥ २४८ ॥

( सू ) [3]निनीय वाऽभितपेदभितपेत् ॥ २४९ ॥

इति पञ्चविंशी खण्डिका ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये अष्टम पटल ॥

इति प्रथम प्रश्न ॥

---

(भा) [4]अथातोदर्शपूर्णमासौ, इमा, उत्तरेण, पृथिव्या:, प्रेय, यत्कृष्णो रूप, अमावास्याया, उत्पूतेन, सव्य, एतानिव , अमावास्यायां, निष्टप्त, उत्स, ओषधय', उदित आदित्ये, अत्र पूर्ववत् , वानस्पत्याऽसि, चतुरोमुष्टीन् , सशूकाया, उच्चै , देवेभ्य., आहवनीये, एव, प्रक्षालितायां, समानजातीयेन, पञ्चवि ऽशति' ॥

अथात, उत्तरेण, अमावास्याया यदह , अमावास्यायां रव्या, उदित आदित्ये, सशूकाया, आहवनीये, प्रक्षालितायामष्टौ ॥

---

[आप्यशब्दविवरणफलम्]

(वृ) असऽस्यन्दयन्–योत्तरपरिग्रहः—आप्यलेप निनीयोत्तर परिग्राह परिगृह्णीयादिति अस्याऽऽप्यशब्दस्य व्याख्यानार्थम् अद्भ्यो जाता

---

[1] तासु बहिरस्यन्दयन् एकैकेन मन्त्रेण एकैकत्र सकृत्सकृन्निनयति। न तु एकैकत्र निनयनावृत्ति त्रिस्त्रिरित्यवचनात् (रु ) [2]तेभ्यो निनीयोत्तरपरिग्राह (रामा ) [3]रेखासूदकं निनीय तत्र वा पृथगुल्मुकेनाभितपेत् । द्विरुक्ति प्रश्नसमाप्तिसूचिका–रु [4]पूर्वत्रैवार्थतोव्याख्यात मित्याशयो भाष्यकारस्य। अस्मात् खण्डिकासंग्रहवाक्यात् प्रश्नेऽस्मिन् १८, २३ खण्डे द्वितीयसूत्रोपक्रमावित्यवगम्यते । खण्डिकासग्रहश्च अन्ततो वैपरीत्येन कोशेऽन्यस्मिन् दर्शित । अस्मिन् क्रमे १८, २३ खण्डयोरुपक्रमोऽस्मन्मुद्रितक्रम एव दृश्यते.

# अथ द्वितीयः प्रश्नः.

(सू) देवस्य त्वा सवितुः प्रसव इति स्फ्यमादाय इन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्र्य हरस्ते मा प्रतिगामिति दर्भेण संमृज्य[1] [2]अपरेणाहवनीयं यजमानमात्री[3]मपरिमितां वा प्राचीं वेदिं करोति ॥ १ ॥ २५० ॥

[संमार्गे वेद्यां च विशेष.]

(भा) स्रुववत् स्फ्यसमार्ग इत्युपदेशः । [4]आहवनीयसमीपे वेदिः ।

---

(वृ) इति। यदद्भ्योऽजागन्त तदाप्यानामाप्यत्वमिति निर्वचनादेकतादय आप्या॰ ॥ २४९ ॥

इति श्री कौशिकेनरामाग्निचिता कृताया धूर्तस्वामिभाष्यवृत्तौ प्रथमेप्रश्नेऽष्टम पटल ॥

॥ समाप्तश्चप्रश्न ॥

---

[उपदेशपक्षस्वपक्षयोराशयः]

**स्रुववत् स्फ्यसंमार्ग इत्युपदेशः**—पात्रसमार्गरूपत्वात् ध्रुवा प्राशित्रयोरिव मुख्यभूतस्रुवधर्मकत्वमित्यभिप्राय॰ । स्वमते तु ध्रुवाप्राशित्रयोः स्रुग्भिस्समानविधानात् स्फ्यस्य स्रुग्धर्मकत्वविधानाभावादनियम.॥

**आहवनीयसमीपे**—दन्तरम्—अन्तराल गार्हपत्याहवनीययो॰ चतुर्विंशत्यादि[5]पक्षे ॥

---

[1] इदं पद कपुस्तके न दृश्यते [2] गार्हपत्याहवनीययोरन्तरालमहत्त्वेऽपि आहवनीयानन्तर्यं वेदेर्दर्शयन्नपरेणाहवनीयामिति(रु) [3] अपरिमितशब्द सर्वत्रोक्तात्प्रमाणादधिकविषय इति न्यायविद । अपरिमित प्रमाणाद्भूय इति कात्यायन । अपरिमित शब्दे संख्याया ऊर्ध्वमिति भरद्वाज (रु). [4] संभवेत्–संगृह्णीयात् (रु). [5] पक्षेऽपि-क-

(भा) यत्रापि महदन्तरं प्राक्तेन यजमानमात्री ॥ २५० ॥

(सू) यथा सन्नानि हवीꣳषि [1]संभवेदेवं [2]तिरश्चीम् ॥ २ ॥ २५१ ॥

[संभवेदिति पदविवक्षितार्थः]

(भा) यथा सन्नानि हवीꣳषि सभवन्ति तथाऽस्याविस्तीर्णता ॥ २ ॥

(सू) वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिरिति पुरस्तात् [3]स्तम्बयजुषो वेदेन वेदिं त्रिस्संमाष्ट्र्युपरिष्टाद्वा ॥ ३ ॥ २५२ ॥

[संमार्गकालमतिभेदः]

(भा) "समार्गं कृत्वोपरिष्टात्खनिप्रत्यवेक्षणात्प्राक् ।" केचित् खनि प्रत्यवेक्षण कृत्वा ॥

---

(वृ) [4]प्राक्तेन—प्रागायता । यजमानमात्री ॥ २५० ॥

[संमार्गकालावधारणफलम्]

संमार्ग–त्प्राक्—उपरिष्टाद्वेत्यस्य व्याख्या ;—स्फ्यसंमार्गं कृत्वा स्तम्बयजुष उपरिष्टाद्वेदिसमार्गः । खनिप्रत्यवेक्षणात्प्राक् । स्तम्बयजुरङ्ग वेदिसमार्ग पुरस्तादुपरिष्टादिति निर्देशात् पुरस्तात्सामिधेनीनामितिवत् । उपसत्सु त्वशक्यत्वान्निवर्तते । संसर्गः स्तीर्णपक्षे ॥

[पक्षान्तराशयः]

[5]केचित् खनिप्रत्यवेक्षणं कृत्वा इति—प्रत्यवेक्षणस्यापि स्तम्बयजुरङ्गत्वाभिप्रायेण ॥

---

[1] तिरश्चीं—तिर्यग्विस्तीर्णाम् (रु) [2] विस्तीर्णा स्यात् (क) [3] स्तम्बयजुरिति अनन्तरस्य कर्मणो नाम तस्य पुरस्तादुपरिष्टाद्वा संमार्ष्टि (रु) [4] प्राक्ते इति ग—पुस्तके मूलप्रतीकग्रहणेन । तस्य भाष्यपाठत्वसूचनात् प्रागायतेत्यशस्य विभ्रान्तरूपता सच्यते ग—पुस्तकानुरोधेन । अन्येषु त्रिषु कोशेषु प्राक्तेन इति पद न दृश्यते.

(भा) येन तृणेन स्फ्यसमार्गस्तदुत्करे प्रक्षिपत्यन्यच्चैव विषम्, यद्वै यज्ञियस्य कर्मण इति लिङ्गात् ॥ २५२ ॥

(सू) [1]पूर्वार्धाद्वेदेर्वितृतीयदेशात् स्तम्ब[2]यजुर्हरति ॥ ४ ॥ २५३ ॥

(भा) पूर्वमर्धं पूर्वार्धम्। पूर्वार्धाद्वेदेः ईषद्विगततृतीयदेशो[3] वितृतीयदेश· तस्मात्। स्तम्बयजुरिति तृणस्य छिन्नस्य पांसूना च नामधेयम् ॥ २५३॥

(सू) पृथिव्यै वर्मासीति तत्रोदगग्रं प्रागग्रं वा दर्भं निधाय पृथिवि देवयजनीति तस्मिन् स्फ्येन प्रहृत्य अपहतोऽररुः पृथिव्या इति स्फ्येन सतृणान् पांसूनपादाय व्रजं गच्छ गोस्थानमिति हरति। वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते यजमानं वा ॥ ५ ॥ २५४ ॥

---

उत्करेतृणपक्षेप्रमानोपपत्ति·]

(वृ) **येन तृणेन लिङ्गादिति**--यज्ञसबन्धिद्रव्यस्य कृतप्रयोजनस्य सामान्येनोत्करे प्रक्षेपरूपप्रतिपत्तेः सिद्धवदनुवादात् ॥ २५२ ॥

**ईष — देशः ;** — स्तम्वयजुस्तत्रापि । ईषद्विगततृतीयदेशो वितृतीयदेश· । तस्मात् देशात् ।

[नामधेयत्वप्रयोजनम्]

**स्तम्वयजु–नामधेयम्**— तस्मादुपसत्स्वपि स्तम्वयजुश्शब्दो ऽस्य· ॥ २५३ ॥

---

1 वेदे पूर्वार्धात्। तत्रापि विगतवेदितृतीयदेशात्। पूर्वं वेदितृतीय हित्वा मध्यमस्य वेदितृतीयस्य पूर्वार्धादिति यावत् (रु) 2 स्तम्बयजुरिति सतृणाः पासवोऽभिधीयन्ते तद्योगात्कर्म च क्वचित् (रु). 3 देशोऽपि–ग

[प्रत्यवेक्षणे विशेषः]

( भा ) प्रत्यवेक्षण तस्मिन्नेव देशे ॥ २५४ ॥

( सू ) [1] बधान देव सवितारित्युत्तरतः पुरस्ताद्वितृतीयदेशे उदग्द्विपदे अपरिमिते वा वेदेर्निवपति ॥ ६ ॥ ॥ २५५ ॥

(भा) बधान देव सवितरित्युत्तरतो निवपति । कस्योत्तरत. ? यः पुरस्ताद्वितृतीयदेशो वेदेस्तत्समीप उत्तरत । समीपसप्तमीयम् । उत्तरतो वितृतीयदेशस्य समीपे । कियत्यध्वनि निवपति ? द्विपदे अपरिमिते वा । उदगिति कर्तुर्मुखवाद । पुनर्वचनादुदङ्मुखो निवपति ॥ २५५ ॥

( सू ) स [2] उत्करः ॥ ७ ॥ २५६ ॥

(भा) त न्युप्तमुत्करम् ॥

( सू ) अररुस्ते दिवं मास्कानिति [3] न्युप्तमाग्नीध्रोऽञ्जलिनाभि[4]गृह्णाति ॥ ८ ॥ २५ ७ ॥

---

[प्रत्यवेक्षणेव्यवस्था]

(वृ) प्रत्यवेक्षणं तस्मिन्नेवदेशे — वेदेः । उपसत्सु स्तीर्णपक्षे यजमानमेव प्रत्यवेक्षते ॥ ५ ॥ २५४ ॥

[उदङ्मुखत्वलाभः]

पुनर्व—ङ्मुखो निवपति—उत्तरत इति सिद्धे उदगिति पुनर्वचनादुदङ्मुखो निवपतीत्यर्थ ॥ २५५ ॥

---

[1] एतदुक्त भवति—पूर्वं वेदितृतीय हित्वा अनन्तरदेशादुदग्द्विपदे ततोऽधिके वा देशेऽतीते निवपतीति । वक्ष्यति च महावेद्या चात्वालात् द्वादशसु प्रक्रमेषु प्रत्यगुत्तर स्तावत्येवाध्वन्युदग्यथा चात्वाल इति (रु) [2] यत्र न्युप्त स्तम्बयजु स देश उत्कर इत्यर्थ (रु) [3] याजमाने तूत्करमभिगृह्यमाणमिति तात्स्थ्याभिप्राय वेदितव्यम् (रु) [4] उत्करे न्युप्तं स्तम्बयजुरञ्जलिना गृह्णातीत्यर्थ. (रु).

[अभिग्रहणस्वरूपम्]

(भा) अभिग्रहणम्- उपर्यञ्जलिनाऽचाल्यमानस्य ग्रहणम् ।

(सू) [1]एवं द्वितीयं तृतीयं च हरति ॥९॥
॥ २५८ ॥

(सू) तूष्णीं चतुर्थꣳहरन् सर्वं दर्भशेषं हरति ॥
॥ १० ॥ २५९ ॥

इति प्रथमाखण्डिका ॥

---

(सू) अपारुरुम देवयजनं पृथिव्या इति द्वितीये; [2]प्रहरणोऽररुर्द्यां मापप्तदिति तृतीये । अपहतोऽररुः पृथिव्यै देवयजन्या इति द्वितीयेऽपादानोऽपहतोऽररुः पृथिव्या अदेवयजन इति तृतीये ॥ १ ॥
॥ ११ ॥ २६० ॥

(सू) अवबाढꣳरक्ष इति द्वितीये निवपन [3]आग्नीध्रोऽभिगृह्णात्यवबाढोऽघशꣳस इति तृतीयेऽवबाढा यातुधाना इति चतुर्थे ॥ २ ॥ १२ ॥ २६१ ॥

(सू) द्रप्सस्ते द्यां मास्कानिति [4]खनिं प्रत्यवेक्ष्य स्फ्येन वेदिं [5]परिगृह्णाति वसवस्त्वा

---

[अभिग्रहणेविशेषः]

(वृ) अररुस्ते इत्येकवचनात् सतृणपांसुयुक्तस्य देशस्याभिग्रहणम्; उत्करमभिगृह्यमाणमिति दर्शनाद्याजमाने । आभिग्रह–णम्;—दिवः पर्यबाधन्तेति दर्शनात् ॥ २५७ ॥

---

[1] एव त्रयो हरणपर्याया भवन्ति (रु). [2] प्रह्रियते येन मन्त्र प्रहरण तथाऽपादान (रु) [3] अग्नाध्रग्रहणमव्यामोहार्थम् (रु) [4] यत पासव उपात्ता स प्रदेश खनि (रु) [5] परिगृह्णाति–परित स्वीकाराचिह्न रेखादि करोति (रु),

(सू) परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतो [1]रुद्रा इति पश्चादादित्या इत्युत्तरतः ॥ १३ ॥ २६२ ॥

[रौद्रेअपामुस्पर्शनेमतिभेदः]

(भा) एकस्मिन्नेव [2]रुद्रेऽपामुपस्पर्शनमिति न्यायः । बहुरुद्रेऽपीत्युपदेशः ॥

(सू) अपारुरुम देवयजनं पृथिव्या अदेवयजनो जहीति स्फ्येनोत्त[3]मां त्वचमुद्धन्ति ॥ २६३ ॥

(सू) [4]समुद्धतस्याग्नीध्र उत्करे त्रिर्निवपति ॥ १५ ॥ ॥ २६४ ॥

(सू) इमां नराः कृणुत वेदिमेतं देवेभ्यो जुष्टामदित्या उपस्थे । इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्त्विति [5]संप्रेष्यति ॥ ६ ॥ १६ ॥ ॥ २६५ ॥

---

[न्यायोपदेशपक्षयोः प्रत्येकमाशयः]

(वृ) एकस्मिन्नेव रुद्रे अपामुपस्पर्शनमिति न्यायः इति— रौद्रराक्षसेत्यत्र मीमांसकमत्या आग्नेयमितिवदेकदेवतासंबन्धित्वावगमात् रुद्रास्त्वा परिगृह्णन्त्विति बहुरुद्रसम्बन्धे नापामुपस्पर्शनमिति ॥

बहुरुद्रेऽपीत्युपदेशः इति—मारुतवैश्वदेववत् बहुरुद्रसम्बन्धस्याप्युपपत्तेः । ननु एकस्य बहूना वा संबन्धिनियमेन वक्तुमर्हति रौद्रशब्दो नानियमेन वैषम्यात्[2] सत्यम्, एकेन रौद्रशब्देन एक

---

[1] रुद्रास्त्वेत्यत्रनापामुपस्पर्शनम्, रुद्रानुपकारात् रुद्रगणत्वाच्च । ताद्धि क्रूरैकरुद्रार्थकर्मविषयामिति ब्राह्मणप्रसिद्धि (रु) [2] रौद्रे-ग [3] उत्तमा त्वचं—वेदिभूमेरुपरितनीं मृदम् (रु) [4] समुद्धतम् (रु) [5] सप्रेष्यतीति परिस्तरणसप्रैषेणव्याख्यातम् । अथवा परिकर्मिणश्च वेदिं कुर्वन्ति, सौमिकेऽस्मिन् सप्रैषे तथा दर्शनात् (रु).

[इमां नरा इत्यादेरध्वर्युसंस्कारता]

(भा) स्वयमात्मानमनुजानीयादिति [1] लिङ्गात् । स्वय वा आत्मसस्कारो विलिङ्गेऽपि ॥ २६६ ॥

**(सू) देवस्य सवितुस्सवे इति खनति व्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुलां [2] यावत्पाष्ण्याः [3] शुक्लं तावतीं [4] पृथमात्रीं रथवर्त्ममात्रीं [5] सीतामात्रीं प्रादेशमात्रीं वा [6] पुरीषवतीम् ॥ ७ ॥ १७ ॥ २६६ ॥**

---

(वृ) एव सबन्धोऽभिधातव्य अत्र तु नैक रौद्रमुपादीयते ; सर्वाणि रौद्राण्युपादीयन्ते । [7] तत्प्रतीत्यर्थं शब्दप्रयोगे असमानार्थानामपि सरूपाणामेकशेष इति बहवो रौद्रशब्दा· । अथवा निमित्तगतसङ्ख्याया अविवक्षा हवि· क्षायतीतिवत् ॥ [8] २६३ ॥

[अध्वर्युसंस्कारतानिर्वाहः]

**स्वयमात्मानम**[9]**नुजानीयादिति लिङ्गात्। स्वयं वा**—प्राप्तकाले लोडभिप्रायेण प्रैषार्थत्वाभावात् । अथवा—**आत्मसंस्कारो विलिङ्गेऽपि**—प्रैषार्थेऽपि प्रैषलिङ्गाविवक्षया अध्वर्युसस्कारो मन्त्रोच्चारणेनेति ॥ २६५ ॥

---

[1] सूत्रकारलि–क [2] लावा–क [3] पार्ष्णि—पादस्य पश्चिमभाग तस्य यावान् शुक्लो भागस्तत्वत्खनति (रु) [4] पृथमात्र—त्रयोदशाङ्गुलमिति बोधायन (रु) [5] फालकृष्टा रेखा सीता (रु) [6] पुरीष—जलार्द्रा मृत् (कपर्दिस्वामी) । पांसु (रु). [7] तत् प्रीत्यर्थं शब्दप्रयोगे–घ [8] २३७तमे सूत्रे (मु रा ) अध्वर्युणा वेदेरुपरितना भूमित्वचमुद्धतामाग्नीध्र उत्करे निवपति । इत्याधिक दृश्यते लिखितपुस्तकेषु तन्नोपलभ्यते , [9] नुजानीयादिति सूत्रकारलिङ्गात्–क.

[खनितृव्यवस्था]

(भा) खननमाग्नीध्रकर्म । पृथो हस्ततलम् । [1]सीता [2]कर्ष ॥२६६॥

[खननेप्रमाणव्यवस्था]

(सू) **नैता मात्रा [3]अतिखनति ॥ १८ ॥ २६७ ॥**

(भा) अतिखननप्रतिषेधाद्यत्र द्व्यङ्गुलादयो[4]नुपूर्यन्ते [5]तत्रादोष इति केचित् । अतीत्यैतानि न खनति , अर्वागन्यदपि प्रमाण लभ्यत इत्यपरे ।

(सू) **दक्षिणतो [6]वर्षीयसीं प्राक्प्रवणां प्रागुदक्प्रवणां वा ॥ ९ ॥ १९ ॥ ॥ २६८ ॥**

इति द्वितीयाखण्डिका

---

(भा) दक्षिणतो वर्षीयसीं पुरीषेणोच्छ्रिताम् ।

(सू) **[7]प्राञ्चौ वेद्यंसा[8]वुन्नयति प्रतीची श्रोणी पुरस्ता[9]दंहीयसी पश्चात्प्रथीयसी मध्ये [10]संनततरा भवति ॥ १ ॥ २० ॥ २६९ ॥**

---

(वृ) **खननमाग्नीध्रकर्म**— इमा नरा इति सप्रैषार्थे परकर्तृत्वावगते: एकस्मिन्नप्याग्नीध्रे बहुवचन तु पूर्ववत् ॥ २६६ ॥

[नियमाभावपक्षोपपात्तिः]

द्व्यङ्गुलादिविधानादेव नियमे सिद्धे—

**अतीत्यैतानि न खनतीति–इत्यपरे**—प्रादेशमात्रादधिकं न

---

[1] सीता च–**ग** [2] कार्षा–**क** आकर्ष –**ख ग** [3] उक्तासु मात्रासु या या मात्रा अङ्गीकृता तान्तामतीत्य नखनति न्यूनत्वे तु नाताव दोष इति भाव (रु) [4] न पूर्यन्ते–**क** [5] तत्र दोष –**ग** [6] पुरीषभूम्ना यथ दक्षिणत उन्नता तद्भासाच्च प्र क्प्रवणास्यात् तथाकरोतीत्यर्थ । तथाच श्रुति ,— यथा वै दक्षिण पाणिरेव देवयजनमिति (रु) प्रप्राञ्चौ–**क.** [8] प्राञ्चावुन्नयति अभित आहवनीयमुन्नयात—उदूहति । श्रोणी च प्रतीच्यावभितोगार्हपत्यम् (रु) [9] अंहीयसी–तनीयसी (रु) [10] सन्नमन शुल्बे व्याख्यास्यते (रु).

(भा) अहीयसी—तन्वी ॥ २६९ ॥

(सू) **यन्मूलमातिशेते स्फ्येन तच्छिनत्ति न नखेन २॥ २१ ॥ २७० ॥**

[नखप्रतिषेधस्यभावः]

नखप्रतिषेधाद्दास्यादिसहकारि स्फ्यस्य स्यात् ॥ २७० ॥

(सू) **यत्पुरीषमतिशेते उत्करे तन्निवपति ॥ ३ ॥ ॥ २२ ॥ २७१ ॥**

(सू) **[1] आहार्यपुरीषां पशुकामस्य कुर्यात् ॥४॥२३॥ ॥ २७३ ॥**

(भा) यस्या भूमेराहरति तां खनति मन्त्रेण ॥ २७३ ॥

---

(वृ) खनतीति द्व्यङ्गुलादिपरिमाणनियमो नास्तीति केचित् ॥ २६७ ॥

**नखप्रतिषेधा–स्यादिति**—स्फ्येन तच्छिनत्तीति विधाना-दन्यस्याप्राप्तावपि नखप्रतिषेधाद्दास्यादेरपि सहकारित्वेन प्राप्ति. [2] तत्र तत्र नखप्रतिषेधात् अन्यत्र विधृत्यादौ नखप्राप्ति ॥ २७१ ॥

**यत्पुरीषमतिशेते**—पुरीषबाहुल्ये एकदेशस्योत्करे निवपनम् ॥ २७२ ॥

[नखप्रतिषेधस्वारस्यम्]

**आहार्यपुरीषां**—अन्यत पुरीषमाहृत्य यस्या वेदेः करणं सा आहार्यपुरीषा ॥

**यस्या–मन्त्रेण**—स्फ्यादानादि इमां नराः कृणुतेत्यन्तं वेदि-देशे कृत्वा पुरीषाहरणस्य स्थाने देवस्य [3] सवितुरिति खनति। ततः पुरीषमाहृत्य वेद्यां च द्व्यङ्गुलादिपरिमाणं न्युप्य दक्षिणतो वर्षीयसीं प्राक्प्रवणामित्येव करोति ॥ २७३ ॥

---

1 आहार्यं पुरीष देशान्तराद्यस्या सा तथोक्ता (रु) [2] अत्र नख.—घ. तत्र नख–क. [3] सवितुपरिति–क २

(सू) यत्प्राक्खननात्तत्कृत्वा[1] यदाहरेत्त[2]न्मन्त्रेण खनेत्[3] ॥ ५ ॥ २४ ॥ २७४ ॥

(सू) ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामीति ब्रह्माणमामन्त्र्य स्फ्येन वेदिं परिगृह्णात्यृतमसीति दक्षिणत ऋतसदनमसीति पश्चादृतश्रीरसीत्युत्तरतः ॥ २५ ॥ ॥ २७५ ॥

(सू) [4]विपरीतौ [5]परिग्राहावित्येके समामनन्ति ॥ ॥ ७ ॥ २६ ॥ २७६ ॥

(भा) यत्राविहृतेऽग्नौ वेदि. तत्र विपरीतौ परिग्राहौ[6], तेऽग्निना प्राञ्चोऽजयन्निति [7]लिङ्गात् ।

(सू) धा असि स्वधा असीति [8]प्रतीचीं वेदिं स्फ्येन [9]योयुप्यते ॥ ८ ॥ २७ ॥ २७७ ॥

---

(वृ) यत्राविहृतेऽग्नौ–परिग्राहौ इति—मन्त्रविपर्यास ।

तेऽग्निना प्राञ्चोऽजयन्निति लिङ्गादिति—तेऽग्निना प्राञ्चोऽजयन् वसुभिर्दक्षिणा इत्यादि[9] यस्यैव विदुषो वेदिं परिगृह्णातीत्यन्तेन वस्वादिदेवतासम्बन्धिपरिग्रहस्य अग्निसाहचर्यात् । अग्न्यभावे ऋतमसीत्यादिपरिग्रह पश्चादौ ॥ २७६ ॥

---

[1] कृत्वाऽऽह–क [2] त मन्त्रेण–क [3] प्राक्खननात यदाहरेत्पुरीष तत् खननमन्त्रेण खनेत्। तदा तु द्व्यङ्गुलादिनियमो वद्या पुरीषे भवति (रु) [4] विपरीतत्वं मन्त्रव्यत्यासात् (रु) [5] परिग्रहावेके–ख [6] रुद्रदत्तस्य चैतदनुवादे 'अन्यत्र नियम ' इत्यधिक तत्तु क्वापि कोशे न दृश्यते [2] [7] एतद्दूष्य रुद्रदत्त खण्डयति, 'प्रकृतौ तुल्यार्थयोर्धर्मयो प्रकृतिवद्विकृतावपि तुल्यवत्प्राप्तेरनिवारणात अर्थवादादेव प्राग्भागपरिग्रहार्थाया प्रागग्निना परिग्रहस्तुतेरुभावपि परिग्राह्यौ प्रत्यविशेषात् । विशेषे चोत्तरपरिग्राहेप्राग्भागपरिग्रहप्रसङ्गाच्च तस्मात्तुल्यवद्विकल्पस्सर्वत्र' इति । [8] प्रतीचीं-प्रत्यगपवर्गाम् (रु) [9] योयुप्यते–निम्नोन्नतमसमीकरणार्थं घट्टयति [10] इत्यादि,

(भा) प्रतीचीं—प्रत्यगपवर्गाम् योयुप्यते [1] घट्टयति ॥ २७७ ॥

(सू) उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते ॥ ९ ॥ २८ ॥ २७८ ॥

(भा) अनुवीक्षते—पुरस्तादारभ्य पश्चात्समाप्यते ॥ २७८ ॥

(सू) [2] पश्चार्धे वेदेर्वितृतीयदेशे स्फ्यं तिर्यञ्चं स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुवश्च सं मृड्ढि पत्नीं सन्नह्याज्येनोदेहीति ॥ २७९ ॥

(भा) एकवचनेन द्विभार्यबहुभार्ययोरपि । पत्नीं सनह्येति आग्नीध्रसंस्कारः ।

---

(वृ) प्रतीचीं–घटयाति—घट्टन प्रत्यगपवर्गम् ॥ २७७ ॥

अनुवीक्षते–समाप्यते—घट्टनवत् ॥ २७८ ॥

एकवचनेन–संनह्येति- अनेकपत्नीकप्रयोगस्यापि प्रकृतित्वादूहासभवात् । न चैकपत्नीक एव मन्त्रव्यवस्था ! यथा अग्निं गृह्णामीत्यसद्यस्कालायाम् । प्रैषकाले पत्नीनामपि सान्निहितत्वात् असमवेतत्वेन पत्नीसंस्कारत्वाभावात् । न च पाशमन्त्रवत् प्रकृत्यर्थं ॥

अग्नीध्रसंस्कारत्वात्—प्रैषस्य ॥ २७९ ॥

---

[1] घटयति—क [2] पश्चार्धे वेदेरित्यादि पूर्वार्धाद्वेदेरित्यादिना व्याख्यात । पाश्चात्य वेदितृतीय हित्वा मध्यमस्य वेदितृतीयस्यापरार्धे इत्युक्त भवति । परार्थत्वात्संप्रैषस्य आग्नीध्र एतानि कर्माणि कुर्यात् । अध्वर्युरेव वा करोति । संप्रेषे परानुपादानात् । आग्नीध्रोऽश्मानम् 'आग्नीध्रो हवींषीत्यादिवच्च विशेषावचनात् । स्वयमात्मानमनुजानीयादिति न्यायेन आत्मन्यपि सप्रैषोपपत्तेश्च । न चैव संप्रैषानर्थक्यम्, कर्तृसंस्कारार्थत्वात् । ' इत्याहानुपूर्वतायै ' इति श्रुतेश्च । उक्तं च कात्यायनभारद्वाजाभ्यामपि । पत्नीद्वित्वबहुत्वयोरपि पत्नी सन्नह्येत्यविकार प्रकृतावूहप्रतिषेधात् । न च सप्रैषस्य निवृत्तिः पत्नीप्रातिपदिकार्थसमवाये तद्गुणसंख्याविरोधमात्रेण मन्त्रबाधस्यायुक्तत्वत् । जातिसंख्याविवक्षयाऽपि कथ चिदेकवचनोपपत्तेश्च एव च प्रकृतिसिद्धस्यैवास्य विकृतावप्यनूह (रु)

[संस्कार्यान्तर प्रैषवचन संपत्नीयविशेषादिः]

(भा) आत्मसस्कारो वा न पत्नीसस्कार । [1]वर्तमानोऽप्यमुष्या अर्थे प्रयुक्त [2]इत्यग्रहणात् जात्यभिधानम् । क्रमेण सन्नहनम् । युक्ताम इत्यावृत्ति. । [3]सपत्नीये तु होमाङ्गत्वात् माभूदावृत्ति गुणवशेन प्रधा-

---

[संस्कार्यान्तरमध्वर्युरित्यत्रहेतु ]

(वृ) **आत्मसंस्कारो वा**—अध्वर्यो — स्वयमात्मानमनुजानीया-दितिवत्[4] । अत एवानेकपत्नीकप्रयोगेप्यन्यतरसस्कारार्थतया एकवच-नान्तस्य प्रयोग. । [5]न च पत्नी सस्कार ॥

[प्रैषे एकवचननियमोपपत्ति.]

**वर्तमानोप्य–भिधानम्**—एकवचनान्ततया वर्तमानस्याप्य-मुष्या[6] अर्थे प्रयुक्त इति विशेषाग्रहणम् । तस्मात् पत्नीजात्यनुवादा-देकवचनान्त एव [7]सर्वथा प्रैष ॥

**क्रमेण संनहनम्**—अनेकपत्नीके ।

[प्रासङ्गिकोक्तिः]

**युक्ताम इत्यावृत्तिः**—सन्निहितपत्नीसंस्कारत्वात् । पत्नीमन्त्र-निरूपणप्रसङ्गादन्यदप्युच्यते,— देवपत्न्युपस्थानस्य चेन्द्राणीवेत्यस्य चावृत्तिः ॥

[संपत्नीये आवृत्तिविरहोपपादनम्]

**संपत्नीये तु**—नैवम् । **होमाङ्गत्वान्माभूदावृत्तिः—रन्या-य्यत्वादिति**—यद्यपि सपत्नी पत्येति मन्त्रे पत्न्या फलाशंसन विव-क्षितम्, तथाऽपि सपत्नीय जुहोतीत्येकस्य होमस्य अदृष्टार्थत्वेनोप-देशात् तत्साधनत्वान्मन्त्रस्य अनेकपत्नीकेऽपि नावृत्ति । सर्वपत्नी-

---

1 वर्तमानस्याप्यवर्तमानस्यापि–ट (रु) 2 इत्यर्थग्रहणात्–क ख.
3 सपत्नीयतु ?–ट 4 अपत्नीसस्कार अत एव–क 5 नपत्नीसस्कार –घ ट
6 मुष्मा–ख अमुष्या ? प्रयुक्त–ट. 7 सर्वदा–घ सर्वत्र '–क

नावृत्तेरन्याय्यत्वात् । जात्याभिधान ऊहस्य चाभावो माभूदार्षबाध· प्रकृताविति ॥ २७९ ॥

(सू.) **अपि वा न संप्रैष [1] ब्रूयात् ॥ ११ ॥ ३० ॥**
**॥ २८० ॥**

(भा) असप्रैषपक्षेऽध्वर्युरेव करोति ॥ २८० ॥

(सू.) **प्रोक्षणीरभिपूर्योदश्चं [2] स्फ्यमपोह्य दक्षिणेन स्फ्यम [3] संसृष्टा उपनीय स्फ्यस्य वर्त्मन् सादयत्यृतसधस्थेति [4] द्वेष्यं मनसा ध्यायन् ॥ ३१ ॥२८१॥**

[अभिपूरणसादनोक्तिफलम् उदसनादिकर्ता च]

(भा) अभिपूरणसादने इध्मादिप्रोक्षणार्थे । तस्मान्नावभृथे अवेदि-

---

(वृ) फलाशासनार्थत्वेऽपि [5] मन्त्रस्य तद्वशेन प्रधानभूतहोमावृत्तेरन्याय्यत्वात् । तत ,—

[ऊहापत्तिपरिहार ]

**ऊहस्य चाभावः-प्रकृताविति**—ऊहस्य चाभाव प्रकृतित्वात् ॥ २७९ ॥

[अध्वर्योः कर्तृत्वे हेतु·]

**असंपैष-करोति**—परप्रैषाभावात् ।

[पक्षान्तरे फलम्]

**अभिपूरण-न्नावभृते अवेदिपक्षे**—वेदिपक्षे तु बर्हिर्व्रीहिप्रोक्षणार्थे कर्तव्ये ।

---

[1] तदा तु परानधिकारादाध्वर्यवाण्येव कर्माणि–(रु) [2] स्फ्यमुदश्चं कर्षन्नपोहति । स्फ्यस्य वर्त्मन्निति वचनात् [3] स्पृष्ट्वा–ख [4] यजमानशत्रुम् । पाप्मापि शत्रु हिंसकत्वात् पाप्मानमेवास्य भ्रातृव्यं हन्तीति लिङ्गाच्च । मनसा ध्यायन्निति व्याख्यात प्राक्–(रु) [5] गुणवशेन–ट

पक्षे। [1] तन्मध्यपतितान्युदसनादीन्याग्नीध्रस्तदङ्गत्वात् । यजमानद्वेष्यस्य ध्यानम्। नचाभि[2] चारार्थम् ॥ २८१ ॥

(सू) **शतभृष्टिरसि वानस्पत्यो द्विषतो वध इति पुरस्तात्प्रत्यञ्चमुत्करे स्फ्य [3]मुदस्यति द्वेष्यं मनसा ध्यायन् ॥ १३ ॥ ३२ ॥ २८२ ॥**

[द्वेष्यनिर्णायकम्]

(भा) पुरस्तादुत्करस्य प्रत्यञ्च प्रत्यगग्रमुदस्यति–परित्यजति ।

सर्वत्र तु पाप्मा द्वेष्य । [4] व्यावृत्ति पाप्मना भ्रातृव्येण गच्छतीति लिङ्गात् ।

---

[आग्नीध्रस्य कर्तृत्वे हेतु.]

(वृ) **तन्मध्य–ग्नीध्रस्तदङ्गत्वात्** — प्रेषितकर्मगणमध्यपतितान्युदसनसमार्गप्रहरणादीनि प्रेषितकर्माङ्गभूतान्याग्नीध्र एव करोति ।

[द्वेष्यविशेषनिर्देशहेतु·]

**यजमानद्वेष्यस्य ध्यानम्**—ऋतसधस्थेत्याध्वर्यवेऽपि कर्मणि स्फ्यमुदस्यन्नित्यारभ्य शुचैवैनमर्पयतीति फलशामनात् । सर्वफलानां यजमानार्थत्वात् ॥

[अभिचारार्थत्वाभावोपपत्तिः]

**न चाभिचारार्थम्**—उदसनस्य नित्यत्वात् नाभिचारकामना । नित्ये फलसिद्धे द्वेष्यस्य ध्यानमङ्गम् ॥ २८१ ॥

**सर्वत्र — लिङ्गादिति** — [5] पाप्मना भ्रातृव्येणेति समानाधिकरणस्य नित्यसिद्धस्यापि पाप्मनो द्वेष्यत्वात् । मन्त्रस्य च नित्यप्रयोगार्थम् ॥

---

[1] तन्मध्यपतितान्याग्नीध्र–घ. तन्मध्यपतितो [2] दनान्याग्नीध्र–ग तन्मध्यपतितान्युदसनाबादीन्याग्नीध्र–क [2] पूरणार्थं–ग [3] प्रत्यगग्रमभिमुदस्यति (ट) [4] व्यावृतमेव–ख [5] पाप्मनेत्यादि–प्रयोगार्थमित्यन्त घ–पुस्तके न दृश्यते

(भा) तस्य ध्यानमित्युपदेश ॥ २८२ ॥

(सू) [1] नानवनिज्य हस्तौ पात्राणि पराहन्ति ॥ ३३ ॥

(सू) हस्ताववनिज्य स्फ्यं प्रक्षालयत्यग्रमप्रतिमृशन् ॥ १५ ॥ ३४ ॥ २८४ ॥

(सू) उत्तरेणाहवनीयं प्रागग्रमिध्माबर्हिरुपसादयति दक्षिणमिध्ममुत्तरं बर्हिः ॥ १६ ॥ ३५ ॥ २८५ ॥

इति तृतीया खाण्डिका

[निषेधस्य प्रकृतसंगतिः कर्तव्यं च]

(भा) अभिमर्शन—[2] पराहनन तत्पात्राणां अन्येषा न [3] करोति प्रक्षाल्य तु पाणिं [4] स्फ्यप्रक्षालनस्य विधि ॥ २८५ ॥

इति आपस्तम्बश्रौतसूत्रे धूर्तस्वामिभाष्यसहिते द्वितीये प्रश्ने प्रथम पटल ॥

---

[भाष्यकाराशयः]

(वृ) तस्य ध्यानमित्युपदेश इति—स एवध्येय इत्युपदेश. । स्वमते तु शुचैवैनमर्पयतीति लिङ्गात् द्वेष्यस्य [5] भ्रातृव्यस्यापि ध्यानमिति तत्पक्षे ॥ २८२ ॥

[अन्यशब्दार्थ]

अभिमर्शनं—अन्येषां न करोति—स्फ्यस्योपसादने कृते पाणिप्रक्षालनात्पूर्वं पात्राणामभिमर्शन न कुर्यात् ॥

[विधिपर्यवसानम्]

प्रक्षाल्य तु—विधिरिति—अग्रमप्रतिमृशन्निति विधि ॥२८५॥

इति श्रीकौशिकरामाग्निचिद्विरचितायां धूर्तस्वामिभाष्यवृत्तौ द्वितीये प्रथम पटल

---

[1] स्फ्यप्रक्षालनमपि अवनिक्तहस्तेनैवेत्यत्रासंदेहार्थं पुनर्हस्तावनेजनवचनम् (रु)

[2] पराघात —क. [3] षाकरोति —ख [4] पाणी —ग [5] मनुष्यस्यापि—क घ

(सू) [1]पत्नीसंनहनमेके पूर्वं समामनन्ति स्रुक्सं- मार्जनमेके ॥ १ ॥ ३६ ॥ २८६ ॥

(भा) कृत्वा सन्नहन स्रुक्समार्गोऽग्रप्रहरणान्तः तत पत्न्या गार्ह- पत्योपस्थानादि ॥ २८६ ॥

(सू) घृताचीरेताग्निर्वो ह्वयति देवयज्याया इति स्रुच आदाय प्रत्युष्टग्ं रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्यानिशितास्स्थ सपत्नक्षयणी- रित्याभिमन्त्रय वेदाग्राणि प्रतिविभज्याप्रतिविभज्य वा तैः संमार्ष्टि प्राचीरुदीचीर्वोत्ताना धारयमाणः ॥ ॥ २ ॥ ३७ ॥ २८७ ॥

(भा) सह [2]स्रुवेण प्राशित्रहरणेन च [3]स्रुचां सर्वसंस्कार ।

[संनहनप्राथम्यप्रयोजनम्]

(वृ) **कृत्वा सन्नहनं—प्र[4]स्थानादीति**—सनहनमात्र[5] प्रति- कृष्यते पत्नीभनहनमेके पूर्वमिति । अत. प्रायणीयादिष्वप्युपस्थानादि क्रियते सनहनाङ्गत्वात् ।

स्रुक्संमार्गेस्रुवसहभावनियमप्रमाणादि]

**सह स्रुवेण—संस्कारः**—स्रुचस्समार्ष्टि स्रुवमग्रे इति क्रमविधा- नात् । स्रुच आदायेत्यादिषु स्रुक्शब्द उपलक्षणार्थः । एतावसदता- मिति लिङ्गाच्च। स्रुवतुल्यतया समार्गोपदेशात् प्राशित्रहरणस्यापि सर्व- सस्काराः । यत्र तु प्राशित्रहरणस्यैव समार्ग. तत्र घृताचीरित्यस्य निवृत्तिः घृताक्तत्वाभावात् ।

---

[1] यदा पत्नीसन्नहन पूर्वं तदा सप्रैषनिवृत्ति क्रमविरोधात्, इत्याहानुपूर्वतायै इति लिङ्गविरोधात् तूष्णी यवमयामिति लिङ्गाच्च (रु) [2] स्रुवप्राशित्रहरणयोरपि सहस्रुग्भिरादानं प्रतितपन च तयोरपि समार्गवचनात् । प्राचीरुदीचीर्वेत्यप्रविकल्प उपभृतोऽन्यासाम् तस्या उपभृत उदीचीमिति नियमात् (रु) [3] स्रुचासंस्कार .—ग [4] स्थानादिति ?—ग [5] मात्रप्रतिकर्ष.—ख, ग. घ.

(भा) प्राचीरुदीचीरित्यग्र[1]नियम ॥ २८७ ॥

(सू) [2]उपभृतमेवोदीचीमित्येके ॥ ३ ॥ २८८ ॥

(सू) **गोष्ठं मा निर्मृक्षमिति स्रुव[3]मग्रैर[4]न्तरतोऽभ्याकारं[5] [6]सर्वतोबिलमभिसमाहारम् । [7]मूलैर्दण्डम् ॥ ४ ॥ ३९ ॥ २८९ ॥**

[समार्गविशेषे प्रमाणम्]

(भा) अभ्याकार—पुन पुनस्समार्ष्टि सर्वत'—सर्वासु दिक्षु बिलमभिसमाहारम्—बिलापवर्ग समृशति दण्डमुपरिष्टात् प्रागपवर्गमधस्तात् प्रत्यगपवर्गम् तस्मादरत्नाविति लिङ्गात् ॥ २८९ ॥

(सू) **वाचं प्राणमिति जुहूमग्रैरन्तरतोऽभ्याकारं [8]प्राचीं मध्यैर्बाह्यतः प्रतीचीं सर्वतोबिलमभिसमाहारं मूलैर्दण्डम् ॥ ५ ॥ ४० ॥ २९० ॥**

---

(वृ) **प्राचीरुदीचीरित्यग्रनियमः**— स्रुचाम् ॥ २८७ ॥

[परिभाषानुगुणं भाष्यतात्पर्यम्]

**अभ्याकारं— लिङ्गादिति**— दण्डसमार्गे भाष्ये पाठक्रमोऽ[9]नादरणीय.। प्रागपवर्गाण्युदगपवर्गाणि वेति परिभाषासिद्धे·। अरत्निलोमतुल्यतया अधस्तात्प्रतीचीमित्यादिनियमपरत्वाद्भाष्यस्य । अतोऽ[10]धस्तात्समार्ग ॥ २७९ ॥

---

[1] नियम स्रुचाम् —घ [2] उपभृतमेवोदीचीं प्राचीरन्या इत्येके व्यवस्थामाहु (रु) [3] अग्रै —वेदाग्रै (रु) [4] अन्तरत —बिलोदरम् (रु) [5] अभ्याकार—पुन पुन (रु) [6] सर्वेभ्य पार्श्वेभ्यः बिलप्रति समाहृत्य समाहृत्य (रु) [7] वेदाग्रमूले दण्डमुपरिष्टात् प्राचीनमधस्तात् प्रतीचीन च समार्ष्टि तस्मादरत्नौ + धस्तात् इति लिङ्गात् (रु) [8] वेदाग्रमध्यै बिलादारभ्याग्रात् प्रागपवर्गमुपरिभाग संमृज्य तावन्त बाह्यभाग प्रत्यगपवर्गं संमार्ष्टि पूर्ववत् मूलैर्दण्डम् (रु) [9] नापरननीय २—ट [10] धस्तात्पूर्वं—ट.

[प्राची मध्यैरित्यस्य वैयर्थ्यशङ्कापरिहारः]

(भा) प्राक्त्वोदक्त्वस्य सिद्धत्वात्प्राची मध्यैरिति क्रियापवर्गवाद. ॥

(सू) **चक्षुश्श्रोत्रमित्युपभृतमुदीचीमग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः [1]प्राचीं मूलैर्दण्डम्** ॥ ६ ॥ ४१ ॥ २९१ ॥

(भा) तथोपभृतमुदीचीम् ॥ २९१ ॥

(सू) **प्रजां योनिमिति यथास्रुवमेवं ध्रुवाम्** ॥ १० ॥ ॥ ७ ॥ ४२ ॥ २९२ ॥

(सू) **रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाह९ [2]संमार्ज्मीति प्राशित्रहरणं तूष्णीं वा** ॥ ८ ॥ ४३ ॥ २९३ ॥

(भा) स्रुववदुपदेश· प्राशित्रहरणस्य ॥ २९३ ॥

---

[प्राची मध्यैरित्यंशतात्पर्योपपादनम्]

(वृ) **प्राक्त्वोदक्त्वस्यासिद्धत्वा—वादः**—प्राचीरुदीचीरिति प्राक्त्वोदक्त्वस्य सिद्धत्वात् प्राचीं मध्यैरिति क्रियापवर्गवाद । उदगग्रासु पूर्वपार्श्वे समाप्ति प्रागग्रास्वग्रे समाप्ति । बाह्यत· प्रतीचीं मध्यैरेव पात्रस्याधोभागे ॥ २९०॥

**तथोपभृतमुदीचीम्** —[3] इत्यपि क्रियापवर्गवाद । पार्श्वे प्रतीचीं मध्यै ॥ २९१ ॥

[स्रुववत्संमार्गातिदेशनिदानम्]

**स्रुववदुपदेशः प्राशित्रहरणस्य**—तस्य मुख्यत्वात्तद्धर्मकत्वम् ॥ २९३ ॥

---

[1] बिलस्य सव्य पार्श्वमुपरिभागे प्रत्यक् अधोभागे प्राक्समार्ष्टि (रु)
[2] अनियमोऽस्य समार्गप्रकारे । यथा स्रुवमनुवर्तयन्ति (रु) [3] उदीचीमुदगग्राम् । उदक्त्वनियमार्थं वचनम् । प्रतीचीं मध्यैर्बाह्यत ' प्राची बिलस्य सव्य पार्श्वमुपरिभागे प्राक् समार्ष्टि । (मु रा पा )

(सू) न संमृष्टान्यसंमृष्टैस्सꣳ[1]स्पर्शयति ॥ ९ ॥ ॥ ४४ ॥ २९४ ॥

[असंमृष्टासंस्पर्शने कालः]

(भा) न समृष्टान्यसमृष्टैस्सर्वकालम् ॥ २९४ ॥

(सू) अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीति पुनः प्रतितप्य प्रोक्ष्याग्रेणोत्करं दर्भेषु सादयति [2]जघनेन वा ॥ १० ॥ ४५ ॥ २९५ ॥

(सू) स्रुक्संमार्जनान्यद्भिः सꣳस्पर्श्य ॥ २९६ ॥

चतुर्थीखण्डिका ॥

---

(सू) दिवश्शिल्पमवततं पृथिव्याः ककुभिः श्रितम् तेन वयꣳसहस्रवल्शेन सपत्नं नाशयामसि स्वाहेत्यग्नौ[3] प्रहरति यस्मिन् प्रतितपत्युत्करे वा न्यस्यति ॥ १ ॥ ४७ ॥ २९७ ॥

---

[असंमृष्टस्पर्शप्रायश्चित्ते स्वपरपक्षौ]

**नसंमृष्टान्यसंमृष्टैस्सर्वकालम्**—आप्रयोगसमाप्तेः । संमृष्टस्यासमृष्टपात्रस्पर्शने पुनर्निष्टप्य समृज्यात्स्वेन मन्त्रेण इति भरद्वाजः । पुनस्समार्गो येनकेनाचिद्दर्भेण । अस्माक तु सर्वप्रायश्चित्त सूत्रकारेणा[4]बन्धनात् ।

---

[1] यदि स्पर्शयेत् पुनरेव निष्टप्य समृजेदिति भरद्वाज (रु) [2] उत्कर जघनेन-अपरेणेत्यर्थ (रु) [3] यस्येतान्यन्यत्राग्नेर्दधति इत्यन्यानिन्दा अग्निस्तुत्यर्थेति भाव. (रु) [4] णानुक्तत्वात्–घ णानिबन्धनात्–क.

[प्रहरणन्यासयोर्व्यवस्था]

(भा) अग्नावेव प्रहरेदिति प्रकृतौ [1] नित्यम् ॥ २९७ ॥

(सू) **आशासाना सौमनसमित्यपरेण गार्हपत्यमूर्ध्वज्ञुमासीनां[2] पत्नीं संनह्यति तिष्ठन्तीं वा ॥ ४७ ॥**

**वाचयतीत्येके ॥ ३ ॥ ४९ ॥ २९९ ॥**

**मौञ्जेन दाम्नाऽन्यतरतः पाशेन [3] योक्त्रेण वाऽभ्यन्तरं [4] वाससः ॥ ४ ॥ ५० ॥ ३०० ॥**

(भा) [5] अभ्यन्तरं पिहितवाससः ॥ ३०० ॥

(सू) **[6] न वाससोऽभिसंनह्यति । अभिसंनह्यतीत्येके ॥ ५ ॥ ५१ ॥ ३०१ ॥**

[सौत्रपक्षद्वयफलितार्थः]

(भा) यथा न बध्नाति वास· ॥ ३०१ ॥

---

[व्यवस्थितविकल्पोपपादन न्यासपक्षे विशेषश्च]

(वृ) **अग्नावेव–नित्यम्**—प्रहरणमेव । विकृतौ अग्नौ प्रहरणमुत्करे त्यागो वा । त्यागे न स्वाहाकार [7] ॥ २९७ ॥

[सूत्रोक्ते विशेषनिर्देशः]

**योक्त्रेण इति**—बलीवर्दनियोजनार्थेन शम्याया प्रतिमुक्तेन । **अभ्यन्तरं पिहितवाससः**— न बहि· ॥ ३०० ॥

[भाष्यस्य विकल्प तात्पर्यम् ]

**यथा न बध्नाति वासः** —[8] विकल्पविधानर्थोऽनुवाद ।

---

[1] नित्यमग्नौ प्रहरणम्–**घ.** नित्य प्रवहरणम्?–**ग** [2] ना योक्त्रेण सनह्यति–**क** [3] योक्त्रम्–अनोवाहबन्धनीरज्जु (रु) [4] वस्त्राव्यवहिते शरीरे (रु) [5] अभ्यन्तरमबहिर्वासस –**ग** अभ्यन्तर वासस –**ट** [6] वासो–**क** नवासोभिसंनह्यतीत्यस्यपूर्वेण सिद्धस्याभिसंनह्यतीत्यनेन विकल्पार्थोनुवाद (रु) [7] ‘ यस्मिन्नग्नौ प्रतितपति तस्मिन्नेव प्रहरति । इत्यधिकं दृश्यते (मु रा ) [8] न वासोऽभिसनह्यतीति विकल्प–**क.** (मु रा)

(सू) उत्तरेण नाभिं [1] निष्टर्क्यं ग्रन्थिं कृत्वा प्रदक्षिणं पर्यूह्य दक्षिणेन नाभिमवस्था[2]प्य [3]उपोत्थायाग्ने गृहपत उपमा ह्वयस्वेति गार्हपत्यमुपतिष्ठते ॥ ६ ॥

[ग्रन्थिकरणादौ कर्तृनिर्देशः]

(भा) उत्तरेण [4]नाभिमित्यादि पत्न्या । प्रदक्षिण सर्वेत प्रापयति ।

(सू) देवानां पत्नीरुपमाह्वयध्वं पत्निपत्न्येष ते लोको नमस्ते अस्तु मा मा हिꣳसीरिति [5]देवपत्नीरुप- तिष्ठते ॥ ७ ॥ ५३ ॥ ३०३ ॥

(भा) अपरेण गार्हपत्य देवपत्न्यः ॥ ३०३ ॥

(सू) [6]तस्माद्देशादपक्रम्य सुप्रजसस्त्वा वयमिति [7]दक्षिणत उदीच्युपविशति ॥ ८ ॥ ५४ ॥ ३०४ ॥

---

[पत्न्याः कर्तृत्वलाभप्रकारः]

(वृ) उत्तरेणना–पत्न्याः—पत्नी सनह्यति सनहनस्याग्नीध्रकर्मत्वात् उत्तरेणनाभिमित्यादेः उपस्थानेन समानकर्तृकत्वाच्च पत्नीकर्तृकत्वम् ।

[ग्रन्थिकरणादेः सन्नहनाङ्गत्वम्]

ग्रन्थिकरणादीना तु सनहनाङ्गत्वम् । भिन्नकर्तृकत्वेऽपि 'ग्रन्थिं ग्रथ्नाति । आशिष एवास्या परिगृह्णाति' इत्यादिवाक्यशेषात् सनहन-मन्त्रप्राप्ताशीस्सरक्षणार्थत्वात् । भाष्यकारेण च 'पत्नीसनहनमेके पूर्वम्' इत्यस्मिन् पक्षे कृत्वा सनहन स्रुक्सम्मार्गोऽग्रप्रहरणान्त तत पत्न्या गार्हपत्योपस्थानादेरुक्तत्वाच्च ॥ ३०२ ॥

---

[1] निष्टर्क्य –शिखाकृतिर्ग्रन्थि (रु) [2] दक्षिणेन नाभिं नयति । प्रदक्षिण नीत्वाऽवस्थापयति न तु प्रसव्यम् (रु) [3] उपोत्थानासमानकर्तृकत्वात् पत्नीकर्माण्येतानि । अध्वर्युस्तु योक्त्रान्तेपाश प्रतिमुच्य चरति । [4] नाभिमित्येवमादि–क मितिपत्न्या –ग घ [5] अपरेण गार्हपत्य देवपत्नीना लोकस्तत्रता उपतिष्ठते (रु) [6] देशाद्दक्षिणत उदीच्यन्वास्ते इति ब्राह्मणव्याचिख्यासयोक्तं तस्माद्देशादपक्रम्येति (रु) [7] दक्षिणत कस्य ? तस्यैव देशस्य, ततोऽन्यस्यानुपादानात् । उक्त च हिरण्यकेशिनाऽपि (रु).

इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वायेति जपति ॥ ९ ॥ ५५ ॥ ३०५ ॥

युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति [1] ॥ १० ॥ ५६ ॥ ३०६ ॥

(भा) युक्ता इत्यन्वासनार्थं । अत परास्वपि दक्षिणीयायाः क्रियते ।

(सू) बह्वाज्याभ्यां दर्शपूर्णमासाभ्यां यजत इति विज्ञायते ॥ ११ ॥ ५७ ॥ ३०७ ॥

पञ्चमी खण्डिका ॥

---

(सू) पूषा ते बिलं विष्यत्विति [2] सर्पिर्धानस्य बिलमपावर्त्य दक्षिणाग्रावाज्यं [3] विलाप्यादितिरस्यच्छिद्रपत्रेत्याज्यस्थालीमादाय महीनां पयोऽस्योषधीना ऽ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं निरूप्येदं विष्णुर्विचक्रम इति

---

(वृ) तस्माद्देशादित्यादि — तस्माद्दक्षिणत· पत्न्यन्वासनस्थानम्, 'देशाद्दक्षिणत उदीच्यन्वान्ते' इति विधानात् । यत्पत्न्यन्वासीतेति सिद्धवदनूद्य देवानां पत्निया समद दर्धातेति निर्देशात् देवपत्नीना तत् स्थानम् । अतो देवपत्नीनामुपस्थान तत्रैव स्थित्वा गार्हपत्योपस्थान च । अतो दर्शपूर्णमासयोरन्वावासस्थान दक्षिणतस्तद्विकाराणा च ॥३०४॥

---

[1] सन्नहनादि संप्रैषान्तो विधि पत्नीसंस्कारत्वात् प्रतिपत्न्यावर्तते (रु).
[2] सर्पिर्धीयते यस्मिन् भाण्डे तत् सर्पिर्धानम् । (रु) [3] बहुभिरत्रकल्पकारैर्गव्यस्यालाभे अजामहिष्योराज्य तदभावे तैल च प्रतिनिधेयमित्युक्तम्, यथा तदभावे आज्य माहिषं वा तदभावे तैलमित्यादि । तत्र प्रतिनिधित्वात् तैलस्याऽपि आज्यवत् धर्मा द्रष्टव्या । उक्त चैतदाश्वलायनेन (रु).

**दक्षिणाग्नावधिश्रित्येषे त्वेति दक्षिणार्धे गार्हपत्य-स्याधिश्रित्योर्जे त्वेत्यपादाय वेदेनोपयम्य [1] पत्न्या उपहरति ॥ १ ॥ ५८ ॥ ३०८ ॥**

[मन्त्रबाहुल्यजसंशयनिरासतद्धेतू]

(भा) आज्यस्यैव सकलो निर्वापमन्त्र न मधूदकयो , आज्य निरूप्येति वचनात् ॥ ३०८ ॥

[पत्नीबहुत्वे विशेषः]

**( सू ) तत्सा [2] निमील्य वीक्ष्यानुच्छ्वसन्त्यवेक्षते महीनां पयोऽसीति ॥ २ ॥ ५९ ॥ ३०९ ॥**

(भा) [3] प्रतिपत्न्यवेक्षण तत्संस्कारत्वात् आज्यसंस्कारो वा ; पुरोडाशीयावेक्षणवत् । निमीलनावेक्षणे पूर्वं कृत्वा पश्चादाज्यमसीत्यनुच्छ्वसता मन्त्रान्तेनावेक्षणम् ॥ ३०९ ॥

---

[संशायकं परिहारोपपत्तिश्च]

(वृ) **आज्यस्यैव–वचनात्**–दधिमधुघृतमापो धाना इत्यत्र यद्यप्याज्यविकारत्व मधूदकयो तथाऽपि न तयोर्मन्त्र. , दक्षिणाग्नावाज्य विलाप्येति प्रकृतेऽप्याज्य निरूप्येति पुनर्वचनात् ॥ ३०८ ॥

[प्रतिपत्नि अवेक्षणोपगमोपपादनम् ]

**प्रतिपत्न्य—रत्वात्**—अवेक्षे सुप्रजास्त्वायेति मन्त्रलिङ्गात् [4] । पत्न्यवेक्षते मिथुनत्वाय प्रजात्यै इति वाक्यशेषाच्चावेक्षण पत्नीसंस्कारः आज्यसंस्कारश्च । अत. प्रतिपत्न्यवेक्षणम् । अतो व्यापत्तौ पुनराज्यनिर्वापेनावेक्षणम् ॥

**आज्य–वेक्षणवत्**—[5]अस्मिन्पक्षे नावृत्तिर्मन्त्रस्य , सपत्नीयवत् ।
**निमीलनावे–वेक्षणम्** ;—पुनःपत्न्यवेक्षणेऽपि तुल्यम्॥ ३०९॥

---

[1] पत्न्यञ्जलौ -ख [2] निमील्यतूष्णीं वीक्ष्य पश्चान्मन्त्रेणावेक्षते । पत्न्यनेकत्वेचावृत्ति बोधायनेनोक्ता (रु) [3] अत प्रति-क. [4] तत्स्थानापन्नत्वात इत्यधिक (मु. रा). [5] तस्मिन्–क.

(सू.) तेजोऽसीत्युत्तरार्धे गार्हपत्यस्याधिश्रयति ॥३॥ ॥ ६० ॥ ३१० ॥

(सू.) पत्न्यभावे [1]तेज आदि लुप्यते गार्हपत्येऽधिश्रयणम् ॥ ४ ॥ ६१ ॥ ३११ ॥

(सू.) तेजसे त्वेत्यपादाय तेजोऽसि तेजोऽनुप्रेहीति हरति। अग्निस्ते तेजो मा विनैदित्याहवनीयेऽधिश्रित्य अग्नेर्जिह्वासीति स्फ्यस्य वर्त्मन् [2]सादयति॥ ॥ ५ ॥ ६२ ॥ ३१२ ॥

(सू.) आज्यमसि सत्यमसीत्यध्वर्युर्यजमानश्च निमील्य वीक्ष्यानुच्छ्वसन्तावाज्यमवेक्षेते ॥ ६ ॥ ३१३ ॥

(सू.) अथैनदुदगग्राभ्यां पवित्राभ्यां [3]पुनराहारमुत्पुनाति ॥ ७ ॥ ६४ ॥ ३१४ ॥

षष्ठी खण्डिका ॥

---

(सू.) शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयम् ॥ १ ॥ ६५ ॥ ३१५ ॥

[सूत्रोक्तस्यतेजआदिलोपस्योपपत्ति]

(वृ) पत्न्यभावे तेज आदि लुप्यते इति;—अस्याभिप्राय ,—अमेध्य वा एतत्करोति यत्पत्न्यवेक्षते गार्हपत्येधिश्रयति मेध्यत्वाय इति निर्देशात्। आज्यस्य पत्न्यवेक्षणनिमित्तदोषशमनार्थं गार्हपत्येऽधिश्रयणविधानात्। रजस्वलाद्यवस्थासु पत्न्यभावे तेजोऽसीत्यधिश्रयण तेजसे त्वा इत्यपादान च लुप्यते गार्हपत्येऽधिश्रयणमपादानान्तम् तेजोऽसि तेजोऽनुप्रेहीत्यादि कर्तव्यमेव ॥ ३११ ॥

---

[1] तेज इति मन्त्र आदयस्याधिश्रयणस्य तत्तेज आदि। तत् गार्हपत्येधिश्रयणम् पत्न्यभावे लुप्यते तदीक्षणाभावात्। ब्राह्मणे चोक्तम्। अधिश्रयणानन्तर तु भवत्येव। पत्न्यभावनिमित्त तु प्रागेव व्याख्यातम्। तत्र पत्नी मन्त्राणा प्रतिषेधमाह बोधायन। (रु) [2] सादयित्वा—क ख [3] पुनराहार—अविच्छेदेन पुनराहृत्याहृत्य (रु)

(सू) **पूर्ववदाज्यलिप्ताभ्यां प्रोक्षणीरुत्पूयानिष्का-सिना[1] स्रुवेण वेद[2]मुपभृतं कृत्वान्तर्वेद्याज्यानि गृह्णाति ॥ २ ॥ ६६ ॥ ३१६ ॥**

(भा) अनिष्कासिना--अशेषेण ॥ ३१६ ॥

(सू) **समं [3]बिलं धारयमाणो [4]जुह्वां [5]मध्यदेश उपभृति भूमौ प्रतिष्ठितायां ध्रुवायाम् ॥ ३ ॥ ॥ ६७ ॥ ३१७ ॥**

[उपभृतिवेदसाहित्यम्]

(भा) भूमौ प्रतिष्ठिताया सवेदायाम् ॥ ३१७ ॥

(सू) **चतुर्जुह्वां अष्टावुपभृति चतुर्ध्रुवायाम् ॥ ४ ॥ ॥ ६८ ॥ ३१८ ॥**

(सू) **पशुकामस्य वा पञ्चगृहीतं ध्रुवायां [6]यथा प्रकृतीतरयोः ॥ ५ ॥ ६९ ॥ ३१९ ॥**

---

[अशेषेणेत्यस्याशयः]

(वृ) **अनिष्कासिना–अशेषेण ;**—शेषरहितेन पूर्वस्योत्तरोत्तरग्रहण न पुराणलेपनिषेध । तस्य समृष्टत्वात् ॥ ३१६ ॥

[वेदसहभावे मानम]

[7]**भूमौ–यामिति ;** — वेदमुपभृत कृत्वेति सर्वेष्वविशेषेण चोदितत्वात् ॥ ३१७ ॥

---

[1] निष्कास –शेष वारुण्यै निष्कासेनेति दर्शनात । स्रुवोद्धृत निश्शेष गृह्णातीत्यर्थ (रु) [2] वेदेनोपयम्य स्रुचम् (रु) [3] जुह्वा बिलमाज्यस्थाल्या बिलेन समम् (रु) [4] भूयो जुह्वाम्–क [5] तस्या एव मध्यदेश उपभृतो बिलं धारयमाण उपभृति गृह्णातीत्यर्थ । ध्रुवाया तु सहवेदेन प्रतिष्ठिताया गृह्णाति (रु) [6] इतरयो यथाप्रकृति–चतुरष्टकृत्वश्चेत्यर्थ । वाशब्द पूर्वविधिविकल्पार्थ पक्षव्यावृत्त्यर्थो वा (रु) [7] आज्यस्थाल्या बिलेन सम जुह्वा बिलम् । तस्या मध्यदेश उपभृद्बिलम् इत्यधिकं 'भूमौ' इत्यत पूर्वानुषक्त दृश्यते । (मु रा)

(भा) पशु[1]कामम्य वा अकामस्य वा ॥ ३१९ ॥

(सू) दशगृहीतमुपभृति पञ्चगृहीत[2]मितरयोरित्येके ॥ ७० ॥ ६ ॥ ३२० ॥

(सू) भूयो जुह्वामल्पीय उपभृति भूयिष्ठं ध्रुवायाम् ॥ ७ ॥ ७१ ॥ ३२१ ॥

(सू) शुक्रं त्वा शुक्रायामिति त्रिभिः [3]पञ्चानां त्वा वातानामिति च द्वाभ्यां जुह्वां चतुः पञ्चकृत्वो वा प्रतिमन्त्रं पञ्चानां त्वां दिशां पञ्चानां त्वा पञ्चजनानां पञ्चानां त्वा सलिलानां धर्त्राय गृह्णामि पञ्चानां त्वा पृष्ठानां धर्त्राय गृह्णामि धामासि प्रिय देवानामनाधृष्टं देवयजन देववीतये त्वा गृह्णामीति चरोस्त्वा पञ्चबिलस्येति च पञ्चभिरुपभृत्यष्टकृत्वो दशकृत्वो वा प्रतिमन्त्रम् ॥ ८ ॥ ७२ ॥ ३२२ ॥

---

[सूत्रकारपक्षेणाकामस्यपञ्चगृहीतसंभव.]

(वृ) **पशुकामस्याकामस्य वा इति**;—अस्यार्थ ,—पशुकामस्य पञ्चगृहीतमित्येतावता काम्यपक्षे सिद्धे विकल्पनिर्देशात् कामनारहितस्यापि पञ्चगृहीत लभ्यते। चतुरवत्तिनोऽपि यथाप्रकृतीतरयोरिति अस्याभिप्राय ।

**पञ्चगृहीतामितरयोरित्यादि**;—पञ्चावत्तिनां वक्ष्यमाणत्वात् तदत्रापि प्रसज्यत इति शङ्का मा भूदिति ॥ ३२० ॥

---

[1] नाय कल्प काम्येन पूर्वेण कल्पेन विकल्पते किंतु पूर्वतरेण नित्येन (रु)
[2] गृहीतमुभयोरित्येके इति रुद्रदत्तपाठ
[3] उपभृति प्रयाजानूयाजार्थौ द्वाविमौ पञ्चमन्त्रकौ गणौ। तद्यातकश्च पञ्चमन्त्रान्त इति करण । तत्र यदाऽष्टगृहीत तदा गणान्त्ययो पञ्चमदशमयोर्लोप । तथा प्रायणीयोदयनीययो प्रयाजानूयाजाना अन्यतराभावे तदर्थस्य गणस्य लोप (रु)

[सूत्रोक्तलोपविषयव्यवस्थादि]

(भा) उपभृति द्वौ [1] गणौ । अष्टगृहीते गणान्तयोर्लोप·—प्रतिगणमन्त्यमन्त्रयोर्लोप· । प्रयाजार्थे जुह्वां नाघारार्थम् । यज्जुह्वा गृह्णाति प्रयाजेभ्यस्तदिति , [2] अतोऽप्रयाजे आघारस्य लोप·, उभयार्थत्वादौपभृतस्य । अनूयाजाभावेऽन्त्यगणस्य लोप । यत्र चतुर्गृहीतमनूयाजश्च तत्र [3] प्रथमाद्गणाद्वौ मन्त्रौ द्वितीयाद्वौ [4] मन्त्रौ ॥ २२२ ॥

(सू) **शेषेण ध्रुवायां [5] पञ्चकृत्वो वा [6] प्रतिमन्त्रम् ॥ ९ ॥ ७३ ॥ २२३ ॥**

(सू) **नोत्करे आज्यानि सादयति ॥ १० ॥ ७४ ॥ ॥ २२४ ॥**

---

(वृ) **उपभृति द्वौ—पपादितम्—लोपः ;** —चतुरवत्तिनाम् । प्रतिगणमन्त्यमन्त्रयोर्लोपः ।

**प्रयाजार्थे–भ्यस्तदिति ;**—प्रयाजप्रयुक्त द्रव्यमाघारस्यापि ,–प्रयाजप्रयुक्तेनाज्येन आघारस्य क्रियमाणत्वात् ।

**अतोऽप्रयाजे–लोपः ;**—प्रयाजाभावे पूर्वगणस्य ।

**यत्र चतुर्गृ—द्वौ मन्त्रौ**—एक [7] प्रयाज एकोऽनूयाज [9] चतु पञ्चकृत्वो वा ग्रहण प्रयुङ्क्ते अदर्विहोमत्वात् चतुर्गृहीत वषट्कारश्चादर्विहोमानामिति वचनात्, ग्रहणस्य द्रव्यसस्कारत्वात्। तस्मादेकस्य प्रयाजस्यानूयाजस्य वा द्रव्ये स्कन्ने उपदस्ते वा [8] तत्तद्गणेन यथाऽधिकारं ग्रहणम् । तूष्णीं वा द्रव्यमुत्पाद्य याग· , यावदन्ते वा व्यापद्येतेति दर्शनात् ॥ २२२ ॥

---

[1] I प्रयाजानूयाजार्थामिति मीमासकैरुपपादितम् – ख ग घ (5-3-1) II गणौ प्रयाजानूयाजार्थौ–क [2] अतस्तदभावे–क [3] गणयोर्द्वौद्वावादित –क [4] उत्तमाद्वौमन्त्रौ [5] रुद्रदत्तपाठे इद पद न दृश्यते [6] चतु –क [7] याजगण [8] याजगण –क [9] तद्गणेन–क घ. (मु रा )

**(सू)** **[1]नान्तर्वेदि गृहीतस्य प्रतीचीनं हरन्ति[2]**
**॥ ११ ॥ ७५ ॥ ३२५ ॥**

[आज्यविशेषनियम· तदाज्यकृत्यं, नेदमुपस्तरणाविशेषे]

**(भा)** अन्तर्वेदि गृहीतस्य प्रतीचीनहरण[3]प्रतिषेधात् । ध्रुवात आहव-नीये होम एव ।

आज्यस्थाल्या अपराग्नयोरिडोपस्तरणा(नि)दि च ॥

सप्तमीखण्डिका ॥

इति द्वितीये प्रश्ने द्वितिय पटल ॥

---

[तदाज्यगतोविशेषः]

**(वृ)** **अन्तर्वेदिगृहीतस्य—होम एव इति**—अस्यार्थ·—सर्वस्मै वा एतद्यज्ञाय क्रियते यद्ध्रुवायामाज्यम् इति ध्रौवस्य सर्व-यज्ञार्थत्वेऽपि प्रतीचीनहरणप्रतिषेधात् ध्रुवात [4]आहवनीये होम एवेति [5]गम्यते ।

**[उपस्तरणे विशेषे हेतुः]**

**आज्य—स्तरणादि च**—बहिर्वेदि गृहीतत्वात् ।

इति धूर्तस्वामिभाष्यवृत्तौ द्वितीयप्रश्ने द्वितीय पटल .

---

[1] अन्तर्वेदि गृहीतं स्रुग्गतमाज्यं न पश्चाद्धरन्ति । क प्रसङ्ग [2] पत्नीसयाजेशु ध्रौवप्राप्तेरदार्विहोमानाम् । केचित्तु अत एव प्रतिषेधात् पूर्वाग्नि-वर्तिनो दर्विहोमान् ध्रौवादिच्छन्ति, तन्मन्दम्, तस्या दर्विहोममात्रार्थत्वेऽपि एव प्रतिषेधोपपत्ते । स्रुवेण ध्रुवाया आज्यमादायेत्याघारे यत्नाविशेषाच्च । ब्राह्मणमपि यज्ञार्थतामेव ध्रौवस्य दर्शयति । श्रुत्यन्तर चोदाहरन्ति सर्वस्मै वा एतदित्यादि । कात्यायनश्चाह । तस्मात यागा एव ध्रौवात्कार्या । दर्विहोमास्त्वृते वचनादाज्यस्थाल्या इत्येव साम्प्रतम् (रु) [2] हरति–ख [3] प्रतिषेध । ध्रुवात एव ह–क. ख. ग. घ ङ च [4] सर्वार्थतामा(?)हवनीयहोमेषूपसह्रियते तस्माद्ध्रुवा-त आहवनीयहोम एवेति [5] गम्यते–ख ग

(सू) पूर्ववत्प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य विस्र-स्येध्मं कृष्णोऽस्याखरेष्ठ इति त्रिः प्रोक्षति । वेदिर-सीति त्रिर्वेदिं बर्हिरसीति त्रिर्बर्हिः । अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्त-रिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम् ॥ १ ॥ १ ॥ ३२६ ॥

(सू) स्रुच्यग्राण्युपपाय्य मूलान्युपपाययति ॥ २ ॥ २ ॥ ३२७ ॥

(भा) पायन—क्लेदनम् ॥

(सू) पोषाय त्वेति सह स्रुचा [1]पुरस्तात्प्रत्यञ्चं ग्रन्थि प्रत्युक्ष्य प्रोक्षणीशेषं स्वधा पितृभ्य इति [2]दक्षिणायै श्रोणेरोत्तरस्यास्सन्ततं निनीय पूषा ते ग्रन्थि विष्यत्विति ग्रन्थि विस्रंसयति ॥ ३ ॥ ॥ ३ ॥ ३२८ ॥

[अनिर्दिष्टविशेष्यम् प्रोक्षणानिनयनयोर्विशेषश्च]

(भा) सहस्रुचा हस्तेन पुरस्तात्प्रत्यगपवर्गम्। [3]अङ्गेष्वपि प्राचीनावीती स्वधा पितृभ्य इति ।

(सू) [4]प्राञ्चमुदूढं प्रत्यञ्चमायच्छति ॥४॥४॥ ३२९॥

[सहपदकृत्यम्]

(वृ) सहस्रुचा—गपवर्गम्—सहशब्दप्रयोगात् न हस्तेन प्रोक्षणी रानयति ।

[इति शब्दभावः]

अङ्गेष्वपि—भ्य इति—इति करणादेवम्प्रकारेष्वपि ।

---

[1] पुरस्ताद्गतेन स्रुच प्रत्यञ्च सन्तं ग्रन्थि प्रत्युक्षति (रु) [2] दक्षिणाया (रु).
[3] अनङ्गेष्वपि—क [4] सन्नद्दनकाले यदि पश्चात्प्रागुदूढो ग्रन्थि त पुच्छे गृहीत्वा पश्चादाकर्षति । प्रागपवर्गत्वापवादार्थं वचनम् (रु)

(भा) प्रत्यञ्चमुदूढ प्राञ्चम् ॥ ७३ ॥

(सू) विष्णोः स्तूपोऽसीति कर्षन्निवाहवनीयं प्रति प्रस्तर[1]मपादत्ते नोद्यौति[2] न प्रयौति न प्रतियौति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि ॥ ५ ॥५ ॥ ३३० ॥

(भा) कर्षन्निव—लिखन्निवाहवनीय प्रति यत आहवनीयस्ततो नयति नोद्यौति—नोत्क्षिपति । न प्रयौति—न पुरस्तात्सारयति । न प्रति यौति—न पश्चात् । न विक्षिपति—न विचालयति । न प्रमार्ष्टि—न स्पृशत्यन्येन हस्तेन । न प्रतिमार्ष्टि—अग्रादारभ्य । नानुमार्ष्टि—मूलादारभ्याऽऽग्रात् ।

(सू) अथ प्राणश्चापानश्च यजमानमपिगच्छताम् यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने । यजमाने प्राणापानौ दधामीति तस्मिन्[3] पवित्रे [4]अपिसृज्य प्राणापानाभ्यां त्वा सतनुं करोमीति यजमानाय प्रयच्छति यजमानो ब्रह्मणे ब्रह्मा प्रस्तरं धारयति यजमानो वा ॥ ६ ॥ ६ ॥ ३३१ ॥

इति अष्टमीखण्डिका

---

[योजनाविशेषहेतु]

(वृ) **प्रत्यञ्च**—**प्राञ्चम्**—उदूढ प्रत्यञ्चमिति सौकर्यप्राप्तिदर्शनात् ।
**कर्षन्निव**—**क्षिपति**—ऊर्ध्वम् ।
**न विक्षिपति**—**दारभ्य**—मूलपर्यन्तम् ।

---

[1] स्तरमादत्ते-ख [2] न च प्रयौति-न प्रकर्षेण पुरस्ताद्धरति । च प्रतियौति-न प्रतीचीन हरति (रु) न प्रमार्ष्टि न तिर्यङ्मार्ष्टि सव्येन तत्सहकृतेन वा दक्षिणेन । [3] स्मिन् प्रस्तरे अपि-क [4] क्षिप्त्वा (रु)

[यजमानकर्तृकधारणेविशेषः

(भा) यजमानो धारयति यदा तदा न ब्रह्मणे प्रयच्छति। तदाऽपीत्युपदेशः।

(सू) **दर्भैर्वेदिमन्तर्धाय दक्षिणत[1]स्संनहनं[2]स्तृणात्यक्ष्णया वा ॥ १ ॥ ७ ॥ ३३२ ॥**

(सू) **उर्णाम्रदसं त्वा स्तृणामीति बर्हिषा वेदिं स्तृणाति बहुलमनति[3]दृश्यं प्रागपवर्गं प्रत्यगपवर्गं वा [4]त्रिधातु पञ्चधातु वा ॥ २ ॥ ८ ॥ ३३३ ॥**

(भा) अनतिदृश्य—यथा न दृश्यते भूमिः। धातुः—परिपाटिः। बहुष्वपि निधनेषु त्रिधातु पञ्चधातु वेति नियम. ॥

---

[उपदेशपक्षाशयः प्रदानसाफल्यं च]

(वृ) **तदापीत्युपदेशः इति**—धारणार्थत्वे प्रदानस्य यदा ब्रह्मा धारयति तदा [5]यजमानायापि प्रदानं निवर्तत इति प्रसङ्गपरिहार उपदेशपक्षः। धारणं तु विकल्प्यते। प्रदान त्वदृष्टार्थम्। यजमानो ब्रह्मण इत्यविशेषचोदितत्वात् ॥

[असंस्कारेणाधोनिधानोपपत्तिः]

(वृ) **अनति—दृश्यम् यथा न दृश्यते भूमिः**—नियतपरिमाणेन बर्हिषा स्तरणादिविधानेऽपि बहुलमनतिदृश्यमित्यत्र वचनादनाच्छन्नायां भूमौ दर्भा असंस्कृता अप्युपादातव्या. ॥

[भाष्योक्तनियमविशेषफलोपपत्ती]

**बहुष्वपि—नियमः**—निधनानि संसृज्य [6]त्रिधातुस्तरणम्। अत. पशुसोमादौ महत्या वेद्यामपि त्रिभिः पञ्चभिर्वा धातुभिरपरेणा-

---

[1] संनहन शुल्बम् (रु) [2] स्तृणाति—निदधाति। यद्वा विस्रस्य दर्भीस्तृणाति। तद्वत्सन्नहन विस्रस्येति कात्यायनबौधायनौ (रु), [3] दृश्न क यथा तृणान्यतीत्य न दृश्यते भूमिस्तथा (रु), [4] त्रिधातु–त्रिसन्धि (रु) [5] यजमानोऽपि प्रदानं निवर्तयतीति–क [6] त्रिधातु पञ्चधातुस्तरणम्, क

(सू) **अग्रैर्मूलान्यभिच्छादयति ॥ ३ ॥ ९ ॥ ३३४ ॥**

(भा) प्रागपवर्गेऽप्यग्रैर्मूलान्यभिच्छाद्यन्ते ॥

(सू) **धातौधातौ मन्त्रमावर्तयति ॥ ४ ॥ १० ॥ ३३५ ॥**

(सू) **प्रस्तरपाणिः सꣳसृष्टान् परिधीन् परिदधाति गन्धर्वोऽसि विश्वावसुरित्येतैः प्रतिमन्त्रमुदगग्रं मध्यमं प्रागग्राावितरौ ॥ ५ ॥ ११ ॥ ३३६ ॥**

(भा) सꣳसृष्टाः परस्परेण ॥

(सू) **[1]आहवनीयमभ्यग्रं दक्षिणमवा[2]ग्रमुत्तरम् ॥ ६ ॥ ॥ १२ ॥ ३३७ ॥**

(भा) अभ्य[3]ग्रमाहवनीयाभिमुखाग्रम्[4]। [5]अवाग्रः—यस्य नाहवनीयाभिमुखाग्रम् ॥

---

(वृ) हवनीयं यावतीस्तरितु शक्यते तावती प्रचाराङ्गतया स्वीकर्तव्या—यावती यादृशी च दार्शिकी वेदिः तावती तादृशी च स्वीकर्तव्येत्यर्थः। तामपेक्ष्य अतिक्रमणश्रोण्यसादिव्यपदेशः ॥

[छादने विशेष]

**प्रागप—छाद्यन्ते**—अग्राणामधो मूलानि यथा भवन्ति तथास्तृणाति ॥

[संसर्गे विशेषः]

[5]**सꣳस्पृष्टाः परस्परेण**—परिधयः। नान्योन्यस्योपरि ॥ २०४ ॥

---

1 आहवनीयं प्रत्यभिमुखाग्र दक्षिण परिदधाति। विपरीताग्रमुत्तरम् (रु)
2 अवाङ्ग्रम् ख. 3 अभ्यग्रआ—घ 4ग्रः—घ अभ्यस्याग्र ? 5 यस्य परिधेराहवनीयाभिमुखमग्र नास्ति सोऽपाग्र। उत्तर परिधिम्। उत्तरः परिधिराहवनीयाभिमुखाग्रो यथा न स्यात्तथेत्यर्थ। (इत्यधिकं (मु रा.) दृश्यते नात्रकोशेषु).

[अभिमन्त्रणस्य परिध्यङ्गतातद्धेतू]

**(सू) सूर्यस्त्वा पुरस्तात्पात्वित्याहवनीय[1]माभिमन्त्र्यो-पर्याहवनीये प्रस्तरं धारयन्नग्निं कल्पयति ॥ ७ ॥ १३ ॥ ३३८ ॥**

(भा) सूर्यस्त्वा पुरस्तात्पात्विति [2]परिध्यङ्गमित्युपदेशः । आदित्यो-ह्येवोद्य[3]न्निति वचनात् ! तस्मान्नावभृथे स्तीर्णपक्षे गृहमेधीये च । अग्निं कल्पयति बलवन्तं करोति ॥

**(सू) अनूयाजार्थे प्राची उल्मुके [4]उदूहतीति [5]वाज-सनेयकम् ॥ ८ ॥ १४ ॥ ३३९ ॥**

(भा) प्राची नयत्युल्मुके विकल्पेन वाजसनेयिमतात् ॥

---

[परिध्यङ्गत्वे हेतुफलयोरुपपादनम्]

(वृ) **सूर्यस्त्वा—लिङ्गात् धीये च**—अयमभिप्रायः,—परिधीन् परिदधाति रक्षसामपहत्या इति परिधानस्य रक्षोहननार्थत्वात् न पुरस्तात्परिदधाति आदित्यो ह्येवोद्यन् पुरस्तादित्यादित्यस्य रक्षोहन्तृत्वेन कीर्तनात् सूर्यस्त्वा पुरस्तात्पात्विति सूर्यस्य रक्षितृत्वेन निर्देशात् परिधिपरिधानाङ्गता आहवनीयाभिमन्त्रणस्य । अतः परिधिपरिधाना-भावे अवभृथादौ निवृत्तिः । उपसदि तु तत्परिधिताः परिधयः इति पक्षे परिधिसद्भावेऽपि परिधानाभावा न्निवृत्ति' । परिधानपक्षे भवत्येव । परिध्यङ्गमिति—परिधानक्रियाङ्गमित्यर्थ ॥

**अग्निं करोति**—इध्मेन ॥

---

[1] पुरोभागपरिधानार्थमभिमन्त्रणम्, मन्त्रलिङ्गात् तथा न पुरस्ता-दित्यादि वाक्यशेषात् बोधायनवचनाच्च । तेनोपसदवभृथादिषु परिध्यभावे नभवत्यभिमन्त्रणम् (रु). [2] परिध्यङ्गमुपदेश —**क.** [3] न्निति लिङ्गात्, **क** [4] उदूहति—प्राग्भागे करोति (रु) [5] वाजसनेयग्रहणमादरार्थम् । न तु कल्पनेन विकल्पार्थम् अपिसृज्योल्मुके इत्युत्तरत्र नित्यवदनुवादात् सत्याषाढेन व्यक्त-वचनाच्च. (रु).

(सू) [1]मध्यमं परिधिमुपस्पृश्योर्ध्वे आघारसमि-
धावादधाति ॥ ९ ॥ १५ ॥ ३४० ॥

[परिधिस्पर्शेमतिभेदः]

(भा) सकृन्मध्यमपरिधिस्पर्शनम् । उपदेशः पुनःपुनरपीति ॥

(सू) वीतिहोत्रं त्वा कव इति [2]दक्षिणां समिद-
स्यायुषे त्वेत्युत्तरां तूष्णीं वा ॥१० ॥१६॥३४१॥

[दिङ्नियमावश्यकता]

(भा) आघारसमिदेकाग्नेर्दक्षिणा एका चोत्तरा, सर्वविधिषु दिङ्नियमात्; यदाऽपि प्राञ्चौ तिर्यञ्चौ वा[3]। उपदेशस्तु यत्र परिसमाप्तिराघारयोस्तत्र स्थापयितव्ये । [4]यदाऽपि प्राञ्चौ तदा प्रथमोत्तरपूर्वेण द्वितीया दक्षिणपूर्वेणेति । उर्ध्वे चाधेये । उपरिष्टादेव रक्षांस्यपहन्तीति [5]वचनात् ॥

---

[परिधिस्पर्शसाधने मतिभेदः उपदेशपक्षे हेतुश्च]

(वृ) सकृन्म–र्शनम्—हस्तेन समिद्भ्यां [6]वेत्यन्ये ॥

उपदेशः पुनः पुनरपीति—अघारसमिदङ्गत्वादुपस्पर्शनस्य प्रतिसमिदुपस्पर्शनम् ॥ ३०८ ॥

[समिद्देशभेदेपि दिङ्नियमावश्यकत्वम्]

आघारसमि—तियञ्चौ वा इति—यदाप्याघारसमिदिति समाख्यानादाघारसमाप्ति[7] देशे समित्प्राप्तिः, तदाप्यग्नेर्दक्षिणत उत्तरतश्च नियम्यते । [8]दक्षिणामुत्तरामिति नियमात् ॥

[उपदेशपक्षेहेतुः]

उपदेशस्तु—पूर्वेणेति—समाख्याबलात्तदन्ते प्राप्तत्वात् ॥ ३०९ ॥

---

[1] सकृदुपस्पृश्य परिधिं समिधावूर्ध्वाग्रे आदधाति, कुत्र[2] मध्येऽग्नेरिति भरद्वाज (रु) [2] दक्षिणोत्तरत्व मिथ (रु) [3] वा आघारौ—क. [4] यदा-प्राञ्चौ—ग घ. [5] लिङ्गात्—क [6] चेत्यन्ये —क ख ग घ [7] प्रदेशे—क ख ग. [8] इदं वाक्यम्—ख. ग. व्यातिरिक्तकोशेषु न दृश्यते ।

(सू) समावनन्तर्गर्भौ दर्भौ विधृती कुरुते ॥ ११ ॥ १७ ॥ ३४२ ॥

(भा) समौ करोति—छिनत्ति । नास्ति ययोर्गर्भस्तावनन्तर्गर्भौ ॥

(सू) [1] विशो यन्त्रे स्थ इत्यन्तर्वेद्युदगग्रे निधाय वसूनाꣳ रुद्राणामादित्यानाꣳ सदसि सीदेति तयोः प्रस्तरमत्यादधाति ॥ १२ ॥ १८ ॥ ३४३ ॥

(सू) [2] अभिहृततराणि प्रस्तरमूलानि बर्हिर्मूलेभ्यः ॥ १३ ॥ १९ ॥ ३४४ ॥

(भा) [3] बर्हिर्मूलेभ्यः[4] पुरस्तादतिशयेन हृतानि ॥

(सू) [5] जुहूरसि घृताचीत्येतैः[6] प्रतिमन्त्रमनूचीरसꣳस्पृष्टाः स्रुचः प्रस्तरे सादयति ॥ १४ ॥ २० ॥ ॥ ३४५ ॥

नवमीखण्डिका ॥

---

[छिनत्तीतिविवरणोपपत्तिः]

(वृ) समौ करोति—छिनत्ति—कुरुत इति वचनात् छेदनेन समीकरण विधृत्योः ॥ ३१० ॥

[अभिहृततरपदार्थविवरणम्]

(सू) अभिहृततराणीति—बर्हिर्मूलेभ्यो [7] यस्मिन् सादयति तस्य +लेभ्यः परस्तादतिशयेन हृतान्यभिहृततराणि । तरप्शब्दश्रवणात् ॥ ३१२ ॥

---

[1] विशो यन्त्रे स्थ इति निधानमन्त्र न करणे, सादयति विशो यन्त्रे स्थ इति कल्पान्तरेषु व्यक्तदर्शनात् (रु) [2] आहवनीयाभिमुख परस्ताद्धृतानि भवन्ति (रु) [3] यस्मिन् धातौ सादयति तस्य बर्हि—क [4] यत्र धातौ प्रस्तरस्साद्यते तद्बर्हिर्मूलेभ्य प्रस्तरमूलानि अभिहृततराणि आहवनीयाभिमुख पश्चाद्धृतानि भवन्ति (रु) [5] जुहूरसीत्यनुषक्तरूपनिर्देश उपभृद्ध्रुवयोरपि प्रदर्शनार्थं । (रु) । [6] तैर्मन्त्रैरनूचीरस—क [7] यस्मिन् धातौ सादयति—क

(भा) अनूची·—प्राची परस्परेणासमृष्टा· । सर्वाश्चेत् प्रस्तरे ॥

(सू) **अपि वा जुहूमेव प्रस्तरे ॥ १ ॥ २१ ॥ ३४६ ॥**

(सू) **[1] समं मूलैर्जुह्वा दण्डं करोति । उत्तरेण जुहूमुपभृतं प्रतिकृष्टतरामिवाधस्ताद्विधृत्योः । उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामिवोपरिष्टाद्विधृत्योः ॥२॥ २२॥ ॥ ३४७ ॥**

(भा) प्रस्तरे नाधस्ताद्विधृत्यो· उपभृत्प्रभृति कृष्टतरा-अतिशयेन पश्चान्नीता ॥

(सू) **ऋषभोऽसि शाक्करो घृताचीनाꣳसूनुः प्रियेण नाम्ना प्रिये सदसि सीदेति दक्षिणेन जुहूं स्रुवं [2] सादयत्युत्तरे[3]णोत्तरेण वा ध्रुवाम् ॥ ३ ॥ २३ ॥ ३४८ ॥**

[उन्नीतंसादनीयम्]

(भा) याजमानदर्शनात् स्थाल्यपि साद्यते ।

(सू) **एता असदन्निति [4] स्रुचोभिमन्त्रय विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानी[5]त्य -**

---

(वृ) **नाधस्ता–श्चान्नीता**— उपभृतोप्यतिशयेनपश्चान्नीता [6]ध्रुवा ॥

[स्थालीसादनेमानम्]

**याजमान–साद्यते**—साद्यमानपात्राभिमन्त्रणयाजमानेषु इयꣳ स्थाली इति दर्शनात् ॥

---

[1] अस्मिन् पक्षे सर्वासा सादनप्रकारमाह—यथा प्रस्तरमूल जुहुमूल भवति तथा जुहू सादयित्वा तस्या ईषत्प्रकृष्टा—प्रत्यक्कृष्टामुपभृत सादयति । तस्या अपि विप्रकृष्टतरा ध्रुवाम् (रु) [2] तूष्णीं आज्यस्थाल्यप्यासाद्या , तस्या अपि याजमानदर्शनात् (रु). [3] रेणवोत्तरेण वा–क [4] स्रुच इति सस्रुवा गृह्यन्ते एतावसदतामिति लिङ्गात् (रु). [5] आज्यानीति च स्रुग्गतानि , स्रुचामधिकारात् । केचित्तु आज्यानीत्यविशेषवचनादाज्यस्थाल्या आसादितत्वाच्च तद्गतस्याप्यभिमन्त्रणमिच्छन्ति । समानजातीयेनेति न्यायेन अङ्गारापोहनादीना प्रवृत्तिक्रम । हविरभिमन्त्रणस्यैव वाचनिकाभिधायित्वादावृत्ति । अभिघारमन्त्रस्तु आग्नेयार्थत्वात् तद्विकारेष्वेव भवति । तत्र च देवतावाचिनो द्वितीयाग्निशब्दस्यैवोह्व (रु).
[6] ध्रुवोपरिष्टाद्विधृत्यो –(मु रा).

**ज्यानि कपालवत्पुरोडाशादङ्गारानपोह्य सूर्य ज्योतिर्विभाहि महत इन्द्रियायेत्यभिमन्त्रयाप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाऽग्नये जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति तूष्णीमुत्तरम् ॥ ४ ॥ २४ ॥ ३४९ ॥**

[अभिमन्त्रणेविशेषः]

(भा) विष्णूनि स्थेति स्रुगतानामेवाज्यानामभिमन्त्रणम् , स्रुचामधिकृतत्वात् ।

[अपोहनादिमन्त्रावृत्तितद्धेतू]

पुरोडाशादङ्गारानपोह्येति मन्त्रावृत्तिः । सूर्यज्योतिः स्योनत इति च द्रव्यगते प्रकृतत्वात् ।

[प्रकरणविरोधपरिहारः]

प्रकरणस्य [1] च बाधात् ।

---

[अभिमन्त्रणीयाधिकरणनियमफलम्]

(वृ) **विष्णूनि—धिकृतत्वादिति**—एता असदन्निति स्रुचोऽभिमन्त्रय इति प्रकृतत्वात् । अतो यत्र ध्रुवायामेव ग्रहणमुपसदादौ तत्र विष्णवसीति ध्रुवास्थस्यैवाभिमन्त्रण न स्थालीस्थस्य भरद्वाजमताच्च ॥

[आवृत्तिहेतु]

**पुरोडाशा—न्त्रावृत्तिः**—युगपदसम्भवात् ॥

[द्रव्यगतत्वस्वरूपं फलंच]

**सूर्यज्योतिः—तत्वात् इति**—अतो द्रव्यसम्बोधनरूपत्वादेकवचनान्तत्वाच्चैकद्रव्याभिधानपरत्वादावृत्तिरनयोः ॥

[प्रकरणविरोधपरिहारोपपत्तिः]

**प्रकरणस्य च बाधादिति**—सूर्यज्योतिरिति न ज्योतिषोऽभिमन्त्रणम् हविः [2] प्रकरणबाधात् । हविषोऽप्यग्निसंपर्काज्ज्योतिष्ट्वात् ॥

---

[1] चाबाधात्—ग. घ चा बाधात् अत. अविभवित्वम् [2]—क [2] बाधप्रसङ्गात्—क.

(सू.) यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठा-मनु यो वितस्थे। आत्मन्वान् सोमघृतवान् हि भूत्वा देवान् गच्छ सुवर्विन्द यजमानाय मह्यम् इति प्रातर्दोहम् ॥ ५ ॥ २५ ॥ ३५० ॥

(सू.) स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि त इति पात्र्यामुपस्तीर्याद्र्दः प्रथस्तु-र्भुवनस्य गोपाः शृत उत्स्नाति जनिता मतीना-मित्यपर्यावर्तयन् पुरोडाशमुद्वास्य ॥ ६ ॥ २६ ॥ ॥ ३५१ ॥

दशमीखण्डिका.

---

(सू.) वेदेन भस्म प्रमृज्य तास्मिन् सीदामृते [1]प्रति-तिष्ठ व्रीहीणां मेध सुमनस्यमानः इति पात्र्यां प्रतिष्ठापयति ॥ १ ॥ २७ ॥ ३५२ ॥

(सू.) [2]तूष्णीं यवमयम् ॥ २ ॥ २८ ॥ ३५३ ॥

(सू.) इरा भूतिः पृथिव्यै रसो मोत्क्रमीत् इति स्रुवेण [3]कपालानि प्रत्यज्य देवस्त्वा सविता मध्वा-नक्तिति स्रुवेण पुरोडाशमनक्ति स्वक्तम[4]कूर्म[5]पृष-न्तमपरि[6]वर्ग[7]मणिकाषम् ॥ ३ ॥ २९ ॥ ३५४ ॥

---

1 सदनकरणमेकस्य कृत्वा उद्वासनादि प्रतिष्ठापनान्तमेकैकस्य करोति। सदन-करणाद्येकैकस्येत्यन्ये। तत प्रातर्दोहमुद्वामयाति। (रु) 2 यदा यावन्निर्वपति तदा तूष्णीं प्रतिष्ठापयति व्रीहीणामिति लिङ्गविरोधादिति भाव। एव च विकृतावपि यवमय तूष्णीमिति सिद्ध भवति। (रु) 3 कपालाञ्जनमन्त्रस्य प्रतिकपालयोगमावृत्ति। अविभवादेकैकश कपालानीति तु सत्याषाढ। पुरोडाशग्रहणात् साान्नाय्ययोर्न भवत्य-लङ्करणम् (रु) 4 कूर्मपृषदिव पृषत् बिन्दुर्यस्य नास्ति स अकूर्मपृषन्, नुम् छान्दस। क्वचित्क्वचिन्नानक्तो भवतीत्यर्थ। (रु) 5 पृष्वन्त—क 6 परिवर्ग—विच्छेद (रु) 7 निकाष—निकर्षणम्। तौ यथा न भवत तथाऽनक्तीत्यर्थ। णमुलन्तौ वा। णकारश्छान्दस (रु).

[मन्त्रावृत्तिपक्षभेदः]

(भा) योगे योगे कपालाञ्जने मन्त्रावृत्तिः। प्रतिकपाल हिरण्यकेशिनः। अपरिवर्ग—अपरित्यजन्। अणिकाषम्—[1]अघृषन्।

(सू) **उपरिष्टादभ्यज्याधस्ता[2]दुपानक्ति ॥ ४ ॥ ३० ॥ ॥ ३५५ ॥**

(भा) हस्तेनोपाञ्जनमधस्तात् हिरण्यकेशिमतात्[3]।

(सू) **चतुर्होत्रा पौर्णमास्यां हवीँष्या[4]सादयेत्पञ्चहोत्रामावास्यायाम् ॥ ५ ॥ ३१ ॥ ३५६ ॥**

(भा) असंभवतामासादने मन्त्रावृत्तिः।

(सू) **प्रियेण नाम्ना पियँ सद आसीदेति यदन्यद्धविर्दर्शिपूर्णमासिकेभ्यस्तदेतेना[5]सादयेदिति विज्ञायते ॥ ६ ॥ ३२ ॥ ३५७ ॥**

---

[अवृत्तिपक्षयोः पृथगुपपत्तिः]

(वृ) **योगे योगे—न्त्रावृत्तिः**—प्रतिकपालगण मन्त्रावृत्तिः एकपुरोरुडाशप्रयोगेऽपि विद्यमानत्वात् सर्वगणेषु युगपदसम्भवाच्च।

**प्रतिकपालं—हिरण्यकेशिनः**—अञ्जनस्य कपालसंस्कारार्थत्वात् प्रतिप्रधानं गुणावृत्तिरिति।

**अपरिवर्ग—अपरित्यजन्—अविच्छिन्दन्**—[6]अस्तोकेनप्रदेशेषु।

**आणिकार्षं—अघृषन्**—स्रुवेण पुरोडाशे।

**हस्तेनो—केशिमताच्च**—यद्यपि प्रतिष्ठितम्।

**असं—वृत्तिः**—युगपदासादनासम्भवात्।

---

[1] न घर्षेति—क [2] अधस्तादञ्जन हस्तेन पर्यावर्तनप्रतिषेधात् (रु) [3] तात् सूत्रमताच्च—क [4] युगापदासादन सर्वेषाम्। असम्भवे त्वावृत्तिर्मन्त्रस्य। (रु) [5] केचित्तु प्राकृत एव हविरासादने मन्त्रमेत विदधति। तन्निरासार्थमस्य वैकृतत्वप्रदर्शनम्। तेनास्य विकृत्यर्थमुत्पन्नत्वात् द्विबहुष्वनूह। एकवचनं तु अय यज्ञस्समसदादित्यादिवद्यज्ञादिरूपेण हविस्समुदायाभिधान द्रष्टव्यम्। (रु) [6] स्तोकेन—क स्तोकेन स्तोकेन—घ.

[प्रियेणेत्यस्योहानूहपक्षौ]

(भा) प्रियेणेति विकृत्युत्पन्नत्वादनूहः । आसीदतमासीदतेत्युपदेश· अद्य सुत्यामितिदर्शनात् ॥

(सू) **अपरेण स्रुचः पुरोडाशावासादयति ॥७॥३३॥३५८॥**

(सू) **उत्तरौ दोहौ ॥ ८ ॥ ३४ ॥ ३५९ ॥**

[दिङ्नियमे विशेषः मतिभेदादिश्च]

(भा) [1]उत्तरौ दोहौ पुरोडाशस्य । आग्नेयं प्रथममैन्द्रमुत्तरम् । स्रुचां केचित् । असंभवे हस्तद्वयेन कर्म ॥

[सर्वहविर्निर्देशरूपत्वंप्रियेणेत्यस्य]

(वृ) **प्रियेणेति —नूहः —** सर्वविकृतिषूपदिष्टत्वादेकवचनान्तस्य । अतो हविर्जातिमात्रपरता ।

[उपदेशपक्षे ऊहस्योत्पात्तिः]

**आसीदतमासी—दर्शनादिति** –अस्यार्थः–विकृत्युत्पन्नत्वेऽपि क्वचित्समवेताभिधानसंभवे तत्रोहो युक्त· । यथा विकृतौ द्वादशाह उत्पन्नस्य श्वस्सुत्यामिन्द्राग्निभ्यामिति प्रैषमन्त्रस्य अद्य सुत्यामित्यालेखन इत्यूहदर्शनम् तद्वत् प्रियेणेत्यस्याप्यूह इति ।

[सूत्रोक्तसादनेहेतुः]

[2] **अपरेण—सादयतीति—**प्रकृतत्वात् ।

[दोहोत्तरत्वेमतिभेदहेतुः]

**उत्तरौ—मुत्तरमिति—**[3] क्वचिद्द्विवचनात् ।

**स्रुचां–केचित्**–अपरेण स्रुच· पुरोडाशावासादयतीति प्रकृतत्वात्

[हस्तद्वयस्य कर्माङ्गत्वेमानम्]

**असंभवे हस्तद्वयेन कर्म—**कर्मणे वा मिति लिङ्गादित्युक्तं दोहकुम्भयोर्युगपदासादनासंभवे ।

---

1 कस्मादुत्तरौ [2] स्रुगभ्य इति ब्रूयात् । तासामेवावधित्वेनाधिकारात् । पुरोडाशाभ्या वा रौद्र उत्तर इत्यादाववधिमत्तया कृतस्याप्यवधित्वदर्शनात् । (रु)

2 अयं ग्रन्थ लिखितेषु न दृश्यते–(मु रा मात्रे दृश्यते) 3 द्वचनात्–क क्वचिद्दर्शनात्–घ

सू) अपि वा मध्ये वेद्याः सान्नाय्यकुम्भ्यौ संदधाति पूर्वं शृतमपरं दधि । [1]अथैने व्युदूहति दक्षिणस्यां श्रोण्यां शृतमासादयत्युत्तरस्यां दधि ॥ ॥ ९ ॥ ३५ ॥ ३६० ॥

(सू) अयं वेदः पृथिवीमन्वविन्दद्गुहासतीं गहने गह्वरेषु स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु इत्यग्रेणोत्तरेण वा ध्रुवां वेदं निधाय [2]वेद्यन्तान् परिस्तीर्य होतृषदनं कल्पयित्वा [3]सामिधेनीभ्यः प्रतिपद्यते ॥१०॥३६॥३६१

[वेदनिधानफलम् ; पञ्चम्यन्तार्थः तत्रत्यविशेषश्च ]

(भा) वेदा[4]सादनमुत्तरकर्मार्थम् । सामिधेन्यर्थो य.प्रैष. तं वक्तु प्रतिपद्यते । तस्य तदङ्गत्वात्सामिधेनीस्वर· ॥

एकादशी खण्डिका ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये द्वितीयप्रश्ने तृतीय पटल ॥

---

[सूत्रे कुम्भीसंधानपदार्थः]

(वृ) सूत्रे कुम्भ्यौ [5]सन्दधातीत्यादि—हस्ते कुम्भ्यौ धृत्वा वेदिमध्ये सक्तसशिष्य आनन्तरं विभज्य प्रापयति ।

[उत्तरकर्मार्थमित्यस्याशयः]

वेदासा —मार्थम्—तच्चासन्नाभिमर्शने कृते भाष्यकारेणाग्नौ वैश्वानरे साकमेधेषु वरुणप्रघासेषु च तथा क्रमोपदेशात् ।

[सूत्रारम्भप्रयोजनं अध्याहारोपपत्तिश्च]

सामिधेन्यर्थो — प्रतिपद्यते — प्रैषस्यानन्तरविधानादेवा –

---

[1] हस्तस्थेएव कुम्भ्यौ सक्रद्वेदिमध्ये संश्लेष्य ततस्ते व्युदूहति—विभज्य गमयति (रु) [2] वेदिं परिस्तीर्यैति यावानर्थ तावानेव वेद्यन्तान् परिस्तीर्यैति । यद्वा यत्र हवींषि सादितानि तान् वेदिप्रदेशानित्यर्थ । तथा सति महावेद्यामपि परितो हवींषीद स्तरणं न परितो वेदिमिति सिद्ध भवति (रु) [3] तदर्थमिध्माधानादि प्रक्रमते (रु) [4] वेदनिधानमु —घ [5] अय वृत्तिग्रन्थ (मु रा ) मात्रे दृश्यते न लिखितेष

(सू) अग्नये समिध्यमानायानु[1]ब्रूहीति संप्रे[2]ष्यति [3]समिध्यमानायानुब्रूहीति वा ॥ १ ॥ १ ॥ ३६२ ॥

(सू) पञ्चदश सामिधेनीरन्वाह ॥ २ ॥ २ ॥ ३६३ ॥

[ पाञ्चदश्यपुनरुक्तिफलम् ]

(भा) [4]पाञ्चदश्यस्य सिद्धत्वात्पुनर्वचनाद्बहुयाजिनोऽपि पञ्चदश लभ्यन्त इत्युपदेशः ॥

(सू) [5]त्रीँस्तृचानित्युक्तम् ॥ ३ ॥ ३ ॥ ३६४ ॥

---

(वृ) नन्तरप्रयोगे सिद्धेऽपि सूत्रारम्भप्रयोजन पुरस्तात्सामिधेनीनां होतेत्यवस्थानान्तस्यास्मिन् काले प्राक्प्रैषात् प्रयोगार्थं सामिधेनीभ्यः प्रतिपद्यत इति सामिधेन्यारम्भोपदेशात् [6]प्रैषस्य[7]तदारम्भत्वात्[8] त वक्तुमित्यध्याहार ॥

[अत्रविवक्षितः स्वरः स्वरोक्तिभावश्च]

तस्य तदङ्गत्वात्सामिधेनीस्वर इति—तदङ्गत्वात्—तस्य प्रैषस्य अङ्गत्वात् । सामिधेनीस्वरः—क्रुष्टमन्द्रयोरन्तरा । एतेन आश्रावणादीनामपि तद्देशस्वर एवेति दर्शितम् । तथाचोक्तम्—उच्चैर्वैश्वानरस्याश्रावयतीत्यत्र ॥

इति धूर्तस्वामिभाष्यवृत्तौ द्वितीयेप्रश्ने तृतीय पटल ॥

---

[पाञ्चदश्यपुनरुक्तिफलविवरणम् ]

पाञ्चदश्यस्य—इत्युपदेशः—अस्यार्थ —पञ्चदशसामिधेन्यो दर्शपूर्णमासयोरिति सिद्धे पञ्चदशत्वे पञ्चदशसामिधेनीरिति पुनर्वचनात् बहुयाजिनोऽपि पञ्चदशसङ्ख्या लभ्यते विकल्पेनेत्युपदेशः ॥

---

[1] ब्रूहीत्यूकार प्लावयितव्य (रु) [2] होतेति शेष । परिभाषायामय पञ्चदशकल्प सर्वेषामविशेषोक्त । स एवात्रानूदितो वक्ष्यमाणै कल्पैर्विकल्पार्थम् । तेन राजन्यवैश्यबहुयाजिकल्पैरपि स विकल्पते (रु) [3] समिध्यमानायेतिवा—क
[4] I पञ्चदशस्य सिद्धत्वात् (मु रा ) II पाञ्चदश्य सिद्धताम्—क [5] त्रीँस्तृचानित्यनुवाके नित्या काम्या नैमित्तिकाश्च सामिधेनीकल्पा उक्ता. तेऽपि यथा ब्राह्मणमनुसंधेया इत्यर्थ (रु) [6] प्राक्प्रैषप्रयोगार्थ —क. [7] पैषस्य च–घ
[8] म्भकत्वा–क

[तृचविभागः]

(भा) त्रीꣳस्तृचानित्युक्त ब्राह्मणे । तस्यार्थः,—राजन्यस्य त्रयस्तृचा· । प्रथमा सामन्वांस्तृचः त्व वरुण इत्युत्तमा त्रिष्टुप् । ईडे अग्निमिति गायत्री । प्रवो [1]वाजीया ॥

(भा) उत्तरा समिध्यमानोऽमृतस्य राजसीति जगती परीधानीयाया· परा वैश्यस्य । काम्येष्वेकविंशत्यादिषु प्रथमाया उत्तरे द्वे ईडे अग्नि-

[त्रीनित्यादिभाष्यविवरणम्]

(वृ) **त्रीꣳस्तृचानित्युक्तं ब्राह्मणे—तस्यार्थः—राजन्यस्य**[2]**—त्रिष्टुप्**—प्रथमा[3] प्रवो[4]वाजीया त्रिरभ्यस्ता । सामन्वान् तृचोऽग्न आयाहि वीतय इति तिस्र ऋच· । अयज्ञो वा एष योऽसामेति साम-संस्तवात् । त्वं वरुण [5]इत्यनुष्टुप् । अनया त्रिरभ्यस्तया परिदध्यात् । एव त्रयस्तृचाः । पञ्चदशानुब्रूयाद्राजन्यस्येत्यस्मिन् पक्षे त्व वरुण इति वसिष्ठराजन्यानां परीधानीयेत्येतावान् विशेषः । प्रकृतितो राज-न्यस्य कल्पद्वयम् नित्यम् । आजुहोतेति गायत्र्या परिधानं नित्यम् ब्रह्मवर्चसकामस्यानन्तर्यात् ॥

(वृ) **ईडे अग्निमिति — वैश्यस्य** — सप्तदशानुब्रूयाद्वैश्यस्येत्यत्र[6] ईडे अग्निमिति गायत्री प्रवोवाजीयाया उत्तरा प्रवोवाजीया त्रिरभ्यस्ता ईडे अग्निं विपाश्चितामिति सकृत् । अग्न आयाहि वीतय इत्यादि समानमाजुहोतेत्यन्तम् । आजुहोता च सकृदस्याः परिधानीयायाः । परया समिध्यमानो अमृतस्य राजसीति बह्वृचपठितया परिदध्या-त्रिरभ्यस्तया ॥

**काम्येष्वेक—त्रयस्तृचाः**—ईडे अग्निं विपश्चितम् अग्ने

---

[1] वाजीयाया—घ [2] राजन्यस्य त्रयस्तृचा –(मु रा) [3] म (मु. रा)
[4] वाजा इत्यस्य त्रिरभ्यासादेकस्तृच आयाहि–(मु. रा) [5] इत्युत्तरात्रिष्टुप् (मु रा) त्रिस्तृचा नित्युक्तम्–ब्राह्मणे । तस्यार्थ –राजन्यस्य त्रयस्तृचा [6] त्यत्र प्रवो वाजीया त्रिरभ्यस्ता (मु रा)

[तृचविभागः पक्षभेदेन उपदेशमतं च]

(भा) मिति सामन्वदुत्तरा त्वामग्ने पुष्करादधीति त्रयस्तृचाः । अग्निमग्न

---

[तृचविभागविवरणम्]

(वृ) शकेम ते वयम् इति द्वे, सामन्वानग्न आयाहि वीतय इति तृच. उत्तरा इडेन्यो नमस्य इत्येका त्वामग्ने पुष्करादधीति त्रयस्तृचाः आजुहोतेति परिधानीया वसिष्ठराजन्ययोः त्व वरुण इत्येकविंशतिपक्षे । उपरितनपक्षेष्वप्येते एव परिधानीये । चतुर्विंशतिपक्षे पूर्वस्मादयं विशेष,—तृचेभ्य ऊर्ध्वं वृषो अग्निरित्याद्यग्निं दूतमित्यन्तमुक्त्वा आजुहोतेति परिधानीये व्यवस्थया ॥

**अग्निमग्न इत्येकादशाष्टम्या इति**—एकादशसु यावदपेक्षितम् निवेशयेदित्यर्थ । त्रि शतमनुब्रूयादित्यस्मिन् पक्षे [1] पूर्ववदग्निं दूतमित्यन्तमुक्त्वा अग्निमग्न इत्येकादशसु प्रथमौ द्वौ तृचौ आजुहोतेति परिधानीया । द्वात्रिंशतमनुब्रूयादित्यत्र विशेष. ,—पूर्ववदग्निं दूतमित्युक्त्वा अग्निमग्निमित्याद्यष्टावनुब्रूयात् तत परिधानीया। षट्त्रिंशत्पक्षेऽपि पूर्ववदग्निमित्येकादशापि प्रयोज्या समिध्यमानो अध्वरे इति चोक्त्वा परिधानीया[2] । चतुश्चत्वारिं[3]शतमित्यत्र विशेषः,—समिध्यमानवत्या उपरि पृथुपाजा इत्यादि बहूचोक्ता अष्टावुक्त्वा परिधानीया ॥

---

[1] पूर्ववदग्निमग्न इत्येकादशापि प्रयोज्या समिध्यमानो (मु रा) [2] पृथुपाजा इत्यष्टौ समिध्यमानवत्य इति (मु रा) [3] शतपक्षे पूर्ववत्पृथुपाजा इत्यष्टावुक्त्वा दशतयीभ्य (मु रा)

(भा) इत्ये[1]कादशाष्टम्या· । [2]एतासां यथार्थमागमस्स्यात् । सर्वाणि छन्दांऽसीति गायत्री त्रिष्टुब्जगत्यो बहुयाजिन । अपरिमितमिति [3]बहुयाजिन एव नित्यादधिक प्रकृतानां चान्यतम कल्प· । केचिदष्टा[4]चत्वारिंऽ-

---

(वृ) अष्टाचत्वारिंऽशत्पक्षे पूर्ववत् पृथुपाजा इत्यष्टावुक्त्वा [5]दाशतयीभ्य आग्नेय्यो गायत्र्यश्चतस्र आगमयितव्याः [6]परिधानीया[7] [8]एकादशाष्टम्या अष्टौ समिध्यमानवत्या इति परत इत्यर्थः ॥

**एतासां—स्यादिति**—[9]उक्तार्थमेतासामेव निवेश· सूत्रान्तरवचनात् ॥

**सर्वाणि--याजिनः**—सोमयाजी—बहुयाजी । [10]तस्य गायत्र्यादीनि छन्दांसि अवरुद्धानि यो बहुयाजीति सवनत्रयेण । गायत्री त्रिष्टुब्जगतीनां प्राप्तयभिप्रायेणोक्तत्वात् । अपरिमितवचनेऽपि त्रयाणामेव छन्दसामनुवचनम् ॥

**अपरिमित—नित्यात्—मः कल्प इति**—ब्राह्मणादीनां नित्याधिकारोक्तपञ्चदशादि [11]सख्यासु स्वाधिकारप्राप्त[12]सख्याया [13]अधिकमपरिमित [14]प्रकृतसख्यानामप्यविशेषेणोक्तत्वात् बहुयाजिनोऽपि प्राप्तिः । उपदेशमतेन बहुयाजिनोऽपि पञ्चदशसङ्ख्यायाः पूर्वमुक्तत्वाच्च ॥

**केचिदष्टाचत्वारिंऽशतंऽपरम्**— अपरिमितत्वात् ॥

---

1 शाष्टाभ्य इति (मु रा.) 2 पृथुपाजा इत्यष्टौ समिध्यमानवत्या –ग 3 याजिनमेव नित्यादधिक 4 चत्वारिंऽशतंऽपरम्–ख. ग घ 5 दाशतेभ्य·–क 6 तत परि–घ 7 एतदादि न दृश्यते –घ 8 नीयाएतासा–दिति–उक्तार्थ (मु रा) 9 एतासामेव नि–घ एतासा यथार्थमागमस्स्यादित्युक्तार्थ·–क. 10 एतदादि वचनमित्यन्त–घ—पुस्तके दृश्यते–क—पुस्तके च 11 प्राप्ताया अधिक –घ 12 संख्यास्वाधिकारप्राप्ताया अधिक (मु रा) 13 अधिकमपारिमितम्–घ 14 प्राकृत सं (मु रा)

(भा) शत परम् । युक्ष्वाहीत्येवमादीनामाग्नेयाना गायत्रीणामागमः। स्त्रियस्तेन यद्गायत्रञ्च इति । परीधानीयाया पुरस्तात् क्षेप इत्युपदेश ॥

(सू) प्रणवे प्रणवे समिधमादधाति ॥ ४ ॥ ४ ॥ ॥ ३६५ ॥

(सू) सामिधेनीविवृद्धौ[1] काष्ठानि विवर्धन्ते [2] प्रतिह्रसमानासु प्रकृतिवत् ॥ ५ ॥ ५ ॥ ३६६ ॥

(सू) समिद्धो अग्न आहुतेत्यभिज्ञायैकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्यादधाति । [3]परिधानीयायां वा ॥ ६ ॥ ६ ॥ ३६७ ॥

(सू) वेदेनाग्निं [4] त्रिरुपवाज्य स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्यासीन उत्तरं परिधिं[5]सन्धिमन्ववहृत्य प्रजापतिं मनसा [6] ध्यायन्

---

(वृ) युक्ष्वाही—मागमः —आवापस्थान इत्याहु ॥

स्त्रियस्तेन गायत्रच इति—सिद्धवदनुवादात् गायत्रीणामाग्नेयानामस्मच्छाखोक्तानां युक्ष्वाहीत्यादीनामागम ॥

[उपदेशमतोपपत्ति.]

परिधानीया इत्युपदेशः — आगन्तूनामन्ते निवेश इति । [7]तेन मन्त्रास्त्रिष्टुब्जगत्य षट्प्रयोज्या इति पूर्वेषा

---

[1] वृद्धिह्रासौ पञ्चदशापेक्षया (रु) [2] प्रकृत्या—पाञ्चदश्येन तुल्यमित्यर्थ । एतदुक्त भवति त्रींस्तृचाननुब्रूयात् एका सामिधेनीं त्रिरन्वाहेत्यादिषु सामिधेनीह्रासेन समिधामपि ह्रास उक्त । किंतु ता दशैव समशो विभज्याधेया इति । वक्ष्यति च पित्र्याया समश इध्मं त्रैधं विभज्य त्रिरादधातीति । परिधानीयायामाधेयाश्शिष्टा इत्यन्ये (रु) [3] परिधानीयोत्तमा ऋक् (रु) [4] उपवाजनमुपवीजनम् तच्चादृष्टार्थं नतु दीप्त्यर्थं त्रिरितिनियमात् । उदकमुपवाज्येत्यवभृथे सत्याषाढवचनाच्च । तस्मादवभृथेऽपीष्यते (रु) [5] तेन मार्गेण प्रपाद्य (रु) [6] देवतात्वेन (रु). [7] इति पूर्वेषा क्रम—क घ.

(सू) दाक्षिणाप्राञ्चमृजुं सन्ततं ज्योतिष्मत्याघारमा-[1]घारयन् सर्वाणीध्मकाष्ठानि सꣳस्पर्शयति ॥ ७ ॥ ७ ॥ ३६८ ॥

[उपवाजनोक्तिस्वारस्यम् संस्पर्शनेऽन्यपक्षः ध्य.नाकारश्च]

(भा) उपवाजन दीप्त्यर्थम् । तस्मान्नावभृथे । अन्ववहृत्य [2]प्रवेश्य । तेन [3]सन्धिना सस्पर्शनं केचित् । मनसा ध्यान प्रजापतये स्वाहेति ॥

---

(वृ) क्लृप्त[4]क्रमाबाधाय परिधानीयायाश्च नियतत्वात् समिध्यमानवतीं सामिद्धवतीं चेति [5]न्यायो [6]धाशब्दबोधितास्वेवेत्युपदेशाभिप्रायः । अत्र बह्वृचपरितानामागमपक्ष· । सूत्रकारेणाप्युपदेशादितराणीत्यङ्गी[7]कारात् बह्वृचशेषत्वादस्मदीयहौत्रस्य ॥

[प्रतिह्वसमानास्विति सूत्रार्थः]

**प्रतिह्वसमानासु प्रकृतिवदिति**—अस्यार्थ·, —एकविꣳशतिमिध्मदारूणि भवन्ति पञ्चदशेध्मदारूण्यभ्यादधातीति प्रकृतौ नियमात् काष्ठसङ्ख्याप्यङ्गभूता । पञ्चदशसामिधेनीरन्वाहेति सामिधेनीसङ्ख्या च विहिता । एका [8]सामिधेनी त्रिरन्वाहेत्यादौ सामिधेनीसङ्ख्याबाधेऽपि समश इध्मं [9]त्रैधं विभज्येति काष्ठसङ्ख्याया [10]अप्यबाधितत्वात् यावत्सामिधेनीसङ्ख्यामादाय परिधानीयायां [11]शेषाधान कर्तव्यमिति ॥

[उपवाजनपदार्थः]

**उपवाजनं—केचित्**—परिधिसंधि[12]सस्पर्शनम् ।

[ध्यानाकारेप्रमाणम्]

**मनसा—स्वाहेति**—होमत्वात् स्वाहाकारप्राप्ते· तद्योगाच्चतुर्थ्यन्तस्य प्रजा[13]पतेर्ध्यानम् । ज्योतिष्मत्याघारमिति ज्वलत्यग्नौ ॥

---

1 आघारयन्—दीर्घधारा कुर्वन् (रु) 2 प्रदेश्य–घ. 3 सन्धीनाम्–ग. 4 क्रमबाधाय (मु रा) 5 न्याय्यो–क. 6 धाय्या (मु रा) 7 करणात्–क ख. ग 8 सामिधेनीनाम् (मु रा). 9 त्रैधमितिकाष्ठ–क. घ. 10 अबाधितत्वात्–घ. 11 शेषकाष्ठाधानम् (मु. रा) 12 स्पर्शनम्–क. परिधिस्पर्शनम्–घ. 13 पतये ? ध्यानम्–क

(सू) [1] आघारयोर्वदत्यृजू प्राञ्चौ होतव्यौ तिर्यञ्चौ वा व्यतिषक्तावव्यतिषक्तौ वा ॥ ८ ॥ ८ ॥ ३६९ ॥

[व्यतिषङ्गपदार्थः]

(भा) व्यतिषङ्गस्संसर्गः ॥

(सू) स्रुवेणाज्यस्थाल्या आज्यमादाय आप्यायतां ध्रुवा घृतेने[2]त्यवदायावदाय ध्रुवामाप्याययतीति [3] सार्वत्रिकम् ॥ ९ ॥ ९ ॥ ३७० ॥

[वीप्साध्रुवाग्रहणफले आप्यायनं न चरौ]

(भा) प्रतिस्रुवमाप्यायनं वीप्सावचनात् । सार्वत्रिकवचनाद्दर्शपूर्ण-

---

[व्याख्येयप्रदर्शनं क्वचित्तद्विकल्पश्च]

(वृ) व्यतिषङ्गस्संसर्ग इति—व्यतिषक्तावव्यतिषक्तौ वेति सूत्रे [4] व्यतिषङ्ग [5] शब्दस्यार्थः । प्राञ्चौ [6] तिर्यञ्चावित्यत्र व्यतिषङ्गो विकल्पेन ॥

[वीप्साकारः]

प्रतिस्रुवमाप्यायनं वीप्सावचनात्—अवदायावदायेति ।

[अन्यत्रपक्षान्तरम्]

सार्वत्रिक—न्यत्रापीति—केचिदन्यत्राभिपूरणमिच्छन्ति ; अग्नौ दीक्षाहुतिषु भाष्यकारेणोक्तत्वात् ।

---

[1] आघारयोरेतान् विकल्पान् वदति ब्राह्मणम् ऋजू प्राञ्चावित्येक पक्ष तिर्यञ्चौ मिथो व्यतिषक्ताविति द्वितीय । तावेवाव्यतिषक्तावृजू इति तृतीय (रु)
[2] त्यवदाय ध्रुवा—क [3] न केवलमाघारे , किन्तु सर्वेष्वेव कर्मसु यत्र ध्रौवादवद्यतीत्यर्थ । मन्त्रस्तु प्रकरणादैष्टिक एवाप्यायन इत्येके (रु) [4] व्यतिषक्तार्थ -क.
[5] शब्दार्थ (मु रा) [6] तिर्यञ्चौ वेत्यत्र—घ.

(भा) मासाभ्यामन्यत्रापि । ध्रुवाग्रहणाद्ध्रुवामेव । ध्रुवाकार्येऽपि चरावभिपूरणमेव यावदर्थमित्यतो नाप्याय्यते ॥

(सू) **अग्नीत्परिधींश्चाग्निं च त्रिस्त्रिस्संमृड्ढीति संप्रेष्यति ॥ १० ॥ १० ॥ ३७१ ॥**

॥ द्वादशी खण्डिका ॥

---

(सू) **इध्मसंनहनैस्सह स्फ्यैरकृते स्फ्यैर्वाऽऽग्नीध्रोऽ[1]नुपरिक्रा[2]मं परिधीन् [3]यथापरिधित[4]मन्वग्रं त्रिस्त्रिस्संमृज्य अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्यायेति त्रिरग्निं प्राश्चम् ॥ १ ॥ ११ ॥ ३७२ ॥**

---

(वृ) **ध्रुवाग्रहणाद्ध्रुवामेव**— आप्याय [5]यन्ति ।

**[आप्यायननिषेधस्थलविवरणम्]**

**ध्रुवाकार्येऽपि**— [6]**नाप्यायत इति**— प्रायणीयायामाज्येन चरुमभिपूर्यैता देवता यजतीत्यस्मिन्पक्षे नाप्यायनम् । एवं गृहमेधीये ओदनया[7]र्निम्ने कृत्वेत्यत्र अभिपूरणमेव सर्वत्राभिपूरणम् न प्रत्यवदानअर्थलक्षणत्वात् ॥

---

[1] अनुपरिक्रामं—त त परिधिदेश गत्वा (रु). [2] मन्—क [3] यथापरिधित—येन क्रमेण परिहितास्तेन क्रमेण (रु) [10] अन्वग्र—मूलादारभ्याऽऽग्रात् (रु). [5] प्याययति—क घ. [6] नाप्याय्यत इति—ग. घ. नाप्याययत इति ( मु. २।) [7] नियमेन कृ—घ.

[स्फ्यमात्रेणापि संमार्गलाभः संमार्गान्तर च]

(भा) स्फ्योऽपि समार्गार्थः। तस्मादवभृथे तेन समार्गः। अनु-परिक्राम—गत्वा गत्वा तस्य तस्य समीपम्, [1] नैकस्थः। यथा परिधित तथा अन्वग्रम्—अग्रे क्रियापरिसमाप्तिः। अग्निमग्नीदित्यपि [2] लभ्यते। तदाग्नेः पूर्वम् ॥ ११४ ॥

(सू) **ध्रुवनमसीत्यग्रेण ध्रुवां जुहूं वाऽ[3]ञ्जलिं कृत्वा जुह्वेहीति जुहूमादत्त उपभृदेहीत्युपभृतम् ॥**
**॥ २ ॥ १२ ॥ ३७३ ॥**

---

[स्फ्ये संमार्गार्थत्वाविरोधः]

(वृ) **स्फ्योऽपि संमार्गार्थ इति;**—न सह्योगात् स्फ्यस्या-प्राधान्यम्।

[अन्यथा अवभृथे तदभावः]

**तस्मादवभृथे तेन सम्मार्गः;**—संनहनाभावेऽपि।

**अनुपरि—धितं तथा;**—परिधानक्रमेण।

**अन्वग्रं—लभ्यते;**—अग्निमग्नीत्रिस्त्रिस्सम्मृड्ढीति ब्राह्मणो-क्तत्वात् तदपि विकल्पेन लभ्यते।

[अग्नेः पूर्वमिति पक्षेऽपि परिधिसंमार्गः]

**तदाऽग्नेः पूर्वम्;**—सम्मार्ग। [4] अस्मिन्नपि पक्षे परिधीन् समार्ष्टीति पश्चाद्विधानात् पश्चात्परिधिसम्मार्गः ॥

---

[1] नैकत्रस्थ (मु पु) [2] लभ्यते इत्यन्त एव—घ [3] अञ्जलि राहवनीयसस्कारार्थं तस्मा एव नमस्करोतीति मन्त्रविधिवाक्यशेषात् आहवनी-याञ्जलिं करोतीति भारद्वाजवचनाच्च। दक्षिणस्य व्यापृतत्वात् सव्येनादानमुपभृत, तथा बौधायनोक्तेश्च (रु) [4] तस्मिन्—क

[अञ्जलेर्नमस्कारार्थता, भुवनंयज्ञः, प्रथनंयष्टुः, अवभृतेप्यूहः तत्रोपदेशपक्षश्च ]

(भा) नम इति लिङ्गात् [1] नमस्कारा[2]र्थोऽञ्जलि । भुवनमसीति यज्ञाभिधानम् । विप्रथस्वेति यजमानस्य । अतोऽवभृथे आपो यष्टृच इत्येतावानूहः । न तूपदेशः ॥

[अञ्जलेर्नमस्कारार्थत्वविवरणम् ]

(वृ) **नम इति—र्थोऽञ्जलि[3]रिति ;**—जुहूं वाऽञ्जलिं कृत्वेत्यत्र आहवनीयाभिमुखमञ्जलिं कृत्वा तन्नमस्कुर्यात् । अग्ने यष्टरिदं नम इति लिङ्गात् । तस्मा एव नमस्करोतीति वाक्यशेषाच्च ॥

[भुवनं नेहाग्निरित्यत्रहेतुः]

**भुवनमसीति यज्ञाभिधानम् ;**—नाग्नेः । यज्ञो वै भुवनं इति वाक्यशेषात् ।

[विप्रथनस्य यजमानविषयत्वोपपत्ति ]

**विप्रथस्वेति यजमानस्य ;**—[4] प्रधानाभिधानम्, यजमानं प्रजया पशुभि· प्रथयस्वेति यज्ञसंबोधनम् । यज्ञ एव यजमानं प्रजया पशुभि [5] प्रथयतीति वाक्यशेषात् । [6] प्रथस्व—प्रथयस्वेत्यर्थ.—

[अवभृथेऽञ्जल· ऊहस्य चोपपत्ति·]

**अतो—त्येतावानूहः ;**—अतोऽवभृथे[7]ऽप्यविकारेणाञ्जलिकरणम् । [8] यजमानप्रथनाशासनपरत्वान्मन्त्रस्य । एष हि देवेभ्यो हव्यं भरतीति हविर्भरणद्वारेण आहवनीयस्य यष्टृत्वात् अग्निर्वै देवाना यष्टेति च वाक्यशेषात् यज्ञकर्तृरूपाहवनीयाभिधानस्य विवक्षितत्वात् तत्स्थानापन्ना-[9]स्वप्यवभृथे आपो यष्टृच इत्येतावानूह ॥

[विनाप्यूहं प्रयोग इति उपदेशपक्षोपपत्ति ]

**न तूपदेशः**—अग्नेर्यष्टृत्वस्य भाक्तत्वात् यज्ञफलाशासनपरत्वा-

---

[1] नमस्कारार्थं च लिखति [2]—ख ग घ [2] र्थेञ्जलि —क [3] रिति, आहवनीया—क घ [4] प्रधनाभिधानम्—क ख ग घ [5] पशुभिरितिवाक्य—क [6] विप्रथस्व—विशेषेण—क. [7] थे अविकारेण—घ. [8] यजमानस्य प्र—क [9] स्वप्सु अव—घ.

(सू) **सुयमे मे अद्य घृताची भूयस्तꣳस्वावृतौ सूपावृतावित्युपभृति जुहूमत्यादधाति[1]। [2]मुखतोऽभिहृत्य मुखत [3]उपावहरति सर्वत्रैवमत्याधानोपावहरणे [4]भवतः ॥ ३ ॥ १३ ॥ ३७४ ॥**

[अत्याधानादेरमन्त्रकता]

(भा) अत्याधानोपावहरणग्रहणानि तूष्णीमन्यत्र ॥

(सू) **न च [5]सꣳशिञ्जयति नाभिदेशे च स्रुचौ धारयति ॥ ४ ॥ १४ ॥ ३७५ ॥**

---

(वृ) ‑मन्त्रस्य अवभृथेऽप्यनूहेन प्रयोग इति । तुशब्दात्पूर्वपक्षव्यावृत्तिः । देवताग्नेरभिधायकोऽग्निशब्दः वरुणप्रघासावभृथे दर्शितत्वात् । एष हि देवेभ्यो हव्य [6]भरतीति अग्निर्वै देवानां यष्टेति देवतायामुपपद्यते नाधिकरणेऽग्नौ । स्थलजलाद्यधिकरणेषु तत्तद्देवता[7]भ्यश्च हूयमान हवि देवताग्निरेव वहति तस्मादवभृथेष्वपि तस्यैवाभिधानमिति ॥ ११५ ॥ ॥ ३३९ ॥

[अन्यात्याधानपदयोरर्थः भाष्याशयश्च]

**अत्याधानो—मन्यत्रेति**—आघारादन्यत्र जुहूपभृतोर्ग्रहणमत्याधानम् । उपावहरण च तूष्णीम् । उपावहरणमन्त्राभावेऽप्यनास्थया भाष्ये निर्देश· । आघार एव मन्त्रोपदेशात् अन्येषां तत्प्रकृतित्वाभावात् तूष्णी क्रियामात्रानुष्ठानम् । अथवा मुखतोऽभिहृत्य मुखत उपावहरतीति क्रियाप्रकारमात्रमुपदिश्यातिदेशात् समनन्तरवाक्यस्थस्यातिदेशो युक्त इति ॥

---

1 अत्यादधाति—स्थापयति (रु) 2 मुखेनाभिहृत्य—अभिमुखं कृत्वा (रु) 3 उपावहरति—अपादत्ते (रु) हरतीति–ख. 4 मन्त्रस्तु प्रकरणादाघारार्थ एवेष्टो नान्यत्र (रु). 5 शब्दाययति (रु) 6 वहतीति–क 7 भ्योहूय–घ.

[शिञ्जनस्वरूपं असंशिञ्जनधारणयोः सार्वत्रिकत्व च]

(भा) न च संशिञ्जयति—न च शब्द करोति। असंशिञ्जन-धारणयो· सार्वत्रिकत्व[1] च शब्दात् ॥

(सू) अग्नाविष्णू मा वामवक्रमिषमित्यग्रेण स्रुवो-परेण मध्यमं परिधि[2]मनवक्रामं प्रस्तरं [3]दक्षिणेन पदा दक्षिणाऽतिक्रामत्युदक्सव्येन ॥५॥१५॥ ॥ ३७६ ॥

(भा) अनवक्रामं—अनवक्रम्यानवक्रम्य ॥

(सू) एतद्वा [4]विपरीतम् ॥ ६ ॥ १६ ॥ ॥ ३७७ ॥

(सू) विष्णोः स्थानमसीत्यवतिष्ठते ॥ ७ ॥ १७ ॥ ॥ ३७८ ॥

---

[शिञ्जनसंभवः]

(वृ) न च शब्दं करोति—पात्रसघट्टनेन ॥

[सार्वत्रिकत्वलाभ ]

असंशिञ्जन—शब्दादिति—चशब्दात्सर्वत्रेत्यनुषज्यते ॥

[णमुलन्ताशयः]

[5]अनवक्रामं—अनवक्रम्यानवक्रम्य—णमुलर्थः पौन·पन्यम् सर्वातिक्रमणाभिप्रायेण ॥

---

[1] कत्वम् इत्येव वाक्यान्त -क घ. [2] क्रामन् प्र—ख. अनवक्रा-मम्—पदा प्रस्तरमनवक्रम्य (रु) [3] दक्षिणेन सव्येनेति तयो प्राथम्यनियम ; अनवक्राममित्याभीक्ष्ण्यवचनात् । अयमपि मन्त्रवर्जं सार्वत्रिको विधि (रु) [4] सव्येनातिक्रम्य दक्षिणेन प्रत्याक्रामतीत्यर्थ (रु) [5] (अनवक्रामम्, स्रुचोऽग्रेण मध्यमं परिधिमपरेण प्रस्तरमनतिक्रामन् यथा भवति तथा दक्षिणतो गत्वेत्यर्थ ,

(सू) अन्तर्वेदि दक्षिणः पादो भवत्यवघ्र[1] स्सव्यः ॥ अथोर्ध्वस्तिष्ठन् दक्षिणं परिधिसंधिमन्ववहृत्य ॥ ८ ॥ १८ ॥ ३७९ ॥

॥ त्रयोदशीखण्डिका ॥

---

(सू) समारभ्यो[2]र्ध्वो अध्वर इति प्राञ्चमुदञ्चमृजुꣳ संततं ज्योतिष्मत्याघारमाघारयन् सर्वाणीध्म-काष्ठानि सꣳस्पर्शयति ॥ १ ॥ १९ ॥ ३८० ॥

(भा) ज्योतिष्मति—ज्वलति ॥

(सू) यं कामयेत [3]प्रमायुकस्स्यादिति जिह्मं तस्येत्यु-क्तम् । २ ॥ २० ॥ ३८१ ॥

[जिह्मत्वोक्त्यर्थवादत्वम्]

(भा) जिह्मो वक्र. । उर्ध्वमृजुरिति कर्तृवाद ॥

---

[सौत्रस्य प्राञ्चमुदञ्चमित्यस्यार्थः]

(वृ) प्राञ्च मुदञ्चमिति—कोणदिगभिप्रायेण, ऋजू प्राञ्चौ इत्युक्तत्वात् ॥

[आघार्यान्वारम्भणं मानं च]

ज्योतिष्मति—ज्वलति—अत्राघार्यद्रव्यस्य यजमानान्वारम्भणम् आघारमाघार्यमाणमनुसमारभ्येति दर्शनात् ॥

[कामनोक्तेः फलितार्थं शब्दसाधुत्वं च]

जिह्म तस्येत्युक्त ब्राह्मणे,—

जिह्मः—वादः—ऊर्ध्वमाघार्य विच्छिन्द्यादित्याद्यूर्ध्वता जिह्मता च कर्तृविशेषणे । यथा जिह्म. यथा चोर्ध्वं अवक्रो भवति तथा

---

[1] दक्षिणावघ्र –तत्पार्ष्णिसस्पृष्टाङ्गुलि (रु) [2] उर्ध्वं –अप्रह्व (रु) [3] प्रमा-युक –मरणधर्मा । जिह्म–वक्रम् ब्राह्मणप्रदर्शनमृजुत्वादरार्थम् (रु)

(सू) ऊर्ध्व[1]माघार्य विच्छिन्द्याद्द्वेष्यस्य ॥ ३ ॥ ॥ २१ ॥ ३८२ ॥

(सू) [2]न्यृषण्वा ॥ ४ ॥ २२ ॥ ३८३ ॥

[सूत्रद्वयसंपिण्डितार्थः]

(भा) [3]वृषण्वा—विकिरन्मनसा शत्रु ध्यात्वा ॥

(सू) [4]न्यञ्चं वृष्टिकामस्य ॥ ५ ॥ २३ ॥ ३८४ ॥

(सू) [5]द्वेष्यस्येत्येके ॥ ६ ॥ २४ ॥ ३८५ ॥

(सू) ऊर्ध्वमाघारं स्वर्गकामस्य भूयिष्ठमाहुतीनां जुहुयात् ॥ ७ ॥ २५ ॥ ३८६ ॥

(सू) अपि वा [6]नाघारयेत्पूर्वार्धे मध्ये पश्चार्धे वा जुहुयात् ॥ ८ ॥ २६ ॥ ३८७ ॥

(सू) हुत्वा[7]ऽभिप्राणिति ॥ ९ ॥ २७ ॥ ३८८ ॥

---

(वृ) तिष्ठन् जुहुयादित्यध्या[8]हृत्य अजिह्ममूर्ध्वमित्यवस्थानक्रियाविशेषणत्वात्क[9]र्मत्वनपुसकत्वे ॥

[विकिरण विवरणेन भाष्यार्थ]

**वृषण्वन्—ध्यात्वा**—ऊर्ध्वमाघार्य विच्छिन्द्याद्द्वेष्यस्य [10]यजमान मनसा ध्यात्वा विकिरन् प्रशिथिलमाहुतिं जुहुयात् ॥

---

1 नाभिदेशादूर्ध्वमुद्गृहीतया स्रुचाधारामारभ्य मध्येविच्छिन्द्यात् (रु). 2 वृषण्वा 2—क ख इत इतो विकिरन्वा धारा विच्छिन्द्यादित्यर्थ । णकारश्छान्दस । यजमानस्याद्वेष्यत्वान्नैवं विच्छेत्तव्यमिति भाव (रु). 3 I वृषण्वन्[2] विकिरन्—II वृषण्वान् विकिरन् (मु पु) 4 न्यञ्चि—ख न्यञ्चं—नाभिदेशान्नीचै (रु) 5 नीचैराघारो द्वेष्यस्य, तस्माद्वर्जनीय इत्येके (रु) 6 नाघारयेदित्याघारगुणप्रतिषेध । दीर्घधारादिसंयोगादयो धर्मा न भवन्तीत्यर्थ (रु) 7 अभिप्राणिति—आघारस्योपरि श्वसिति (रु). 8 ध्याहृत्यम्—क 9 त्वात्कर्मनपुंसकत्वे—क. 10 दद्वेष्यस्येत्यत्र द्वेष्यम्—क.

[अभिप्राणने कर्म]

(भा) हुत्वाऽ[1] भिप्राणनमाघारस्य ॥

(सू) **बृहद्भा इति स्रुचमुद्यम्य पाहि माऽग्ने दुश्चरिता-दामा सुचरिते भजेत्यसꣳस्पर्शयन् स्रुचौ प्रत्या-क्रामत्येते [2] एवाक्रमणप्रत्याक्रमणे मन्त्रवती भवतः ॥ १० ॥ २८ ॥ ३८९ ॥**

(भा) एते एव मन्त्रवती भवत नान्ये । [3] विधिस्तु सर्वत्रासस्प[4]र्श-मुक्त्वा । तदा [5]घारार्थ प्राण आघार इति ॥

(सू) **मखस्य शिरोऽसीति जुह्वा ध्रुवां[6] द्विस्त्रिर्वा समनक्ति ॥ ११ ॥ २९ ॥ ३९० ॥**

[समञ्जने कर्म मानं च]

(भा) ध्रुवासमञ्जनमाज्यस्य, ज्योतिषा ज्योतिरङ्क्तामिति लिङ्गात् ॥

---

[ भाष्योक्तनियमफलम् ]

(वृ) **एते एव—मुक्त्वा**—एते एव मन्त्रवती भवत इति नियमात् मन्त्रवर्जितस्य क्रियाकलापस्य [7] सर्वत्र प्राप्ति. ॥

[स्रुचोरसंस्पर्शनस्याघारार्थत्वेमानम् ]

**तदा-आघार इति**—स्रुचोरसस्पर्शनमाघारार्थमेव । प्राण आघार. यत्सꣳस्पर्शयेदिति लिङ्गात् ॥

[समञ्जनं ध्रौवाज्यस्यैव]

**ध्रुवा—ज्यस्य**—ध्रुवाꣳ समनक्तीत्युक्तेऽपि ध्रौवाज्यस्य समञ्जनम्।

**ज्योतिषा—लिङ्गात्**—आज्यस्यैव तैजसत्वात् ज्योतिरिति गौणवादोपपत्तेः ॥

---

[1] अभिप्राणन—क I ननमुपरिप्राणन—ख II [2] इत्थमन्यत्र मन्त्रप-र्युदासात् ततोऽन्येषामाक्रमणप्रत्याक्रमणधर्माणा सार्वत्रिकत्व स्पष्टीकृतम् । स्रुचोरसं-स्पर्शननियमन मन्त्रश्चात्रैवेष्यते यत्संस्पर्शयेदिति निन्दार्थवादस्याघारसयोगात् [3] विधिकर्मसु—क. [4] स्पर्शनमु—क [5] तदादरार्थं—ग [6] ध्रुवामिति ध्रुवास्थमाज्यं लक्ष्यते (रु) [7] सर्वस्य—क

(सू) उन्नीतꣳ राय इति स्रुवेण ध्रुवाया आज्यमादाय सुवीराय स्वाहेति जुहूमभिघार्य [1]जुह्वोपादाय यज्ञेन यज्ञस्संतत इति ध्रुवां प्रत्यभिघार्या[2]यतने [3]सादयति ॥ १२ ॥ ३० ॥ ३९१ ॥

॥ चतुर्दशी कण्डिका ॥

---

[जुह्वोपादानेऽमन्त्रता उपदेशमत च]

(भा) जुह्वोपादायेति न मन्त्रः । पुनरुन्नीतमित्युपदेश ॥

(सू) क इदमध्वर्युर्भविष्यति ? स इदमध्वर्युर्भविष्यति यज्ञो यज्ञस्य वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु वाचं प्रपद्ये भूर्भुवस्सु[4]वर्विष्णोः स्थाने तिष्ठामीतीध्मसंनहानि स्फ्य [5]उपसंगृह्य वेद्याश्च

---

[अस्योपादानस्यामन्त्रताहेतु ]

(वृ) जुह्वो–न मन्त्रः—जुह्वोपादायेति छान्दस , नच मन्त्र· ; पुनरुपादाने मन्त्रानुपदेशात् ॥

[उपदेशपक्षाशय ]

**पुनरुन्नीतमित्युपदेशः इति**—जुह्वोपादायेत्यस्मिन्नपि वाक्ये अवश्य पूर्ववाक्यस्थस्रुवाज्ययोरुपस्थानात् सहचरितस्य मन्त्रमात्रस्य निवृत्तिकारणाभावात् उन्नीतं राय इत्याज्योपादानार्थतया साधारणत्वाच्च ॥

---

[1] जुह्वापादाय—ख [2] तने स्रुचौ सादयित्वा—ख. [3] सादयित्वा—क. रुद्रदत्तसमतोऽय पाठ । [4] स्स्वर्विष्णो—ख [5] उपसंगृह्य—उपश्लेष्य–(रु)

(सू) तृणमभ्य[1]न्तमादायोत्तरतः [2] प्रवरायावतिष्ठेते पूर्वोऽध्वर्युरपर आग्नीध्रः ॥ १ ॥ ३१ ॥ ३९२ ॥

[कइदमित्यादेर्विनियोगः, सूत्रार्थः, आदाने उपदेशपक्षः] अवस्थानदेशः, वरणे कश्चिद्विशेषश्च ]

(भा) क इदमित्यवस्थानमन्त्र । इध्मसनहनानि स्फ्ये गृहीत्वा वेद्याश्च [3] तृण विगतान्त मध्यवर्ति तस्य [4] प्रच्याविन· वेद्यां तृणमपिसृजतीति लिङ्गात् । न मुच्यते वेद्या इत्युपदेश । वेद्या उत्तरत. । वरुणप्रघासेषु प्रतिप्रस्थातुर्न प्रवरः अध्वर्युणा वृतत्वात् ॥

(सू) इध्मसन्नहनानाग्नीध्रोऽन्वारभ्य क इदमग्नीद्भविष्यति स इदमग्नीद्भविष्यतीति मन्त्रं संनमति ॥ २ ॥ ३२ ॥ ३९३ ॥

---

[अवस्थानमन्त्रताहेतु.]

(वृ) क इदमित्यवस्थानमन्त्रः—तिष्ठामीति लिङ्गात् ॥

इध्मसंनहनानि—तीति लिङ्गादिति ;—वेदिमध्यात् तृणमसस्पृष्टमुपादाय वेद्यां तृणमपिसृजतीति प्रक्षेपविधानात् ।

न मुच्यते वेद्या इत्युपदेशः ;—अपिसृजतीति हस्तविमोकमात्रपरतयाप्युपपत्तेः वे[5]द्यास्तृणमपादायेति संततस्यैवोपादनम् ।

[उत्तरत्वावधिर्वेदिरित्यत्र हेतु ]

वेद्या उत्तरतः ;—प्रवरायावस्थानम् प्रकृतत्वात् न विहरमात्रस्योत्तरत· ।

[वरुणप्रघासे विशेषे हेतु ]

वरुण–वृतत्वात् ;—व्रियमाणस्य चैकत्वात् ॥

---

[1] अभ्यन्त–वेद्या अविगतमन्तं–वेद्यन्तस्य मूलमिति यावत् । वेद्या अविगतान्त वा (रु). [2] प्रवरं वक्तुम्, तल्लिङ्गत्वान्मन्त्रस्य (रु) [3] यच्च तृणमभ्यन्तविग–घ. [4] प्रच्यावनं–घ [5] इद वाक्यम्–घ. पुस्तके न दृश्यते.

(सू) **ब्रह्मन् प्रवरायाश्रावयिष्यामीति ब्रह्माणमामन्त्र्या-श्राव[1]यो[2]श्रावय श्रावयोमाश्रावयेति वा श्राव-यति ॥ ३ ॥ ३३ ॥ ३९४ ॥**

[आश्रावणादिप्रयोगप्रकारः मानं च]

(भा) आश्रावणादिषु [3]प्रथमाद्वितीययोस्त्रिमात्रत्वम् । श्रावयेत्यत्रापि । ब्रूहि प्रेष्यादीनां व्याकरणसिद्धा प्लुति ॥

(सू) **अस्तु श्रौषडित्याग्नीध्रोऽपरेणोत्करं दाक्षिणामुख-स्तिष्ठन् स्फ्यᳶ [4]संमार्गाᳶश्च धारयन् प्रत्या-श्रावयति ॥ ४ ॥ ३४ ॥ ३९५ ॥**

[प्रत्याश्रवणे स्थितिः]

(भा) इहाऽपि प्रत्याश्रावण दक्षिणामुखस्य ॥

---

[प्लुतेप्रमाणम्]

(वृ) **आश्रा—श्रावयेत्यत्रापि ;**—स्वरयो त्रिमात्रत्वम् । आच वहे श्राच वये पूर्वश्चेति भारद्वाजवचनात्,—अस्य सूत्रस्यार्थः—वहशब्दे परतः पूर्वस्याकारस्य प्लुति वयशब्दे परत पूर्वस्य श्राशब्दस्य प्लुति. पूर्वश्चेति प्रथमस्याकारस्योकारदेश्च प्लुति ॥

[प्रत्याश्रावणे दक्षिणामुखत्वोपपत्तिः]

**ब्रूहि प्रे—प्लुतिः ;**—ब्रूहिप्रेष्यश्रौषड्वौषडावहनामादेरिति ॥

**इहापि–मुखस्येति ,**—प्रवरायावस्थाने पूर्वोऽध्वर्युरपर आग्नीध्र इति नियमात् दक्षिणेन पाणिना दक्षिणमसमध्वर्योरित्यादि होतु.

---

[1] अत्र तृतीयो निगदस्त्र्यक्षरश्चतुर्थ प्रणवादि तेषु चाद्ययो । अग्नीत्प्रेषणे परस्य चेति प्रथमाद्वितीयावचौ प्लवेते नान्यत्र । तावेवोदाहृत्य अत्रैवाय प्लुत इष्यते इति नियमात् । केचित्तु चतुर्थेऽपि प्रणवादुत्तरौ प्लावयन्ति प्रथम एव निगद

[2] यामे श्रावयेति—ख प्रणवाधिक इति कृत्वा (रु) [3] चतुर्थेऽपि प्रणवादुत्तरौ प्लावयता पक्षमनूवाद रुद्रदत्त [4] समार्गा-इध्मसनह्नानि । तेषा स्फ्यस्य च धारण प्रवरादन्यत्रेति द्रष्टव्यम् प्रवरे तेषामध्वर्युणा धृतत्वात् । श्रौषडित्यौकार प्लावयति (रु)

(सू) आग्नीध्रे सोमे ॥ ५ ॥ ३५ ॥ ३९६ ॥

सर्वत्रैवमा[1]श्रुतप्रत्याश्रुते भवतः ॥ ६ ॥ ३६ ॥ ॥ ३९७ ॥

[आश्रावणादेस्सर्वत्रैकरूपता]

(भा) आग्नीध्रे[2] सोमे दर्शपूर्णमासविकाराणामपि ॥

॥ पञ्चदशी खण्डिका ॥

(भा) यथेह प्रयुङ्क्ते तथा सर्वत्र ॥

॥ इति आपस्तम्बश्रौतसूत्र धूर्तस्वामिभाष्ये चतुर्थ पटल ॥

---

(वृ) स्पर्शनाञ्जनायोदङ्मुखयोरवस्थानं प्राप्तम् । अत इहापि प्रत्याश्रवणे दक्षिणामुखत्व प्रतिपाद्यते । अपरेणोत्करं दक्षिणामुखस्तिष्ठन्नित्यविशेषेणोदितत्वात् तथावस्थितयोरेव होतुरसस्पर्शो यथा भवति तथा कुर्यात् ॥

[आश्रावणाद्येकरूपताविवरणम्]

**यथेह–सर्वत्रेति**, —आश्रावयेत्यादिषु वैकल्पिकपक्षेषु इहानुष्ठितपक्ष एव । स सर्वत्र तथा । प्रत्याश्रावणप्रयोगोऽप्यत्रोक्त एव सर्वत्र ॥

इति धूर्तस्वामिभाष्यवृत्तौ द्वितीये प्रश्ने चतुर्थ पटल ॥

---

[1] आश्रुतमाश्रावणम् (रु) [2] सोमे त्वाग्नीध्रागारे तिष्ठन् (रु).

(सू) अनप[1]व्याहरन्तः प्रचरन्ति ॥ १ ॥ ३७ ॥
॥ ३९८ ॥

[अनपव्याहारविध्यर्थः, तदधिकारिगणनाभेद, प्रचरणस्वरूपेऽन्यपक्ष. तद्दूषणं च ]

(भा) अनपव्याहरन्त इत्यन्यवचनप्रतिषेध [2] सयजमानानाम् । केचि[3] चतुर्णाम् । प्रचरणमवदानग्रहणादीज्यान्तम् । केचित्सर्वम् । तेषामिडायामनर्थक वाग्यमनविधानम् ॥

---

[अपव्याहारनिषेधस्य यजमानविषयत्वेहेतुः

(वृ) अनपव्या–मानानाम्—यजमानस्यापि प्रचरणकर्तृत्वात् ।

[चतुर्णामिति पक्षोपपत्तिः]

केचि[4]चतुर्णाम्—ऋत्विजाम् ।. नान्यदाग्नीध्रः प्रत्याश्रावणादित्यादिषु ऋत्विजामेव त्रयाणा सकीर्तनात् ब्रह्मणोऽपि सर्वकर्मसु वाग्यमनादिकर्तृत्वात् चतुर्णामेव । ‘चत्वार ऋत्विज’ इत्यत्र सङ्ख्याग्रहण बहुवचनचोदितासु चतुर्णामेव ग्रहण यथा स्यादित्युक्तत्वाच ॥

[इज्यान्तमात्रस्य प्रचरणपदार्थत्वे हेतु·]

प्रचरण–ज्यान्तम्—न कृत्स्नप्रयोग । वपया प्रचर्य पुरोडाशेन प्रचरतीति दर्शनात् ।

[पक्षान्तरं तत्र दोषविवरण च]

केचित्सर्वमिति—कृत्स्नप्रयोग इत्यर्थः ।

एतद्दूषणम्—

तेषामिडाया–विधानमिति—अनपव्याहरन्त इत्यनेनैव सिद्धत्वात् ।

---

[1] मन्त्रादन्यस्य वचनमपव्याहार । तमवदानादि प्रदान न्त न कुर्यु प्रचरितार (क) [2] न यजमानानाम्–घ [3] चतुर्णामृत्विजाम्–घ [4] चतुर्णामृत्विजामिति–ख ग.

(सू) आश्रावयिष्यन् नान्यदाश्रावणात् ब्रूयात् आ-
श्राविते नान्यदाग्नीध्रः प्रत्याश्रावणात् प्रत्या
श्राविते नान्यदध्वर्युर्यजेति वचनात् यजेत्युक्ते
होता नान्यद्वषट्कारात् ॥ २ ॥ ३८ ॥ ३९९ ॥

[आश्रावयिष्यन् इत्यादि सूत्रारम्भफलम्]

(भा) अपव्याहारे कृते यद्यक्त इति प्रायश्चित्त प्राप्तम्, पुनरारम्भ एतेषु कालेषु प्रायश्चित्तान्तरविधानार्थम् ॥

(सू) यद्यन्यद्ब्रूयात्पुनरेवाश्रावयेत्॥३॥३९॥४०० ॥

(भा) सर्वमाश्रावणादि पुनः ॥

(सू) व्याहृतीर्वा जपेत् ॥ ४ ॥ ४० ॥ ४०१ ॥

(भा) व्याहृतिजपो भ्रेषकर्तु ॥

(सू) ऊर्ध्वज्ञुमासीनं होतारं वृ[1]णीतेऽग्निर्देवो होता
देवान् यक्षद्विद्वांश्चिकित्वान् मनुष्वद्भरतवदमुवद-
मुवदिति [2] यथाऽऽर्षेयो यजमानः ॥ ५ ॥ ४१ ॥ ४०२ ॥

---

[सूत्रस्य नैमित्तिविधानपरत्वम् याज्यासग्रहश्च]

(वृ) आश्रावयिष्यन्नित्यादि—आश्रावयिष्यन्नित्याद्यारम्भो यद्यन्य-द्ब्रूयादित्यादिनैमित्तिकविधानार्थम्। नान्यद्वषट्कारादिति—याज्यया सह।

[पुनराश्रावणग्रहणफलम्]

सर्वमाश्रावणादि पुनरिति—पुनराश्रावयेदित्याश्रावणग्रहण प्रदर्शनार्थम्। आश्रावणादिवषट्कारान्तस्य आश्रावणमात्रेण कार्यासिद्धेः ॥

[व्याहृतिजपे कर्ता]

व्याहृतिजपो भ्रेषकर्तुः—अपव्याहरणकर्तु ।

---

[1] देवहोतृरूपेण स्वरूपेण च मानुषस्य होतुर्देवेज्याप्रार्थन वरणम् (रु)
[2] यस्य यजमानस्य य प्रवर प्रवर काण्डे दर्शित नस्य तत्रोक्तानृषीन् अमुवदमुवदिति कीर्तयन् होतार वृणीते यावन्तस्स्युरिति (रु)

(सू) [1] त्रीन् यथर्षि मन्त्रकृतो वृणीते ॥ ६ ॥ ४२ ॥ ॥ ४०३ ॥

(सू) अपि वैकं द्वे त्रीन् पञ्च ॥ ७ ॥ ४३ ॥ ४०४ ॥

(सू) न [2] चतुरो वृणीते न पञ्चातिप्रवृणीते ॥ ८ ॥ ४४ ॥ ४०५ ॥

[पुनस्त्रित्वोक्तिफलम् वरणप्रकारश्च]

(भा) [3] वरणस्य पुनस्त्रित्वविधानाद्द्विपितुरपि त्रय एव व्रियन्ते न षट् । एक एकतो द्वावेकत॰ । यदि पञ्च द्वावेकतस्त्रय एकतः ॥

---

[पुनस्त्रित्वविधिफलविवरणम्]

(वृ) **वरणस्य पुन–न षट्**—त्रीन् वृणीत इति प्रवरपाठतस्सिद्धेऽपीह पुनर्वचनात् ।

[द्विपितृकवरणे व्यवस्था]

**एक–एकत इति**—प्रविष्टकुल एको व्रियते जन्मकुले द्वाविति त्रिवरणपक्षे ।

**यदि पञ्च–एकत इति**—पञ्चवरणपक्षे यथर्षीति पुनर्वचनं पञ्चानामपि प्रवरणार्थम् ।

[वरणविषयश्रुतिसूत्रविरोधशङ्कापरिहारौ]

अत्रेद निरूपणीयम्—आर्षेय वृणीते बन्धोरेव [4] नैति यजमानस्यार्षेयं वृणीते ऊर्ध्वज्ञुमासीनं होतारं वृणीते इति । तथा त्रयो वा अग्नय इत्यारभ्य य एव देवाना त वृणीत इति । तथा अग्निर्देवो

---

[1] यस्य यजमानस्य य ऋषयो गोत्रऋषित्वेनोपाख्यायन्ते मन्त्रकृतश्च तान् कीर्तयतीत्यर्थ । अत्र चाविशेषेण त्रीन् वृणीत इति वचनात् पञ्चार्षेयस्यापि त्रयाणामेव वरणम् । एकद्व्यार्षेययोस्तु त्रयाणामभावान्निवृत्तिरेवार्षेयवरणस्यापन्ना । तत एव हेतो॰ कर्मण्येवानाधिकारस्तयोरित्यन्ये । एक वृणीते इत्याद्यपि त्रित्वविधेरेवावयुत्यानुवाद इति मन्यन्ते (रु) [2] अय निषेधो द्व्यामुष्यायणविषय (रु) [3] वरणस्य च– ग घ [4] नैतीति (मु रा).

शुङ्गशैशिरिदर्शनात् ॥

(सू) [1]इत ऊर्ध्वानध्वर्युर्वृणीतेऽमुतोऽर्वाचो [2]होता ॥ ९ ॥ ४५ ॥ ४०६ ॥

(सू) पुरोहितस्य [3]प्रवरेण राजा वृणीते ॥ १० ॥ ॥ ४६ ॥ ४०७ ॥

---

(वृ) होतेति य एव देवाना त वृणीतेत्यादिनिर्देशे. यजमनार्षेयवरण होतृवरणमग्निवरण च प्रतीयत इति विरुद्धमिव दृश्यते। अतः कस्यात्र वरणमिति ?

अत्रोच्यते,—हव्यवाहनोऽग्निराहवनीय आर्षेयशब्देनोच्यते। यजमानेन जनितत्वात्तद्धोत्राभिधानम्। अतश्च यजमानार्षेयेणाग्नेर्वरण प्रधानार्थम्। आग्नेयो वै होता अग्निर्मे होता अग्निर्होतेति च होतुरप्यग्निदेवतत्वादग्निरूपेण होतुर्वरणम्। ततो यजमानार्षेयेण गोत्रेण होतृवरणमध्वर्युणा कर्तव्यम्। होता तु यजमानार्षेयेणाग्निवरणं अग्ने महा॰ असीत्युपक्रम्य आनिवित्समाप्तेरग्न्यभिधानपरत्वात्। प्रवरनिविदां च आवाहनाङ्गत्वात्। आहवनीयस्य च वृणध्वं॰ हव्यवाहनमिति हविर्वोढृत्वेन आहवनीयाग्नेर्यजमानार्षेयत्वेन वरण तत्सम्बन्धितया च होतुर्वरणम्। पञ्चानां वरणपक्षे द्वावेकत इत्यत्र उदाहरणे [4] दर्शनम् ॥

[शुङ्गयुदाहरणाशयः]

शुङ्गशैशिरिदर्शनादिति;—द्व्यामुष्यायणोदाहरणम्। भरद्वाजाः शुङ्गाः कता. शैशिरय इति ॥

---

[1] अत–ख [2] तच्चोभय प्रवरेषूदाहरिष्यति (रु) [3] प्रवरकाण्डपठितानामेव विधीनामिहोपदेश आदरार्थो द्रष्टव्य (रु) [4] ण प्रदर्शनम् (मु. रा).

[पुरोहितप्रवरस्य राजत्व निबन्धनं न जाति ]

(भा) ब्राह्मणस्यापि राज्यप्राप्तस्य पुरोहितप्रवर एव, पुनर्विधानात् ॥

(सू) ब्रह्मण्वदाच वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार इति [1] प्रवरशेषमाह ॥ ११ ॥ ४७ ॥ ४०८ ॥

(सू) अपि वा [2] नार्षेयं वृणीते मनुवदित्येव ब्रूयात् ॥ १२ ॥ ४८ ॥ ४०९ ॥

(सू) [3] सीदति होता ॥ १३ ॥ ४९ ॥ ४१० ॥

[होतुरेवेदानीमासनम् सोमे विशेषश्च]

(भा) होतैव सीदति न मैत्रावरुण., व्रियमाणो होतृकार्यापन्नोऽपि पशौ॥

(सू) होतुरुपांशु नाम गृह्णाति मानुष इत्युच्चैः ॥ १४ ॥ ५० ॥ ४११ ॥

(सू) वेद्यां [4] तृणमपिसृजति ॥ १५ ॥ ५१ ॥ ४१२ ॥

॥ षोडशी खण्डिका ॥

---

[ पुनर्विधानादिति हेतुविवरणम् ]

(वृ) ब्राह्मणस्यापि — विधानादिति ; — प्रवरपाठासिद्धस्यापीह पुनर्विधानात् राज्यकर्तृत्वमात्रनिमित्तमेव पुरोहितप्रवरेण वरणम् ॥

[पशौहोतैव सीदतीत्यत्रहेतुः]

होतैव - पशाविति ;—उर्ध्वज्ञुमासीन होतार वृणीत इति प्रकृतेऽपि होतारि सीदति होतेति पुनर्वचनात् होतैव सीदति न मैत्रावरुण. पशौ ॥

---

[1] प्रवरशेष –प्रवरनिगदस्य शेष (रु). [2] इद सन्निहितराजन्यविषयमिति मनुवदित्येतावद्ब्रूयात् (रु) [3] होतुरासनकालविकल्पार्थं वचनम् । आसीन वा होतार वृणीते । वृतो वाऽत्र काले निषीदति (रु) [4] ^ ^व्यन्तमात्त तृण तत प्रत्यापिसृजति (रु).

(सू) [1]घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽपरेणाऽऽघा[2]रसंभेदं पञ्च प्रयाजान् प्राचो यजति ।' १ ॥ ५२ ॥ ४१३ ॥

(सू) [3]प्रतिदिशं वा समिधः पुरस्तात्तनूनपातं दक्षिणत इडः पश्चाद्बर्हिरुत्तरतः स्वाहाकारं मध्ये ॥ २ ॥ ५३ ॥ ४१४ ॥

[आघारसंभेदपदार्थादि]

भा) प्रयाजाङ्ग घृतवतीशब्द इति पशौ वक्ष्यति । आघारयोस्सङ्ग· अघारसभेद· । तमपरेण प्रतिदिशमपि । प्राच.—प्रागपवर्गान् ॥

(सू) सर्वान् [4]वैकध्यम् ॥ ३ ॥ ५४ ॥ ४१५ ॥

(सू) [5]आश्रावमाश्रावं प्रत्याश्राविते समिधो यजेति प्रथमं संप्रेष्यति । यजयजेतीतरान् ॥ ४ ॥ ५५ ॥ ॥ ४१६ ॥

---

(वृ) प्रतिदिशमपीति ;—अपरेणाघारसभेदमिति देशनियमात् ॥

प्राचः—प्रागपवर्गान्—उत्तमोऽप्याघारसंभेदस्य पश्चान्मध्ये यदाघारावृजू प्राञ्चौ तदा सभेदाभावेऽपि पश्चाद्भाग एव ; देशलक्षणत्वात् ॥

---

[1] घृतशब्दवति घृतवतीमित्यस्मिन् शब्दे उक्ते इत्यर्थ. (रु) [2] आघारयोर्व्यतिषङ्गप्रदेश (रु) [3] प्रतिदिश वा यजत्यपरेणैवाघारसंभेदम् (रु) [4] ऐकध्यमितिध्यमुञो रूपम्—एकस्मिन् देशे । अपरेणाघारसभेदमित्येव (रु) [5] ननु किन्दैवत्या प्रयाजा ? ऋतुदैवत्या खलु प्रयाजा इति बोधायन· । मन्त्रवर्णाश्च भवन्ति । वसन्तमृतूना इत्यादीनि ब्राह्मणानि चेति (रु)

[णुमुलन्तद्विरुक्तिफलं प्रथमशब्दार्थश्च]

(भा) आश्राव्याश्राव्य। न पुरोनुवाक्यासंप्रैष.। प्रथम प्रयाज प्रति॥

(सू) **यं कामयेता[1]भितरं वसीयान् स्यादित्य[2]भिक्रामं तस्य जुहुयादवतरं पापीयानिति प्रतिक्रामं न वसीयान्न पापीयानिति [3] समानत्र तिष्ठन् ॥ ५ ॥ ॥ ५६ ॥ ४१७ ॥**

(भा) अभितरम्—सुष्ठुतरम्। वसीयान्—वसु[4]मत्तर·। अभिक्रामम्—अभिक्रम्याभिक्रम्य। नित्ये कामोऽभिक्राम जुहोतीति वचनात्।

---

(वृ) **आश्राव्या श्राव्येति**—आश्रावमाश्रावमित्यस्यार्थः।

[पुरोनुवाक्याप्रैषविरहोपपत्तिः]

**न पुरो—षः इति**—सर्वत्रावद्यन्नमुष्मा अनुब्रूहीति पुरोऽनुवाक्याप्रैषस्य प्राप्तत्वादाश्रावमाश्रावमिति पुरोनुवाक्याप्रैषनिवृत्त्यर्थम्॥

[प्रथमशब्दविवरणोपपत्तिः]

**प्रथमं—तीति**—समिधो यजेति प्रथम संप्रेष्यतीति न प्रथमया संप्रेष्यतीति सबन्ध . कर्मणः प्रैषाभावात्। अत प्रथममिति पथम प्रयाज प्रतीति संबन्ध ॥

**यजयजेतीतरान्**—इत्यत्रापि इतरान् प्रतीति सबन्ध.।

**वसुमत्तरः**—श्रेष्ठो धनवान् वा।

**अभिक्रम्याभिक्रम्य**—अग्निसमीपम्।

[वचनेन नित्येकामनासिद्धिः]

**नित्ये—वचनात्**—अभिक्राम जुहोतीति नित्यवद्वचनात् नित्यानुष्ठानेऽपि फलकाम.। फलसाधनत्व नित्याधिकारप्रयुक्तस्यापि॥

---

1 अभितर—सुतराम् वसीयान्—पुष्ट 2 अभिक्राम—प्रतिप्रयाजं किञ्चिदन्तरमग्निमभिक्रम्याभिक्रम्य। अवतर—अवकृष्टतरम्। पापीयान्—दरिद्र। प्रतिक्राम—अग्ने प्रतीप क्रान्त्वा (रु) 3 उभयथाऽप्याक्रामन्नेकत्र स्थित (रु) 4 मत्तर धनवान्वा—ग.

अवतरम्—अवकृष्टतरम् । पापीयान्—दरिद्र· ; पुनरेवैन वामं वसूपावर्तते इति पापिष्ठो वा । प्रतिक्राम—प्रतिक्रम्य प्रतिक्रम्य ॥

(सू) त्रीनिष्ट्वाऽर्धमौप[1]भृतस्य जुह्वामानीयोत्तराविष्ट्वा प्रत्याक्रम्य शेषेण ध्रुवामभिघार्या[2]नुपूर्वं हवींष्यभिघारयत्यु[3]पभृत[4]मन्तरतः ॥६॥५७॥ ४१८ ॥

(सू) न हवींष्यभिघारयेद्ध्रुव्यस्यायतने स्रुचौ [5]सादयति ॥ ७ ॥ ५८ ॥ ॥ ४१९ ॥

सप्तदशी खण्डिका ॥

---

[पापीयःपदविवरणे मानम् ]

(वृ) पापीयान्- दरिद्र·—वसीयस· प्रतियोगित्वात् ।

किं च—

पुनरे—इति—पापीयानिति शब्दस्य दरिद्रवचनत्वे लिङ्गम् । य· पुरा भद्रस्सन् पापीयान् स्यात् इत्यादिना पापीयस्त्वपरिहारनिर्देशे वाम वसूपावर्तत इति निर्देशात् । सर्वत्रैवम् ॥

[पापीयःपदार्थभेदस्य प्रकृतोपयोगः]

पापिष्ठो वा—पूर्वस्मिन् पक्षे नात्यन्तनिषेध· । अस्मिन् पक्षे प्रतिषेध एव ॥

[प्रतिक्रमणस्वरूपम् । नवसीयानित्यादेरर्थश्च]

प्रातिक्रा—निवृत्य—आहवनीयस्य दक्षिणपार्श्वे दूराद्दूर मत्वा । न वसीयान् न पापीयानिति मध्यवर्तिकामनायाम् ॥

---

[1] भृतम्—क. [2] आनुपूर्व्येऽ—ख. [3] अत्राप्युपभृतमित्य ज्यलक्षणा, पशौ नोपभृतामिति लिङ्गात् । हवींष्युत्पत्तिक्रमेणाभिघारयति (रु) [4] मन्तत – क. ख [5] सादयित्वा (रु)

[समानयनफलं तन्मानं च]

(भा) समानयन बर्हिस्स्वाहाकारार्थम् , चतुर्थाष्टमयोरिति लिङ्गात् ।

[आज्यस्थाल्यभिघारणनिषेधस्तन्मानं च]

न [1] प्रयाजशेषेणाज्यस्थाल्या अभिघारणम् । नान्तर्वेदिगृहीतस्य प्रतीचीनꣳ हरन्तीति वचनात् ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये द्वितीये प्रश्ने पञ्चम पटल

---

(सू.) आग्नेयस्सौम्यश्चाज्यहविषावाज्यभागौ चतुर्गृहीताभ्याम् ॥ १ ॥ ॥ ५९ ॥ ४२० ॥

[आज्यभागपदार्थः]

(भा) आज्यभागाविति कर्मनामधेयम् ॥

---

[बर्हिस्स्वाहाकारार्थत्वहेतुविवरणम् ]

(वृ) **समानयनं—लिङ्गादिति**,—पशौ चतुर्थाष्टमयोः प्रति समानीयेत्युत्तरयोर्विकारेषु विभज्य समानयनविधानात् ॥

[प्रयाजशेषेणाज्यस्थाल्यनभिघारणे हेतुविवरणं उपदेशपक्षश्च]

**न प्रयाज—वचनादिति**,—स्थालीगताज्यस्यापराग्निहोमानामपि साधनत्वादुपभृतमाज्यमन्ततः [2] प्रयाजशेषेण हवीꣳष्यभिघारयतीति प्राप्तस्याभिघारणस्य उपभृतमन्तरत इति क्रमविधानात् । उपदेशस्तु पशावाज्याभावेऽपि नोपभृतामिति निषेधात् केवलमपि पात्रमभिघारयति अतो नानूयाजे [3] प्रायणीयेऽप्युपभृतोऽभिघारणम् ॥

इति धूर्तस्वामिभाष्यवृत्तौ द्वितीये प्रश्ने पञ्चम पटल ॥

---

[1] प्रयाजाज्य? (मु रा) [2] प्रयाजाज्य (मु रा). [3] याजप्राय–ख, ग.

(सू) [1]जमदग्नीनां तु पञ्चावत्तम् ॥ ४२१ ॥
अप्यजामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं
कुर्वीत [2]सर्वत्र ॥ ३ ॥ ६१ ॥ ४२२ ॥

[पञ्चावत्तविषयनियमः]

(भा) पञ्चावत्त सर्वत्र वषट्कारप्रदानेषु ।

(सू) [3]अवद्यन्नमुष्मा अनुब्रूहीति पुरोऽनुवाक्यां संप्रेष्यति । अवदायावदाय स्रुवेण प्रस्तरबर्हिस्समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्याश्राव्य प्रत्याश्राविते ऽमुं यजेति याज्यामिति सार्वत्रिकम् ॥ ४ ॥ ॥६२ ॥ ४२३ ॥

---

[अन्यत्रापि पञ्चावत्तम् सर्वशब्दार्थश्च]

(वृ) पञ्चा—प्रदानेष्विति ;—अप्यजामदग्न्य इत्यादि सर्वत्रेत्येवमन्तमेक सूत्रम् । विकल्पेन सर्वेषा शास्त्रान्तरसिद्धपञ्चावत्तिनां [4]बिदानामार्ष्टिषेणानां च जामदग्न्यप्रवरयोगेन पञ्चावत्तमिति जमदग्निपुराहृत प्रवराणा [5] राज्ञामपि । सर्वत्रेति वषट्कारप्रदानेष्वेव ; पुरोऽनुवाक्यादिसाहचर्यात् ॥

---

[1] अथाज्यभागप्रसङ्गात् सर्वान् दर्विहोमसाधारणधर्मानाह (रु) [2] सर्वत्रेत्यसदेहार्थम् । केचित्तु सर्वत्रेतिवचनात् दर्विहोमेष्वपि चतुर्गृहीतवत्सु पञ्चावत्तमिच्छन्ति, तदयुक्तम्, अदर्विहोमाधिकारात् कल्पान्तराच्च । तस्माद्दर्विहोमेषु चतुरवत्तचोदनाया पञ्चावत्तिनोऽपि चतुर्गृहीतमेव न पञ्चगृहीतम् अग्निहोत्रे तु वचनाद्भवति (रु) [3] अवदाने प्रक्रान्ते इत्यर्थ । जुह्वामुपस्तीर्य सोमाय पितृमतेऽनुस्वधेति सप्रेष्यतीति लिङ्गात् । आप्याय्य ध्रुवा प्रस्तरबर्हिषि समनक्ति याज्या संप्रेष्यतीत्यन्वय । तदर्थं होतार सप्रेष्यतीत्यर्थ (रु). [4] विनाऽऽर्ष्टिषेणाना—क
[5] प्रवराणा वा राज्ञा—क ख. घ [6] प्रवराणा राज्ञा वा (मु रा)

[पुरोऽनुवाक्यासंप्रैषे सार्वत्रिकत्वालिङ्गम्, उपदेशपक्षः, समञ्जने कालः, दर्विहोमेषु पक्षभेदश्च]

(भा) प्रधानेष्वप्यवद्यन् अमुष्मा अनुब्रूहीतीन्द्राय पुरोडाशाना-मवदीयमानानामनुब्रूहीति लिङ्गात् । [1]उपदेशो वषट्कारवदङ्गेषु प्रत्यभिघारण कृत्वाऽनुब्रूहीति । आप्यायन कृत्वा प्रस्तरबर्हिस्समञ्जनम् । [2]न च दर्विहोमेषु; आश्रुतप्रत्याश्रुतादिसंबन्धात् । उपदेशो दर्वि-होमेष्वपीति ॥

(सू) उत्तरार्धपूर्वार्धेऽग्नये जुहोति ॥ ६३ ॥ ४२४ ॥

(सू) दक्षिणार्धपूर्वार्धे सोमाय [3]समं पूर्वेण ॥ ६ ॥ ॥ ६४ ॥ ४२५ ॥

(सू) उभे [4]ज्योतिष्मति ॥ ७ ॥ ६५ ॥ ४२६ ॥

---

[प्रधानेषु पूर्वोक्तस्य विकल्पः]

(वृ) प्रधानेष्व—लिङ्गात् ;—प्रधानयागे सिद्धवदनुवादात् ; ऐन्द्रस्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीति श्रुतेश्च वषट्कारप्रदानेषु [5]विकल्पते ॥

[उपदेशपक्षे हेतुः]

उपदेशो—ब्रूहीति ;—[6]हवि· प्रत्यभिघारणोत्तरकालविधानात् प्रत्यभिघारण कृत्वैव अनुब्रूहीति प्रैषः ।

[समञ्जने व्यवस्था]

आप्यायनं—ञ्जनम् ;—वषट्कारप्रदानेषु ।

[दर्विहोमे समञ्जनाभावसिद्धिः]

न च दर्विहोमेषु—ष्वपीति ;—अवदायावदायेत्यविशेष-वचनात् ॥

---

[1] उपदेशादङ्गेषु—ग [2] नदर्वि—क [3] यत्र हुत पूर्वेणाज्यभागेन दक्षिण मिव चक्षु सव्येन समो भवति तत्र जुहोति–(रु) [4] न वक्ष्यमाणाहुतिवद्विगता-र्चिषि (रु). [5] विकल्प्यते (मु रा) [6] प्रत्यभिघारणोत्तर (मु रा)

(सू) पूर्वमाज्य[1]भागं प्रति [2]स्रुचावात्ते न निदधा-
त्यास्विष्टकृतः ॥ ८ ॥ ६६ ॥ ४२७ ॥

[क्वचित्स्रुगसंस्थापनम्]

(भा) अनाज्यभागेऽपि पशौ स्रुचौ न संस्थाप्येते स्वकालोऽस्तीति ॥

(सू) आज्यभागावन्तरेणेतरा आहुतीर्जुहोति ॥ ९ ॥
॥ ६७ ॥ ४२८ ॥

[वषट्काराहुतिदेशेऽपक्षभेद.]

(भा) [3]आज्यभागावन्तरेण वषट्कराहुतीस्सर्वा· । आघारसभेदेन सह विकल्प । केचित् दर्विहोमाहुतिराज्यभागावन्तरेणाघारसंभेदेन वषट्काराहुतिरिति ॥

---

[स्वकालोस्तीनीत्यस्यार्थः]

(वृ) अनाज्य–कालोऽस्तीति ;– स्रुग्धारणस्योपरितनकर्माङ्गत्वात् । आज्यभागस्थालीधारण विवक्षितम् ॥

[विकल्पे हेतुः तस्य व्यवस्थितत्वं च]

(वृ) आघा—विकल्पः—आघारसभेदेनाहुती· प्रतिपादयतीत्य-नेन सह विकल्प । प्रधानाहुतिसन्निधौ पाठात् । व्यवस्थितोऽय विकल्पः आघारसभेदाभावे आज्यभागावन्तरेण ऋजू प्राञ्चौ होतव्या-वित्यादिपक्षे ॥

[केचित्त्वित्युक्तपक्षाशयः]

केचिद्—राहुतिरिति—व्यवस्थया नित्यवदन्वये सभवति न विकल्पेन पाक्षिकान्वयो युक्त इति वर्णयन्ति ॥

---

[1] आज्यभाग प्रतितत्काले (रु) [2] स्रुचावादत्ते [2] (रु) ततश्चात्तायामेव स्रुचि प्रकृतौ प्रधानादवदानदर्शनादनाज्यभागेऽपि पशुप्रायणीयादावस्मिन् काले स्रुचावादीयेते (रु) [3] आज्यभागदेशयोर्मध्य एवेतरा दर्विहोमाहुतीर्जुहोति । न बहिस्ताभ्याम् । अदर्विहोमाहुतीना तु देशो वक्ष्यते (रु)

(सू) **प्रत्याक्रम्य जुह्वामुपस्तीर्य मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत्। भरतमुद्धरे मनुषिं चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिꣳसीरित्याग्नेयस्य पुरोडाशस्य मध्या[1]दङ्गुष्ठपर्वमात्रमवदानं [2]तिरीचीनमवद्यति[3]। पूर्वार्धाद्द्वितीयमनूचीनं चतुरवत्तिनः पश्चार्धात्तृतीयं पञ्चावत्तिनः॥ १०॥ ६८॥ ४२९॥**

[अवदानमन्त्रे बहुवचनाभिप्राय. तत्प्रयोजनं च]

(भा) अवदानानीति [4]जात्यभिधानम् मा भूत्प्रकरणो[5]परोध इति। अतोऽवदानद्वित्वेऽपि न निवर्तते। अवदानैकत्वेऽपि नोह्यते पित्र्यायाम्।

[तिरश्चीनानूचीनावदानक्रम]

तिरीची[6]न दक्षिणाग्राभ्यामङ्गुलि[7]भ्याम् अनूचीन प्रागग्राभ्याम्॥

---

[जात्यभिधानत्वोपपत्तिः चतुरवत्तपक्षोपपत्तिश्च]

(वृ) **अवदानानीति—रोध इति**—'अवदाननिते' 'यदवदानानि' इति बहुवचन जात्याख्यायामेकस्मिन् बहुवचनम्॥

प्रकृत्यर्थान्वयसभवात् पाशमन्त्रवत्सङ्ख्यावचनस्याविवक्षा चतुरवत्तिनाम्॥

**अवदानै—पित्र्यायाम्**—अत एकस्मिन् सर्वावदानार्थं सकृदेव मन्त्रप्रयोगः॥

[तृतीयावदानेऽपि प्रागग्राभ्याम्]

**तिरश्चीनं—ग्राभ्याम्**—पश्चार्धात्तृतीयं प्रागग्राभ्यामेव॥

---

[1] अङ्गुष्ठपर्व-अङ्गुष्ठस्योत्तम काण्डम् (रु) [2] तिरश्चीन--क ख [3] प्रागायतैरङ्गुल्यङ्गुष्ठैर्द्वितीय तृतीयं चेत्यर्थ। तयोस्तु नावदानमन्त्रस्यावृत्ति। अपादानद्रव्याभिधायित्वात्तद्देवतत्वाच्च। न चावदानद्वित्वे निवर्तते; जात्याख्याया बहुवचनात् (रु) [4] जात्याभिधानम्—ग [5] णावरोध इति—घ [6] तिरश्चीनं—घ [7] भ्यामुदगग्राभ्या वा—क

(सू) [1]असंभिन्दन् [2]मा॑सस॑हिताभ्यामङ्गुलीभ्या-
मङ्गुष्ठेन च पुरोडाशस्यावद्यति ॥ ६९ ॥ ४३० ॥

[असंभेदादिपदार्थ.]

(भा) असंभिन्दन्—यथा [3] द्वयोरवदानयोरसङ्क्रम । मासस॑हिताभ्या-
मिति—मध्यमाङ्गुलिभ्याम् ॥

(सू) स्रुवेणाज्यसान्नाय्ययोः । १२ ॥ ७० ॥ ४३१ ॥

(सू) [4]आनुजावरस्य पूर्वार्धात्प्रथममवदानमवदाय
पूर्वार्धे स्रुचो निदध्यात् । मध्यादपरमवदाय
पश्चार्धे स्रुचः ॥ १३ ॥ ७१ ॥ ४३२ ॥

[आनुजावरपदार्थः तस्यावदानविशेष संभवश्च]

(भा) आनु [5]जावरोऽगुरुर्योऽनुगामी । तस्य नैमित्तिकम् ॥

---

[असंभेदसंबन्धिनौ]

(वृ) असम्भिन्दन् —गमः—असंसर्गो देशयो यथा भवति ॥
मांससहिताभ्यामिति–भ्याम्—तयोरुभयतोऽङ्गुलिसश्लेषात् ॥

[आनुजावरपदार्थ.]

आनुजावरो—गामी—अनुजस्यावर. अनुजावर । अगु-
रुमनुजमनुगमनादिना विद्याधनादिभिरुपजीवति यो ज्येष्ठ· स आनु-
जावरः ॥

---

[1] अवदानदेशावसाङ्करन् (रु) [2] अनखसहिताभ्याम् । अङ्गुष्ठेन चानेन च स्रुवेणावद्यति हस्तेनावद्यतीत्याविशेषचोदितौ स्रुवहस्तौ द्रवकठिनयोर्हविषो सामर्थ्यो-न्नियम्येते । तेन सान्नाय्यविकारेऽपि वपादौ हस्त इष्यते पुरोडाशविकारेऽपि यवाग्वादौ स्रुव (रु) [3] द्वयोरप्यवदानयो –क [4] योल्पतेजस्त्वात्समानजाती नामनुगन्ता भवति स आनुजावर । श्रुतौ आनुजावरविधिमुक्त्वा फलाम्नानात्काम्य एवाय कल्प (रु) [5] गुरोर्यो–क ग.

(सू) **पूर्वप्रथमान्यवद्येज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा गतश्रीस्स्यात् ॥ १४ ॥ ७२ ॥ ४३३ ॥**

(भा) ज्यैष्ठिनेय –ज्येष्ठायाः पुत्र । कानिष्ठिनेय – [1] कनिष्ठायाः

[ज्येष्ठपदार्थविशेष.]

पुत्र· । [2] प्रथमज्येष्ठो न [3] मृतज्येष्ठ ॥

(सू) **अपरप्रथमानि कनिष्ठस्य कानिष्ठिनेयस्य यो वाऽऽनुजावरो यो वा बुभूषेत् ॥ १५॥७३॥४३४ ॥**

**[अवदानविशेषे काम्यत्वम्]**

(भा) यो वाऽऽनुजावर इति काम्यम् । यस्तस्मात्प्रच्युतिमिच्छति ॥

---

(वृ) **ज्येष्ठिने–पुत्रः**—पुत्र ज्यष्ठस्येति ज्यैष्ठिनेयविशेषणम् । [4]तथा कनिष्ठस्येति कानिष्ठिनेयस्य ॥

[प्रकृतज्येष्ठशब्दविवक्षितार्थः प्रयोजनं च]

**प्रथम—ज्येष्ठः**—ज्येष्ठशब्दस्यातिशयवचनत्वात् । कनिष्ठत्व-प्राप्तिराहितज्येष्ठवचनत्व [5] युक्तम् । तथा [6] कनिष्ठ न स्त्र्यपत्येन तौ बाध्येते एकपुत्रो ज्येष्ठ एव ॥

**यस्त—छति**—अनुजोपजीवित्वान्निवृत्तिमिच्छति । पूर्वम्—आनुजावरस्य पूर्वार्धात्प्रथममित्येतत् अनुजोपजीवित्वनिमित्तेन नैमित्तिकम् ॥

---

[1] कनिष्ठाया पश्चादानीताया –ग कनिष्ठाया -पश्चात्परिणीताया –क घ
[2] इद क– पुस्तके न दृश्यते [3] प्रथम–क [4] प्रच्युत–ग घ ख. ग
[5] १४–१५ इति सूत्रद्वयं एकत्रैव व्याख्यात-क ख. ग घ । युक्तम् इत्यत परं न स्त्र्यपत्येन स बाध्यते । एकपुत्रो ज्येष्ठपुत्र एव । तस्य गताश्रेयश्च पूर्वार्धात्प्रथमान्यवद्येत्, इति वृत्तिग्रन्थोऽधिक (मु रा) इद घ –पुस्तके न दृश्यते [6] सूत्रे कानिष्ठिनेय पश्चात्परिणीताया पुत्र । कानिष्ठिनेयस्याविशेषणम् । अन्त्यकनिष्ठ न मृतकनिष्ठ । न स्त्र्यपत्येन स बाध्यते (मु रा)

[विकल्पे विषय.]

(भा) नैमित्तिकं पूर्वमुभे [1] वा विकल्पेते ।।

(सू) **अथ यदि पुरोहितः [2] पुरोधाकामो वा यजेत पूर्वार्धात्प्रथममवदानमवदाय पूर्वार्धे स्रुचो निधाय पूर्वार्धेऽग्नेर्जुहुयात् ॥ १६ ॥ ७४ ॥ ४३५ ॥**

(सू) **[3] अवदानान्यभिघार्य यदवदानानि तेऽवद्यन्**

---

(वृ) उभे—ते—नैमित्तिकत्वादुभयोः काम्यत्वेऽप्युभयोरविशेषात् विकल्प एव ॥

---

[1] वा शब्दः घ नदृश्यते. [2] पौरोहित्यम् । द्वितीयतृतीययोरवदानयोर्निधनदेशावचनादनियम (रु) [3] ननु समान्यत प्रागेव विहितस्य याज्यानुवाक्या सम्प्रैषस्य पुनर्विधि किमर्थ ? केचिदाहु ,—तत्र तावत् अवद्यन् सम्प्रैष्यतीत्यवदानसमयानुवाक्यासम्प्रैषविधिरङ्गविषय । प्रदानविषयस्त्वय प्रत्यभिघारणोत्तरकालविधानार्थ इति , तदयुक्तम् , तत्र सार्वत्रिकमित्यनेन विरोधात् । स्विष्टकृत्यभिघारणोत्तरकाल तद्वचनवि ोधात् । अत्र च याज्या सम्प्रैषपदोपादानवैयर्थ्यात् । तस्य च क्रमार्थतायामाश्रावणप्रत्याश्रावणयोरुत्कर्षप्रसङ्गात् । मन्त्रब्राह्मणसूत्रालिङ्गविरोधाच्च । पुरोडाशानामवदीयमानानामनुब्रूहीति ऐन्द्रस्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीति जुह्वामुपस्तीर्य सोमाय पितृमतेऽनुस्वधेति सम्प्रेष्यतीत्यादि । तथा ' उपस्तीर्य दाक्षिणस्य पुरोडाशस्यपूर्वार्धादवद्यन्नाहाग्नयेऽनुब्रूहीत्येव बोधायन । तस्मान्न युक्त पूर्वोक्तक्रमकल्प ॥

अन्यत्तु मतम् —याज्यानुवाक्ययोर्मूर्धलिङ्गत्वादग्नये मूर्धन्वते अग्निं मूर्धन्वन्तामिति मा भूता सम्प्रैषावित्येवमर्थमिद वचनमिति तदप्ययुक्तम् , यदाग्नेयोऽष्टाकपाल इत्युत्पत्तावश्रुतस्य गुणस्य देवताविशेषणत्वेन दुराशङ्कत्वात् । इतरथाऽऽज्यभागयोरग्नये वृत्रघ्ने अग्नये वृधन्वते इति लिङ्गानुगुणदेवतादेशप्रसङ्गाच्च । तस्मात् पूर्वममुष्मा अनुब्रूह्यमु यजेति सामान्यतो निर्दिष्टस्य देवतादेशनस्य विशेषत प्रदर्शनमात्रमेतदिति नातीवाक्रोष्टव्यमायुष्मद्भि । एवमन्योऽपि यस्तत्र तत्र सम्प्रैषविधि सोऽपि क्वचित्तद्देवताप्रदर्शनार्थ । क्वचित्सम्प्रैषस्वरूपविशेषप्रदर्शनार्थ । क्वचित्तस्यैव विकारप्रदर्शनार्थ । क्वचिद्विकल्पप्रदर्शनार्थ । क्वचिद्वषट्कारप्रदानदर्शनत्वख्यापनार्थ । क्वचिदसन्देहार्थ इति यथासम्भव द्रष्टव्यम् (रु)

**विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनरिति हविः प्रत्यभिघार्य अग्नयेऽनुब्रूह्यग्निं यजेति सम्प्रैषौ ॥ १७ ॥ ७५ ॥ ४३६ ॥**

[ब्रूह्यन्तप्रैषाशयफले]

(भा) अग्नयेऽनुब्रूहीति वचनान्मा भून्मूर्धन्वते नियुत्वते वेति ॥

(सू) **आज्यं [1]प्रश्च्योतदपिदधदिवाप्रक्षिणन् हुत्वा आज्येनान्ववश्चो[2]तयति ॥ १८ ॥ ७६ ॥ ४३७ ॥**

[अपिदधदादिपदार्थाः]

(भा) अपिदधदिव—स्थगयन्निव । अप्राक्षिणन्—अहिंसन्नभिमवदान वा । अन्ववश्च्योतयति—क्षारयति ॥ ४३७ ॥

---

(वृ) **अग्नये—त्वते वेति**—याज्यानुवाक्ययोस्तद्गुणाविधायकत्वात् तद्विशिष्टस्य देवतात्व प्राप्नोतीति तत्परिहारार्थमुच्यते । अतो यद्देवतासम्बन्धिवाक्यगत विशेषण तदेव [3]देशेऽपि लक्ष्यते न मन्त्रगतमखिल विशेषणम् । यत्र तु मान्त्रवर्णिकमेव [4]तत्र सविशेषण प्रधानमेव चोद्दिश्यते । यद्यप्यवद्यन्नमुष्मा अनुब्रूहीति वचनेन प्राथम्यादग्नयेऽग्नेरनुब्रूहीति प्राप्तम् । तथाऽपि मान्त्रवर्णिकसगुणदेवतानिवृत्त्यर्थम् ॥

**अपिद—न्निव**—स्रुच न्यञ्च कृत्वा ।

**अप्राक्षि—दानं वा**—न शिथिलीकरोति । **प्रश्च्योतनं**—यागात्पूर्वं स्रुग्गताज्यक्षरणमग्नौ ॥

**अन्ववश्चयोतयति — क्षारयति** -- होमोत्तरकालं स्रुग्गतशेषम् ॥

---

[1] प्रश्चयोत्यापि दधति वा प्रदक्षिण९—क ख प्रक्षणन्—ख. [2] श्चोतयति—ख. अवस्नावयति (रु). [3] देशे देश उपलक्ष्यते । [4] तत्रकविशेषणम्—क.

(सू) **आघारसम्भेदेनाहुतीः [1] प्रतिपादयति ॥ १९ ॥**
**॥ ७७ ॥ ४३८ ॥**

(भा) सम्भेद —सङ्गम. तस्मिन् प्रथमाहुति ॥ ४३८ ॥

(सू) **[2] स्रुच्यमाघारमाभिजुहोति [3] पूर्वांपूर्वां संहिताम् ॥**
**॥ २० ॥ ७८ ॥ ४३९ ॥**

(भा) उत्तराः स्रुच्याघारसाभिहोमाः । सऽहिता.—लग्नाः ॥

(सू) **यं द्विष्यात्तं [4] व्यृषन् मनसाऽऽहुतीर्जुहयात् ।**
**॥ २१ ॥ ७९ ॥ ४४० ॥**

(भा) शत्रुं विकिरन्मनसा ॥

(सू) **यदा वीतार्चिर्लेे[5]लायतीव वाऽग्निरथाऽऽहुतर्जु-**
**होति ॥ २२ ॥ ८० ॥ ४४१ ॥**

(भा) लेलायति—अल्पिकार्चिषि ॥ ४४१ ॥

---

(वृ) **शत्रुं विकिरन्मनसा**—यं द्विष्यात्त शत्रु व्यृषन्-मनसा विकिरन् प्रधानाहुतीर्जुहोति ॥

**लेलायति—अल्पकार्चिषि**—शान्तायां ज्वालाया [6] सत्यामाहुतीर्जुहेति ॥

---

[1] प्रतिपादयति —प्रवेशयति अथवा प्रक्रमयति —प्रथमाहुतिं तत्र जुहोतीत्यर्थ (रु) [2] स्रुच्या–क [3] पूर्वशब्दोऽत्र पूर्वोत्तराया दिशि गौणो द्रष्टव्य । अत एवात्र पूर्वविप्रतिषेधाद्वैकल्पिकाविमौ विधी द्रष्टव्यौ । सत्याषाढभारद्वाजबोधायनैरप्युक्तम् (रु) [4] तद्धिंसामभिध्यायन् (रु) [5] लेलायति वा क लेलायतीति लिङो यङन्ताल्लिटि व्यत्ययेन परस्मैपदमीकारस्य चाकार । यङ्लुगन्ताद्वा शप् वृद्धिश्च व्यत्ययेन छान्दसत्वात् । कण्ड्वादिषु वा लेला इति पाठो द्रष्टव्य । यदा शान्तार्चिरङ्गारेषु लेलीयमान इव विस्फूर्जत्यग्निस्तदा जुहोतीत्यर्थ । वक्ष्यति च यदङ्गारेषु व्यवशान्तेषु लेलायद्वीवभातीति (रु) [6] सत्यामित्यादिर्ग्रन्थ (मु रा ) मात्रे दृश्यते

(सू) **आज्यहविरुपांशुयाजः पौर्णमास्या[1]मेव भवति वैष्णवोऽग्नीषोमीयः प्राजापत्यो वा ॥ २३ ॥ ८१ ॥ ॥ ४४२ ॥**

(सू) **प्रधान[2]मेवोपांशु ॥ २४ ॥ ८२ ॥ ४४३ ॥**

[उपांशुत्वव्यवस्था उपदेशपक्षश्च]

(भा) [3]प्रधानदेवताभिधानमुपांशु । तदर्थत्वाद्धविषो हविरपि प्रधानम्, [4]तेन कर्मसिद्धेः । तस्मात्तदभिध्यानमप्युपांशु । सौम्ये घृतशब्दस्य [5]वैश्वदेव्या[6]याश्चानूबन्ध्याया इत्युभयस्या[7]युक्तम् देवताया एवेत्युपदेशः ॥ ४४३ ॥

---

[कर्मसिद्धौ हेतुः]

(वृ) **प्रधानदे—तेन कर्मसिद्धेः**—यागकरणत्वात् ।

[उपांशुत्वविषयव्यवस्था तत्फलं च]

**तस्मा—पांशु**—उभयोर्याग[8]करणत्वात् । उपांशुत्वस्य च प्रधानयागकारकाभिधानविषयत्वात् ॥

घृतस्य यजे[9]त्यादिषु घृतादिशब्दस्योपांशुत्वसिद्धि· । तदाह—**सौम्यै—स्यायुक्तम्** ॥

[उपदेशपक्षाशयः]

**देवताया एवेत्युपदेशः**—हविषो देवतार्थतया प्रधानत्वात् निरुपाधिकप्रधानदेवताभिधानस्यैवोपांशुत्वमिति ॥

---

[1] बोधायनादिभिरमावास्यायामप्युपांशुयाजविधानात तन्निरासार्थं पौर्णमास्यामेवेत्येवकार (रु) [2] शु—क उपांशुयाजमसमाख्यानात् कृत्स्नमन्त्रोपांशुत्वे प्राप्त वचनम्, देवताभिधान एव मन्त्रांश उपांशु (रु). [3] प्रधानम्—देवताभिधानम्—क ग. घ [4] तेन तद्धर्म (मु रा) तेन धर्म—क [5] वैश्वदेव्यायां च—घ. [6] या मध्यम अनूबन्ध्याया युक्त दे—क. [7] युक्तं एकताया—घ. I. उक्तदेवताया (मु रा) II [8] कारकत्वात्. [9] त्यत्र—घ.

(सू) विष्णुं बुभूषन् यजेत ॥ २५ ॥ ८३ ॥ ४४४ ॥

अष्टादशीखण्डिका ॥

---

(सू) अग्नीषोमौ भ्रातृव्यवान् ॥ १ ॥ ८४ ॥ ४४५ ॥

(सू) आग्नेयवदुत्तरैर्हविर्भिर्यथादेवतं प्रचरति ॥ २ ॥ ॥ ८५ ॥ ४४६ ॥

(सू) [1]समवदाय दोहाभ्याम् ॥ ३ ॥ ८६ ॥ ४४७ ॥

(सू) दध्नोऽवदाय शृतस्यावद्यत्येतद्वा विपरीतम् । सर्वाणि द्रवाणि स्रुङ्मुखेन जुहोति ॥ ४ ॥ ८७ ॥ ॥ ४४८ ॥

(सू) स्रुवेण [2]पार्वणौ होमौ ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो दोहताꣳ सुवीर्यम् रायस्पोषꣳ सहस्रिणम् प्राणाय सुराधसे पूर्णमासाय स्वाहेति पौर्णमास्याम् । अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना सा नो दोहताꣳ सुवीर्यम् रायस्पोषꣳ सहस्रिणम् ।

---

[नित्ये बुभूषन्निन्नितिसन्नुपपत्तिः]

(वृ) विष्णुं बुभूषन्निति—नित्ययोरेव पक्षे काम· ।

---

[1]समवदाय—सहावदाय देशकालकर्तृदेवतैक्यादिति भाव । तत्र उपस्तरणाभिघारणे अपि विभुत्वात्तन्त्रेण भवत (रु) [2]पर्वशब्दोऽत्र कर्मवचन प्रकरणात् तद्दैवतत्वाच्च होमयो । ताभ्या हि दर्शपूर्णमासावेव क्रियमाणाविज्येते, मन्त्रलिङ्गात् । तेन विकृतिषु न गच्छत , तत्र तयोस्समुदाययोरभावात् । कर्मणस्तत्प्रभृतित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादिति न्यायेन समुदायस्य चानतिदेश्यत्वात् पार्वणाविति वचनाच्च । तदुक्त न्यायविद्भि , पार्वणयोस्त्वप्रवृत्तिस्समुदायार्थसंयोगात्तदभीज्याहीति (रु)

**अपानाय सुराधसे अमावास्यायै स्वाहा इत्यमावास्यायाम् ॥ ५ ॥ ८८ ॥ ४४९ ॥**

[पार्वणहोमस्य विकृतिष्वननुष्ठानहेतवः]

(भा) न विकृतौ पार्वणहोमौ समुदायेज्याङ्गत्वात् तस्य समुदायस्यान्यत्राभावात् । पार्वणाविति वचनाच्च ॥ ४४९ ॥

(सू) [1]**नारिष्ठान् होमान् जुहोति दश ते तनुवो यज्ञ याज्ञियाः ताः प्रीणातु यजमानो घृतेन नारिष्ठयोः**

---

[विकृतौ पार्वणहोमविरहोपपत्तिः]

(वृ) **न विकृतौ—त्राभावात्**—पूर्णमासाय स्वाहा अमावास्यायै स्वाहेति पूर्णमासामावास्याशब्दयोः कर्मसमुदायनामत्वात् तयोरेव समुदाययोश्चतुर्थ्यन्ततया देवतात्वात् तद्देवतास्मरणा[2]र्थत्व होममन्त्रयोः । ततश्च विकृतौ तयोस्समुदाययोरतिदेशाभावात् वैकृतदेवताना तत्तत्कार्यो-[3]पन्नत्वाभावाच्च न कर्तव्यौ । यद्यपि होमरूपत्वादारादुपकारकत्वम् ; तथाऽपि देवतास्मरणस्य स्विष्टकृदादिव[4]द्विवक्षितत्वाद्द्वाराभावान्निवृत्तिः ॥

[पार्वणत्ववचनस्य प्रकृतोपयोगः]

**पार्वणाविति वचनाच्चेति** ;—पार्वणशब्दस्य देवतातद्धितान्तत्वात् पर्वशब्दस्य च मन्त्रवर्णप्राप्तपौर्णमास्यमावास्यापरत्वात् तयोरन्यतराभावाच्चेति ॥ १९४ ॥ ४१४ ॥

[नारिष्ठहोमे प्रत्येकं देवताः]

**नारिष्ठान्—ति** ;—नारिष्ठहोमेष्वादितस्त्रयाणा [5]अग्निवायू

---

[1] नारिष्ठा नाम उत्तरे होमा नारिष्ठदेवतासम्बन्धात् । ते तु स्रुचा कार्या । तत्र सते मनसा मन इत्यादि प्रादिष्ट यजुष्षष्ठम् । सप्राणे प्राणमित्यृक्चतुष्पदा सप्तमी । सन्ते मनसा मन इत्यादिर्यथा पठित एको मन्त्र इति केचित् । तेषा त्वृगक्षरपरिमाणविरोध । कारकवैरूप्य च स्यात् । यथा मनसा मन प्राणे प्राणम्मित्यादि (रु) [2] र्थं—ख. ग. [3] पन्नत्वाच [?]—ख ग [4] द्विवक्षितद्वाराभावा—क [5] अग्निमया [?]—क

प्राशिषमीडमानो देवानां दैव्येऽपि यजमानो मृतो-
भूत् यं वां देवा अकल्पयन्नूर्जो भाग५
शतक्रतू एतद्वां तेन प्रीणाति तेन तृप्यतम५हहौ
अहं देवानाँ सुकृतामस्मि लोके ममेदमिष्टं
न मिथुर्भवाति। अहं नारिष्ठावनुयजामि विद्वान्
यदाभ्यामिन्द्रो अदधाद्भागदेयम् अदारसृद्भवत
देव सोमास्मिन् यज्ञे मरुतो मृडता नः।
मा नो विददभिभागो अशस्तिर्मानो विदद्वृजना
द्वेष्या या ॥ ६ ॥ ८९ ॥ ४५० ॥

एकोनविंशीखण्डिका ॥

---

(सू.) ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाँ
हविषामाज्यस्य। अतिरिक्तं कर्मणो यच्च हीनं
यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृता-

---

(वृ) देवता। तयोर्वैश्वानरप्राणरूपतया पुरुषे नित्य [1] स्थितत्वान्मन्त्रेषु नारिष्ठ[2]शब्देन निर्देशात् तद्विशिष्टयोर्देवतात्वम्। चतुर्थे सोममरुतः। पञ्चमे ब्रह्म। षष्ठेऽपीति केचित्। प्रकृतत्वात् षष्ठस्याग्निः त इति सन्निहितस्याग्नेः सबोधनात् बह्वृचमताच्च अव्यक्तनिर्देशेष्वग्नेर्देवतात्वात् प्रजापतिर्वा अनिरुक्तः प्रजापतिः ॥

---

[1] नित्यसंस्थितत्वा—क [2] शब्दनि (मु. रा)

हुतिरेतु देवान् सं ते मनसा मनस्संप्राणे प्राणं दधामि ते संव्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूत् शं न एधि द्विपदे शं चतुष्पदे स्वाहेत्येतैः प्रतिमन्त्रम् ॥ १ ॥ ९० ॥ ॥ ४५१ ॥

[संतेमनसेति मन्त्रेमतिभेदः]

(भा) [1] केचिदादेशस्सते मनसा मन इति ॥

(सू) एष [2] उपहोमानां कालोऽनन्तरं वा प्रधानात् प्राग्वा समिष्टयजुषः ॥ २ ॥ ९१ ॥ ४५२ ॥

(सू) [3] जुह्वामुपस्तीर्य सर्वेषां हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृतेऽवद्यति द्विः पञ्चावत्तिनः ॥ ३ ॥ ॥ ९२ ॥ ४५३ ॥

---

[केचिदितिपक्षे आदेशपदार्थः होमसंख्याच]

(वृ) केचिदादेशं संते मनसा मन इति,—सते मनसा मनस्सप्राणेन प्राणो जुष्टमित्यस्य प्रतीकादेशः। स प्राणे प्राणमित्यादेस्त्रिष्टुप्छन्द[4]स्कान्तर्गतत्वात् अस्मिन् पक्षे सप्त होमाः ॥

---

[1] केचिदादेश—क [2] यस्मिन् कर्मणि उपहोमाश्चोद्यन्ते तत्रैते कालविकल्पा (रु) [3] उपांशुयाजस्यत्वर्थलुप्तानि शेषकार्याणि। तदर्थस्य चतुर्गृहीतस्य शेषाभावात् सर्वार्थत्वाच्च ध्रौवस्य। सकृद्ध्रुवाज्यादवद्यतीति बोधायन। न चावदानमन्त्रस्स्विष्टकृति, प्रधानार्थत्वात् (रु) [4] स्कान्तरत्वात्—क स्कत्वात् (मु रा)

[अवदानमन्त्रनिषेधः स्विष्टकृद्धोमे]

(भा) नावदानमन्त्र स्विष्टकृति । साधारणत्वाच्छेषस्य [3]

[स्विष्टकृद्धोमेऽवदानमन्त्रविरहोपपत्तिः]

(वृ) [1] **नावदान—च्छेषस्य**,—अस्यार्थः,—मा भेर्मा संविक्था इत्यादिमन्त्रस्य सबोधनविभक्तिभिर्भयचलनादिनिवृत्तिप्रकाशनद्वारेण हवि[2]रवयविप्रकाशकतया [3]अवदानाङ्गत्वात् [4]द्व्यवदानमात्रप्रकाशकतया- ' अवदानानि ते ' ' यदवदानानि ते ' इति चावयविसबोधनावगते· स्विष्टकृद्भक्षाणामप्यदृष्टजनकतया प्रधानशिष्टद्रव्यसाध्यत्व न प्रतिपत्ति-मात्रता। भरद्वाजेन भगवता निर्वापशेषान्वावापे [5] भक्षाणां [6] प्रति-रेकायेति प्रयोजनाभिधानात् द्रव्यस्य भक्षार्थत्वावगमाच्च । अत· प्रधानयाग[7]शिष्टस्य स्विष्टकृदादिसर्वशेषकार्यसाधारणताप्रति-पाद्यत्वेच[8] सर्वशेषकार्यै· प्रतिपाद्यत्वात्साधारणता । अदृष्टार्थत्वपक्षेऽपि प्रधानप्रयुक्तद्रव्योपजीविता । एव च स्विष्टकृदवदाने मन्त्रप्रयोगे सर्वार्थद्रव्यप्रकाशकतया सर्वार्थत्वप्रसङ्गान्न स्विष्टकृदेकान्तता भवेत्। अतस्साधारणत्व [9]प्रसङ्गात् प्रधानावदानसन्निधौ पाठात् तत्कार्या-पत्त्यभावाच्च स्विष्टकृतो [10] न स्विष्टकृदवदान [11] मन्त्र । आग्नेयोऽष्टाक-पाल इति कृत्स्नस्याग्ने[12]यत्वावगते प्रधानयागे अवदानमन्त्रप्रयो-गेऽपि न साधारणाङ्गता । न च स्विष्टकृदादिसाधारणत्वे[13] हविषः आग्नेयश्रुतिबाधः तदङ्गत्वाच्छेषकार्याणाम्, अतो न स्विष्ट[14]कृत्यव-दानमन्त्र· ॥

---

[1] एषउपहोमानामिति सूत्रे,—दर्शपूर्णमासकर्मणि य उपहोमाश्चोद्यन्ते तानु-पहोमान् अस्मिन् काले जुहोति प्रधानानन्तर वा प्राक्समिष्टयजुष इति (मु रा.) अधिकं दृश्यते नान्यत्रात्रत्ये कोशे क्वापि. [2] रवयव—क. [3] अवदानान्तरत्वात्—ख ग [4] दवदानमात्रप्रकाशकता—(मु रा). [5] वापभक्षणामप्रेरकायेति—क [6] भक्षणाप्र-रेकायेति मुद्रिता भक्षणाना प्रकारयेति (मु. रा). [7] विशिष्टस्य—क. [8] त्वे च—क घ [9] त्वा प्रसङ्गात्—घ [10] कृतोऽतो न—क [11] वदानमन्त्र —ख. ग. [12] ग्न्यर्थताव—क. [13] त्वेऽपि ह—क [14] कृदवदा—घ.

(भा) ध्रुवावत् ॥ ४५३ ॥

(सू) दैवतसौविष्टकृतैडचातुर्धा[1]कारणिकानामुत्तर - [2]मुत्तरं ज्यायः ॥ ४ ॥ ९३ ॥ ४५४ ॥

(सू) द्विरभिघार्य न [3] हविः प्रत्यभिघारयति ॥ ५ ॥ ॥ ९४ ॥ ४५५ ॥

[प्रत्यभिघारणव्यवस्था तत्फलं च]

(भा) प्रत्यभिघारण[4] स्विष्टकृदर्थम् । अतो न सौम्ये । [5] पश्ववदा-[6]नेषु च त्र्यङ्गेभ्यस्स्विष्टकृत् ॥ ४५५ ॥

---

[ध्रुवावदित्यस्यार्थः]

(वृ) ध्रुवावदिति ;—यथा ध्रुवायास्सर्वयज्ञार्थत्वात् [6] द्रव्यस्यो-पांशुयाजार्थं नावदानमन्त्रः प्रयुज्यते तत्रापि द्रव्यसाधारणत्वमेव मन्त्रा-भावे हेतुः ॥

[प्रत्यभिघारणस्य केवलस्विष्टकृदर्थत्वोपपत्तिः]

प्रत्यभिघारणं स्विष्टकृदर्थमिति ;—प्रत्यभिघारणस्य संस्कार-रूपत्वात् सस्कृतेन कार्ये कर्तव्ये अनन्तरप्राप्तत्वात्स्विष्टकृतः । स्विष्टकृदभिघारणानन्तरं न हवि प्रत्यभिघारयतीति निषेधाच्च केवल-स्विष्टकृदर्थता ॥

अतो न सौम्ये चरौ—प्रत्यभिघारणम् । स्विष्टकृदभावात् ।

[पश्ववदानेषु त्र्यङ्गे च प्रत्यभिधारणाभावोपपत्तिः]

पश्ववदानेषु चेति—एकादशावदानानां प्रत्येकं हविष्ट्वात् तेभ्यश्च स्विष्टकृदवदानाभावात् न तेषु प्रत्यभिघारणम् ॥

त्र्यङ्गेभ्यस्स्विष्टकृदिति—तेषु प्रत्यभिघारणम् प्रदानावदाना-

---

[1] करणिका—क ख. [2] अवदानमिति शेष. (रु) [3] अत एव प्रतिषे-धात् ज्ञायते प्रत्यभिघारणं स्विष्टकृदर्थमिति तेन पश्ववदानेषु सौम्ये च चरौ निवर्तते (रु) [4] घारयति (मु रा) [5] पश्ववदानेषु च त्र्यङ्गेभ्यस्स्विष्टकृदिति—क नेषु यङ्गेभ्यस्स्वि—घ. [6] तद्द्रव्यस्यो (मु रा)

(सू.) अग्नये स्विष्टकृतेऽनुब्रूह्यग्निं स्विष्टकृतं यजेति [1]संप्रैषौ । उत्तरार्धपूर्वार्धे जुहोत्यसंसक्तामितराभिरा[2]हुतिभिः ॥ ६ ॥ ९५ ॥ ४५६ ॥

(सू.) [3]प्रत्याक्रम्य जुह्वामप आनीय वैश्वानरे हविरिदं जुहोमि [4]सहस्रमुत्सꣳ शतधारमेतम् । स नः पितरं पितामहं प्रपितामहं स्वर्गे लोके पिन्वमानो बिभर्तु स्वाहेत्यन्तःपरिधि निनयति निनयति ॥ ७ ॥ ९६ ॥ ४५७ ॥

एकविंशीखण्डिका ॥

---

(वृ) [5]भावेऽपि । यद्यपि,—' विलोमाकार्षँ तत्त आप्यायता पुनः ' इत्यविशेषसंस्कारार्थत्वम् ; तथाऽपि पशुचोदनया समुदायस्य [6]हविष्ट्वेऽवगते तदेकदेशावदाने तच्छेषत्वेन मन्त्राभिधानोपपत्तेः त्र्यङ्गेऽप्यविरोधः अभिघारणार्थत्वान्मन्त्रस्य कथंचिदभिधानोपपत्ते· ॥

उपदेशस्तु ;—नावदानाभिघारणमन्त्र इति लिङ्गविरोधादेव । गुदकाण्डे [7] उभयं भवत्येव ॥

---

[1] सप्रैषविधि प्रागेव व्याख्यात. [2] हुतीभि –क [3] प्रत्याक्रमणवचन प्रत्याक्रम्यैव यथा निनयेत् न तु दक्षिणत स्थित इति । केचित्तु पितृलिङ्गत्वामन्त्रस्य निनयने प्राचीनावीतमिच्छन्ति (रु) [4] साहस्र–ख. [5] भावे–क [6] हविष्ट्वावगेत –क [7] ण्डे तूभयम्--घ.

(भा) वैश्वानरे हविरिति प्राचीनावीती हिरण्यकेशिमतात् ॥ ४५७ ॥

॥ इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये द्वितीये प्रश्ने षष्ठः पटलः ॥
॥ द्वितीयः प्रश्नस्समाप्तः ॥

---

देवस्यत्वा, अपारुरुम, पत्नीसन्नहन, दिवश्शिल्पं, पूषाते, शुक्रं, पूर्ववत्, अपिवा, वेदेन, अग्नये, इध्मसंनहनैः, समारभ्य, क इदं, अनपव्याहरन्तः, घृतवति, आग्नेयः, स्रुवेण, अग्नीषोमौ, ब्रह्म-प्रतिष्ठैकविंशतिः ॥

देवस्यस्फ्य पत्नीसनहन पूर्ववदग्नये समिध्यमानायानपव्याहरन्त आग्नेयः सौम्यष्षट् ॥

---

[हिरण्यकेशिमतोपपत्तिः स्वमतेहेतुश्च]

(वृ) **वैश्वानरे हविरिति प्राचीनावीती हिरण्यकेशिमतात्**— यद्यपि स नः पितरमिति वैश्वानरप्रधानता तथाऽपि पितरं पितामहं पिन्वमान इति तत्प्रीत्यर्थत्वात् पितृप्रधानतया प्राचीनावीतं हिरण्यकेशिनोक्तमिति । स्वमते [1] त्वग्निर्वैश्वानर एव अभिधानप्राधान्यात् ॥

॥ इति श्रीधूर्तस्वामिभाष्यवृत्तौ द्वितीये प्रश्ने षष्ठः पटलः ॥
॥ इति द्वितीयः प्रश्नः ॥

---

[1] ग्निर्वैश्वानराभिधानात् न प्राचीनावीतमित्यर्थः (मु. रा)

# अथ तृतीयः प्रश्नः

(सू) [1]इडामेके पूर्वं समामनन्ति प्राशित्रमेके ॥ १ ॥ ॥ १ ॥ ४५८ ॥

[इडाप्राथम्ये विशेषः]

(भा) यदेडा प्रथमं तदाऽभिघार्येडा प्राशित्रम् ॥ ४५८ ॥

(सू) आग्नेयं पुरोडाशं प्राञ्चं तिर्यञ्चं वा [2]विरुज्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या [3]व्यूह्य मध्यात्प्राशित्रमवद्यति यवमात्रं [4]पिप्पलमात्रं वाऽज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मारूरुपाम यज्ञस्य शुद्धꣳस्विष्टमिदꣳहविरिति ॥ २ ॥ २ ॥ ४५९ ॥

---

## अथ तृतीयः प्रश्नः.

[इडाभिघारणप्राथम्योपपत्तिः]

(वृ) यदेडा—प्राशित्रम्[5]—होत्रे प्रदानप्रभृत्यनुत्सर्जनविधानात् उपहवोत्तरकालश्च प्राशित्रहरणविधानात् इडाऽवदानाङ्गभूताभिघारणानन्तरमेव प्राशित्रावदानम् ॥

---

[1] इडाशब्दो देवतावचन तत्सबन्धाद्द्रव्ये कर्मणि च प्रयुज्यते । (रु) प्राशित्रशब्दो द्रव्यवचन तत्संबन्धात्कर्मणि तत्र प्राशित्रपूर्वकल्प सूत्रकृतैवानुक्रमिष्यते । यदा त्वितर तदाऽवदानेषु प्राशने चेडा पूर्वा भवति (रु) [2] विरुज्य—मस्तक भुक्त्वा (रु) [3] व्यूह्य—अभ्यन्तरमङ्गुली गमयित्वा (रु) [4] व्रीहिप्रमाण (रु). [5] (मु. रा )प्राशित्रम् अवद्यति । इडादेवता वृष्टि वृष्टिर्वा इडेति वचनात् तदर्थत्वाद्द्रव्यमपीडा प्रकृष्टैर्मन्त्रै प्राश्यत इति प्राशित्रम्, इत्यधिकं दृश्यते ।

(भा) विरोजनं भञ्जनन् । समीपे [1]मध्यमाया उपमध्यमा ।

[प्राशित्रप्रमाणं मन्त्रानिवृत्तिश्च]

पिप्पल—फलम् । सुपिप्पला ओषधीरिति दर्शनाच्च । अज्याय इति [2]यवमात्र एव, आख्यानविशेषेण लिङ्गविरोधात् । यवेन समितमिति—यद्यवादधिक न भवति तत्प्रमाण प्राशित्रम् । अतस्तत्राप्यनिवृत्तिर्मन्त्रस्य ॥ ४५९ ॥

(सू) [3]**एवमुत्तरस्यावद्यति ॥ ३ ॥ ३ ॥ ४६० ॥**

---

[विरोजनचतुर्धाकरणयोर्व्यवस्थातद्धेतू]

(वृ) **विरोजनं—भञ्जनम्**—आग्नेयग्रहणात् तस्यैव विरोजनं तथा चतुर्धाकरणादि ॥

**पिप्पलम्—फलम्**—भरद्वाज[4]मतात् ।

[लिङ्गविरोधस्य दृष्टान्तप्रदर्शनम् ]

**आख्यान–धात्**—व्रीहीणां मेघ इतिवत् आख्यानविशेषेणेति यवमात्राभिधानेन ॥

[यवमात्रोक्तितात्पर्यम् ]

**यवेन सं—प्राशित्रमिति** — तस्माद्यवमात्रमवद्येदित्युक्तेऽपि अज्याय इति निषेधात् यवमात्रान्मन्त्रलिङ्गाच्चाधिकनिवृत्तिमात्रपरत्वम् [1] यवमात्रादर्वागपि परिमाण लभ्यते ॥

**अतस्तत्राप्यनिवृत्तिर्मन्त्रस्य**—न पिप्पलमात्रे मन्त्रः ॥

---

[1] मध्यमाया यासोप—क. [2] मात्रमेव—ग. [3] एव—विरोजनादिना । तत्राविरुज्योत्तरस्मादिति तु सत्याषाढभारद्वाजौ । तथा चरुर्न प्राशित्रामिति भारद्वाज. (रु).
[4] मतादिति—अङ्गुल्या यवमात्र पिप्पलमात्र वाऽवदाय ' इति भारद्वाजसूत्रे यवमात्रपदसमवधानमविशिष्टम् । फलवाचिपदं तु तत्रापि न दृश्यते । उपमध्यमापदमप्यविशिष्टम ।

[प्राशित्रे सान्नाय्यं वर्ज्यम्]

(भा) [1]न सान्नाय्यात्प्राशित्रम् । न सर्वेभ्यो हविर्भ्य इतीडाया-मुक्तत्वात् ॥ ४६० ॥

(सू) **उपस्तीर्य नाभिघारयत्येतद्वा विपरीतम् । अपि वोपस्तृणा[2]त्यभि च धारयति ॥ ४ ॥ ४ ॥ ४६१ ॥**

(सू) **[3]अत्रैवास्य परिहरणप्राशनमेके समामनन्ति ॥ ॥ ५ ॥ ५ ॥ ४६२ ॥**

(सू) **इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडां समवद्यति । चतुरवत्तां[4] पञ्चावत्तां[5] वा ॥ ६ ॥ ॥ ६ ॥ ४६३ ॥**

[वा शब्दार्थः अवत्तयोरत्र सर्वसाधारणोविकल्पः]

(भा) पञ्चावत्ता चतुरवत्तिनोऽपि ॥ ४६३ ॥

(सू) **मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोस्वाम् । इत्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदानमवद्यति ॥ ७ ॥ ७ ॥ ४६४ ॥**

---

[भाष्यस्थापिशब्दार्थपूरणम्]

(वृ) **पञ्चावत्तां चतुरवत्तिनोऽपि—तथा चतुरवत्ता पञ्चावत्तिनोऽपि ॥**

---

[1] पुरोडाशस्येति शेष (मु रा) [2] त्यभिघार–क. अन्यतरत्तत्र कर्तव्यमुभय वेत्यर्थ (रु) [3] यदेडा पूर्वा यदा च प्राशित्र तयोरुभयोरपि कल्पयोरवदानानन्तरमेव वा प्राशित्रस्य परिहरणप्राशने भवत इत्यर्थ (रु) [4] चतुरवत्ता पञ्चावत्ता वेत्यविशेषवचनेऽपि न पञ्चावत्तिनश्चतुरवत्तमिष्यते तस्य पञ्चावत्तं सर्वत्रेति नियमात् । द्विरभिघारयेत्पञ्चावत्तिन इति लिङ्गाच्च । विनिवेशकल्पो वा प्रागुक्तेन व्यवस्थानुरोधेनास्थेय (रु) [5] त्त–क त्त–क.

(सू) अपि वा [1] दक्षिणार्धादवदाय यजमानभागमथ संभेदात् ॥ ११ ॥ ११ ॥ ४७० ॥

[यजमानभागावदाने कालदेशौ मन्त्रावृत्तौ मतिभेदश्च]

(भा) दक्षिणार्धादवदायेडा यजमानभागमवद्यति तत इडासभेदात् । द्रव्यैकत्वान्न पुनर्मन्त्र । यजमानभागव्यवायादावृत्तिमेके ॥ ४७० ॥

(सू) [2] एवमुत्तरस्यावद्यति ॥ १२ ॥ १२ ॥ ४७१ ॥

प्रथमा खण्डिका ॥

---

[अत्र संभेदपदार्थ ]

(वृ) दक्षिणार्धादवदायेडां—संभेदात्—पूर्वावदानसङ्गदेशात् ।

[मन्त्रानावृत्तिपक्षाशयः]

**द्रव्यैकत्वान्न पुनर्मन्त्रः**—इडारूपद्रव्यस्यैकत्वात् तदवदानार्थत्वान्मन्त्रस्य सकृत्प्रयोग. । एव मा भेरित्यस्यापि । यजमानभागव्यवायेऽपि सकृदेव मन्त्रो द्वितीये पक्षे । सपत्नीयादिव्यवायेऽपि पत्नीसयाजयोरुपरितनयोर्हुतानुमन्त्रणवत् ॥

[मन्त्रावृत्तिपक्षाशयः परोक्तदृष्टान्तान्यथासिद्धिश्च]

**यजमान—मेके**—द्वितीयपक्षे यजमानभागव्यवायादावृत्तिः । पुरोऽनुवाक्यामनोतस्यावृत्तिर्भिन्नकालेष्विति (आप.परि.१-४३) वचनात् । कृष्णग्रीवयोः सौम्यव्यवाये आवाहनावृत्तिवत् । उत्तमयो पत्नीसंयाजयो. हुतानुमन्त्रणस्यैकत्वेन पाठात् सकृत्प्रयोगः ॥

---

[1] दक्षिणार्धात्प्रथममिडावदानमवदाय ततो यजमानभागमवद्यति । ततस्संभेदाद्वितीयमिडावदानमित्यर्थ (रु) [2] एव—मनुना दृष्टा इत्यादिविधिना उत्तरस्य हविष पुरोडाशस्य सान्नाय्यस्य चावद्यति सर्वेभ्यो हविर्भ्य इत्यधिकारात् (रु)

(सू) [1] संभेदाद्द्वितीयम् ॥ ८ ॥ ८ ॥ ४६५ ॥

[संभेदेऽवदानदिक्]

(भा) [2] समेदाद्दक्षिणार्ध एव ॥ ४६५ ॥

(सू) पूर्वार्धाच्च यजमानभागमण[3]मिव दीर्घम् ॥ ॥ ९ ॥ ९ ॥ ४६६ ॥

[तृतीयावदाने भागः इडाप्राशित्रपदार्थश्च]

(भा) यस्मात्पूर्वं गृहीत तस्मादेव तृतीयम् । [4] इडादेवता वृष्टि· । तदर्थत्वाद्द्रव्यमपीडा । प्रकृष्टैर्मन्त्रे प्राश्यत इति प्राशित्रम् । अणुमिव तनुमिव ॥ ४६६ ॥

(सू) तमाज्येन [5] संतर्प्य [6] ध्रुवा उपोहति ॥ १० ॥ ॥ १० ॥ ४६७ ॥

[संन्तर्पणे विशेषः]

(भा) त एकीभूतम् । आज्येन सर्वतस्तर्पयत्यवचनाद्वीप्सायाः । सान्नाय्ययजमानभागस्यापि तर्पणम् ॥ ४६७ ॥

---

[दिग्विशेषपरिग्रहहेतु·]

(वृ) संभेदाद्दक्षिणार्ध एवेति—दक्षिणार्धस्य प्रकृतत्वात् ॥

[तृतीयावदानदेशनिष्कर्षः]

पूर्वावदानसंसृष्टदेशे—यस्मा—तृतीयम् ॥

[अञ्जनरूपसंतर्पणे विशेषे हेतुः यजमानभागे तत्पृथक्त्वे हेतुश्च]

तं एकीभूतमिति—त तमाज्येनेति वीप्साया अवचनात् सर्वपुरोडाशेभ्योऽवत्त यजमानभागमेकीकृत्य अणुमिव दीर्घं कृत्वा आज्येन संतर्पणम्—सर्वतोऽञ्जनम् । सान्नाय्ययजमानभागस्यापि संतर्पणम्—प्राशनमन्त्रभेदात् पृथग्धारणात् ॥

---

[1] योऽवदानदेशयोर्मध्ये स्थितो हविरंश· स संभेद (रु). [2] समेदाद्दक्षिणार्धादेव—ग संभेदाद्दक्षिणार्धाव एव—क. [3] इव ईषदर्थे (रु) [4] एतदादि भाष्यं मुद्रिते न दृश्यते [5] समज्य (रु) [6] ध्रुवाया उपोहति—ध्रुवायास्समीप गमयति । तत्राग्रेण ध्रुवामिति भारद्वाजबोधायनौ (रु).

(सू) अभि[1]घार्येडां होत्रे प्रदाय दक्षिणेन होतार-
मतिक्रामत्यनुत्सृजन् ॥ १ ॥ १३ ॥ ४७२ ॥

[अर्थानुगुणायोजना]

(भा) अनुत्सृजन्निडां दक्षिणेनातिक्रामत्यध्वर्युः ॥ ४७२ ॥

(सू) होतेडयाऽध्वर्युं [2]परिगृह्णाति ॥ २ ॥ १४ ॥
॥ ४७३ ॥

[तदा होतृकृत्यम्]

(भा) होतेडां दक्षिणेन नयत्यध्वर्योर्यथोत्तरा भवतीडा ॥ ४७३ ॥

(सू) अपि वा प्राचीमिडामपोह्य [3]दक्षिणत आसीनः
स्रुवेण होतुरङ्गुलि[4]पर्वणी अनक्ति ॥ ३ ॥ १५ ॥
॥ ४७४ ॥

---

[भाष्योक्तयोजनोपपत्तिः]

(वृ) अनुत्सृ—त्यध्वर्युः—दक्षिणेन होतारमतिक्रामत्यनुत्सृजन्निति सूत्रेच्छेदः । इडा होत्रे प्रदायेति प्रकृतत्वादिडामनुत्सृजन्निति सम्बन्धः ॥

[होतृकृत्यं प्रदक्षिणीकरणम्]

होतेडा—ध्वर्योः—अध्वर्योः प्रदक्षिणकरणेन[5] ॥

यथोत्तरा भवतीडा — अध्वर्योरनुत्सृजत एव ॥

[अपि वेति सौत्रपक्षे कर्तव्यक्रमः]

अपि वा प्राची—अनक्ति—अपि वा प्राचीमिडामपोह्य दक्षि-

---

[1] पञ्चावत्ताया त्विडाया द्विरभिघारणेन सख्यासंपत्ति कर्तव्या, द्विरभिघारयेत्पञ्चावत्तिन इति लिङ्गात् । पश्चार्धात्तृतीयं पञ्चावत्तायामिति तु सत्याषाढ । अतिक्रामति होतु पश्चाद्गच्छति, तदङ्गुल्यञ्जने प्राङ्मुखत्वार्थम् । सत्याषाढभरद्वाजाभ्यामप्युक्तम् (रु). [2] दक्षिणतो हृत्वेडामन्तराऽध्वर्युमात्मानं च करोतीत्यर्थ । (रु). [3] दक्षिणत उदङ्मुख आसीन (रु) [4] पर्वणी—प्रदेशिन्या उत्तमे इत्याश्वलायन (रु). [5] करेण (मु.रा). करणो—क. करणेनायधो ?—घ.

[प्रकृतपर्वपदार्थः]

(भा) सन्धिः—पर्व ॥ ४७४ ॥

(सू) **अपरमङ्गा पूर्वमेतद्वा विपरीतम् ॥ ४ ॥ १६ ॥ ॥ ४७५ ॥**

(सू) **उपस्पृष्टोदकाय पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽ[1]वान्तरेडामवद्यति ॥ ५ ॥ १७ ॥ ४७६ ॥**

(सू) **अध्वर्युः प्रथममवदान[2]मवद्यति स्वयं होतोत्तर-मेतद्वा विपरीतम् ॥ ६ ॥ १८ ॥ ४७७ ॥**

[सूत्रे स्वयंशब्दस्वारस्यम्]

(भा) स्वय होतेति वचनात् न मैत्रावरुणस्यावान्तरेडा ॥ ४७७ ॥

(सू) **[3]लेपादुपस्तरणाभिघारणे भवतः ॥ ७ ॥ १९ ॥ ॥ ४७८ ॥**

(सू) **द्विरभिघारयेत्पश्चावात्तिनः । उपहूयमाना-मन्वारभेतेऽध्वर्युर्यजमानश्च । दैव्या अध्वर्यव उपहूता इत्यभिज्ञायोप[4]हूतः पशुमानसानीत्य-**

---

(वृ) णत आसीनः न दक्षिणेनातिक्रमण परिहरण च होत्रेऽप्रदाय प्राचीमिडामपोह्य दक्षिणेन होतुरासीनोऽध्वर्यु· पर्वाञ्जनादि करोति ॥

[पर्वविशेषः]

**सन्धिः—पर्व—**प्रदेशिन्या. पर्वाञ्जनादि पक्षद्वयेऽपि ॥

[स्वयंशब्दस्वारस्योपपादनम्]

**स्वयंहोतेति—न्तरेडा—**होतेत्येतावति वक्तव्ये स्वयवचनात् होतृकार्यापन्नस्यापि मैत्रावरुणस्य नावान्तरेडा ॥

---

[1] इडैकदेशमवदधाति (रु) [2] मादधाति–क [3] लोपा [2]–क इडागता-ज्यलेपात् (रु). [4] हूत इत्यनन्तरस्सूत्रभाग ख.—पुस्तके न दृश्यते

ध्वर्युर्जपति । उपहूतोऽयं यजमान इत्यभिज्ञायैत-
मेव मन्त्रं यजमानः ॥ ८ ॥ २० ॥ ४७९ ॥

[अन्वारम्भे च वरुणप्रघासे विशेषः]

(भा) प्रतिप्रस्थातुरप्यन्वारम्भो वरुणप्रघासेष्विडाया उपहूत इति जपश्च ॥ ४७९ ॥

(सू) उपहूतायामग्रेणाहवनीयं ब्रह्मणे प्राशित्रं [1] परि-
हरति ॥ ९ ॥ २१ ॥ ४८० ॥

[सूत्रे परिहारदेशनिर्देशस्वारस्यग्राहिपक्षः]

(भा) अग्रेणाहवनीयमिति [2]वचनादन्यात्रान्तरा[3]ऽग्नी नीयत इति [4] केचित् ॥ ४८० ॥

(सू) तस्मिन् [5] प्राशिते होताऽवान्तरेडां प्राश्नाति
वाचस्पतये त्वा हुतं प्राश्नामि सदसस्पतये त्वा
हुतं प्राश्नामीति ॥ १० ॥ २२ ॥ ४८१ ॥

---

[प्रतिप्रस्थातुरिह परिग्रहहेतुः]

(वृ) **प्रतिप्रस्थातु—जपश्च ;**—विहारद्वये इडोपह्वानस्य तन्त्रत्वात् हविषां कर्तृभेदात् स्वकीयकर्त्रा तद्धाविरन्वारम्भणीयमिति प्रतिप्रस्थातुरन्वारम्भो जपश्च ॥

[अन्यत्रान्तराग्निनयनानुमतिपक्षाशयः]

**अग्रेणा—इति केचित् ;**—नान्तराऽग्नी संचरतीति अन्तराऽग्नीनयनप्रतिषेधेऽप्यग्रेणाहवनीय परिहरतीति प्राशित्रनियमादन्यत्रान्तरा नयनेऽपि न दोष इति प्रदर्शनार्थं वा प्राशित्रवचन शामित्राग्निनयनादीनामग्रेण परिहरति तीर्थेनैव परिहरतीत्यग्रदेशस्य तीर्थत्वेन निर्देशात् सर्वेषां स एव मार्ग इति ॥

---

[1] तस्य सकाश नीत्वा प्रयच्छति । प्रदर्शनमिदमन्यस्यापि प्रस्तरादेर्यज्ञाङ्गस्य । तत्रान्तरानयनेऽप्यदोष इत्येके (रु). [2] नियमात्–घ [3] ऽन्तराऽग्निनीयत–घ [4] प्रदर्शन वा–क. [5] प्राशित्रे–क.

(सू) **प्राशितायामिडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः। तस्यास्ते भक्षिवाणस्स्याम सर्वात्मनस्सर्वगणा इति यजमानपञ्चमा इडां प्राश्य ॥ ११ ॥ २३ ॥ ४८२ ॥**

द्वितीया खण्डिका ॥

---

(सू) **वाग्यता आसत आमार्जनात् ॥१॥२४॥४८३॥**

(सू) **मनो ज्योतिर्जुषतामित्यद्भिरन्तर्वेदि प्रस्तरे [1]मार्जयित्वाऽऽग्नेयं पुरोडाशं चतुर्धा कृत्वा बर्हिषदं करोति बर्हिषदं वा कृत्वा चतुर्धा करोति ॥ २ ॥ २५ ॥ ४८४ ॥**

[प्रकृतमार्जनपदार्थः समानकर्तृकत्वाविवक्षाफलं च]

(भा) शिरस्यपामानयन मार्जनम्। [2] प्रस्तरादपादाय [3]मन्त्रावृत्तिश्च॥

---

[प्रस्तरे मार्जयित्वेति सूत्रतो भाष्यार्थलाभः]

(वृ) **शिरस्यपा—मादायेति ;** —अन्तर्वेदि प्रस्तरे मार्जयित्वेत्यन्तर्वेद्यवस्थिते प्रस्तरे जलमासिच्य तस्याधस्ताद्धस्तेन जल गृहीत्वा शिरस्यानयति ॥

[मन्त्रावृत्तिहेतूपपत्तिः फलं च मार्जने मतिभेदश्च]

**मन्त्रावृत्तिश्च ;**—प्रतिपुरुषम्। मार्जयित्वा चतुर्धा कृत्वा

---

[1] इद 'मनोज्योतिरिति' बृहस्पतिवत्या मार्जन तस्या प्रकरणपाठात्। अन्तर्वेदीति वचन वेदिस्थ एव प्रस्तरे यथा मार्जनं स्यात् मा भूत्प्रस्तरमादाय बहिरिति। मार्जन—हस्तेऽपामासेचनम् तदेव शिरस्यानयनसहितमिति केचित्, तदयुक्तम्,— अग्निहोत्रान्ते मार्जयेत शिरस्यप आनयत इति पृथग्विधानात्। तथा, अञ्जलिमन्तर्धायाप आसेचयते तन्मार्जनमित्येवाश्वलायन। बर्हिषदं—स्तिर्णे बर्हिषि सन्नम्।

[2] प्रस्तरादप आदाय—ख ग घ. [3] मन्त्रावृत्तिश्च—क. घ.

[आग्नेयविकारेषु अभिघारणादि धर्मे विशेषाः]

अभिघारणचतुर्धाकरणे आग्नेयविकाराणां चरुपुरोडाशानां न मुख्यधर्मः । पुरोडाशग्रहणाच्चा[1]ग्नेयस्याप्याग्नेयकार्यापन्न[2]स्योभयमग्नीषोमीयेषु प्रधानेषु । पुरोडाशग्रहणान्नोभय चरावित्युपदेश ॥ ४८४ ॥

---

(वृ) बर्हिषद करोतीति चतुर्धाकरणसमानकर्तृकत्वान्मार्जनस्याध्वर्योरेव मन्त्रेण मार्जन मा भूदिति मन्त्रावृत्तिरुच्यते । भक्षणाङ्गत्वान्मार्जनस्य भक्षयितृणां[3] सर्वेषां मार्जनमिति । केचित्प्रस्तरादुपादाने शिरस्यानयने च मन्त्रावृत्तिरिति [4]वर्णयन्ति । अपरे त्वन्तर्वेदि स्थित्वा मार्जनमित्याहुः, अन्नदास्स्थेति मार्जनवदिति ॥

[मुख्यधर्मत्वशङ्कावकाशः]

**अभिघारण—मुख्यधर्मः** इति,—आग्नेय पुरोडाश चतुर्धा कृत्वेत्यत्र पुरोडाशशब्दस्य हविरुपलक्षणत्वात् । तद्वदाग्नेयशब्दस्यापि प्रथमदेवतापरत्वशङ्कायामिदमुच्यते,—न मुख्यधर्म इति ॥

[अभिघारणस्य चतुर्धाकरणसाम्यहेतुः]

आग्नेयमुद्देश्यसमर्पकतया [5]विवक्षितत्वात् अभिघारणे च आग्नेयमभिघारयति तूष्णीमुत्तरमित्याग्नेय एव मन्त्रेणाभिघारणस्योक्तत्वात् साधर्म्यं चतुर्धाकरणस्योच्यते ॥

[पुरोडाशग्रहणस्वारस्यलभ्यार्थः]

**पुरोडाशग्र–प्रधानेषु**— अस्यार्थः,—उभयत्र आग्नेयमित्येतावता नियमे सिद्धेऽपि पुरोडाशग्रहणादग्नीषोमीयाणि प्रधानानीत्यत्र आग्नेयस्थानापन्नस्याग्नीषोमीयस्योभयो प्राप्तिरधिकग्रहणप्रयोजनम् ॥

**पुरोडाशग्रह–त्युपदेश इति**—पुरोडाशग्रहण हविरन्तरनिवर्तकमिति ॥

---

[1] आग्नेयकार्यापन्नस्याप्याग्नेयस्य–ग इद क —पुस्तके न दृश्यते [2] स्याप्युभयम् [3] तृणा मार्जन–क [4] इद क.—पुस्तके न दृश्यते. [5] (मु रा).

(सू) तं यजमानो [1]व्यादिशतीदं ब्रह्मण इदं होतु- रिदमध्वर्योरिदमग्नीध्र इति ॥ ३ ॥ २६ ॥ ४८५ ॥

[व्यादेशकालतत्प्रकारौ व्यादेशशब्दार्थश्च]

(भा) कृते व्यूहने आग्नीध्रभागस्यापि व्यपदेशः। सस्पृशता तमभि- मृशेदिति। इद ब्रह्मण इत्येवमादीनां नानाभूतानामादेशो [2]व्यादेश॰ ॥

(सू) अग्नीत्प्रथमान् होतृप्रथ[3]मान्वा ॥ ४ ॥ २७ ॥ ॥ ४८६ ॥

---

[व्यूहनोत्तरकालताया व्यादेशो लाभ॰]

(वृ) कृतेव्यू- मृशेदिति— अस्यार्थः,– नेहाब्राह्मणास्यास्तीत्यन्तेन व्यूहने [4]कृते त यजमानो व्यादिशति इदं ब्रह्मण इत्यादिना प्रतिदिश- मवस्थितानामेव हविर्भागाणा हस्तेन स्पृष्ट्वा व्यपदेशनम्। तदभिमृशे- दिद ब्रह्मण इत्यादिश्रुते न बहि.स्थापनानन्तर व्यादेश.। तानेव तद्भागिन करोतीत्यादिना दिक्ष्वेव प्रतितिष्ठतीति दिक्षु प्रतिष्ठापना- दुत्तरकालं व्यादेश॰; तदाह;—

[चतुर्धाकरणस्यावश्यकर्तव्यता]

इदं ब्रह्मण—व्यादेश इति—शंयुवन्तादिसंस्थापक्षेऽपि चतुर्धा- करणं ब्रह्मणः प्राशनाभावेऽपि प्रतिदिश व्यूहति दिक्ष्वेव प्रतिष्ठतीति पृथक्संस्कारत्वावगमात्। आशापालेभ्यश्चतुर्भ्यो अमृतेभ्य इदमिति मन्त्रवर्णाच्च दिक्पालनिर्बन्धाच्चतुर्धाकरणस्य इद ब्रह्मण इति तु निर्देशो लुप्यते। अथवा खण्डसस्थास्वपि संस्थिते भक्ष सर्वथा चतुर्धाकरणा- निवृत्ति॰ ॥

---

1 विविधमादिशति (रु) 2 व्यादेश –क ख ग घ 3 भागित्वेनादिश- तीत्यर्थ (रु) 4 हूने प्रतिदिशं कृते–क. घ

(सू) इदं यजमानस्येत्यध्वर्युर्यजमानभागं निर्दिश्य [1] स्थविष्ठमग्नीधे षडवत्तं संपादयति ॥ ५ ॥ ॥ २८ ॥ ४८७ ॥

[परिहरणे समुच्चयः]

(भा) परिहरणमाग्नीध्रभागस्यापि ॥ ४८७ ॥

(सू) [2] सकृदुपस्तीर्य द्विरादधदुपस्तीर्य द्विरभिघारयति ॥ ६ ॥ २९ ॥ ४८८ ॥

[उपस्तरणादिसंख्यानियमलाभः]

(भा) पात्राभ्यामितरयोरिति व्यपदेशात् ॥ ४८८ ॥

---

[परिहरणावसरः]

(वृ) **परिहरणमाग्नीध्रभागस्यापि**—पात्रेण षडवत्ते संपन्ने [3]।

[भाष्योक्तहेतूपपादनम्]

**पात्राभ्यामितरयोरिति व्यपदेशात्** [4];—अध्वर्योः परिहरणकर्तृत्वात्तद्व्यतिरिक्तद्वयावगतेः ।

---

[1] स्थविष्ठो भागो यथाग्नीध्रस्यात् तथा पूर्वमेव व्यादिश्य तमग्नीधे प्रथमाय प्रयच्छन् षडवत्त सपादयति (रु) [2] आग्नीध्रहस्ते सकृदुपस्तीर्य ततस्तं भाग द्वेधा कृत्वा एकमाधाय पुनरुपस्तीर्य अपरमवधाय द्विरभिघारयतीत्यर्थ (रु).
[3] इत ऊर्ध्व 'कथ सपादनमित्याह' इत्यधिक दृश्यते (मु रा.) नात्रत्येषु कोशेषु
[4] २९शे सूत्रे,—कस्मिंश्चित्पात्रे सकृदुपस्तीर्य आग्नीध्रभागं द्वेधा कृत्वा एक भाग पात्रेऽवधाय पुनरुपस्तीर्यापरमवधाय द्विरभिघारणं कृत्वा प्रयच्छति पात्रमग्नीधे 'पात्राभ्यामितरयोरिति व्यपदेशात्' इत्यधिक दृश्यते (मु रा)

३२शे सूत्रे,—असीनाभ्या ब्रह्मयजमानाभ्या वेदेनाहृत्य ब्रह्मयजमानभागौ प्रयच्छति इति (मु. रा)

३३शे सूत्रे,—भागौ परिति.

३४शे सूत्रे,—ब्रह्मणाऽपि स्वकाले भक्षणमिति ज्ञेयम् इति

३५शे सूत्रे,—अन्वाहार्यो नाम दक्षिणार्थमोदन त महान्तमृत्विग्भ्य पर्याप्त पचेत्, इति ग्रन्थास्तत्र तत्र दृश्यन्ते । लिखते तु न क्वापि दृश्यते.

(सू) [1]अपि वा द्विरुपस्तृणाति द्विरादधाति द्विरभिघारयति ॥ ७ ॥ ३० ॥ ४८९ ॥

(सू) अग्नेराग्नीध्रमस्यग्नेश्शामित्रमसि नमस्ते अस्तु मा मा हिँसीरित्याग्नीध्रो भक्षयति ॥ ८ ॥ ॥ ३१ ॥ ४९० ॥

(सू) [2]वेदेन ब्रह्मयजमानभागौ परिहरति ॥ ९ ॥ ॥ ३२ ॥ ४९१ ॥

(सू) [3]पृथक्पात्राभ्यामितरयोः ॥ ३३ ॥ ४९२ ॥

(सू) पृथिव्यै भागोऽसीति होता भक्षयत्यन्तरिक्षस्य भागोऽसीत्यध्वर्युर्दिवो भागोऽसीति [4]ब्रह्मा ॥ ॥ ११ ॥ ३४ ॥ ४९३ ॥

(सू) दक्षिणाग्ना[5]वन्वाहार्यं [6]महान्तमपरिमितमोदनं पचति ॥ १२ ॥ ३५ ॥ ४९४ ॥

(सू) क्षीरे भवतीत्येके ॥ १३ ॥ ३६ ॥ ४९५ ॥

(सू) तमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासाद्य ॥ ॥ १४ ॥ ३७ ॥ ४९६ ॥

तृतीया खण्डिका

---

[1] अथवा प्रथममेव द्विरुपस्तीर्य ततो द्विरवदाय द्विरभिघारयति (रु) [2] वेदेन हृत्वा यथास्थानमासीनाभ्या प्रयच्छति (रु) [3] भागौ परिहरतीति शेष । वेदादन्येन पात्रेण होतुर्भागम्, ततोऽन्येन पात्रेण चात्मन इत्यर्थ (रु). [4] ब्रह्मण स्वक एव भक्षणम् (रु) [5] अन्वाहार्य —दक्षिणार्थ ओदन (रु) [6] महान्तम्—यथर्त्विग्भ्य पर्याप्तो भवति अपरिमितमिति प्रस्थादिना तण्डुलपरिमाणप्रतिषेध, (रु)

(सू) [1]दक्षिणसद्भ्य उपहर्तवा इति संप्रेष्यति ॥ १ ॥ ॥ ३८ ॥ ॥ ४९७ ॥

[अन्वाहार्यार्थं मेलनीयाः]

(भा) इतरे दक्षिणतो गच्छन्ति । ब्रह्मा तु गत एव । तस्यापि दीयते ॥

(सू) ये [2] ब्राह्मणा उत्तरतस्तान् यजमान आह दक्षिणत एतेति ॥ २ ॥ ३९ ॥ ४९८ ॥

(सू) [3] तेभ्योऽन्वाहार्यं ददाति ब्राह्मणा [4] अयं ओदन इति ॥ ३ ॥ ४० ॥ ४९९ ॥

[प्रतिग्रहे मन्त्रः हस्तनियमश्च]

(भा) अन्वाहार्यो दक्षिणा यतः [5]अतो ब्रह्मण ओदन इति मन्त्रः । प्रतिग्रहणं च दक्षिणहस्तेन सर्वदक्षिणानाम् । व्यावृत्य प्रतिगृह्णीयादिति लिङ्गात् ॥ ४९९ ॥

---

[अन्वाहार्यदाने दिगवस्थितिनियमलाभः]

**इतरेद्–दीयते**—ये ब्राह्मणा उत्तरतस्तान् यजमान आह दक्षिणत एतेति तेभ्योऽन्वाहार्यं ददातीति उदगवस्थिताना दक्षिणतो गतानामेवान्वाहार्यदानम् तेभ्य इति निर्देशादित्याशङ्कयाह—तस्यापि दीयत इति ॥

[प्रतिग्रहे नियमलाभप्रकारः]

**अन्वाहार्यो–सर्वदक्षिणानाम्**—ताᳪस्वायैव हस्ताय दाक्षिणायानयदिति लिङ्गात् ।

[व्यावृत्यप्रतिग्रहशब्दार्थः]

**व्यावृत्त्य–लिङ्गादिति**;—[6]पृथक्त्वात्मान प्रतिग्रहीतार च

---

[1] यजमान सप्रेष्यति दक्षिणत स्थितेभ्य ऋत्विग्भ्यो दक्षिणा त्वयोपहर्तव्येति (रु). [2] अध्वर्य्वादय । स्थित एव तु ब्रह्मा दक्षिणत (रु). [3] तेभ्यश्चतुर्भ्य (रु) [4] अयं व ओदन इति–ख. [5] अतोऽत्र–क. [6] पृथक्कृत्यात्मान–घ. कृत्वा–क.

(सू) [1]प्रतिगृहीत उत्तरतः परीतेति संप्रेष्यति ॥४॥ ॥४१॥५००॥

[प्रैषकर्तरि पक्षौ]

(भा) उत्तरत परीतेति याजमानम् [2]बहुवचनान्तत्वात् तेन चोक्त-त्वाद्दक्षिणत एतेति। उपदेशस्त्वाध्वर्यवमितिउक्तस्सप्रैष इत्येकवचनात् ॥

(सू) हविश्शेषानुद्रास्यापि [3]सृज्योल्मुके ब्रह्मन्

---

देवतारूपमिति प्रतिग्रही[4]तृत्वादात्मानमन्यत्वेन ध्यात्वा प्रतिग्रहणम्—हस्तेनोपादानम् ॥

[आध्वर्यवप्रैषे विशेषहेतुः]

**उत्तरतः प—न्तत्वादिति**—आध्वर्यवे तु प्रैषे द्विवचनं स्यादाग्नीध्रहोत्रो प्रेष्यत्वात्।

**तेनचो—तेति**—यजमानेनोक्तत्वात्।

[प्रैषकर्तरि पक्षभेदोपपादनम्]

**उपदेश—वचनात्;**—उक्तस्सप्रैष· इत्येकस्य प्रैषस्य वचनात् याजमानत्वादाध्वर्यवकाण्डत्वात् द्वितीयस्याध्वर्यवत्वमेव प्रथमस्य तु दानार्थत्वाद्याजमानार्थत्वम्। पूर्वव्याख्याने उक्तस्सप्रैष इति जात्यभि-प्रायमेकवचनम्। यथाप्राप्तानुवादत्वादुत्तरस्मिन् व्याख्याने उत्तरतः परीतेति बहुवचन जात्यभिप्रायेणाविवक्षया वा। अविदहन्तश्श्रपयतेति वचनात् ॥

[सूत्रोक्तसंमार्गप्रैषसंभवः]

**अपि सृज्योल्मुके इति**—अनूयाजार्थे प्राची उल्मुके[5] उदूह-तीत्यास्मिन् पक्षे ॥

---

[1] तै 'दीक्षणा प्रतिग्रहीष्यन्निति' विधिना प्रतिगृहीत ओदने उत्तरत आगतान् सप्रेष्यति। यजमान इनि शेष परीतेति वचनात् (रु) [2] बहुवचनत्वात्—क. I. बहुवन्ननत्वात् [2] चोधितत्वात्—ग II [3] ये पूर्वमुल्मुके उदूढे, ते प्रत्यूह्य संप्रेष्यति। ब्रह्मन् प्रस्थास्याम इति अनूयाजार्थं प्रतिपद्यामहे तदर्थं प्रसुहीति। अग्नीत्त्वमपि सीमधमादाय सम्मृड्ढीति। (रु). [4] ग्रहीतुरात्मानमात्मत्वेन —घ [5] व्यूहतीत्य—क.

**प्रस्थास्यामस्समिधमाधायाग्नीत्परिधीꣳश्चाग्निं च सकृत्सकृत्संमृड्ढीति संप्रेष्यति ॥ ४२ ॥ ५०१ ॥**

**(सू)** [1] **अनुज्ञातो ब्रह्मणा आग्नीध्रः समिधमादधात्येषा ते अग्ने समित्तया वर्धस्व चाच प्यायस्व वर्धतां च ते यज्ञपतिराच प्यायतां वर्धिषीमहि च वयमा च प्यायिषीमहि स्वाहेति ॥ ६ ॥ ४३ ॥ ५०२ ॥**

[सूत्रे विवक्षितार्थानुगुणयोजना]

(भा) अनुज्ञातो ब्रह्मणा यदाऽऽग्नीध्रः तदा आग्नीध्रास्समिधमादधाति॥

**(सू) पूर्ववत्परिधीन् सकृत्सकृत्संमृज्याग्ने वाजजिद्वाजं त्वा ससृवाꣳसं वाजं जिगिवाꣳसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्मि अग्निमन्नादमन्नाद्यायेति सकृदग्निं प्राञ्चम् ॥ ७ ॥ ४४ ॥ ५०३ ॥**

---

[भाष्यदर्शितयोजनापूरणम्]

(वृ) अनुज्ञातो ब्रह्मणाऽऽग्नीध्रो—यदा अध्वर्युस्तदा ।

[उक्तयोजनाऽऽवश्यकत्वोपपादनम्]

**समिधमादधातीति**—अस्यार्थ अनुज्ञात आग्नीध्र. समिधमादधातीति नैवमन्वय ब्रह्मन् प्रस्थास्याम इत्यध्वर्युणा प्रार्थितत्वात् तस्यैवानुज्ञान ब्रह्मणा कृतम्; अतस्तथा योज्यम् । न च प्रस्थास्याम इति बहुवचनात् सर्वार्थप्रार्थनम्! प्रतिष्ठेत्येकवचनेनानुज्ञानात् ॥

---

[1] ननु आमन्त्रायताऽध्वर्युरेव हि ब्रह्मणानुज्ञातव्य ? कथमाग्नीध्र ? उच्यते अध्वर्युणा तावत् ब्रह्मन् प्रस्थास्याम इति बहुवचन सर्वर्त्विगर्थमामन्त्रणमुक्तं ब्रह्मणोप्यों प्रतिष्ठेति बहुवचनार्थैनैकवचनेन सर्वार्थ एव प्रसव कृत , तेनाग्नीध्रस्याप्यनुज्ञातत्वाद्युक्तमेव तथा वक्तुम् । अथवाऽनूयाजप्रक्रमार्थमों प्रतिष्ठेत्याग्नीध्रस्यैवानुज्ञा । यथाऽऽहाश्वलायनः ओं प्रतिष्ठेति समिधमनुजानीयादिति (रु)

(सू) इध्मसन्नहनान्यद्भिस्सं[1]स्पर्श्य यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहेत्यग्नौ प्रहरत्युत्करे वा न्यस्यति [2]शालायां [3]वलजायां [4]परोगोष्ठे परो[5]-गव्यूतौ वा ॥ ८ ॥ ४५ ॥ ५०४ ॥

॥ चतुर्थी खण्डिका ॥

[एतद्धोमेदेवताविषये मतिभेदसूचनम्]

(भा) अध्वर्योरिध्मसंनहनाधानम्। अत्र रुद्रो देवतेति केचित्। वलजा- तृणराशिर्धान्यराशिर्वा वशेषु भवस्सपुटको वा। परोगोष्ठे—गोष्ठात्परत.। उपरिगोष्ठ इत्युपदेश। गव्यूति. गोमार्ग.। परोगव्यूति —परतो गोमार्गात्॥

॥ इति श्रीआपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये तृतीये प्रश्ने प्रथम. पटल ॥

---

(वृ) अध्वर्यो—नमिति—समार्गान्तस्य प्रेषितत्वात्। तद्व्यतिरिक्तानामाध्वर्यवत्वात्॥

[अपामुपस्पर्शने हेतुसत्त्वपक्षस्वपक्षौ]

अत्र रुद्रो देवतेति केचित्—केवलो रुद्र इत्यर्थ.। तदानीमपामुपस्पर्शनम्। स्वमतेन तु मान्त्रवर्णिकविशेषणविशिष्ट·। तदा नापामुपस्पर्शनम्॥

इति धूर्तस्वामिभाष्यवृत्तौ तृतीये प्रश्ने प्रथम पटल ॥

---

[1] स्पृश्य—ख [2] अग्निशालायाम्। (रु) [3] वलजा—धान्यराशिः बन्धनार्था रज्जुरित्येके [4] परो गोष्ठाद्यो देश तस्मिन्. (रु)

(सू) औपभृतं जुह्वामानीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽग्रेणाघारसम्भेदं प्रतीचस्त्रीननूयाजान् यज[1]त्याश्रावमाश्रावं प्रत्याश्राविते देवान् यजेति प्रथमं संप्रेष्यति यजयजेतीतरौ ॥ १ ॥ १ ॥ ५०५ ॥

(सू) पूर्वार्धे प्रथमꣳ समिधि जुहोति मध्ये द्वितीयं प्राञ्चमुत्तमꣳ [2]सꣳस्थापयन्नितरावनुसंभिद्य ॥ २ ॥ ॥ २ ॥ ५०६ ॥

[सूत्रोक्तप्रैषसंम्बान्धिनिर्देशः अनूयाजसमिन्मानं च]

(भा) देवान् यजेति सर्वार्थः । उत्तरावनूयाजौ [3]द्वियजौ ।

---

[भाष्योक्तसर्वार्थत्वोपपत्ति·]

(वृ) **देवान् यजेति सर्वार्थः**—[4]बहुवचनात् । प्रथमꣳसंप्रेष्यतीति प्रथमयागार्थ[5]मेव । सर्वार्थत्वेऽपि प्रथमस्योपरितनसप्रैषापेक्षया प्रथमप्रयोगमात्रत्वम् । अतः ;—

[अनूयाजसमिन्मानोपपत्तिः]

**उत्तरावनू–संभेदम्**–दभ्रिका–ह्रस्वा । आघारसंभेदस्य पूर्वभागमात्रपर्यवसिता द्विप्रादेशादिध्मायाम[6]पक्षार्थमिदमुच्यते । पक्षान्तरे सर्वसमिधां प्रादेशमात्रत्वादग्रेणाघारसंभेद प्रतीचस्त्रीनित्यु[7]क्त्वा पूर्वार्धे प्रथम द्वितीय मध्ये [8]प्राञ्चमुत्तममितरावनुसभिद्येति निर्देशाद्दभ्रिका । तदाह ,—

---

[1] त्याश्राव्यप्रत्याश्राविते–क [2] सꣳस्पृशयन्–ख तत पश्चादुत्तममारभ्य प्राञ्चमपवर्जयन् पूर्वहुतावनूयाजौ संसृज्य जुहोति । अत्र बोधायन ,—किन्देवत्या खल्वनूयाजा इति [2] आग्नयो इत्येव ब्रूयात् । विज्ञायते च तान् देवा आहुतीभिरनूयाजेष्विति (रु) [3] द्वियजे–क [4] चनत्वात्–क ख ग. [5] र्थत्वमेव–ख ग [6] यामपेक्षार्थ [2]–क. यामोपक्षार्थ (मु रा) [7] त्युक्त्वात् (मु रा) [8] प्राच–ख. ग.

[1] दभ्रिका अनूयाजसमित् [2] यावदग्रेणाघारसंभेदम् । तस्य मध्ये [3] मध्यमः उत्तमस्तस्यापरेण । सोऽप्यग्रेणाघारसंभेद प्राक्सस्थ. । इतरौ तेन संभिद्येते ॥

(सू) प्रत्याक्रम्यायतने स्रुचौ सादयित्वा [4] वाजवतीभ्यां [5] व्यूहति ॥ ३ ॥ ३ ॥ ५०७ ॥

(भा) वाजवतीभ्यामिति [6] परिज्ञानार्थमुत्तरो विधि ॥

(सू) [7] वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनोत्तानेन [8] सप्रस्तरां जुहूमुद्यच्छति । अथासपत्ना-

---

(वृ) तस्या मध्ये–प्राक्संस्थ इति—संभेदाभावेऽपि तद्देशोदारभ्य देशलक्षणत्वात् ॥

इतरौ तेन संभिद्येते – संसृज्येते ॥ ४७ ॥४६९ ॥

[भाष्ये विवक्षितं परिज्ञानं पुनरुक्तिफलंच]

वाजवतीभ्यामिति परिज्ञानार्थमुत्तरो विधिरिति — वाजवतीत्वमृग्द्वित्व च ज्ञेयम् । यद्यपि बहुमन्त्रत्वं तथापि वाजस्य मा प्रसवेनेति दक्षिणेन हस्तेनेत्यादिव्यूहनविधानादेव सिद्धे पुनर्वचनं ध्यानार्थमेव ॥

---

[1] भ्रिका आहिता अनुयाज–क. [2] अग्रेणाघारसंभेदम् I, यावद्ध्रुवत्यग्रेणाघारसम्भेदम्–क II [3] मध्ये द्वितीयम् उत्तम–क [4] वक्ष्यमाणाभ्याम् तत्र द्वितीयस्य वाजवतीत्व प्राणभृत्साहचर्या दृष्टव्यम् (रु) [5] विविधं गमयति स्रुचौ (रु), [6] ज्ञानार्थमुत्तमो–क [7] वाजवतीभ्या व्यूहतीति कर्मविधिब्राह्मण व्याचष्टे (रु). [8] सप्रस्तरा–ख [9] अस्मिन् सूत्रे ‘दक्षिणेन हस्तेन ‘जुहू प्रोहति–प्रागग्रं गमयति’ इत्यधिक दृश्यते. (मु. रा)

निति सव्येनोपभृतं [1]नियच्छति ॥४॥४॥ ॥५०८॥

(भा) नियच्छति—पीडयति ॥

(सू) [2]उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेत्युपभृतं नियच्छति ॥५॥५॥५०९॥

(सू) ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूं प्रोहति ॥६॥६॥५१०॥

(सू) अथासपत्नानिति सव्येनोपभृतं प्रतीचीं बहिर्वेदि निरसित्वा प्रोक्ष्यैनामभ्युदाहृत्य जुह्वा परिधी[3]ननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरम् ॥७॥७॥५११॥

[अञ्जनव्यवस्था]

(भा) अञ्जनमेकदेशस्य समस्तस्यासंभवात् ॥

(सू) न प्रस्तरे जुहूं [4]सादयति ॥८॥८॥५१२॥

(सू) संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्यावतामिति विधृतीभ्यां प्रस्तरमपादाय बर्हिषि

---

[सूत्रोक्ताञ्जने व्यवस्थाहेतुनिर्वाह.]

(वृ) प्रतीचीं बहिर्वेदि निरसित्वेति;—प्रत्यगग्राम् अञ्जन—वात्;—अल्पत्वादाज्यस्य परिधीनामधोभागाञ्जनाशक्तेश्च परिध्येकदेशस्याञ्जनम् ॥

---

[1] निगृह्णाति (रु) [2] अत्रोभयं दक्षिणेन हस्तेन, सव्याग्रहणात्, उपरि पुनस्सव्यग्रहणाच्च (रु) [3] जुह्वाज्यलेपेन सर्वाञ्जनासभवात्परिध्येकदेशानामञ्जनम् (रु) [4] वेद्यामेव बर्हि प्रस्तरात् सादयति (रु).

विधृती अपिसृज्य स्रुक्षु प्रस्तरमनाक्ति ॥ ९ ॥ ९ ॥
॥ ५१३ ॥

पञ्चमी खण्डिका ॥

---

(सू.) अक्त ँ रिहाणा इति जुह्वामग्रं प्रजां योनिमित्युपभृति मध्यम्। आप्यायन्तामाप ओषधय इति ध्रुवायां मूलम् [1] एवं त्रिः ॥ १ ॥ १० ॥ ५१४ ॥

(सू.) अपि वा दिव्यङ्क्ष्वेति जुह्वामग्रं अन्तरिक्षेऽ-[2] ङ्क्ष्वेत्युपभृति मध्यम् । पृथिव्यामङ्क्ष्वेति ध्रुवायां मूलम् ॥ २ ॥ ११ ॥ ५१५ ॥

(सू.) [3]एवं पुनः ॥ ३ ॥ १२ ॥ ५१६ ॥

(सू.) अथापरम्। पृथिव्यै त्वेति ध्रुवायां मूलम्। अन्तरिक्षाय त्वेत्युपभृति मध्यम्। दिवे त्वेति जुह्वामग्रम् ॥ ४ ॥ १३ ॥ ५१७ ॥

(सू.) आयुषे त्वेत्य[4]क्तस्य तृणमपादाय प्रज्ञातं निधाय [5] दक्षिणोत्तराभ्यां पाणिभ्यां प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्य आसीन आश्राव्य प्रत्याश्राविते संप्रैष्यति इषिता दैव्या होतारो भद्रवाच्याय मानुषस्सूक्तवाकाय सूक्ता ब्रूहीति ॥ ५ ॥ १४ ॥ ५१८ ॥

---

[1] एव त्रिरिति वचनात् समन्त्रकस्यावृत्ति (रु). [2] मन्त्रमात्रे विकल्प (रु). [3] एव त्रिरित्यर्थ· (रु) [4] अक्तस्य प्रस्तरसम्बन्धितृणम् (रु) [5] दक्षिण उत्तरोययोस्तौ तथोक्तौ (रु)

[तृणापादाने विशेषः]

(भा) अक्तस्येति वचनाद्वेदतृणस्याप्यपादीयत एकदेशः। दक्षिणो-त्तराभ्यां दक्षिण उपरिहस्तः ॥

[आश्रावणे व्यवस्था]

[1] आसीनस्याश्रावण तिष्ठतोऽवचनात् ॥

[प्रत्याश्रावणफलम्]

प्रत्याश्रावणमलोपार्थम् ॥

(सू) अनूच्यमाने [2] सूक्तवाके मरुतां पृषतयः स्थेति

---

[एकदेशापादानोपपत्तिः]

(वृ) [3]अक्तस्येति वचना—एकदेशः—अक्तस्य तृणमपादायेत्येकदे-शाभि[4]प्रायत्वात् षष्ठीनिर्देशस्य वेदात्तृणमपादायेत्यत्राप्येकदेशापादानम्।

दक्षिणो—हस्तः—साव्योऽधस्तात्।

[आश्रावणव्यवस्थासमर्थनम्]

आसीनस्या—चनात्—अस्यार्थ,—आसीनस्सम्प्रैष्यतीति [5] नैव सबन्ध., यद्यपि क्रियासबन्धः शब्दानां मुख्य. तथाऽपि तिष्ठत. प्रैषनियमाभावेन प्रयोजनाभावात् तिष्ठन् स्रुच वायव्य चमस वाऽनन्वारभ्याश्रावयेदिति सर्वत्र नियमात् अत्रासीनविधानं प्रयोजन-वदिति तेन सबध्यते।

[अन्यथा लोपापत्तिः]

प्रत्याश्रावणमलोपार्थमिति—यद्यासीन आश्राव्य सम्प्रेष्य-तीत्येतावद्ब्रूयात् आश्रावणोत्तरकाल प्राप्तस्य प्रत्याश्रावणस्य लोपस्स्यात्। आश्रावणोत्तरकालमेव प्रैषप्रतीतेः ॥

---

[1] अयं ग्रन्थ क–पुस्तके न दृश्यते. [2] सूक्तवाको नाम इष्टदेवतानु-कीर्तनार्थ 'इद द्यावापृथिवी' इत्यनुवाक (रु) [3] अक्तस्येति वचनादिति वाक्य ५१ तमसूत्रे भाष्यान्ते योजितम् (मु रा). [4] भिप्रायात्–क. [5] नैव—ख ग

**सहशाखया प्रस्तरमाहवनीये प्रहरति ॥ ६ ॥ १५ ॥ ॥५१९॥**

**[पवित्रस्यापि प्रहरः शाखायां विशेषः प्रस्तरस्याहुतित्वं च]**

(भा) सहशाखयेति सपवित्रा प्रह्रियते । कालमात्रं चास्याः । अतस्सवनीयेषु सूक्तवाको नोच्यते । प्रस्तरः आहुतिः । सूक्तवाको याज्येति श्रुते· । मन्त्रेण च प्रहरणम् ॥

---

**[प्रस्तरे प्रहरे पवित्रसाहित्यहेतु·]**

(वृ) **सहशा–प्रह्रियते**—त्रिवृत्पवित्रेण सह तस्यापि कृतप्रयोजनतया प्रतिपाद्यत्वात् ॥

**कालमात्रं चास्याः**—शाखाया ।

**[शाखाया अनाहुतित्वफलम्]**

**अतः स–नोच्यते**—न तस्या· प्रस्तरेण सह [1] यागद्रव्यता सूक्तवाकेन प्रस्तरमिति तस्यैव यागान्वयात् । अतोऽत्र सवनीयाना शाखाप्रहरणमित्यस्मिन् पक्षे शाखार्थं सूक्तवाको नोच्यते ॥

**[भाष्योक्तप्रस्तरशाखावैलक्षण्यसमर्थनम्]**

**प्रस्तर–श्रुतेः**—प्रस्तरद्रव्ययागे सूक्तवाको याज्येति न शाखाप्रहरणाङ्गता सूक्तवाकस्य । आहुतियाज्यानिर्देशाद्देवतोद्देशेन द्रव्यत्यागे कृते प्रक्षेपात्मक प्रहरणम् । तस्मात् अग्निर्होत्रेणेदं हविरजुषते- [2] त्यादे पश्चाद्दक्षिणेन पाणिना सहशाखया [3] प्रस्तरमग्नावाहवनीये प्रहरति नोभाभ्याम् न्यञ्चं हस्त पर्यावर्तयन्निति विमोक[4] वचने एकस्यैव दर्शनात् । प्रस्तराभावे च अग्नौ वैश्वानरादिषु न सूक्तवाक· ॥

**[प्रहरणमन्त्र·]**

**मन्त्रेण च प्रहरणम्**—मरुता पृषतय. स्थेति ॥

---

[1] प्रक्षेप्तव्यता—क  [2] त्यादे —क  त्येतस्य—घ.  [3] प्रस्तरमाहवनीये (मु. रा) प्रस्तरमग्नौ—क घ.  [4] वचनमेकस्यैव(मु. रा).

(सू) न [1] स्वाहाकरोति ॥७॥१६॥५२०॥

[स्वाहाकारनिषेधफलं पक्षान्तरं च]

(भा) तत्राप्राप्तस्य स्वाहाकारस्य प्रतिषेधाद्वषट्कार[2]प्रदानेष्वपि मन्त्रवत्सु वपा[3]होमादिषु स्वाहाकारः कर्तव्य इति ज्ञापयति। केचित्तु स्वाहाकारप्रतिषेधा[4]द्यदग्नौ प्रक्षिप्यते समिदादि [5]तत्र स्वाहाकार कुर्वन्ति ॥

(सू) न विधूनोति नावधूनोति न विक्षिपति न प्रमार्ष्टि न प्रतिमार्ष्टि नानुमार्ष्टि नोद[6]ञ्चं प्रहरेत् ॥८॥१७॥५२१॥

---

[ज्ञापकत्वोपपत्ति]

(वृ) तत्राप्राप्तस्य—ज्ञापयति—यद्यपि वषट्कारस्वाहाकारयो॰ [7]प्रदानार्थतया [8]विकल्प, तथाऽपि वपादिष्वाध्वर्यवमन्त्रस्यापि करणमन्त्रत्वात् स्वाहाकारप्राप्ति॰। सूक्तवाकस्य [9]याज्यात्वेऽपि वषट्कारविधानाभावात् प्रहरणसाधनतया विधिबलेन यागस्य कल्प्यत्वाद्वषट्कारनिवृत्ति॰। अत एवाध्वर्यवमन्त्रे स्वाहाकारप्रतिषेधादप्राप्ति[10]षिद्धेषु स्वाहाकारः प्रयोक्तव्य इति ज्ञापितम् ॥

[पक्षान्तरे आहुतित्वे साधकान्तरमपि]

केचित्तु स्वाहाकार—कुर्वन्ति—देवताप्रका[11]शकमन्त्रयोगादप्याहुतय इति ॥

---

1 अजुहोतित्वेनाप्राप्तविाप जैमिनीयमतेनाशङ्कित स्वाहाकारोऽत्र निषिध्यत इति रुद्रदत्त 2 प्रधानेष्वपि—घ 3 होमेषु—ग 4 यद्यदग्नौ—क 5 तत्र तत्र—ख. ग 6 उदञ्चम्—उदगग्रम्—ख (रु) 7 प्रधाना—ख ग 8 सङ्कल्प—क प्रधानार्थयोर्विकल्प—घ. 9 याज्यार्थत्वेऽपि—क 10 षिद्धे (मु रा). 11 शन—(मु रा)

(भा) विधूनन कम्पनम् अवाचीन कम्पनमवधूननम् । विक्षेपो विचालनम् । दक्षिणत उत्तरतो वा ॥

(सू) [1] **तिर्यञ्चं हस्तं धारयन् कर्षन्निवाहवनीये प्रहरति ॥९॥१८॥५२२॥**

[प्रहरणपदार्थ·]

(भा) प्रतिशरणमङ्गारेषु कुट्टनम् ॥

(सू) **न [2] प्रतिशृणातीत्युक्तम् ॥१०॥१९॥५५३॥**

[श्रुतिदर्शितात्यग्रपदार्थ ]

(भा) अत्यग्रमतीताग्रमग्नेः ॥

---

(वृ) **विधूननं उत्तरतो वा**—न प्रमार्ष्टीत्यादि पूर्वमेव व्याख्यातम् । नोदगग्रस्य प्रहरणम् ॥

[सूत्रोक्तधारणक्रम ]

**तिर्यञ्चं हस्तं धारयन्निति**—दक्षिणहस्तमुपरिस्थमेव अधस्ता[3]-दुत्तानम् उदगग्रम् दक्षिणाग्रमुत्तानम् ॥

[कुट्टनस्य प्रहरणत्वोपपत्तिः]

**प्रतिशरणमङ्गारेषु कुट्टनम्**—कर्षन्निवेति वचनात् । प्रतिशरणस्याङ्गारेषु गूहनप्राप्तौ सत्याम् ॥

[सूत्रदर्शितनिषेधस्याकरः]

**न प्रतिशृणातीति**—ब्राह्मणे निषेधः ।

[श्रुतिदर्शितप्रहरप्रकारविवरणम्]

**अत्यग्रम्**—अतिगताग्रमग्नेः । नात्यग्र प्रहरेदित्यग्ने पुरस्तादग्राणि यथा न भवन्ति तथा प्रहरेत् । न पुरस्तात्प्रत्यस्येदित्याहवनीयस्य पुरस्तात् प्रक्षेपो न कर्तव्य ॥

---

[1] अधस्तादुत्तानोदङ्मुखाङ्गुलिकम् जिह्म धारयन्मुष्टिनैव सहकर्षन्निव शनैश्शनै प्रहरति । जिह्ममिव हस्त धारयन् इत्येव सत्याषाढभारद्वाजौ (रु) [2] यथा प्रस्तरप्रमार्दिता अङ्गारा प्रतिशीर्णा न भवन्ति तथा प्रहरति तथोपरीव प्रहरतीति नियच्छति नात्यग्र प्रहरेदित्यादि द्रष्टव्यम् । नात्यग्रम्—यथाऽग्निमतीत्याग्रं गत न भवतीत्यर्थ (रु). [3] स्ताद्दक्षिणाग्रमुत्तानम्—क.

(सू) प्रथयित्वा [1] प्रहरेद्यं कामयेत स्त्रथस्य जायेतेति ॥ ११ ॥ २० ॥ ५२४ ॥

(सू) [2] आशीः प्राति प्रस्तरम[3]वसृजति ॥ १२ ॥ ॥ २१ ॥ ५३५ ॥

षष्ठी खण्डिका ॥

---

(भा) अवसृजति—मुञ्चति ॥

(सू) न्यञ्चं हस्तं पर्यावर्तयन् ॥१॥ २२ ॥ ५२६ ॥

[4] अग्नीद्गमयेति संप्रेष्यति ॥२॥ २३ ॥ ५३७ ॥

(सू) त्रिरञ्जलिनाऽग्नीध्रोऽ[5]विष्वञ्चं प्रस्तरमू[6]र्ध्वमुद्यौति रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रम् ॥ ३ ॥ २४ ॥ ५३८ ॥

(भा) अविष्वञ्च—असर्वतोऽ[7]ग्रम् ॥

(सू) अथैनमाहाग्नीध्रोऽनुप्रहरेति ॥४॥२५॥५३९ ॥

---

(वृ) प्रथयित्वा प्रहरेद्य कामयेत स्त्रयस्य जायेतेत्येक सूत्रम् ।

[अवसर्जने काल.]

**अवसृजति–मुञ्चति**—आयुराशास्ते इत्यादिषूच्यमानेषु प्रस्तर विसृजति दक्षिण हस्त पर्यावर्तयन् ॥

[असर्वतोग्रत्वस्वरूपम्]

**आविष्वञ्चम्–असर्वतोग्रम्**–सघट्टिताग्र ऊर्ध्वमुत्क्षिप्य प्रह[8]रति॥

---

[1] न प्रथयितव्यमित्यर्थ (रु) [2] होतुराशीर्वचनकाले (रु) [3] विसृजति (रु) [4] प्रस्तरमग्निं गमयेति सप्रैषार्थ (रु) [5] सर्वतोऽग्रम् (रु) [6] ऊर्ध्वमुद्यौति—यथोद्यतस्सर्वोऽग्निं गामितस्स्यात्तथोद्यम्य प्रहरति (रु) [7] ग्रामपि—अ. [8] प्रहरेत् (मु रा).

(सू.) यत्प्रस्तरात्तृणम[1]पात्तं तदनुप्रहरति स्वगा तनुभ्य इति ॥ ९ ॥ २६ ॥ ५४० ॥

(सू.) एत[2]देतादिति त्रिरङ्गुल्या निर्दिश्याग्निमभिमन्त्रयत आयुष्पा अग्नेऽस्यायुर्मे पाहीति ॥६ ॥ २७ ॥ ॥ ५४१ ॥

(सू.) ध्रुवासीत्यन्तर्वेदि पृथिवीमभिमृशति ॥ ७ ॥ ॥ २८ ॥ ५४२ ॥

(सू) अथैनमाहाग्नीध्रस्संवदस्वेति ॥ ८ ॥ २९ ॥ ॥ ५४३ ॥

(सू.) [3] अगानग्नीदित्यध्वर्युराह अगन्नित्याग्नीध्रः । श्रावयेत्यध्वर्युः श्रौषडित्याग्नीध्रः ॥९॥३०॥५४४॥

[एतदेतादिति निर्देशभावः]

(भा) एतदित्येतावता सवाद प्रहृतमेतदिति ॥

---

[भाष्यदर्शितसंवादप्रदर्शनम्]

( ) एतादित्येता—मेतादिति—अस्यार्थ· , — - अनुप्रहरेत्याग्नीध्रेणोक्तोऽध्वर्यु स्वगा तनुभ्य इति प्रहृत्य आग्नीध्रेण सवाद करोत्येतत्प्रहृतामिति । एतदित्येतावान्मन्त्र· । तस्याभ्यस्तप्रयोगार्थं पुनर्वचनम् । अङ्गुल्या निर्देशस्सवादाङ्गभूत प्रत्यक्षक्रि[4]यासहितसवादद्योतनाय अगानग्नीदित्यादि च सवाद· । अगानग्नीत्—किमग्निमगमत्प्रस्तर इत्यर्थ· । न केवल मिथो भाषणात्मकः । पूर्वस्य [5]समन्त्रक्रियारूपसंवादत्वात् उत्तरस्य च सभाषणरूपत्वात् तत्र सवदस्वेति [6] प्रैषः ॥

---

[1] मुपात्त—ग [2] एतादित्यङ्गुल्या तदेव तृणं दर्शयित्वा (रु) [3] सवादमेव दर्शयति (रु) [4] क्रियोपहितसं (मु रा), क्रियास—क, [5] समन्त्रक— (मु रा) [6] संप्रैषः—(मु रा),

(सू.) मध्यमं परिधिमन्वारभ्य संप्रेष्यति स्वगा दैव्या होतृभ्यः स्वस्ति [1]मानुषेभ्यश्शंयोर्ब्रूहीति ॥ १० ॥ ३१ ॥ ५४५ ॥

(सू.) अनूच्यमाने शंयुवाक आहवनीये परिधीन् प्रहरति ॥ ११ ॥ ३२ ॥ ५४६ ॥

[सूत्रस्य प्रहरणकालमात्रपरत्वं फलं च]

(भा) न परिधिप्रहरणार्थश्शयुवाकः । अतो गार्हपत्येऽपि भवति ॥

(सू.) यं परिधिं पर्यधत्था इति मध्यमं यज्ञस्य पाथ उप[2]समितामितीतरौ ॥ १२ ॥ ३३ ॥ ५४७ ॥

(सू.) [3] उत्तरार्ध्यस्याग्रमङ्गारेषू[4]पोहति ॥ १३ ॥ ३४ ॥ ॥ ५४८ ॥

(सू.) यजमानं प्रथतेति परिधीनभिमन्त्रय जुहू-मुपभृतोऽग्रमवधाय सꣳस्रावभागा इति सꣳस्रा-वेणाभिजुहोति ॥ १४ ॥ ३५ ॥ ५४९ ॥

---

[परिधिप्रहरणानङ्गत्वतत्फलयोरुपपत्तिः]

(वृ) **न परिधि–वाक इति**—अनूच्यमाने शयुवाके इति निर्दे-शात् परिधिप्रहरणार्थता यद्यपि प्राप्ता, तथाऽपि प्रस्तर आहुतिः सूक्त-वाको याज्येतिवत् वचनाभावात् न परिधिप्रहरणार्थश्शयुवाकः। अनूच्य-मान इति प्रहरणस्य कालमात्रम् ॥

**अतो गार्हपत्येऽपि भवतीति**—परिधिप्रहरणाभावेऽपि शंयु-वन्त गार्हपत्ये इत्यस्मिन् पक्षे ॥

---

[1] र्मा—क ख [2] युगपदितरयो प्रहरण समितामिति लिङ्गात् (रु). [3] उत्तरार्धस्या—ख. [4] उपगूहति (रु).

[संस्रावहोमाङ्गिव्यवस्था पक्षान्तरं च]

(भा) [1]सस्रावेणा[2]भिहोम परिध्यङ्गम् । अतो न गार्हपत्ये । केचित् वसवो रुद्रा आदित्यास्सऽस्रावभागा इति देवतार्थत्वाद्विनापि परिधिभिर्गार्हपत्येऽपि कुर्वन्ति ॥

(सू) [3]अत्रैवर्त्विजो हविश्शेषान् भक्षयन्ति ॥ १५ ॥

॥ ३६॥ ५५० ॥

सप्तमी खण्डिका ॥

---

[सौत्रावधारणफलं पक्षान्तरं च]

(भा) अत्रैवेति हविश्शेषावधारणात् कृत्वा हविश्शेषभक्षण हारियोज-

---

[परिध्यङ्गत्वपक्षोपपत्तिः]

(वृ) **सऽस्रावेणा–र्हपत्ये**—परिधीन् प्रहरतीत्युक्त्वा स्रुचौ [4]सस्राववयतीति विधाय यदेव तत्र क्रूर तत्तेन शमयतीति निर्देशात् प्रहरणनिमित्तदोषपरिहारावगते. [5]तदर्थता । तथाऽपि परिधीन् प्रहृत्य सस्रावान्त कृत्वेति (आ. श्रौ ८–३–६) च विधानात् ॥

[गार्हपत्येऽपि संस्रावहोमपक्षसमर्थनम् ]

**केचित् – कुर्वन्तीति** — पश्चाच्छयुवन्तपक्षे आरादुपकारकत्वात् परिधीन् प्रहृत्य सस्रावान्त कृत्वेति च पृथगुपादान परिधिप्रहरणानङ्ग[6]त्वे संगच्छते । अत परिधिषु प्रहृतेषून्नेता हारियोजनाम् (आ.श्रौ. १३–१७–१) इत्यत्र संस्रावात्पूर्वमपि हारियोजनग्रहण [7]भक्षान्तं वाजिनप्रचारः । सस्रावान्तं कृत्वेति विधानादुत्तरकाल एव ॥

[अवधारणतात्पर्यविवरणम् ]

**अत्रैवेति—प्रचरन्तीति**—अत्रैवेत्यवधारणात् परिधिप्रहरणा-

---

[1] सस्रावहोम परिध्यङ्ग तदभिहोमत्वात् । प्रहृत्य परिधीन् जुहोतीति वाजिन ब्राह्मणस्य परिधीन् प्रहृत्य सस्रावान्त कृत्वेति व्याकरणाच्च । अतोऽसौ न निवर्तते प्रायणीयायाम् । [2] स्रावाभिहोम (मु रा) [3] अस्मिन् काले भक्षयान्ति नात परस्तात्पुरस्ताच्च (रु) [4] संप्रस्रा–क घ . [5] तथाऽपि परिधीन्–क तथा परिधीन्–घ. (मु. रा) [6] वेऽपि–क. [7] भक्षणान्तम्–क.

नेन प्रचरन्ति । अत्रैव भक्षयन्ति तुरायणे न भक्षयन्तीति केचित् ॥

इति धूर्तस्वामिभाष्ये तृतीये प्रश्ने द्वितीय पटल ॥

---

**(सू) आज्यलेपान् प्रक्षाल्य [1] सस्रुवे जुहूपभृता-वध्वर्युरादत्ते वेद˘ होता स्फ्यमाज्यस्थालीमुद-कमण्डलुं [2] चाग्नीध्रः ॥ १ ॥ ३७ ॥ ५५१ ॥**

---

(वृ) नन्तर्यं विधीयते । अत· परिधिषु प्रहृतेष्विति विधाने सस्रावस्य परिधिप्रहारानङ्गत्वपक्षे हविश्शेषभक्षणोत्तरकालमेव हारियोजनम् । वाजि-नप्रचारभक्षणे हविश्शेषभक्षणात्पूर्वमेवास्मिन् पक्षे । स˘स्रावान्त कृत्वेति विशेषविधानादिति चातुर्मास्येषु वक्ष्यति ॥

[पक्षान्तराशयविवरणम्]

अत्रैव—केचित् इति — स˘स्रावस्य परिधिप्रहाराङ्गत्वपक्ष एव 'प्रकृते पूर्वोक्तत्वादपूर्वमन्ते स्यात्' इति (जै. सू ५–२–१७) न्यायेन हारियोजनात्प्रागेव हाविश्शेषभक्षण[3]मेव प्राप्तमेवेति मत्वा अवधारणस्य प्रयोजनान्तरमुच्यते । तुरायणे हविरुच्छिष्टव्रतो भवतीति (आ. श्रौ २३–१४–४) विधानात् यजमानस्यर्त्विजा हविश्शेषभक्षा-पनय[4] इति दर्शयितुमवधारणमिति । तथा च सोमे 'सोमान् हवि श्शे-षानिति सुत्येऽहनि भक्षयन्तीति' (आ. श्रौ. ११–१८–१०) विधा-नात् । अतोऽत्रैवर्त्विजो भक्षयन्ति नान्यत्र यजमानेन सहर्त्विज इति सूत्रार्थ· । अत परिध्यनङ्गम् यदा न संस्रावः तदा भक्षण कृत्वा हारियोजनप्रचार । प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यादिति न्यायेन हविश्शेषभक्षणान्त एव वाजिनचर्या ॥

इति धूर्तस्वामिभाष्यवृत्तौ रामाग्निचित्कृतौ तृतीयप्रश्ने द्वितीय पटल ॥

---

[1] सस्रुवजुहू–क. [2] चाग्नीध्रप्रथमा–क. [3] भक्षणं–प्रा –क. घ. [4] नयनं इति–क.

[पात्रविमोकार्थत्वफलम्]

(भा) जुहूपभृतोर्विमोकार्थं नयन हिरण्य[1]केशिनोक्तम् । अतोऽपत्नीसयाजायामपि [2]क्रियते ॥

(सू) [3]आग्नीध्रप्रथमा पत्नी [4]यांजयिष्यन्तः प्रत्यञ्चो यान्ति ॥ २ ॥ ३८ ॥ ५५२ ॥

[पत्नीपदग्राह्यार्थः]

(भा) [5]पत्नीग्रहणेन सोमादयो गृह्यन्ते ॥

(सू) अग्रेण गार्हपत्यं दक्षिणेनाध्वर्युः [6]प्रतिपद्यत उत्तरेणेतरौ ॥ ३ ॥ ३९ ॥ ५५३ ॥

(सू) अग्नेर्वामपन्नगृहस्य सदसि सादयामीति [7]कस्तम्भ्यां स्रुचौ सादयित्वा धुरि धर्यौ पातमिति युगधुरोः प्रोहति ॥ ४ ॥ ४० ॥ ५५४ ॥

(भा) कस्तम्भ्यां सादनम् । कस्तम्भी—उपस्तम्भनार्था शकटस्य ॥

---

[पात्रविमोकाङ्गत्वोपपादनम्, फलसंभवश्च]

(वृ) जुहूप–शिनोक्तमिति—यज्ञयोगेन विहारैस्सह प्रयुक्तानां पात्राणा विमोकार्थं पश्चान्नयन न पत्नीसयाजाङ्गम् ॥

अतोऽपत्नीसंया–क्रियते—पित्र्यायाम् ॥

कस्तम्भ्यां सादनम्—[8]प्रोहणञ्च । [9]स्रुवाभ्या यागपक्षेऽपि ॥

[भाष्योक्तपत्नीपदार्थोपपत्ति·]

पत्नीग्र–गृह्यन्ते—देवाना पत्नीर्यजतीति पत्नीभिस्साहचर्यात् [10]

---

1 हिरण्यकेशिनो मतादिति–**घ.** 2 क्रियते सादनम्–**ग** 3 इद पद **क** पुस्तके न दृश्यते 4 सयाजयिष्यन्त –**ख** नान्यथा, अत पित्र्याया अपत्नीसयाजाया न गच्छन्ति गच्छत्येवाध्वर्यु कर्मान्तरार्थम् (रु) 5 इद–**क.** पुस्तकमात्रे दृश्यते 6 प्रतिपद्य? उत्त॰णे–**क** ? 7 कं–शकट तद्यत्र स्तभ्यते सा कस्तम्भी । पश्चादौ तु स्रुग्बहुत्वे वा, स्रुग्निनी, धत्त, धत्त पात इत्येतेषा बहुवदूह । न धुर्यावित्यस्य दम्पत्याभिधानात् । ब्राह्मणे तथोक्ते (रु) 8 प्रोक्षणं च–**ख. ग.** 9 भ्यां च–**ख. ग.** 10 र्यात् सोमादयः पत्नी–**क.**

(सू) यदि [1]पात्र्यां निर्वपेदेताभ्यामेव यजुर्भ्या स्फ्ये स्रुचौ सादयेत् ॥ ५ ॥ ४१ ॥ ५५५ ॥

[सादितस्य स्फ्यस्य पुनर्ग्रहणकालः]

(भा) [2]स्फ्यः सादने कृते पुनरु[3]पादीयते प्रत्याश्रवणार्थम् ॥

(सू) [4]स्रुग्भ्यां स्रुवाभ्यां वा पत्नीस्संयाजयन्ति ॥ ॥ ६ ॥ ४२ ॥ ५५६ ॥

[चतुर्गृहीतसंपादनप्रकारः]

(भा) [5]स्रुवाभ्यामेकस्मिन् गृह्यते महति एक उपभृदर्थो ग्रहणे चेति ॥

(सू) [6]वेदमुपभृतं कृत्वा जुह्वा [7]स्रुवेण चेत्येके ॥ ॥ ७ ॥ ५७ ॥ ५५७ ॥

---

(वृ) पत्नीस्तु न संयाजयेदिति वचनाच्च सोमादय पत्नीशब्द-गृहीता। तासां सह याग इति पत्नीसंयाजा ॥

[पत्नीसंयाजेषु चतुर्गृहीतसद्भावः]

स्रुवाभ्याम्—ग्रहणे चेति—उपस्तरणाभिघारणे चतुर्गृहीतम् वषट्कारश्चादर्विहोमानामिति (आप. परि. २-१३) पत्नीसंयाजेष्वपि चतुर्ग्रहणस्य प्राप्तत्वात् । स्रुवाभ्यां यागेऽप्येकस्मिन् महति स्रुवे अन्येन चतुर्गृह्यते ॥

---

[1] पात्र्या—क यदि पात्रीतो निर्वापस्तदा द्वाभ्यामपि यजुर्भ्यां स्फ्ये स्रुचावा-सादयेत्, यदापि स्रुवाभ्या पत्नीस्संयाजयिष्यन्ति तदाऽपि नियत स्रुचोर्नयन सादनं च नित्यवदेव विधानात् । अत एव पत्नीसयाजार्थत्वमप्यनयोस्सूचित भवति । तेन पित्र्यायामपि क्रियते (रु). [2] स्फ्ये (मु पु पा) [3] रुपादीयेते (मु पु पा). [4] ताभ्यामेव स्रुग्भ्या यजन्तीत्येक कल्प । तत्स्थानीयाभ्यामागन्तुकाभ्या स्रुवाभ्या-मिति । द्वितीय ग्रहणार्थस्तु स्रुवस्सर्वत्र नित्य । तत्र जुहूस्थानीय स्रुव पृथुबिल सामर्थ्यात् (रु) [5] स्रुवाभ्यामेकस्मिन् यागे [6] इदमुत्तरसूत्रञ्च क—पुस्तके न दृश्यते [7] स्रुवेण वेति (मु. पु. पा) स्रुवेणेतिग्रहणार्थस्यैव स्रुवस्यानुवाद । वेदमुपभृत स्थाने कृत्वा यथापूर्व जुह्वा स्रुवेण चेत्यर्थ । स्रुवोऽपि कश्चिदागन्तुको-जुह्वा सह धार्यत इत्यन्ये (रु).

[सूत्रे चकारार्थः]

(भा) स्रुवेण चेति । जुहूसहायो होमेऽपि ॥

(सू) [1] अपरेण गार्हपत्यमूर्ध्वज्ञव आसीनाः [2] ध्वाने-
नोपांशु वा पत्नीस्संयाजयन्ति ॥ ८ ॥ ४४ ॥
॥ ५५८ ॥

[ध्वानोपांशुपदार्थौ]

(भा) वर्णा[3] नामनुपलब्धिर्ध्वानः । करण [4]वदशब्दमन प्रयोग उपांशु ॥

(सू) दक्षिणोऽध्वर्युरुत्तर आग्नीध्रो मध्ये होता
॥ ९ ॥ ४५ ॥ ५५९ ॥

---

(वृ) स्रुवेण चेति—वेदमुपभृत कृत्वा जुह्वा स्रुवेण चेति ।

[सहायत्वाकारः]

जुहूसहायो होमोऽपि—स्रुव· वेदो वा उपभृता [5] विक-ल्प्यते ॥

[स्थलान्तरे स्वरातिदेशः]

अक्षरव्य–उपांशु—[6] होतुरप्येष स्वरः । आश्रावणादीना-मपि[7] ॥

---

[1] परेण—ख [2] यत्र स्वरव्यञ्जनयो पृथगुपलब्धि स ध्वनि ध्वान । मुखप्रयत्नवाननभिव्यक्तशब्दप्रयोग उपांशु । अनयोश्च क्रुष्टन शेष इति क्रुष्टस्व रापवादार्थं वचनम् । पत्नीरिति वक्ष्यमाणा देवतास्समाचष्टे देवपत्नीसबन्धात् (रु)
[3] अक्षरव्यञ्जनाना—ग घ [4] पद—घ [5] विकल्पते—घ. [6] होमेऽप्येष—घ
[7] मपि । न क्रुष्टेन स्वरेण 'पत्नी सयाजानामाश्रुतादीनि क्रूष्टेन शेष' इति स्विष्टकृत्प्रभति क्रुष्टविधानेऽपिशयुवाकादूर्ध्वं मन्द्रस्वर प्राप्त तस्माद्धाष्यलिङ्गादा-श्रावणादीनामपि तद्देशस्वर एव युक्तो बह्वृचानामूर्ध्वं चाऽऽशयुवाकादिति वचनात् ध्वानादेर्मन्द्रस्य च विकल्प (मु रा) इत्यधिकं दृश्यते ५१२ तमे सूत्रेऽपि, 'गार्हपत्यस्यापरभागे दक्षिणतोऽध्वर्युस्थानम् । मध्ये होतु स्थानम् । तस्योत्तरत-आग्नीध्रस्थानम् ।' इति वृत्तिर्दृश्यते (मु रा)

(सू) [1]आज्येन सोमत्वष्टाराविष्टा जाघन्या पत्नी-
स्संयाजयन्त्याज्यस्य वा यथागृहीतेन ॥ १० ॥
॥ ४६ ॥ ५६० ॥

[चतुरवत्तनियमः]

(भा) जाघन्या एव चतुरवत्तम् ॥

[यागदेवतानिर्देशः पक्षान्तरं च]

(भा) [2]भक्षस्य च पशोर्देवपत्नीनामेव यागः । केचित्पशुवदिडावर्जम् । आज्यस्य वा यथागृहीतेनेति [3] ॥

---

[चतुरवत्तनियमहेतुः]

(वृ) **जाघन्या एव चतुरवत्तम्**—उपस्तरणाभिघारणविधानाभावात् प्रधानविकारत्वाभावाच्च ॥

[देवपत्नीमात्रदेवताकत्वे हेतुः]

**भक्षस्य च—यागः**—[4]नान्यस्य । आज्येन सोमत्वष्टाराविष्टव जाघन्या पत्नीस्सयाजयन्तीति सोमत्वष्ट्रोरुपरि विधानात् पत्नीसंयाज-शब्दस्य[5] लक्षितार्थपरिग्रहे देवपत्नीना चतुर्णामपि प्रसङ्गात् द्वयोरुपरि श्रूयमाणस्य मुख्यार्थत्वमेवेति । अतोऽग्निर्गृहपतिराज्येनैव ॥

[पक्षान्तराशयः]

**केचित्पशुवदिडावर्जमिति**— जाघन्या [6]पत्नीस्संयाजयन्तीति विधानेऽपि पशौ [7]परयोर्होमयोः जाघनीविधानादत्रापि तथेति सोम-

---

[1] यज्ञियस्य पशोर्जाघन्या पुच्छेन लौकिकेन देवाना पत्नीस्सयाजयन्ति । आज्यस्यैव वा (यथा गृहीतेन) यथा यस्य ग्रहणमुक्तम् । तथा चतुरवत्तेन पञ्चावत्तेन वेत्यर्थ (रु). [2] भक्ष्यपशो-क भक्षस्य भक्ष्यस्य च (मु रा) [3] पूर्णे वाऽपूर्णे वा-ख ग [4] आर्याणा भक्षस्य पशोर्जाघन्या देवपत्नीनामेव याग नान्यस्य-ख. ग [5] स्य चालक्षितार्थ (मु रा) [6] परयोर्होमयो जाघन्यतया पत्नीस्संयाजयन्तीति विधानेऽपि पशौ परयो जाघनीदर्शनात्-ख ग [7] अपरयोर्होमयो पशावपरयो होमयो. (मु रा)

(सू) सोमायानुब्रूहि सोमं यजेति संप्रैषावुत्तरार्धे जुहोति ॥ ११ ॥ ४७ ॥ ५६१ ॥

[प्रैषवचनफलं पत्नीसंयाजदेशश्च]

(भा) वाजिलिङ्गत्वाद्दच. सोमायानुब्रूहीत्युच्यते, मा भूत्सोमाय वाजिन इति । सर्वे पत्नीसयाजा उत्तरार्धे ॥

(सू) एवमितरांस्त्वष्टारम् ॥ १२ ॥ ४८ ॥ ५६२ ॥

अष्टमी खण्डिका ॥

---

(वृ) त्वष्टाराविष्ट्वा जाघन्या पत्नीरित्येतावति वक्तव्ये आज्यग्रहणाच्च पत्नीसयाजशब्दस्साधारण इति गम्यते । जाघनीक्रीता भवति । स्वधितिनाऽवदानम् । आज्येडात्वाज्येनैव । उत्तानायै होत्र इडामितिवदत्र [1] जाघनीविधानाभावात् ॥

पूर्णो वा अपूर्णो वा—स्रुव. आज्यग्रहणे यथागृहीतेनेति न चतुर्ग्रहणप्रापक वषट्कारत्वादेव सिद्धे ॥

[वाजिलिङ्गत्वभाष्योक्तप्रैषाकारयोरुपपत्तिः]

वाजिलिङ्गत्वा—वाजिन इति—वाजस्य संगथे, समुयन्तु वाजाः इति च वाजिलिङ्गत्वाद्याज्यानुवाक्ययो. तद्विशिष्टस्य देवतात्वे प्राप्तेऽपि सोम [2] यजेत्युत्पत्तौ [3] केवलसोमश्रवणात् सोमायानुब्रूही[4]त्येव प्रैष अग्नयेऽनुब्रूहीतिवत् ॥

[पत्नीसंयाजदेशनियमहेतुः]

सर्वे पत्नीसंयाजा उत्तरार्धे—उत्तरार्धे जुहोत्येवमितरानिति वचनात् ॥

---

[1] वचनाभावात्–घ. [2] यजतीत्युत्पत्तौ–ख ग [3] केवलश्रवणात्–क, ख, ग [4] त्येवं प्रैष –ख ग

(सू) [1]देवानां पत्नीरग्निं गृहपतिमिति ॥ १ ॥ ४९ ॥ ५६३॥

(सू) दक्षिणतस्त्वष्टारमुत्तरतो[2] वा मध्येऽग्निं गृहपतिम् ॥ २ ॥ ५० ॥ ५६४ ॥

[सोमादियागदेशनियमः]

(भा) [3]सोमस्य दक्षिणत उत्तरतो वा त्वष्टा। तयोर्मध्ये गृहपतिः केचिदग्नेर्दक्षिणतस्त्वष्टा मध्ये गृहपतिरिति विकल्पः ॥

[आश्रुतादिस्वरनियमः बह्वृचपक्षश्च]

न [4]क्रुष्टेन पत्नीसंयाजानामाश्रुतप्रत्याश्रुतीदीनि। [5]बह्वृचाना-मूर्ध्वं च शयुवाकादिति वचनात् ॥

---

[भाष्यदर्शितदेशनियमविवरणम् पक्षान्तरं]

(वृ) सोमस्य दक्षि—त्वष्टा—दक्षिणतस्त्वष्टारमुत्तरतो वेत्युत्तरार्धे एव सोमस्य दक्षिणत उत्तरतो वा त्वष्टा ॥

तयोर्मध्ये गृहपतिः—सौम्यत्वाष्ट्रयोर्मध्ये ॥

केचिदग्ने—विकल्पः—उत्तरार्धेन विकल्प इति वर्णयन्ति ॥

[स्वरनियमे मानम्]

न क्रुष्टेन-दीनीति—क्रुष्टेन शेष इति स्विष्टकृत्प्रभृति क्रुष्टविधानेऽपि शयुवाकादूर्ध्वं मन्द्र[6]स्वरः प्राप्तः अस्माद्भाष्यालिङ्गात् आश्रावणादीनामपि तद्देशस्वर एव [7]युक्त इति ॥

[बह्वृचपक्षसिद्धार्थः]

बह्वृचाना—वचनात्—ध्यानादेर्मन्द्रस्य च विकल्प.

---

[1] एतानध्येव याज्यानुवाक्या प्रैषरुत्तरार्धे यजतीत्यर्थ (रु) [2] उत्तरार्ध एव यजति (रु) [3] दक्षिणतस्सोमस्य—क घ [4] अयं ग्रन्थ मुद्रिते न दृश्यते [5] न क्रुष्टेन—क घ. सबह्वृचाना—क घ. [6] स्वरप्राप्ते—क [7] युक्त—ख. ग

(सू) [1] **आहवनीयः परिश्रिते देवानां पत्नीरपरिश्रिते वा ॥ ३ ॥ ५१ ॥ ५६५ ॥**

(सू) [2] **राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः ॥ ४ ॥ ५२ ॥ ५६६ ॥**

(सू) [3] **नित्यवदेके समामनन्ति ॥५॥५३॥ ५६७ ॥**

(सू) [4] **पुरस्ताद्देवपत्नीभ्य एता एके समामनन्ति । उपरिष्टाद्वा ॥ ६ ॥ ५४ ॥ ५६८ ॥**

(सू) [5] **पूर्ववद्धोतुरङ्गुलिपर्वणी अङ्क्त्वोपस्पृष्टोदकाय होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्यति षडग्नीधः ॥ ७ ॥ ५५ ॥ ५६९ ॥**

(भा) अग्नीधो हस्ते षट् ॥

(सू) **उपहूयमानामन्वारभन्तेऽध्वर्युराग्नीध्रः पत्नी च ॥ ॥ ८ ॥ ५६ ॥ ५७० ॥**

---

**(वृ) अग्निधो हस्ते षट्—आज्याबिन्दून् ॥**

---

[1] आहवनीयत–क आहवनीयोयथा न दृश्यते तथा प्रच्छादिते गार्हपत्ये इत्यर्थ (रु) अत्र, ‘आहवनीयाग्निं यथा न पश्यति तथा छादयति’ इत्यधिक (मु रा.) [2] नामानि त्रीण्येतानि । न पत्नीसयाजा. । किन्तु तत्कालभावीनि काम्यानि यागान्तराणि । कुत ? सोमादीना पूर्वत्र परिगणनात् । चत्वार पत्नीसयाजा इति श्रुतेश्च । तेन एषा नोत्तरार्धादिनियम (रु) अत्र, पत्नीसयाजमध्ये पठिता एता देवता काम्या न पत्नीसयाजा, कुतश्चत्वार पत्नीत्सयाजा इति श्रुते । इत्यधिकम् (मु. रा) [3] यथा नित्यं तथा–कामोपबन्धरहितमित्यर्थ नित्यपक्षे विकृतावपि गच्छन्ति (रु) अत्र राकादयस्तिस्रो देवता नित्या इत्येके शाखिन पठन्ति इत्यधिकम् । (मु. रा) [4] द्वावेतौ यागकालौ राकादीनाम् । उभयथाप्याम्नानात् । (रु) अत्र देवपत्नीभ्य पुरस्तादुपरिष्टाद्वा एतासा यागकालस्सूचित. [5] उपस्पृष्टोदकायेतिपूर्ववत (रु). उपस्पृष्टोदकायेत्यत्र षष्ठ्यर्थे चतुर्थी । आर्षत्वात् इत्यधिकम् । (मु रा)

(सू) [1]उपहूतां प्राश्नीतो होता आग्नीध्रश्च ॥
॥९॥५७॥५७१॥

**अत्र स्रुवेण संपत्नीयं जुहोति पत्न्याम [2]न्वारब्धायां [3]संपत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम्। सञ्जानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेता~ स्वाहेति ॥१०॥५८॥ ॥५७२॥**

[संपत्नीयहोमे विशेषः]

(भा) पत्न्यभावेऽपि न निवर्तते सपत्नीयहोम । [4]अप्रविशन्त्या अपि पत्न्याः फलं विद्यत एव। [5]न च पत्नीसयाजाङ्गम् ॥

(सू) [6]**पुरस्ताद्देवपत्नीभ्य एतामेके समामनन्त्युपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्याम् ॥११॥ ५९॥५७३॥**

(भा) पित्र्यायामपत्नीसयाजायामपि भवति ।

---

[असन्निधानहेतुः संपत्नीयाधिकारसत्ता च]

(वृ) **पत्न्यभावेऽपि—विद्यत एव**—पत्न्याश्चानालम्भुकाया. कर्तृत्वान्वयाभावेऽप्यपूर्वाधिकारान्वयस्य विद्यमानत्वात्[7] ॥

**न च पत्नीसंयाजाङ्गम्**—संपत्नीयहोमः ।

[सौत्रपक्षान्तरावतरणं पित्र्यायादेवता च]

यद्यपि पुरस्ताद्देवपत्नीभ्य इति निर्दिश्यते, तथाऽपि उपरिष्टाद्वा-पिष्टेलपफलीकरणहोमाभ्यामिति पत्नीसयाजसबन्धित्वात् फलार्थित्वाच्च सपत्नी पत्या सुकृतेन गच्छतामिति । अत ; **पित्र्याया—भवति ।**

---

[1] उभौ स्वास्वाहस्त्या प्राश्नीत (रु) [2] अन्वारब्धायामिति कर्तरि निष्ठा। नचानालम्भुकाया होमानिवृत्ति , अङ्गनिवृत्त्या प्रधानानिवृत्ते (रु) [3] अस्मिन् काले संपत्नीतिमन्त्राक्षरसंबन्धात् सपत्नीय इति होमनाम (रु) [4] प्रवसन्त्या अपि—ख ग [5] न च पत्नीसयाजार्थम्—ग. [6] त्रयोऽमी कालविकल्पा पूर्वेण सह चत्वार । तत्र पत्नीसंयाजानामपि पिष्टलेपफलीकरणहोमवत्कालोपलक्षणमात्रपरत्वात् न तदङ्गमयं होम । तेन पित्र्यायामपि क्रियते (रु). [7] त्वाच्च (मु. रा).

(भा) उपरिष्टाद्वा पिष्टलेपफलीकरणहोमाभ्याम् ॥

(सू) दक्षिणाग्राविध्मप्रव्रश्चनान्यभ्याधाय [1] पिष्टलेप-फलीकरणहोमौ जुहोति ॥ १२ ॥ ६० ॥ ५७४ ॥

(भा) पिष्टलेप कृष्णाजिनादृषदश्चोपलादेश्च । पिष्टलेपफलीकरणाभावे तयोर्निवृत्ति· ॥

नवमी खण्डिका ॥

---

(सू) फलीकरणहोमं पूर्वं एतद्वा विपरीतम् । चतु-र्गृहीत आज्ये फलीकरणानोप्याग्नेऽदब्धायोऽशी-

---

(वृ) **पिष्टले—होमाभ्याम्**—अस्य होमस्य दिवि ज्योतिरादित्यो देवता हृदयान्तरपुरुषो वा[2] ॥

**[होमस्य नामधेयानुरूपविषयता]**

**पिष्टलेप—निर्वृत्तिः**—होमयो [3] । तन्नामधेयत्वात् । अस्यार्थ·—प्रधानयागार्थहविरनुनिष्पन्नयो पिष्टलेपफलीकरणयो· प्रति-पत्तित्वाच्चतुर्गृहीताज्ये फलीकरणानोप्येत्याज्यस्य तदर्थतावगते· तयो· प्रतिपत्तित्वेन प्रवृत्तिनिमित्ततया होमयोर्नामधेयत्वात् तयो प्रतिपत्ति-स्थानयोरभावे होमयोर्निवृत्तिः ॥

उत्तरास्तिस्रो हूयन्त एव ॥

---

[1] पिष्टलेपसंयुक्तो होम पिष्टलेपहोम । तथा फलीकरणहोम । तौ चाज्यामिक्षातन्त्रेषु अर्थलोपान्निवर्तेते पिष्टलेपफलीकरणप्रतिपत्त्यर्थत्वात् । पिष्टलेप-होमस्तु न केवल तत्प्रतिपत्त्यर्थ किं तु विप्रुड्ढोमादिवत् उलूखलादिश्लिष्टपिष्टावय-वादिप्रतिपादनार्थश्च मन्त्रलिङ्गात् । तेन पश्वादिषु पिष्टलेपाभावेऽपि आज्येन केवलेन कार्य बोधायनभरद्वाजाभ्यामुक्तेश्च (रु) [2] वा परमात्मेत्यर्थ (सु र।)
[3] होमयोर्निवृत्ति·—ख ग.

ततनो इति जुहोति । एवं पिष्टलेपानुलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषस्सन्ति बह्वीरग्नौ तास्सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेति ॥ १ ॥ ६१ ॥ ५७५ ॥

(सू) या सरस्वती विशोभगीना तस्यै स्वाहा । या सरस्वती वेशभगीना तस्यै स्वाहा । इन्द्रोऽ-[1]पानस्य केहमनसो वेशान् कुरु सुमनसः सजातान् स्वाहेति [2] दक्षिणाग्नौ प्रतिमन्त्रं जुहोति ॥ २ ॥ ६२ ॥ ५७६ ॥

(सू) [3] वेदोऽसीति वेदं होता पत्न्या [4] उपस्थे त्रिः [5] प्रास्यति ॥ ३ ॥ ६३ ॥ ५७७ ॥

[प्रासनकर्मसंकार्यं मन्त्रावृत्तिः तत्फलंच]

(भा) निरसनव्यवायाद्वेदप्रासनमन्त्रावृत्तिः । वेदस्य प्रासनं पत्नी-संस्कारश्च । अतः [6] प्रतिपत्तिर्भवति ।

---

[प्रासनस्य पत्नीसंस्कारत्वोपपत्तिः]

(वृ) वेदस्य–भवतीति—कृतप्रयोजनस्य वेदस्य प्रासनं पत्नी-संस्कारः । मिथुनमेव करोति विन्दते प्रजाम् इति लिङ्गात् ॥

---

1 पानगेह–क 2 पुनर्दक्षिणाग्निवचन विस्पष्टार्थम् (रु) 3 हौत्रस्यात्रोपदेशो ब्राह्मणानुसारात् (रु) 4 उपस्थोऽङ्क (रु) 5 क्षिपति। प्रतिप्रासन मन्त्रस्यावृत्ति क्रियते क्रियान्तरेण व्यवायात्। पत्नीसंस्कारश्चाय विन्दते प्रजामिति लिङ्गात् तेन प्रतिपत्ति प्रास्यति (रु) 6 प्रतिपत्ति वा भवति–ग.

[वरुणप्रघासे विशेषः पक्षान्तरं च]

वरुणप्रघासेषु च द्वयोर्वेदयो॰ प्रासनमुभयसस्कारत्वात्। केचित्पत्नीसस्कार विन्दते प्रजामिति लिङ्गात्। तदा त्वेकस्य प्रासनम् ॥

(सू) [1]निर्द्विषन्तं निरराति नुदेतीतरा प्रास्तंप्रास्तं [2]निरस्यति ॥ ४ ॥ ६४ ॥ ५७८ ॥

(सू) तन्तुं तन्वान्निति [3]होता गार्हपत्यात्प्रक्रम्य सन्ततमाहवनीयात् [4]स्तृणा[5]त्या वा वेदेः ॥ ॥ ॥ ५ ॥ ६५ ॥ ५७९ ॥

[स्तरणे विशेष आङर्थश्च]

(भा) स्तरण भेदेन वेदिभेदात्। मर्यादा आवेदेरिति ॥

(सू) इमं विष्यामीति पत्नी योक्त्रपाशं विमुञ्चते ॥ ॥ ६ ॥ ६६ ॥ ५८० ॥

---

[प्रासनं न वेदसंस्कारः]

(वृ) वरुणप्र—स्कारत्वात्—त्वेकस्य प्रासनम्—वेदसंस्कारत्वे प्रमाणाभावात् ॥

[स्तरणभेदे नियामकम्]

स्तरणं भेदेन वेदिभेदादिति—स्तरणस्य वेदवेद्योस्संस्कारार्थत्वात्। वरुणप्रघासेषु वेदिभेदात् स्वेन स्वेन वेदेन वेद्योस्तरणम् ॥

[आङोऽभिविध्यर्थकत्वायोगः]

मर्यादा आवेदेरिति—आवेदेरित्यभिविधिपक्षे सन्ततमाहवनीयात्स्तृणातीत्यनेन समानार्थत्वादा वा वेदेरिति विकल्पानिर्देशानुपपत्तेर्मर्यादा। यावद्वेदिदेशप्राप्तिस्तावत् स्तरणमिति ॥

---

[1] निद्विषन्तम्—क [2] प्रतिनिरस्यति ख प्रितिक्षिपति (रु) [3] वेद॰होता—क. [4] वेदं विस्रस्यास्तृणाति (रु) [5] त्यावेदे.—क.

[योक्त्रविमोचने विकल्पसमुच्चयपक्षौ]

(भा) होता चेद्योक्त्रं विमुञ्चति न तदा पत्नी। कर्तृभेदाद्वा समुच्चयः।

(सू) **तस्यास्सयोक्त्रेऽञ्जलौ [1] पूर्णपात्रमानयति ॥**

॥ ७ ॥ ६७ ॥ ५८१ ॥

[निनयनावृत्तिः]

(भा) प्रतिपत्ति पूर्णपात्रनिनयनम् ॥

---

[भाष्यस्थचेत्पदस्वारस्यविवरणम् फलं च]

(वृ) **होता चेद्योक्त्रं विमुञ्चति न तदा पत्नीति**—बह्वृचहौत्रप्रयोगपक्षे। अस्मदीयहौत्रपक्षे तु प्रासनानन्तरं वेदस्तरणमेव होतुः। योक्त्रविमोकस्तु पत्नीकर्तृकः पत्नीमन्त्रकाण्डे मन्त्रपाठात्। तथा विनियोगात्। अत्र होता चेद्योक्त्रमिति पाक्षिकनिर्देशादस्मदीयस्य बह्वृचोक्तस्य च विकल्पो भाष्यकारेणानुज्ञातः। तत्रायमभिप्रायः,—ऋग्वेदेन होता करोतीत्युक्तत्वात् अस्मदीयहौत्रकाण्डेऽपि ब्राह्मणे;—यद्भूयाद्योस्मिन् होतारममृथा इत्यस्माकमनुक्तस्य बह्वृचोक्तस्य प्राप्तिमङ्गीकृत्यानूद्य निन्दावचनाच्च बह्वृचोक्तानुज्ञानादस्माकमपि प्रकृतौ समन्त्रोपदेशात् उपदेशादितराणि च सूत्रकारेण तदनुज्ञानादुभयोर्विकल्पः। नास्मदीय एव ॥

[समुच्चयपक्षोपपादनम्]

**कर्तृभेदाद्वा समुच्चयम इति**—यथा ब्रह्मवरणमध्वर्युयजमानयोस्समुच्चीयते तद्वदस्मिन् पक्षे होता ग्रन्थिं विस्रंसयति पत्नी विमुञ्चति ॥

[आवृत्त्युपपत्तिः]

**प्रतिपत्ति पूर्णपात्रनिनयनमिति** —— अञ्जलौ पूर्णपात्रमानयति रेत एवास्यां प्रजां दधातीति पत्नीसंस्कारत्वात्पूर्णपात्रनिनयनस्य ॥

---

[1] पूर्णपात्रमुदकम्। तत्तूष्णीमानयति। पत्न्ययनेकत्वेचावृत्तिः पूर्ववत् (रु).

(सू) समायुषा संप्रजयेत्यानीयमाने[1] जपति ॥ ॥ ८ ॥ ६८ ॥ ५८२ ॥

(सू) [2]निनीय मुखं निमृज्योत्तिष्ठति पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासम् इति ॥९॥ ६९ ॥ ५८३॥

दशमी खण्डिका ॥

---

[विमार्गसाधनविशेष· उत्थानमन्त्रश्च]

(भा) निनीयोदकलिप्तेन मुखविमार्गः उत्थानमन्त्र· पुष्टिमतीति ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये तृतीयप्रश्ने तृतीय पटल ॥

---

(सू) [3]यथेतमाहवनीयं गत्वा जुह्वा स्रुवेण वा सर्व-प्रायश्चित्तानि जुहोति ॥ १ ॥ ४ ॥ ५८१ ॥

[सर्वप्रायश्चित्तहोमनिमित्तम्]

(भा) अविज्ञातदोषनिर्घातार्थानि सर्वप्रायश्चित्तानि ॥

---

(वृ) निनीयो—विमार्ग इति —निनीयोदक हस्तगतं तल्लिप्तेन हस्तेन मुखविमार्ग. ॥

[श्रमनिरासोपपत्तिः]

उत्थानमन्त्रः पुष्टिमतीति —न मुखविमार्जनमन्त्र । विमृ-ज्योत्तिष्ठतीति उत्थानस्य प्रधानत्वात् ॥

इति श्रीधूर्तस्वामिभाष्यवृत्तौ तृतीये प्रश्ने तृतीय पटल ॥

---

[सर्वप्रायश्चित्तनिमित्तविवेचनम् ]

अविज्ञात—श्चित्तानि — निमित्तविशेषसंयोगाभावान्नैमित्तिक -

---

[1] मन्त्रालिङ्गादय पत्नीमन्त्र (रु) [2] तदुदकं भूमौ निनीयार्द्रेण हस्तेन मुख विमृज्य मन्त्रेणोत्तिष्ठति (रु) [3] येन मार्गेण पश्चाद्गत तेन प्रत्यागत्य दर्शपूर्णमासयोरविज्ञातदोषनिर्घातार्थानि प्रायश्चित्तानि जुहोति । आज्यस्थाल्या आज्येन दर्विहोमत्वात् । तच्च दर्शितमेव प्राक् । तथाऽऽज्यस्थाल्यास्सर्वप्रायश्चित्तानीत्येव कल्पान्तरकारा (रु).

[प्रत्यवदानं पूरणम्]

सर्वत्राप्यायनमनेकार्थत्वात्; यस्माद्ध्रुवाया [1] एव होमः ॥

[पूरणं नास्ति क्वचित्]

यत्र नास्त्यर्थस्तत्र न क्रियते। यथे[2]डान्ते स्विष्टकृति परिसमाप्यते।

[उपदेशपक्षः]

उपदेशस्तु त्रिर्न करोत्याप्यायनम् ॥

[स्रुवैक्यम्]

एकः स्रुवः समिष्टयजुषः ॥

---

(वृ) विशेषसयुक्त[3]निमित्तसन्निपात[4]प्रज्ञाने तदेव [5]तन्नैमित्तिक भवति। ज्ञाने निमित्ते नैमित्तिकविशेषानुपदेशे अनाज्ञातत्रयम्। निमित्ताज्ञाने एतानि सर्वप्रायश्चित्तानि ॥

[प्रत्यवदानं घृतेन पूरणफलम्]

सर्वत्रा—र्थत्वादिति· प्रत्यवदानं [6]ध्रुवाया रेकपरिहारः कर्तव्य।

यस्माद्ध्रुवाया एव होमः—अतस्तदाप्यायनं प्रतिहोमम्।

[पूरणानपेक्षाविवरणम्]

यत्र नार्थस्तत्र न क्रियते—आप्यायनम्।

यथेडान्ते स्विष्टकृति परिसमाप्यते—नारिष्टान्ते स्विष्टकृति उपस्तरणाभिघारणेषु च ध्रुवासमाप्तिः, तत उत्तरमर्थाभावात् ॥

[उपदेशमते पूरणनिषेधकालः]

उपदेशस्तु त्रिर्न करोत्याप्यायनम्;—प्रायश्चित्तान्ते।

[समिष्टयजुर्होमे स्रुवैक्यनिरूपणम्]

एकस्स्रुवः समिष्टयजुष इति—उत्तरत्र पूरणकार्याभावात्

---

[1] ध्रुवाया होम—क. ख ग घ [2] यथेडा स्विष्टकृति (मु रा)
[3] विशेषनिमित्तसन्निपात. [4] प्रज्ञाते तथैव—घ. [5] तन्निमित्तकं (मु रा) [6] ध्रुवाया, एकप ?—ख, ग.

(सू) ब्रह्म प्रतिष्ठा मनस इत्येषा। आश्रावि[1]तं प्रत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे। अतिरिक्तं कर्मणो यच्च हीनम् यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन्। स्वाहाकृताहुतिरेति [2] विद्वान्। यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम्। अरायो अस्माँ अभिदुच्छुनायते अन्यत्रा[3]स्मन्मरुतस्तं निधेतन। ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते। अयँ समुद्र उत [4] विश्वभेषजः स्वाहाकृतस्य समतृप्णुतर्भुवः। उद्वयं तमसस्पर्युदुत्यं चित्रमिमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयास्ययासन् मनसा हितः। अयासन् हव्यमूहिषेऽयानो धेहि भेषजम्। प्रजापत इत्येषा। इष्टेभ्यस्स्वाहा वषडनिष्टेभ्यस्स्वाहा। भेषज दुरिष्ट्यै स्वाहा निष्कृत्यै स्वाहा। दौराद्ध्यै स्वाहा दैवीभ्यस्तनूभ्यस्स्वाहा। ऋद्ध्यै स्वाहा समृद्ध्यै स्वाहा। अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि। अयसा मनसा धृतोऽयसा हव्यमूहिषेऽयानो धेहि भेषजम्। यदस्मिन् यज्ञे[5]ऽन्तरगाम मन्त्रतः कर्मतो वा। अनयाऽऽ[6]हुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन ॥ २ ॥ २ ॥ ५८५ ॥

॥ एकादशी खण्डिका ॥

---

[1] तमत्याश्रावितम् क ख [2] देवान्—क ख [3] स्मिन्मरुत —क.
[4] विश्वदेव्य भेषज —क [5] यसे ?—क [6] हत्या ?—क.

(सू.) आज्ञातमनाज्ञातम[1]मतं च मतं च यत् । जात-
वेदस्सन्धेहि त्वꣳहि वेत्थ यथातथम् । यदकर्म
यन्नाकर्म यदत्यरोचि यन्नात्यरेचि । अग्निष्टत्स्विष्ट-
कृद्विद्वान् सर्वꣳ स्विष्टꣳ सुहुतं करोतु । यदस्य
कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्
स्विष्टकृद्विद्वान् सर्वꣳ स्विष्टꣳ सुहुतं करोतु ॥

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो
जहि । स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु न स्स्वस्तिदा अभयं करः ॥

अभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो
वर्धमानः यदा स्तोतृभ्यो महि गोत्रा रुजासि
भूयिष्ठभाजो अथ ते स्याम ॥

अनाज्ञातं यदा ज्ञातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्वꣳहि वेत्थ यथातथम् ॥

पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः । अग्ने
तदस्य कल्पय त्वꣳहि वेत्थ यथातथम् ॥

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य
मन्वते मर्तासः अग्निष्टद्धोता क्रतुविद्विजानन्
यजिष्ठो देवाꣳ ऋतुशो यजाति ॥

यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृ-
त्विजः । अग्निर्मा तस्मादेनसः श्रद्धादेवी च
मुञ्चताम् ॥ १ ॥ ३ ॥ ५८६ ॥

॥ द्वादशी खण्डिका ॥

---

[1] मम्मृतं [2]—क.

(भा) स्पष्टम् ॥

(सू) अयाडग्निर्जातवेदाः अन्तरः पूर्वो [1]अस्मान्निषद्य । सन्वत्सनिᳶ सुविमुचा विमुञ्च [2]देह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ।

(सू) ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा विततः पुरुत्रा। तेभ्यो न इन्द्रस्सवितोत विष्णुर्विश्वेदेवा मुञ्चन्तु मरुतस्स्वस्त्या । यो भूतानामु[3]द्बुध्यस्वाग्न उदुत्तममिति व्याहृतिभि[4]र्विहृताभिस्समस्ताभिश्च हुत्वा ॥ १ ॥ ४ ॥ ५८७ ॥

[मन्त्रविशेषविवक्षा]

(भा) पुन कृण्वᳶस्त्वेति यस्यास्सोद्बुध्य[5]स्वेति ॥

[इतिकरणफलम्]

उदुत्तममिति परिच्छेदाद्द्वौ गणौ । व्याहृत्यर्थं पुनर्गृह्यते ॥

---

(वृ) ध्रुवाया चतुर्गृहीतस्य विद्यमानत्वात् दर्विहोमत्वाच्च समिष्टयजुष·॥

[मन्त्रविशेषविवक्षोपपत्ति·]

**पुनः कृ—द्बुध्यस्वेति**—इतरस्या शाखान्तरीयत्वात् कृत्स्नपाठप्रसङ्गात् ॥

[इतिकरणस्य गणनिर्देशत्वे फलस्योपपत्तिः]

**उदुत्त—द्वौ गणाविति**— उदुत्तममितीतिकरण गणभेदार्थम् । तेन समवदायहोमपक्षे उदुत्तमान्ताना सहग्रहणम् ॥

**व्याहृ—गृह्यते**—चतुर्णां सह । आज्यस्थाल्यास्सर्वप्रायश्चित्तानि । ध्रौवादकृत्स्नसंस्थास्विति भरद्वाजमति ॥

---

[1] अस्मिन्—ख [2] वेह्यस्मासु—क [3] उद्बुद्धयस्वाग्न इति साहित्येव गृह्यते नाग्निहोत्रे वक्ष्यमाणा आदिप्रदिष्टत्वात् (रु) [4] तीभि—क. [5] स्वेति ऋक् (मु रा).

(सू.) [1]पूर्ववद्ध्रुवामाप्याय्य देवा गातुविद इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति ॥ २ ॥ ५ ॥ ॥ ५८८ ॥

[आप्यायनं सप्रमाणम्]

(भा) पूर्ववदाप्यायनं वचनकृतम् ॥

[मन्त्रभेदशङ्कापरिहारः]

समिष्टयजुरित्येकवचनात् अन्त एव होमः स्वाहाकारेण । यद्यन्ते न [2] क्रियते [3] मध्ये न स्यात् । [4] अन्तर्वर्तिनामप्रदानार्थत्वं, पुरस्तादन्ते वा स्वाहाकार प्रदानार्थ । पुरस्तात्स्वाहाकारा वा इति ॥

---

[आप्यायनोपयोगः]

(वृ) पूर्ववदा–कृतमिति— अवदान[5]निमित्तरेकपरिहारे[6] प्राप्ते[7]पुनराप्यायन वाचनिकम् ॥

[शङ्कासम्भवः परिहारोपपत्तिश्च]

समिष्ट–कारेण— न प्रतिस्वाहाकार मन्त्रभेदः । कृत्स्नमन्त्रान्ते स्वाहाकार कृत्वा होम· ॥

यद्यन्ते–मध्ये न स्यात्—मध्यमे स्वाहाकार इति निर्देशादन्ते स्वाहाकारेण होम· ॥

अन्तर्वर्तिनामप्रधानार्थत्वम्–कारा वा इति— पुरस्तात्स्वाहाकारा वा अन्ये देवा इत्यादिना पुरस्तादन्ते वा स्वाहाकारः प्रदानार्थ· ॥

---

[1] अत्रापूर्वाप्यायनविधानादेवाप्राप्तो मन्त्र इति कृत्वा पूर्ववदिति मन्त्रातिदेश मन्त्रान्त एव होम न पूर्वयो स्वाहाकारयो ; समिष्टयजुरित्येकवचनात्। पशौ चानेन सहान्ये च द्वे उक्त्वा त्रीणि समिष्टयजूषि जुहोतीति वचनाच्च (रु) [2] क्रियेत –घ [3] मध्यमो न स्यात्–क ख. ग घ. [4] अतोन्तर्व–घ [5] निमित्तमेकपरिहारे–ख ग निमित्तैकप इति दृश्यते (मु रा). [6] हारे प्रागेव प्राप्ते–क, [7] प्राप्ते –घ

(सू) यदि यजमानः प्रवसेत् प्रजापतेर्विभान्नाम लोक इति ध्रुवायां यजमानभाग[1]मवधाय समिष्टयजुषा सह जुहुयात् ॥ ४ ॥७॥ ५८९ ॥

(सू) अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरितास्सुवर्णा निष्का इमे यजमानस्य ब्रध्ने इति होतृषदनैर्वेदिमभिस्तीर्य को वोऽयोक्षीत्स वो विमुञ्चत्वित्यन्तर्वेदि [2] प्रणीता आसाद्य विमुञ्चति ॥ ५ ॥ ८ ॥ ५८० ॥

[मन्त्रस्थपदार्थः मन्त्रविनियोगश्च]

(भा) हरितत्व होतृषदनानां लिङ्गात् । विमोकार्थो मन्त्र प्रणीतानाम् ॥

(सू) यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तानस्मभ्यमिहा कुरु । उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवा-

---

(वृ) हरितत्वं होतृषदनानां लिङ्गादिति—होतृषदना हरितास्सुवर्णा इति समवेताभि[3]धानसभवात् ॥

[मन्त्रफलविमोकस्वरूपम्]

विमोकार्थो मन्त्रः प्रणीतानाम्—नासादनार्थः विमुञ्चन्त्विति लिङ्गात् । विमोचन तु यज्ञसम्बन्धविच्छेदबुद्ध्या अन्तर्वेद्यासादनम् ॥

---

[1] दधामीति लिङ्गादवधाने मन्त्र (रु). [2] प्रणीताना विमोचने मन्त्र. तालिङ्गत्वात् । कर्माङ्गत्वानिवर्तनार्थतया मन्त्रोच्चारणमेव विमोक (रु) [3] धानासम्भवात्—ख ग

(सू) [1]मध्ये स्वाहाकारे[2] बर्हिरनुप्रहरति॥३॥६॥५९०॥

[मध्यमस्वाहाकारे विशेषः तत्फलं च]

(भा) बर्हिःप्रहरणस्य कालमात्रम् । तस्मा[3]त्पित्र्यायां प्रह्वियतेऽभावेऽपि समिष्टयजुष· ॥

---

(वृ) न मध्यवर्तिनः प्रदानार्थत्वम् ;—

[बर्हिरित्यादिसूत्रविधेयम्]

**बर्हिःप्रहरणस्य कालमात्रम्**— न समिष्टयजुरङ्गं बर्हि. प्रहरणम् , बर्हिष· प्रतिपत्त्यर्थत्वात् । अन्यार्थत्वायोगात् तत्कालमात्र मध्यमे स्वाहाकार इति ॥

**तस्मात्पि—यजुषः**—अत्र प्रायश्चित्तष्वादितश्चतुर्णां मन्त्राणा ब्रह्म यज्ञो मरुतो देवा ऋभवश्च देवता. । ततस्त्रयाणा सूर्यः । ततो द्वयोर्वरुणः । द्वयोरग्नीवरुणौ । उत्तरस्याग्नि । तत· प्रजापति । ततोऽष्टाना मन्त्रोक्ताश्चतुर्थ्यन्ता देवता । ततोऽग्नि । ततो देवाः । ततोऽग्निर्जातवेदा । द्वयोरग्नि. । स्विष्टकृदुत्तरस्येन्द्रो वृत्रहा । ततो हरिवान् । अनाज्ञा[4]तमिति त्रिकस्याग्नि । उत्तरस्याग्नि श्रद्धा च। ततोऽग्निर्जातवेदाः । उत्तरस्य वरुणेन्द्रसवितृविष्णुविश्वेदेवमरुत । उत्तरस्य रुद्रो [5]मान्त्रवर्णिको वा। ततोऽग्निः । ततो वरुणा । व्याहृतीनामग्निर्वायु सूर्य प्रजापतिरिति । [6]सर्वत्र चतुर्थ्यन्ता देवताः । समिष्टयजुषो देवागातुविद प्रकृष्टो ब्रह्मा चेत्येके ॥

---

[1] मध्यमे—ख [2] मन्त्रान्ते पारिभाषिकस्वाहाकारापेक्षया द्वितीयस्यात्र मध्यमत्वमभिप्रेतम् । अत एव च लिङ्गादवगच्छामा मन्त्रान्तगत एव स्वाहाकार प्रदानार्थो न मध्यगत इति आदिगतस्यापि क्वचित्प्रदान·र्थत्व परिवर्ष्ये दर्शयिष्याम । मध्यमे स्वाहाकार इति कोऽर्थ ? वाचि स्वाहेत्यास्मिन्नित्यर्थ । तेन पशुसोमयो समिष्टयजुर्विवृद्धावपि तस्मिन्नेव बर्हि प्रहर । प्राकृतस्यैव मध्यमस्य तत्रापि विद्यमानत्वात् बर्हिस्सर्वमनुप्रहरति बर्हिर्मुष्टिं वेति सत्याषाढभारद्वाजौ (रु). [3] त्पित्रीयायाम्—ख ग [4] तादि—ख ग [5] मन्त्रवर्णविशिष्टोवा—क ख. ग. घ [6] इदं नदृश्यते—क. ख. ग घ

ननपगान् कुर्विति पुरस्तात्प्रत्यञ्चमुत्कर उपवेषं [1]स्थविमत उपगूहति ॥ ८ ॥ ५९१ ॥

॥ त्रयोदशीखण्डिका ॥

---

[उपवेषस्वरूपम्]

(भा) अग्र स्थविमत्—स्थूलम् । मूल तनूपवेषस्य ॥

(सू) यद्यभिचरेद्योपवेषे शुक् साऽमुमृच्छतु यं द्विष्म [2]इत्यथास्मै नाम गृह्य प्रहरति ॥१॥९॥५९२॥

(सू) निरमुं नुद ओकसः सपत्नो यः पृतन्यति ।
निर्बाध्येन हविषेन्द्र एणं पराशरीत् ।
इहि तिस्रः परावत इहि पञ्चजनाँ अति ।
इहि तिस्रोऽतिरोचना यावत्सूर्यो असद्दिवि ॥
परमां त्वा परावतामिन्द्रो नयतु वृत्रहा ।
यतो न पुनरायसि [3]शश्वतीभ्यस्समाभ्य इति
हतोऽसाववधिष्मामुमित्ये[4]ताभिः पञ्चभिर्निरस्येन्नि-
खनेद्वा ॥ २ ॥ १० ॥ ५९३ ॥

---

(वृ) अग्रं—पवेषस्येति—पुरस्तात्प्रत्यञ्चमुत्कर उपवेषं स्थविमत उपगूहन्तीति वचनात् उपवेषस्याग्र स्थविष्ठम् ॥

---

[1] स्थविमत —स्थूलमूलप्रदेशादारभ्य उत्करपांसुषु पुरस्ताद्भागेन प्रत्यगुपगूह्य.

(रु) [2]यद्यभिचरितुमिच्छेदथास्मै नामगृह्य अस्याभिचर्यमाणस्य नाम । योपवेषे शुक् सा देवदत्तमृच्छत्विति गृहीत्वा उत्कर एव प्रहरति वज्रवत् तद्धिंसार्थतया क्षिपतीत्यर्थ । अथवा अस्मै—एनमुद्दिश्य तस्यैव नाम गृहीत्वा प्रहरतीत्यर्थ । (रु).

[3] स शश्वतीभ्य—क. [4] यजुष्ट्वेऽप्यन्त्ययो ऋग्बाहुल्यादेताभिरिति स्त्रीलिङ्गनिर्देश । तत्र च ऋग्यजुर्विवेचनार्थं प्रथम इतिकरण । शत्रुनामग्रहणार्थो मन्त्रेष्वदश्शब्द. । निरस्येत्—निर्णुदेदुत्करे । निखनेत्—निहन्यात् शत्रुवत् (रु)

[निगूहनस्यानुकल्पः]

(भा) योपवेष इत्युत्करे प्रहरणम् । उपवेषोपगूहनप्रत्याम्नाय. ।

[द्वेष्यनिर्देशे विशेषः]

अत्रैव मन्त्रे नामग्रहणं शत्रो· । निरमु नुद इति ।

[निरसनविनियोज्यमन्त्राः]

तिसृभि· ऋग्भिर्यजुर्भ्यां च निरसनमुपवेषस्य ॥

(सू) **अवसृष्टः परापत [1]शरो ब्रह्मसंशितः । गच्छामित्रान् प्रविश मैषां कं चनोच्छिष [2] इति वा ॥ ३ ॥ ११ ॥ ५९५ ॥**

[पञ्चानां स्थाने]

(भा) अवसृष्ट इति वा ॥

---

(वृ) **योपवे–हरणम्—म्नायः** अभिचारनिमित्तप्रतिपत्त्यन्तरविधानात् नित्यस्याविकारो न तु समुच्चय· । प्रहरण–निरसनम् ॥

[द्वेष्यनामग्रहापेक्षिता विभक्तिः भाष्ये एवकारार्थः]

**अत्रैव–शत्रोः**—योपवेषे शुक् साऽमुमृच्छात्वित्यत्र अमुम् इति शत्रोर्नाम द्वितीयान्त गृह्यते ॥

**निरमुं–मुपवेषस्य**—योपवेष इति प्रथमं यजु· द्विष्मान्तम् । निरमुं नुद इति तिस्र ऋचः । हतोऽसाववधिष्मामु इति पञ्चमं यजुः । नात्रामुमित्यस्य स्थाने शत्रोर्नामोच्चारणम्, ब्राह्मणे अथास्मै नाम गृह्य प्रहरतीति नामग्रहणमुक्त्वा तत उत्तर निरमु नुदेति विनियोगात् । हतोऽसाववधिष्मामुमित्यत्र तु शत्रोर्ध्यान न तु नामनिर्देशः । य द्विष्यात्त ध्यायेदिति विधानात् ॥

**अवसृष्ट इति वा**—पञ्चभिर्विकल्प्यते ।

---

[1] शरव्ये [2]–क. [2] अनन्तरविधावेवाय मन्त्राविकल्प (रु)

[स्त्रीत्वेन निर्देशहेतुः]

(भा) एताभिरिति स्त्रीलिङ्गमृग्बहुत्वात् ।

[पक्षान्तरम्]

केचित् योपवेष इत्युपगृह्य शत्रोर्नाम गृहीत्वा उत्करे [1] प्रहरन्ति ॥

(सू) **यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि [2] विमुच्य संख्यायोद्वासयति ॥ ४ ॥ १२ ॥ ५९६ ॥**

[विमोकसंख्याने क्रमेण]

(भा) चतुष्पदयेति ज्ञानार्थं कृत्वा विमोकं गणना ॥

(सू) **[3] सन्तिष्ठते दर्शपूर्णमास[4]योः ॥५॥१३॥५९७॥**

---

[पक्षान्तराशय.]

(वृ) **केचित्–प्रहरन्ति**—उपवेषेण । अस्यार्थ ,—स्थविमत उपगूहतीत्युपगूहन विधाय यद्यभिचरेद्योपवेषे इत्यारभ्य द्विष्म इतीतिकरणात् अथास्मै नाम गृह्य प्रहरतीत्युत्तरत्र प्रहरणोपदेशादभिचरत प्रथमो मन्त्र उपगूहनार्थः । उपगूढ पुनरुपादाय शत्रोर्नाम गृहीत्वा निरमुं नुदेत्यादिभिश्चतुर्भिः प्रहरेत्–उपवेषेणोत्कर पीडयेत् ॥

[क्रमोपपत्तिः]

**चतुष्पदयेति–गणना**—प्रथिताना समूहन विमोक —क्रमेण सर्वकपालयोग्या[5]न्विमुच्य अनन्तर सङ्ख्यायोद्वासनमुभयो पृथक्पदार्थत्वात् ॥

---

[1] प्रहरत्युपवेषणम्–घ प्रहरन्त्युपवेषम् (मु पु) [2] अत्रापि विमोक पूर्ववत् । सख्यावचनमप्रमादार्थम् । यद्येक कपाल नश्येदिति प्रणाशे प्रत्यवाय-प्रायश्चित्तयोरश्रवणात् (रु) [3] सतिष्ठेते दर्शपूर्णमासौ इति रुद्रदत्तस्य पाठ [4] मासौ–क.ख एवमन्ताध्वर्यवेण सतिष्ठेते । याजमानशेषस्तु वक्ष्यते (रु) [5] योगान्विमुच्य–क योगाद्विमुच्य (मु रा)

[प्रक्रान्तोपसंहारः]

(भा) ततस्समाप्तिराध्वर्यवस्य ॥

(सू) [1]शंय्वन्तं वाऽऽहवनीये सꣳस्थापयेदाज्येडान्तं [2]गार्हपत्ये । इडान्तं वाऽऽहवनीये [3]शंय्वन्तं गार्हपत्ये ॥ ६ ॥ १५ ॥ ५९८ ॥

(सू) [4]यदि शंय्वन्तं पश्चात्स्या[5]द्वेदात्तृणमपा

---

[प्रक्रान्तस्याद्यन्तनिर्देशः]

(वृ) ततस्समाप्तिराध्वर्यवस्य—अत्र ब्रह्मभागप्राशनादि निष्क्रमणान्तम् ॥

---

[1] शंयुवन्त—क सन्तीह इडासूक्तवाकशंयुवाका नाम होतृनिगदसंयुक्तास्त्रय. कर्मविशेषा । तेष्विडा तावत् द्रव्यभेदेन उभयोरप्याहवनीयगार्हपत्ययोर्नियता । हविरिडाऽऽहवनीये आज्येडा गार्हपत्ये इति । तथा सूक्तवाकशयुवाकावपि सूत्रान्तरकारैर्नियमविकल्पाभ्यामुभयत्रेष्येते । सूत्रकारस्तु तावन्यतरत्रैवेच्छन् हविरिडानन्तरं आहवनीये पूर्वमभिहितवान् । इदानीं तु आज्येडानन्तर गार्हपत्ये स्याता नाहवनीय इत्याह (रु) [2]आहवनीयगार्हपत्यशब्दाभ्या च गार्हपत्यात्पूर्वापरदेशौ लक्ष्येते , अनग्निसंयोगित्वादिडाया । यदि शंय्वन्त पश्चादिति लिङ्गाच्च । तदयमर्थ ,—यत् पूर्वदेशसयुक्तमिडादिकर्म तद्यथाप्रसिद्धमेव शंयुवाकान्त कुर्यादपरदेशसयुक्तमप्याज्येडान्तमिति प्रथम कल्प । स च पूर्वोक्त एव कल्प उत्तरकल्पार्थमनूदितो वेदितव्य । यथा चैत्रो भोजनीय इत्युक्त्वा चैत्रो वा भोज्यता मैत्रो वेति । द्वितीयकल्पस्तु इडान्तमेव संस्थापयेत्पूर्वदेशे । न तु सूक्तवाकशयुवाकौ तत्र भवत । तौ त्वपरदेशे भवत इति (रु) [3]शयुवन्तं पश्चात्स्याद्वेदात्तृण—क [4]यदा त्वपरदेशे भवत तदा एवं प्रयोग इत्याह ,—(रु) [5]वेदतृण (रु)

(सू) दाय[1] जुह्वामग्रमञ्जयात्स्रुवे [2]मध्यमुपभृति वाऽऽज्यस्थाल्यां मूलं तस्य प्रस्तरवत्कल्पः सूक्त-वाकाद्याशंयुवाकात् ॥ ७ ॥ १६ ॥ ५९९ ॥

(भा) उभयाग्निसयुक्ते उत्तरे द्वे सस्थे । अग्निग्रहणं पूर्वापरदेश[3]-ग्रहणार्थम् । न च कल्पचतुष्टयम्, वाशब्दस्य द्विरेव पाठात् ।

---

(वृ) उभयाग्नि–ग्रहणार्थम्—आज्येडान्त गार्हपत्य इडान्त वाऽऽह-वनीये इतीडयोरग्निसबन्धाभावादग्निसमीपलक्षणाया तद्वार्तिना कर्मणां तत्तदन्ते विरमणम् ॥

[शंय्वन्तपक्षेप्राशित्रादिकाल ]

न च कल्प–पाठात्—अस्मिन् पक्षे [4]इडायाः प्राक्प्राशित्रम् । सपत्नीयहोमश्च, सम्भवतां परित्यागायोगात् ॥

---

[1] यदि शंयुवाकान्त कर्म पश्चाद्देशे स्यात् तदाऽऽज्येडानन्तर प्रस्थरस्थाने वेदतृणमङ्क्त्वा तद्वदेव प्रहरति । तत्र सूक्तवाकाद्यविकृतमाशयुवाकादित्यर्थ । प्रस्तरप्रहारस्तु निवर्तते प्रत्याम्नानात् । परिधिप्रहारस्तु भवत्येव, स्वकाले प्राप्तत्वात् अप्रत्याम्नातत्वाच्च । न चैषा गार्हपत्ये प्रहार , शयुवाकानङ्गत्वादाहवनीयसयोगि-त्वाच्च । तथाऽन्येषामपि तद्देशसयोगिना तत्र यथाकाल प्रयोगोऽवगन्तव्य । केचित्तु सस्थापनशब्दौचित्यात् दर्शपूर्णमासयोरेवेमौ खण्डसस्थाविकल्पौ व्याचक्षते । तत्र तत्र यत्तन्त्रं तत् शंयुवाकाद्यन्तमेव सस्थापयेदिति । तत्र गुणागुणयोः स्थापने प्रमाण सूत्रविद इत्यल निर्बन्धेन (रु) [2] मध्यममुप–ख. [3] लक्षणार्थम्–क. ख. ग घ. [4] इडाया प्राशित्रप्राक् [2]–ख ग.

(भा) शय्वन्तं सङ्स्रावान्तमाहवनीये [1] कर्म । तत्र हविश्शेषभक्षण-निवृत्तिः [2] नोपवेषप्रणीता[3]विमोकौ ॥

[शंय्वन्तपदार्थविशेषविवक्षामानम्]

(वृ) **शंय्वन्तं सङ्स्रावान्तमाहवनीये कर्म** — शयुवाकमध्ये परिधिप्रहरणात् प्रहरणाङ्गत्वाच्च सङ्स्रावस्य तदन्तता । सङ्स्राव-स्यानङ्गत्वे परिधिप्रहरणान्तम् ।

[हविश्शेषभक्षणनिवृत्तिपक्षेविशेषः]

**तत्र—निवृत्तिः**—ध्रौवस्य च समाप्ति पूर्वमेव नारिष्ठान्ते स्विष्टकृति च ।

**नोपवेषप्रणीता विमोकौ**—प्रणीताविमोके पूर्वमुपादातव्ये व्युत्क्र-मेणोपादानमुपवेषादे पदार्थस्यात्यन्तनिवृत्तेः । प्रणीताना तु विमोकस्या-न्तर्वेद्यासादनपर्यन्तत्वात् तस्य च निवृत्तेर्निषेधस्य स्तोकविषयत्वात् ।

[अत्रपक्षेप्रायश्चित्तहोमेविशेषः]

प्रणीताविमोकादेः प्रतिषेधात्सस्थायाः प्राक् सर्वप्रायश्चित्तानि हूयन्ते । जुह्वा स्रुवेण वा जुहोतीत्येतावति वक्तव्ये सर्वप्रायश्चित्तानीति वचनात् आसु सस्थासु चा[4] विदिताना दोषाणा सम्भावितत्वात् [5] क्रम-विशेषोपदेशात् एतानि न हूयन्ते । साधारणो[6]पदेशोपदिष्टा इष्टेभ्य इत्यष्टावाहुतय । [7] सर्वसाधारणानि प्रायश्चित्तान्येव खण्डसस्थासु हूयन्ते । दार्शपूर्णमासिकैस्सर्वप्रायश्चित्तैर्विकल्पेरन्निति [8] तत्साध्यदोष-निर्घातैः साधनैस्सह विकल्पन्ते न तेषां क्रमेण विकल्प । तथाहि प्रायश्चित्तोपदेश· फलवान् भवति । इतरथा अत्रैव समृद्ध्यै स्वाहा एता एवेति वक्ष्यतीति । न समिष्टयजु ध्रौवसमाप्तेः । न बर्हिष्प्रहार काला-भावात् । न होतृषदनस्तरणं स्तीर्णत्वाद्वेदेः ।

---

[1] कर्महविश्शेष—क. [2] नोपवेषण—घ. [3] विसर्गौ—घ [4] चा विहि-तानाम्—क [5] केचित्क्रम—ख ग व्युत्क्रम (मु रा) [6] णोपदिष्टानीष्टेभ्य—घ. साधारणानिष्टे—क नीष्टेभ्य (मु. रा) [7] तत्साध्ये—ख ग [8] निर्घाते—ख ग.

(भा) [1]यजमानपत्नीकर्मणामनिवृत्ति । अन्यो वा वृतो होता ब्रह्माऽऽग्नीध्रो वा अन्तर्वेद्यासाद्य विमोकं कृत्वा प्रणीतानां धारां [2]स्राव-येत् । पूर्णपात्रनिनयनं च कुर्यात् पत्न्यास्तदर्थत्वात् । आज्येडां भक्ष यित्वा [3]समापित· न जुहोति संपत्नीय यद्यहुत· । हूयन्ते दक्षिणा-ग्निहोमा अग्निनियमात् । निवृत्तिर्वा याजमानस्यापि यत्राध्वर्युरुपरमत्याहव-नीयसमीपस्थस्य प्रणीताविसर्गस्य गार्हपत्यसमीपस्थस्य [4]त्रिमोकादेः ।

---

[ब्रह्मणः प्राशनादिकाल.]

(वृ) **यजमानपत्नीकर्मणामनिवृत्तिः**—आध्वर्यवसमाप्त्युपदेशान - न्तर संस्थान्तरोपदेशादाध्वर्यवसमाप्तेरेव । ब्रह्मणोऽपि तदन्तरं प्राशनो-पस्थानादि ॥

[अन्योवेत्यादिभाष्याशयः]

**अन्यो वा वृतो होता–स्रावयेत्**—अनेन भाष्यलिङ्गेन इडान्ताया चतुर्धा कृत्वा बर्हिषदं करोत्यन्यः । अन्वाहार्यस्तु गृह्यते प्राग्देशत्वाभावात् ॥

[पूर्णपात्रमित्यादिभाष्यार्थः]

**पूर्णपात्र–र्थत्वात् इति**,–अस्यार्थः ,–आज्येडान्त गार्ह-पत्य इत्यस्मिन् पक्षे गार्हपत्यसंनिधौ पूर्णपात्रनिनयनञ्च कर्तव्यम् सपत्नी पत्याह गच्छ इति लिङ्गात्पत्न्यर्थत्वात् । शयुवाकान्तं गार्हपत्य इत्यस्मिन् पक्षे न परिधिप्रहरणम् न सङ्स्राव· शयुवाकानङ्गत्वात् ॥

[संपत्नीयहोमविशेष.]

**आज्येडां–यद्यहुतः**—यदि पत्नीसयाजमध्ये न हुत· [5]यदीति प्रमादे दोषाभावः । प्राशित्रमप्येवम् ॥

[हूयन्तइतिभाष्योक्तपक्षेहेतुः]

**हूयन्तेद्–विमोकादेः**—संस्थापयेदित्यविशेषवचनात् ।

---

[1] यजमानकर्मणा–घ. [2] स्रावयति (मु रा). [3] समाप्ति–क. ख ग घ.
[4] योक्त्रविमोकादे –ग. [5] यदि प्रमादे.–ख ग.

(भा) इतरथेडान्तनियमोऽनर्थकस्स्यात् यदि मिश्राणि चतुर्धाकरणादीनि क्रियेरन् । अतोऽध्वर्युरेतानि कर्माणि करोतीति ब्रूयात् ।

[अत्रपक्षान्तरंतन्निरासश्च]

[1] केचित्पृथगेता सस्था· कल्पयन्ति, तेषामाहवनीयग्रहणमनर्थकम् ।

[इडान्तपक्षविशेषः]

इडान्ते [2] चतुर्धाकरणादेर्निवृत्ति । आज्येडा भक्षयित्वा वेदात्तृणमपादाय तस्यैवावयवमायुषे त्वेति निधायाविकृतस्सूक्तवाक· ।

---

[उक्तार्थसमर्थनम्]

(वृ) इतरथे–क्रियेरन्—चतुर्धाकरणादीनां ऋत्विग्यजमान[3]मात्राश्रयाणां यजमा[4]नानिवृत्त्या यद्यनुष्ठानं स्यात् तर्हीडान्तनियमोऽनर्थकस्स्यात् ॥

अतोऽध्वर्यु–ब्रूयात्—यद्यन्येन मिश्राणि क्रियेरन् अध्वर्योरपनयनमात्रं स्यात् । अतोऽन्येन सर्वं क्रियते । अतोऽध्व[5]र्युमात्रनिवृत्तिपरत्वादिडान्तनियमोऽनर्थकस्स्यात् । अतो निवृत्तिर्याजमानस्यापि ॥

[पक्षान्तरंदोषश्च]

केचित्पृथगे–र्थकम्—शंयुवन्तं वाऽऽहवनीय इति वाशब्दचतुष्टयाभावाच्च । अतः कल्पद्वयमेव ॥

[चतुर्धाकरणादिनिषेधेव्यवस्था]

इडान्ते–र्निवृत्तिः—याजमानस्यापि निवृत्तिपक्षे ।

[अविकृतसूक्तवाकत्वोपपत्तिः]

आज्येडां–सूक्तवाक इति—शंय्वन्त गार्हपत्य इत्यस्मिन् पक्षे प्रयोगविधि । अग्निशब्दस्य गार्हपत्येऽपि सम्भवादविकृतस्सूक्तवाकः ॥

---

[1] सस्थापनशब्दौचित्याद्दर्शपूर्णमासयोरेवेमौ खण्डसस्थाविकल्पौ इति पक्ष निरस्यति रुद्रदत्त [2] चतुर्धाकरण दक्षिणादे–ग I दक्षिणा चतुर्धाकरणादे II (मु रा) [3] ग्यजमानमिश्रणा–क ख. ग. घ [4] न निवृत्त्या–(मु र). [5] मात्रपरत्वा.—ग.

(भा) आहवनीये परिधयो न क्षिप्यन्ते न च संस्रावः । शंयुवाकानन्त-त्वात् ततो दक्षिणाग्निहोमाः सर्वत्र समानम् । विष्णुक्रमादि याजमानम् ।

(सू) *[1] स्वर्गकामो दर्शपूर्णमासौ[2] एककामः ॥८॥ ॥ १७॥ ६०० ॥

(सू) [3] सर्वकामो वा* ॥ ९ ॥ १८ ॥ ६०१ ॥

(सू) युगपत्कामयेताहारपृथक्त्वे वा ॥ १० ॥ १९ ॥ ॥ ६०२ ॥

---

(वृ) आहवनीये परिधयो न क्षिप्यन्ते—शाखा तु वेदतृणेन सह प्रह्रियते ॥

न च संस्रावः—क्रियेत ।

शंयुवाका—समानम्—सर्वसंस्थासु हूयन्ते ।

विष्णुक्रमादि याजमानम्—यजमानपत्नीकर्मणा निवृत्तिरि-त्यस्मिन् पक्षेऽपि [4] विष्णुक्रमादि कर्तव्यम् । आनीयमानाया जपतीत्यादि-वत् चतुर्धाकरणा[5]दीनां निवृत्तावपि विष्णुक्रमाद्यनुवृत्ति ऋत्विग्व्या-[6]पारानपेक्षितत्वात् आत्मसंस्कारत्वाच्च ॥

---

1 **एतच्चिह्नान्तर्गत सम्भूयैक सूत्रम्–(रु) सन्तीह दर्शपूर्णमासयोरधिकार-वाक्यानि 'स्वर्गकामो दर्शपूर्णमासाभ्या यजेत' 'सर्वेभ्य कामेभ्यो दर्शपूर्णमासौ' 'यावज्जीवं दर्शपूर्णमासाभ्या यजेतेत्यादीनि । तानीदानीं व्याचष्टे, (रु) 2 नित्यौ दर्शपूर्णमासौ अफलार्थिनाप्यनुष्ठेयाविति स्थास्यति । तथाप्येतौ स्वर्ग कामयमानस्य तमपि साधयत इत्यर्थ । (रु) 3 स्वर्गकामस्य उत्तरविकल्पार्थोऽ-नुवाद स्वर्गकामश्रुतेश्च स्वर्गकामो वा तौ वा कुर्यात्, सर्वेभ्य कामेभ्य इति श्रुते सर्वकामो वेत्यर्थ (रु). 4 पक्षेऽपि पिष्टलेपादि कर्तव्य विष्णुक्रमादि च–घ. 5 करणादिनिवृ–ख ग. 6 ग्व्यापारेऽनपे–ख, ग,

[कामनाव्यवस्था]

(भा) [1] यदैककामस्तदा स्वर्ग एवाद्ये कामयितव्य । आहारपृथक्त्वे — स्वर्गादीन्वा युगपत् ।

(सू) [2] **ताभ्यां यावज्जीवं यजेत ॥ ११ ॥ २० ॥ ॥ ६०३ ॥**

(सू) **त्रिंशतं वा [3] वर्षाणि ॥ १२ ॥ २१ ॥ ६०४ ॥**

(सू) **जीर्णो वा [4] विरमेत् ॥ १३ ॥ २२ ॥ ६०५ ॥**

[सङ्कल्पकालः]

(भा) पौर्णमासे पौर्णमासे यावज्जीवादिसङ्कल्प ।

---

(वृ) **यदैक–मयितव्य इति**—स्वर्गकामो दर्शपूर्णमासावेककाम इत्येक सूत्रम् । इतरथा एककाम इत्यस्यानन्वयात् सर्वकाम-[5]रहितत्वपक्षे स्वर्गकामस्यैव दर्शपूर्णमासौ न पश्वादेरन्यतरकामस्य । प्रथम सर्वकामो वाऽधिकारी । [6] तत्रायुगपत्कामो मन्दफल· ।

**आहरपृ–ऽअयुगपत्**—पौर्णमासे पौर्णमास एकैककामः ॥

[तत्तत्सङ्कल्पारम्भकालः पक्षान्तरं च]

**यावज्जीवादिसङ्कल्प इति**—यावज्जीवत्रिंशद्वर्षजीर्णविरमण-पक्षाणा अन्यतमसङ्कल्प प्रथमपौर्णमास्याम् तेष्वाहारपृथक्त्वपक्ष· प्रथम स्वर्गकामाधिकारेऽपि द्वितीयपौर्णमास्यादौ यावज्जीवसङ्कल्पविरोधो मीमांसकमतेन (जै. सू २-४-९) । [7] यावज्जीवनवत्तया अधिकारस्य प्रतिप्रयोगभेदादिति ॥

---

[1] यद्येककाम –घ I. यदैक काम्यतेत II [2] यदि विच्छिन्द्यात्प्रत्यवे ।दित्यर्थं , प्रव्रजितस्य तु दीक्षितवत् प्रतिषेधादेव निवृत्ति अनग्नित्ववचनसामर्थ्याच्च (रु) [3] ततो विरमेत् (रु) [4] तद्विरामादेव निवृत्तिस्तद्विकाराणाम् । न तु विरमेदग्निहोत्रात्, कात्यायनोक्ते (रु) [5] रहितपक्षे–घ [6] तत्र युगपत्कामो–क [7] जीवनतया (मु रा).

[उपरमानुपरमव्यवस्था]

(भा) दर्शपूर्णमासयोरुपरमे तद्विकाराणामप्युपरम· तत्प्रकृतित्वात् । दर्विहोमाग्रयण [1] तु क्रियते ।

---

[दर्शपूर्णमासविरहेऽन्यविरहसंभवस्योपपत्तिः पक्षभेदेन]

(वृ) **दर्शपूर्ण—तत्प्रकृतित्वात्**—तद्विकाराणामाग्रयणादीनामपि । अयमभिप्राय ,—अन्वारम्भणीयासस्कृतो दर्शपूर्णमासविकारे [2]ष्वधि कारी । तथाहि ;—अन्वारम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्, (१२–२–२० जै. सू ) इत्यस्मिन् पक्षे दर्शपूर्णमासप्रयुक्तान्वारम्भणीयार्जितसस्कारोपर्जीवित्व विकृतीनाम् । अतस्तयोरुपरमे तदर्थतया प्रयुक्तसस्कारस्यापि विनाशात् तदुपजीविना विकृतनिामप्यननुष्ठानम् । स्याद्वा कालस्याशेषभूतत्वात् (१२–२–२० जै. सू.) इत्यस्मिन् पक्षेऽन्वारम्भणीयासस्कृतस्यैव [3] प्रकृतौ साङ्गे प्रधाने अधिकार इति प्रधानप्रयुक्ताधिकारोपजीवित्वादङ्गाना प्रधानाधिकारोपरमे अङ्गेष्वप्यधिकाराभावात् तदङ्गवद्विकृति[4]ष्वप्यनधिकारात् प्रकृत्युपरमे तद्विकृतीनामप्यननुष्ठानम् । यथा विकृतिप्रयोगेऽसन्नयत· सान्नाय्यविकारा न भवन्तीत्युक्तम् ॥

[आग्रयणानिवृत्तिनिदानादि]

**दर्विहो—क्रियते**—दर्शपूर्णमासोपरमेऽपि नवाना गर्हपत्ये स्थालीपाकं श्रपयित्वा (६, ३०, १६ आ. श्रौ.) इत्येवं रूपाग्रयणं क्रियते । अनाहिताग्नेरपि नवाशनार्थं [5] दर्शपूर्णमासाग्रयणेऽधिकृतत्वात्

---

[1] यण क्रियते—ख. ग घ [2] ष्वप्याधिकारी—क घ [1] आरम्बणीया इति जैमिनिसूत्रेपाठ [3] विकृतौ साङ्गे [4] ष्वनधि (मु रा) [5] र्थं दर्विहोमाग्रयण विकृतित्वादत्रापि-ख ग र्थं दर्विहोमेऽधिकृतत्वात् दर्शपूर्णमासविकृतित्वाभावेनुष्ठानसंभवाच्च विच्छिन्नाग्नि-घ.

(भा) दर्विहोमसोमानामपि निवृत्ति ।

[उपदेशपक्षः]

केवलमग्निहोत्रमित्युपदेश. । अग्निहोत्रमेव जुहुयादिति कात्यायनमतिश्च ॥

(सू) द्वे[1] पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेतर्ध्नुयामित्युक्त्वा[2] हैकामेव यजेतेति ॥ १४ ॥

॥ २३ ॥ ६०६ ॥

चतुर्दशी खण्डिका ॥

---

(वृ) [3]अत्रापि दर्शपूर्णमासविकृतित्वाभावे[4]नानुष्ठानसंभवाच्च विच्छिन्नाग्निसन्धानं शिवाजपान्तम् तावतैवाग्निसिद्धे. । इष्टीनां चा [5]नियताङ्गत्वात् आधानस्य सेष्टिसान्वारम्भणीयमपवृज्येतिदर्शनात् पूर्णाहुत्य[6] न्तमग्न्याधेयम् । यदि त्विष्टयस्तनुयुः इति (आश्व श्रौ २–१) बह्वृचवचनाच्च ससर्गेष्ट्यादीनां च पूर्णा[7]हुतिः ॥

दर्विहो–त्युपदेश इति—ताभ्यां यावज्जीव यजेत त्रिंशतं वा वर्षाणीति नित्यकर्ममात्रोपलक्षणम् । दर्विहोमसोमानामपि नित्याना

[सोमविशेषानवृत्त्युपपत्तिः]

।नेवृत्ति· । अस्मिन् पक्षे सोमोपादानात् पूर्वस्मिन् पक्षे सोमोऽनुष्ठीयते । आधानानन्तरमेव सोमाधिकारदर्शनात्[8] अन्वारम्भणीयानपेक्षितत्वाच्च ।

---

[1] द्वे पौर्णमास्यौ अमावास्ये क [2] क्त्वाहैकामेव–क. अथानयो कर्मणो ऋद्धिकामप्रयोगे विशेष प्रदर्श्यते । य. कामयेतर्ध्नुयामिति पौर्णमासीममावास्या च स्वे स्वे काले द्वे द्वे यजेत । किमुक्त भवति [2] एकस्मिन्नेवपर्वणि पौर्णमासीमभ्यस्येत् पञ्चदश्यामेका प्रतिपदीतरामिति, तथा स्वकालेऽमावास्यामित्यर्थ । तत्र प्रथमेतिशब्दानन्तर इति तत्रोपात्त द्रष्टव्यम् । इत्युक्त्वाह,—एवमभ्यासमुक्त्वा पुन ब्राह्मणमाह,—'एकामेव यजेत' इति उभयमप्येकामनभ्यस्तामेव यजेत न तु द्वे द्वे इत्यर्थ. । वैकल्पिकोऽभ्यास इत्युक्त भवति–रु [3] तत्रापि मु. रा), [4] नानुष्ठान (मु रा) [5] चानियतार्थत्वात्–क चानियतत्वार्थत्वात् (मु रा) [6] त्यन्तत्व कर्ममात्रोग्नेया [2]–क. [7] हुतय, (मु. रा) [8] दर्शनान्वारम्भणीयानपेक्षत्वाच्च–ख. ग

[काम्यप्रयोगे कालः मानञ्च]

(भा) प्रतिपद्द्वितीययोरिज्या ऋद्धिकामस्य यमद्येजानमिति लिङ्गात् ।

[उपदेशपक्ष ]

पौर्णमासीप्रतिपदोरित्युपदेश । साकमेधेषु विरोधात् । [1] एकाऽप्यृद्धिकामस्य लभ्यते ।

---

(वृ) ततः सोमाङ्गाना दर्शपूर्णमासविकाराणामप्यनुष्ठानम् । दर्विहोमनिवृत्तावप्यग्निहोत्रं हूयते । चतूरात्रमहूयमानोऽग्निर्लौकिको भवतीति श्रुतेरग्निगुप्त्यर्थत्वात् ।

[काम्यप्रयोगीयविशेषोपपादनन्]

**प्रतिप—लिङ्गादिति**—यस्मिन्नहनि प्रथमामावास्यायां यागसमाप्ति तस्मिन्नहनि चन्द्रमस· पश्चात्प्रकाशन प्रतीयते पश्चाच्चन्द्रमा अभ्युदेतीत्यनेन । अत· प्रथमस्य पञ्चदश्यामारभ्य प्रतिपदीज्या । द्वितीयस्य तु प्रथमायामारभ्य द्वितीयायामिज्या ।

[उपदेशपक्षीयविशेषोपपादनन् ]

**पौर्ण—त्युपदेशः**—द्वे पौर्णमास्याविति वचनात् चतुर्दश्यामारभ्य पञ्चदश्या यागः पञ्चदश्यामारभ्य प्रतिपदि याग इत्युपदेशः ।

**साकमेधेषु विरोधादिति**—साकमेधेषु पञ्चदशीप्रतिपदोरेव पौर्णमासीत्व प्रतीयते । [2] साकमेधैरित्युक्त्वा [3] अत्र पौर्णमास्येष्ट्वेति चतुर्दश्यामारभ्य पञ्चदश्या साकमेध समाप्य [4] प्रतिपदि [5] पौर्णमासीविधानादत्रापि द्वे पौर्णमास्याविति पञ्चदश्यां प्रतिपदि याग· ।

**एकाप्यृ—भ्यते**—एकामेव यजेतेति ।

---

[1] एका ऋद्धिकामस्य लभ्यते—ग [2] सतिष्ठते साक—ख ग. द्व्यहंस—क. घ. [3] त्युक्त्वा—ख ग. [4] प्यते—ख ग. [5] प्रतिपत्पौर्ण—क.

[एककामस्याप्यृद्धिकामना]

योऽप्येककामस्तस्याप्यृद्धिकामो लभ्यत इति पुनरारम्भः ।

इत्यापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये तृतीये प्रश्ने
चतुर्थः पटलः ॥

---

**(सू) सꣳ[1]स्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति ॥ १ ॥ १ ॥ ६०७ ॥**

**(सू) समानतन्त्रमेके समामनन्ति ॥ २ ॥ २ ॥ ६०८ ॥**

---

[एककामस्याप्यैद्धिकामनोपपत्तिः]

**(वृ) योऽप्येक—रम्भः**—एककामस्य स्वर्ग एवादौ कामयितव्य इत्युक्तम् । [2] ऋद्धिमात्रकामस्याहारपृथक्त्वपक्षेण सिद्धत्वेऽपि एकामेव यजेतेति पुनर्विधानादेककामस्या[3]प्यृद्धिकामना भवत्येव न स्वर्ग एवेति[4] ॥ १३५ ॥ ५५८ ॥

इति आपस्तम्बश्रौतधूर्तस्वामिभाष्यवृत्तौ तृतीये प्रश्ने चतुर्थः पटलः

---

---

1 अथोत्तरेण पटलेन दर्शपूर्णमासयोर्नित्यान् काम्यांश्च निर्वाप्यान गुणविकाराश्चोपदिशति । पौर्णमासमिन्नुनिर्वपतीति वचनात् समुदायाङ्गं वैमृध । तेन पौर्णमासविकारेषु न भवति । आमावास्य त्वस्य तन्त्रमैन्द्राग्नविकारत्वात्—क

2 ऋद्धिकाममात्रमाहार—ख ग 3 वृद्धिर्हानिर्भ—ख ग. वृद्धिकामना—क

4 अत्र,—पौर्णमास्या इष्टे समाप्त्यनन्तर इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपत्यन्वग्वाऽऽधानप्रभृत्यासमाप्तेरस्या इष्टेरामावास्यतन्त्रेतैन्द्राग्नविकारत्वात् इति वृत्तिर्दृश्यते (मु रा). (अन्यत्रकोशेषु तु न दृश्यते)

[वैमृधेष्टौ समानासमानतन्त्रत्वकृतविशेष उपदेशमतं च]

(भा) समानतन्त्रे वैमृधे सोमयाजिनो नानाबीज[1]धर्म· प्रकृतावूह-विरोधात् । ऐन्द्राग्नविकारश्च । अत आमावास्यं तन्त्रम् । उपदेशो यथाभागामिति । समानतन्त्रेऽपि भवत्यूहो विकृत्याश्रयणात् ॥

(सू) **तस्य याथाकामी [2]प्रक्रमे प्रक्रमात्तु निय-म्यते ॥ ३ ॥ ३ ॥ ६०९ ॥**

[वैमृध आरम्भानित्यतापक्षः]

(भा) अनित्यश्चास्यारम्भ यद्यग्रे निरूप्य नानुनिर्वपेदिति । यस्या-रब्धस्तस्य नियत । याथाकामी प्रक्रम इति यथास्य काम इच्छा तथा प्रयुङ्क्त इति ।

---

[वैमृधेष्टौ ऊहसदसद्भावपक्षयोरुपपत्तिः]

(वृ) **समानतन्त्रे–हविरोधादिति**—सोमयाजिनोऽग्नीषोमीयस्यापि विद्यमानत्वात् [3]पुरोडाशबहुत्वाद्यथाभागं व्यावर्तध्व[4]मित्यशस्य बहुवचने-नोह प्राप्नोति। स चायुक्त प्रकृतौ। अतस्समानतन्त्रत्वे वैमृधस्य नाना-बीजधर्म ॥

**ऐन्द्राग्न–तन्त्रम्**—तद्भिन्न[5]तन्त्रपक्षे ,

**उपदेशो यथाभागमिति—श्रयणादिति ;**—विकृत्या समा-नतन्त्रत्वे विकृतेरागन्तुकत्वात् प्रकृतेश्च सगुणविगुणसाध्यत्वात् विकृते-रपि सगुणत्वाद्यथातन्त्रानुष्ठानस्य युक्तत्वादूहो युक्त इति । अय पक्षो भाष्यकारेणाश्रयणान्वायात्यपक्षे मीमांसकमतेनोक्तः ॥

[भाष्यदर्शितपक्षद्वयहेतू]

(वृ) **अनित्यश्चा–निर्वपेदिति**—श्रुतौ यदिशब्दश्रवणात् ।

**प्रयुङ्क्ते इति**—याथाकामी । आरम्भे याथाकामित्वम् ।

---

[1] धर्मा ग [2] I प्रक्रमेत्प्रक्रमे [2]–क. II दर्शपूर्णमासारम्भदशायामार-भ्यते न वा (रु) [3] बहुत्वात्पुरोडाशाना–घ. [4] मित्यस्य–ख, ग [5] तन्त्रत्व पक्षे–घ,

[तन्त्रप्रथमपरिग्रहानियमपक्षः]

समानतन्त्रे नानातन्त्रे च याथाकामीत्युपदेशः ॥

(सू) **सप्तदशसामिधेनीको यथाश्रद्धदाक्षिणः ॥**

॥ ४ ॥ ४ ॥ ६१० ॥

[अत्र पक्षे दक्षिणाविषयमतिभेदः]

(भा) समान[1]तन्त्रेऽपि केचिद्दक्षिणामिच्छन्ति, अविशेषेण चोदितत्वा-त्प्रकृतिदक्षिणाया, विरोधाभावाच्च ॥

दर्शपूर्णमासविकारेषु ब्रह्मणे गामिति कस्मान्न भवति[2] दर्श-पूर्णमासार्थत्वात्सर्वमन्त्राणाम् ॥

---

[नियमस्य विशेषविषयत्वलाभः]

(वृ) **समान–त्युपदेश इति**—समानतन्त्रमेके इत्युक्त्वा तस्य याथा-कामी प्रक्रमे इत्युपदेशात् समानतन्त्रत्वनानातन्त्रत्वयोर्यथो[3]पक्रम नियम इति ॥

[दक्षिणाविषयमतिभेदविवरणम्]

**दर्शपूर्ण–वति**—गामिति प्रदर्शन द्रव्यान्तराभिधानानामप्यूहः कस्मान्न भवति[2] परिहरति,—

[शङ्कापरिहारः]

**दर्शपूर्ण–मन्त्राणाम्**—तत्रानर्थकत्वात् तद्विकारेषु पौष्णा-द्यनुमन्त्रणवत् वैमृधे सर्वप्रतिग्रहमन्त्राणां प्राप्तिः ।

---

[1] समानतन्त्रत्वेऽपि केचिद्दक्षिणाया समुच्चयमिच्छन्ति (रु) तन्त्रेण–ट

[2] ग–पुस्तके न दृश्यते. [3]थोपक्रमे इति प्रक्रमे प्रारम्भे असमानतन्त्रपक्षो यदि प्राह्य कदाचित्समानतन्त्र न कुर्याद्यदि समानतन्त्रो भवति वैमृधस्तु कदाचिन्न त्यज्यते (मु रा)

(भा) यथाश्रद्धदक्षिणत्वात् ।

[विकृतिषु वैमृधं न]

पौर्णमासविकारेषु न वैमृध· समुदायाङ्गत्वात्[1] ॥

(सू) शर्धवत्यौ [2] संयाज्ये । अग्ने शर्धमहते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सजास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि । वातो(व)पधूत इषिरो वशाꣳअनु तृपु यद(द्वा)न्नावेविषद्वितिष्ठसे । आते यतन्ते रथ्यो यथा पृथक् शर्धाꣳस्यग्ने अजराणि धक्ष्यस इति ॥ ५ ॥ ५ ॥ ॥ ६११ ॥

---

(वृ) यथाश्रद्धदक्षिणत्वात्—अनारभ्याधीताना सर्वदक्षिणाप्रतिग्रहमन्त्राणा प्रकृतिभूतदर्शपूर्णमासार्थत्वात्तत्रानर्थकत्वादिति । अतश्च विकृतिषु यथाद्रव्य प्रतिग्रहणमन्त्राणामुपदिष्टत्वान्न प्राकृतस्योह· ।

[विकृतिकर्मसु वैमृधाभावोपपत्तिः]

पौर्णमास–ङ्गत्वात्—सस्थाप्य पौर्णमासीमिति पौर्णमासीशब्दवाच्यकर्मसमुदायाङ्गत्वात् विकृतिषु च तेषामभावात् वैकृतकर्मणा तत्कार्यापन्नत्वाभावाच्च विकृतिषु द्वारकार्याभावाच्च पार्वणहोमवद्वैमृधस्याप्राप्ति· । चतुर्होत्रा पौर्णमासीमभिमृशेदिति तु हविस्सस्काराङ्गत्वान्न कर्म समुदायाङ्गम् ॥

---

[1] द्यभि–ग  ङ्गत्वात् पौर्णमासीमिति -ग  [2] संयाज्ये इति सौविष्टकृतयोर्याज्यानुवाक्ययोस्समाख्या (रु) अस्मिन्सूत्रे,—संयाज्ये इति वचनात् सौविष्टकृत्याविति शेष । स्विष्टकृद्याज्यानुवाक्ययो प्रत्याम्नाय । इति वृत्तिर्दृश्यते–(मु रा)

(सू) अग्नीषोमीयमेकादशकपालं पौर्णमास्यामनुनिर्वपत्यादित्यं घृते चरु॰ सारस्वतं चरुममावास्यायां पौष्णं चैन्द्रमेकादशकपालममावास्यायां पौर्णमास्यां च[1] भ्रातृव्यवतोऽभिचरतो वा ॥
॥ ६ ॥ ६ ॥ ६१२ ॥

[अग्निष्टोमाद्यनुष्ठानकालः फलं याज्यानुवाक्याविशेषश्च]

(भा) अग्नीषोमीयादीनि त्रीणि वैमृध कृत्वा भ्रातृव्यवत भ्रातृव्यो मा बाधतामिति । अदितिर्देवता अस्येत्यादित्य [2] नादित्य [3] ।
[4] सरस्वत्यादीन्यमावास्यायाम् अग्नीषोमीयस्य याज्यानुवाक्ये [5] प्राकृते •आदितिर्न उरुष्यतु महीमूषु मातरम् इत्यादित्यस्य । इन्द्र वो विश्वतस्परीन्द्र नरः इत्यैन्द्रस्य । प्रणो देव्यानो दिव इति सरस्वत्याः । पूषा गा अन्वेतु न शुक्र ते अन्यादिति पौष्णस्य ॥

---

[अग्नीषोमीयादिकालफलनिर्देशोपपत्तिः]

(वृ) **अग्नीषोमीयादीनि -- व्यवतः** — पौर्णमास्यामनुनिर्वपतीति [6] पौर्णमासीं कृत्वाऽनु[7]निर्वापश्रवणात् वैमृधोत्तरकालमेव पौर्णमास्याम् । अमावास्याया तु ब्राह्मणतर्प[8]णान्ते भ्रातृव्यवते इति नैमित्तिकम् ॥

**भ्रातृव्यो मा बाधतामिति**—फलार्थमभिचरत शत्रुमारणे प्रवृत्तस्य ॥

**अदितिर्दे–दित्यः**—आदित्य चरुमिति तद्धितनिर्देशात् ।

**सरस्व–स्यायाम्**—इन्द्रेण सह [9] बहुवचनमुभयत्र[10] ।

---

[1] भ्रातृव्यादात्मानं रिरक्षिषतस्त जिघासतो वा इमे द्वे इष्टी द्वयो पर्वणोरनुनिर्वपति । तेषु पौष्ण पिष्टैश्चरु [2] त्य —आदित्यदेवत –ग. [3] नादित्यदेवत –क घ I नादित्यदेवता (मु रा ) II [4] तथास्र–क [5] उक्त–ग. [6] साङ्गपौर्णमासा–क (मु. रा ) [7] निर्वपणश्च (मु रा) [8] णान्तम्–ख ग [9] बहुत्ववच–ख ग [10] मुभयत –ख ग.

[पौष्णादित्यचर्वोर्विशेषः]

(भा) सर्वत्र चास्य पेषण चरो । तस्मात्पूषा प्रपिष्टभाग इत्यविशेष-वचनात् ॥

आदित्य. [1] प्रणीतेन घृतेन ॥

[सर्वचरुसाधारण. पाकः]

यजुरुत्पूतेन वा स्थालीगतेन वरूणा पाक ; पवित्रवत्याज्ये कणानावपतीति लिङ्गात् ॥

[ऐन्द्राग्नविकारेषु अभिमर्शने पक्षौ]

सर्वत्रैन्द्राग्नविकाराणा ऊहेनाभिमर्शनम् ,

---

[पौष्णचरुपेषणनियमहेतु ]

(वृ) **सर्वत्र चा–त्यविशेषवचनात्**–तस्मात्पूषा प्रपिष्टभाग इति प्राशित्रवाक्यशेषे पूष्ण स्वरूपमात्रसबन्धित्वेन सिद्धवत्पेषणानुवादात् अदन्तकत्वहेतुनिर्देशात् पौष्णकर्मविशेष[2]संनिध्यभावाच्च पेषण [3] सर्वपौष्णचरो ॥

[आदित्यचरौ विशेष हेतु]

**आदित्यः प्रणीतेन घृतेन**—श्रपयति । सयवनार्थत्वात्प्रणीतानाम् । प्रणयनकाले घृत प्रणीय सघृतमद्भिरग्मतेति तण्डुलेष्ववनयेत् ॥

[भाष्यमते वैकल्पिकत्वसिद्धि. पक्षान्तर च]

**यजुरुत्पू–लिङ्गादिति**—सोदक घृत स्थाल्यामानीय यजुषोत्पूयाधिश्रयणकाले तण्डुलानावपति । सर्वचरूणा यजुरुत्पूतप्रणीतयोर्विकल्पः । भारद्वाजमतात्तु पात्रान्तरे यजुषोत्पूय स्थाल्या मन्त्रेणानीय श्रपण उपधानकाले सोदकस्थाल्यामुपधान केचित् ॥

[ऊहेनाभिमर्शनस्य सार्वत्रिकत्वे हेतुः]

**सर्वत्रै–मर्शनम्**—सर्वत्रेति-समानतन्त्रेऽपि वैमृध एकहविस्संस्कारत्वात् प्राकृतवैकृतहविस्साधारणनिर्देशाभावादूहेऽविरोधः ॥

---

[1] आदित्य–घ [2] सन्नन्यभावाच्च (मु. रा). [3] सर्वत्र पौष्णस्य चरोः (मु रा)

(भा) न तूपदेश· ॥

(सू) इन्द्राय त्रात्रे चरुं द्वितीयं [1]वैमृधस्य कुर्याद्यो मृत्यो[2]र्ज्यान्या वा बिभीयात्। मुष्करो दक्षिणा ॥ ७ ॥ ७ ॥ ६१३ ॥

[अत्र वैमृधपदार्थः]

(भा) पौर्णमाससमानतन्त्रेऽपि वैमृधे ॥

[अवान्तरकर्मसु विभक्तिनियमाः]

इन्द्राय त्रात्रे इति चतुर्थ्या निर्वापप्रोक्षणाधिवापसवापानुब्रूहीत्येतेषु यत्र चाभिघारणचतुर्धाकरणे । इन्द्र त्रातर्हव्यमित्यामन्त्रणे-

---

[सहेतुक उपदेशपक्षाशयः]

(वृ) न तूपदेश इति —इन्द्रत्रात्रादीना गुणमात्रविकृतप्रकृतिदेवतात्वादनूह· । अन्यत्र प्रकृतिदेवताभ्यो यथैन्द्र· पुरोडाश इति प्रकृतिप्रत्यभिज्ञानादनूहः । आश्विनमारुतादिषूह एव ॥

[अत्रानूहपक्ष· सूत्रार्थश्च]

पौर्णमासतन्त्रेऽपि वैमृधे ;—प्रकृतितन्त्रोपजीवित्वाच्च · नोह इत्युपदेशः । द्वितीय वैमृधस्येति वैमृधेन समानतन्त्र. यस्य मरणा[3]ज्ज्यानेर्वा भयम् । मुष्करः वृषणवान् ॥

[चतुर्थीविषये विकल्पस्थलम्]

इन्द्राय–र्धाकरणे—आदित्या[4]दिषु चरौ विकल्पेन ।

[संबुद्धिविषये पक्षिकत्वम्]

इन्द्रत्रातर्हव्यमित्यामन्त्रणेनोपसादनम्– — निरुप्तदेवतोपलक्षणपक्षे ॥

---

[1] वैमृधसमानतन्त्रम् [2] वैमृध पौर्णमाससमानतन्त्रेऽपि स द्वितीयो निरूप्यते (रु) ज्यानि –व्याधिपीडा (रु). [3] ज्जान्यादेर्वा—ख ग. ज्जानेर्वा (मु. रा). [4] दिषु च विकल्पेन—ख ग

(भा) नोपसादनम् । इन्द्र त्रातारमिति [1] द्वितीयाऽऽवाहने स्वाहाकारे यजेत्येतेषु । इन्द्रस्य त्रातुरिति षष्ठी हुतानुमन्त्रणे । अयाट्करण उज्जितौ चेन्द्रस्त्राता । भुवनान्नु[2]दतामिति प्रथमाभिमर्शने इद हविरजुषतेति च । त्रातारमिन्द्र मा ते अस्यामिति याज्यानुवाक्ये ॥

(सू) **इन्द्रायेन्द्रियावते पुरोडाशमेकादशकपालमनुनिर्वपेत्प्रजाकामः पशुकाम[3]स्सजातकामः ॥ ८ ॥ ८ ॥ ६१४ ॥**

(भा) सजातकामो ग्रामकाम ॥

[पूर्ववद्विभक्तिनियम ]

इन्द्रायेन्द्रियावते, इन्द्र इन्द्रियावन्, इन्द्रम् इन्द्रियावन्तम्, इन्द्र., इन्द्रियावान्, इन्द्रियाणि शतक्रतोऽनुतेऽदायीति ॥

(सू) **एतं वाऽनुनिर्वाप्यं [4] कुर्वीत ॥ ९ ॥ ९ ॥ ६१५ ॥**

[अयमप्यत्र पृथक्कल्पः]

(भा) एत वाऽनुनिर्वाप्यम् । वैमृधेन विकल्प ॥

---

[द्वितीया सर्वेष्टिदेवतासु]

(वृ) **इन्द्रं त्रातार–रजुषतेति च**—सर्वेष्टिदेवतानामेव विभक्तिनिर्देशव्यवस्था ॥

[कल्पोऽयं विकल्प्यते)

**सजातकामः–ग्रामकामः**—प्रजाकामादयो विकल्पेन ।

**इन्द्रायेन्द्रियावते–क्रतोऽनुतदायीति**—याज्यानुवाक्ये ॥

[विकल्पेऽपि विशेष ]

**एतं वा–विकल्पः**—इन्द्रस्येन्द्रियावतो नित्याङ्गत्वेनाऽन्यापि समानतन्त्रता विकल्पेन प्रक्रमान्नियम्यते ॥

---

[1] द्वितीयया–घ. [2] नुदन्तामिति–घ [3] सजाता —सग्रामा —तैस्सह वस्तुकाम —ग्रामकाम इति यावत्–(रु). [4] ऐन्द्रियावतमेव वावैमृधस्य स्थाने नित्यमनुनिर्वाप्य कुर्वीत.

(सू) इतरौ वा ॥ १० ॥ १० ॥ ६१६ ॥

[पूर्वयोर्विशेषः]

(भा) इतरौ वैमृधत्रातारावकाम्यौ ॥

(सू) यमभीव संशयीत सइन्द्राय वैमृधायानुनिर्वपेत् ॥ ॥ ११ ॥ ११ ॥ ६१७ ॥

पञ्चदशी खण्डिका ॥

---

[काम्यकल्पान्तरं तत्र वैमृधश्चान्यः]

(भा) अभीव संशयीत कंचिदर्थम्, यथा मरणं मे स्यान्न वेति। द्वितीयोऽत्र वैमृध. ॥

(सू) यो [1] नैव घोषेन्नैव शृणुयात्स इन्द्रायाꣳहोमुचे ॥ १ ॥ १२ ॥ ६१८ ॥

[काम्यकल्पविशेषे याज्यानुवाक्याविशेषाः]

(भा) नेव [2] घोषेद्यस्य शब्दो न निर्गच्छति स वैमृधं कृत्वेन्द्रायाꣳ-होमुचे, इन्द्र अꣳहोमुक्, इन्द्रमꣳहोमुच, इन्द्रस्याꣳहोमुच., इन्द्रोऽꣳ-होमुक्, अꣳहोमुचे विवेष यन्मेति ॥

---

[अकाम्यत्वोपपत्तिः]

(वृ) इतरौ–वकाम्यौ—त्रातुरपि मृत्यो[3] र्ज्यान्या वेति न भवति नित्य[4]भूतवैमृधेन विकल्पोपदेशात् ॥

[द्वितीयत्वनिरूपणम्]

अभीव–श्च वैमृधः—यमभीव संशयीतेति यमर्थं मरणादिकं संशयीत–[5] संदिग्धे स इन्द्राय वैमृधाय द्वितीयं वैमृधं नानातन्त्रं कुर्यात् [6]प्रथमं यथोक्तं कृत्वैव ॥

नेव घोषे–ष यन्मेति—याज्यानुवाक्ये ॥

---

[1] रोगवशाद्व्यक्तं भाषितुं न क्षमेत (रु) [2] नैव घोषयेद्यस्य–क I नैव-घोषेतैतद्यस्य–ख II [3] ज्यौत्या वेति–ख. ग [4] भूतेन (मु. रा) [5] संदिदिहे ख. ग. सदिग्धम् [6] प्रथमं तु (मु रा) यथामं–क ?

(सू) यो भ्रातृव्यवान् स्यात्स इन्द्राय वृत्रतुरे ॥
॥ २ ॥ १३ । ६१९ ॥

(भा) इन्द्राय वृत्रतुरे । इन्द्र वृत्रतुर्हव्यम् । इन्द्र वृत्रतुरम्, इन्द्रस्य वृत्रतुरः, इन्द्रो वृत्रतू., इन्द्रो यज्ञ वर्धयन्निति ॥

(सू) [1]अथ यं न कुतश्चनाऽऽतपेत्स इन्द्रायैव ॥
॥ ३ ॥ १४ ॥ ६२० ॥

[काम्यकल्पान्तरम्]

(भा) [2]नातपेत् भ्रंशो [3]मे माभूत् ॥

(सू) [4]यो भ्रातृव्यवान् स्यात्स पौर्णमासꣳसꣳस्थाप्यै-तामिष्टिमनुनिर्वपेदाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुम् ॥ ४ ॥ १५ ॥ ६२१ ॥

[काम्योऽन्य. कल्पः तत्र याज्यादिविशेषश्च]

(भा) स पौर्णमास सꣳस्थाप्य, यस्याप्रवृत्तौ वैमृध. ॥

---

(वृ) इन्द्राय—वर्धयन्निति—याज्यानुवाक्ये ॥

[अस्मिन्नपि कल्पे नित्यानन्तर्यनियमः]

नातपेद्भ्रंशो मे मा भूदिति—यस्य कामोऽग्निसूर्यादित्येभ्य-स्तपननिमित्तो भ्रंशो यं नाभिभवेदिति स वैमृध नित्य कृत्वेन्द्रायानु-निर्वपेदिन्द्राय वैमृधायेत्यादीनि नित्य वैमृध कृत्वाऽधिकानि ॥

[वैमृधप्रवृत्त्यप्रवृत्तिप्रयुक्तविशेषोपपत्तिः]

स पौर्णमासं—वैमृध इति—यो भ्रातृव्यवान् स्यात्स पौर्णमासं सꣳस्थाप्यैतामिष्टिमनुनिर्वपेत् इति पौर्णमास्यनन्तरमाग्नावैष्णवेष्टि. प्राप्ता । यस्याप्रवृत्तो वैमृधस्तस्य याथाकामी प्रक्रम इति पाक्षिकत्वादारम्भस्य ॥

---

[1] य रोगोपहतकायेन्द्रिय कुतश्चिदपि प्रकारादुष्ण वस्तु नातसपेत् इन्द्राय निरुपपदाय निर्वपेदित्यर्थ (रु) [2] अनुनिर्वपेदिति शेष (मु. रा). [3] भ्रंशो मा भूत् (मु. रा) [4] पौर्णमास संस्थाप्येति ब्राह्मणानुकरणार्थम् । प्रक्रान्तवैमृधस्य तु तदनुभाविन्येवेष्यते (रु)

(भा) यस्य तु प्रवृत्तस्तस्य वैमृधं कृत्वा आग्नावैष्णवादीनि । अग्नाविष्णुभ्यां सरस्वत्यै सरस्वते, अग्नाविष्णू सरस्वति सरस्वन्, अग्नाविष्णू सरस्वतीं सरस्वन्तम्, अग्नाविष्णवो सरस्वत्या सरस्वत, अग्नाविष्णू ([1]अग्नाविष्णू अग्नाविष्णू,) प्रणो देव्यानो दिव । पीपिवांसꣳसरस्वतो यस्य व्रतमिति ॥

[ याज्यानुवाक्यापरिग्रहेतिदेशः ]

एवं सर्वत्र याज्यानुवाक्याः अन्यत्र परिपाठात् ॥

(सू) **पौर्णमासीमेव यजेत भ्रातृव्यवान् [2]नामावास्यायाम् ॥ ५ ॥ १६ ॥ ६२२ ॥**

(वृ) **यस्य तु प्रवृत्त–ष्णवादीनि**—त्रीणि, तस्याङ्गत्वात् । एतच्च [3]व्याख्यातं भिन्नतन्त्रपक्षे । समानतन्त्रपक्षे तु [4]सस्थाप्येत्यस्याविरोधः ॥

**अग्नाविष्णू – याज्यानुवाक्याः**—याज्यानुवाक्याकाण्डतया उभावामिन्द्राग्नी इत्यादि प्रश्नान्त्यानुवाकात् ग्रहीतव्या इति [5]विकृतीष्टीनां सर्वासां याज्यानुवाक्याकाण्डपठितेभ्यो यथा देवतयाज्यानुवाक्या ग्रहीतव्याः ॥

[भाष्यदर्शितयाज्यानुवाक्यापरिग्रहविशेषविवरणम् ]

**अन्यत्र परिपाठात्**—यथा अन्वारम्भणीयायां त्वद्विश्वासुभग-[6]सौभगानीत्यादि । अस्माकं याज्यानुवाक्याकाण्डतया उभावामिन्द्राग्नी इत्यादिप्रश्नान्त्यानुवाकाः सूत्रकारेण चाम्नाताः याज्यानुवाक्यालिङ्गैर्नियम्यन्ते इति विनियुक्ताः । अतः सूत्रकारेण पठितयाज्यानुवाक्यानां कर्मणा तेभ्य एवोपादानम् ॥

---

[1] कुण्डलितं ग–पुस्तके न दृश्यते [2] नामावास्याम् ?–क [3] व्याख्यानम्–क घ [4] सस्थाप्यस्या (मु रा) [5] विकृतीनाम् (मु रा) [6] सौभगानीति–इत्यादि–घ.

(सू) [1] पितृयज्ञमेवामावास्यायां[2] कुरुते ॥ ६ ॥ १७ ॥ ॥ ६२३ ॥

(सू) [3] सङ्क्रामे सङ्क्रामे [4] वज्रं भ्रातृव्याय प्रहरतीति विज्ञायते ॥ ७ ॥ १८ ॥ ६२४ ॥

[ सङ्क्रामपदार्थः ]

(भा) अकरणं—सङ्क्राम ॥

(सू) त्र्यवरार्ध्य[5] ममावास्यायाऽ[6] सङ्क्रामति ॥ ८ ॥ ॥ १९ ॥ ६२५ ॥

(सू) [7] अग्नीषोमीयाणि प्रधानानि स्युरमावास्यायां

---

[संक्रामपदार्थविवरणम् ]

(वृ) अकरणं—संक्रामः—पौर्णमासीमेव यजेत भ्रातृव्यवान् नामावास्यायां इत्यमावास्याया अकरण—सक्राम. ॥

---

[1] अथ किं तर्हि कृत्यममावास्यायाम् ? न किञ्चिदन्यत्पिण्डपितृयज्ञादित्याह । [2] ननु अमावास्यानिषेधादेव निवर्तिष्यते पितृयज्ञस्त्वनङ्गत्वात्प्रवर्तिष्यते किमर्थोऽयमारम्भ ? सत्यम् , पौर्णमास्या एवामास्यायामपि प्रवृत्तिसन्देहनिरासार्थ इति ब्रूयात् । क प्रसङ्ग ? अस्ति प्रसङ्ग ; पौर्णमासीमेव यजेतेति ब्राह्मणार्थस्य विशयित्वात् । तथा च बोधायन. ,—' उभयत्र पौर्णमासहविर्भिर्यजेतेति बोधायन' इति (रु) [3] सङ्क्रामे वज्रम्—क सङ्क्रामोऽतिक्रम (रु) [4] दर्शस्यातिक्रमेऽति-क्रमे वज्रं शत्रवे प्रहरति । स एवातिक्रमो वज्रीभूत्वा त हन्तीत्यर्थ. (रु), [5] ममावास्याया पौर्णमास्या वा भ्रातृव्यवतो—क त्र्यवराऽर्ध्यमावा—ख [6] त्र्यवरान् दर्शान् अतिक्रामत एव कामावाप्ति नार्वागित्यर्थ (रु) [7] अग्नीषोमदेवताकत्वेन गुणेन विकृतानि स्यु॰ । तस्य तस्य धर्मेषु ये देवतानिगमा तेषु तद्देवतापनयेन अग्नीषोमोपलक्षण स्यादिति यावत् । यथा आग्नेयस्य ,अग्नीषोमाभ्या जुष्ट निर्वपामि अग्नीषोमाभ्या जुष्टमभिघारयामि अग्नीषोमयोरह देवयज्ययान्नादो भूयासं इत्यादि । एवमेव सान्नाय्ये आप्यायध्वमघ्निया अग्नीषोमाभ्या देवभागमित्यादि द्रष्टव्यम् । याज्यानुवाक्ये त्वग्नीषोमीये एव , देवतानुसारित्वात् । तन्त्रेण चामावास्यायां प्रदानविभवात् तस्य प्रातर्दोहेन समवदायेति लिङ्गाच्च । समुच्चयस्त्वाशिषा द्रष्टव्य-भेदात् । पृथक्प्रचार एव पौर्णमास्या नानाधर्मेणोपांशुयाजेन व्यवायात् (रु)

(सू) पौर्णमास्यां च भ्रातृव्यवतोऽभिचरतो वा[1] ॥
॥ ९ ॥ २० ॥ ६२६ ॥

[कल्पविशेषेऽग्नीषोमीयप्राधान्यम्]

(भा) प्रधानान्यग्नीषोमीयाणि । न वैमृध. पौर्णमास्याम् ॥

[प्रथमतृतीयकल्पयो· प्रदानपृथक्त्वम् हुतानुमन्त्रणादौ व्यवस्था च]

पृथक्पृथक् प्रदानमनयोरुपांशुयाजव्यवायात् । अदेवतार्थत्वात् यो यस्य प्रदानस्य धर्मो हुतानुमन्त्रणचतुर्धाकरणादि· स तस्यैव

---

[वैमृधस्याभावे हेतु]

(वृ) न वैमृधः पौर्णमास्याम्—तस्याङ्गत्वात् ।

[प्रदानपृथक्त्वोपपत्ति·]

पृथक्पृथ—व्यवायादिति— अनयो प्रथमतृतीययोरेक· देवतात्वेऽपि न सान्नाय्यवत्सहप्रदानम् । उपाशुयाजस्थानापन्नस्य अग्नीषोमियस्य उपांशुयाजधर्मकत्वात् इतरयोरतद्धर्मकत्वात् सहप्रदाना[2]संभवात् । तद्व्यवधानादितरयोरपि पृथक्प्रयोग ॥

अदेवतार्थत्वात्—आग्नेयस्तु प्रथममनुमन्त्रणं चतुर्धाकरणादिर्यस्य न तस्यैव भवति अदेवतार्थत्वात्[3] ॥

यो यस्य प्रधानस्य–भवति—तस्मात्प्रथमस्याग्नेयस्य धर्मा । द्वितीयस्योपांशुयाजधर्मा ॥

---

[1] अथ दर्शपूर्णमासयोर्गुणविकारानुपदिशतीति सूत्रावतरण दृश्यते (मु. रा).
[2] दानाभावा—ख. ग. [3] अय ग्रन्थ ख. ग –पुस्तकमात्रे दृश्यते.

(भा) भवति । केवल देवतापनय । तस्मात् अग्नीषोमयोरहं देवयज्ययाऽन्नादो भूयासम् इति हुतानुमन्त्रणम् । एवमन्यानि । प्रकृतिवदुत्तरे । तन्त्रेणामावस्यायां [1] प्रदान विभवात् ॥

[ आशिष्युपदेशपक्षः ]

आशिषस्समुच्चय अग्नीषोमयोरहं देवयज्ययाऽन्नादो भूयासं जेमान महिमान गमेयमित्युपदेश ॥

[ अनुमन्त्रणव्यवस्थादि ]

(भा) मुख्यानुमन्त्रण सर्वस्य मुख्ये साधर्म्यमिति [2] दर्शनात् ।

---

(वृ) **एवमन्यानि** —धर्मा आग्नेयस्य ।

**प्रकृतिवदुत्तरे**—हुतानुमन्त्रणे दब्धिरसीत्यादि ।

**तन्त्रेणामावास्यायाम्**—प्रदानसभवात् । अविप्रतिपन्नदेवतत्वात् भिन्नधर्मकव्यवधानाभावाच ॥

[आशीष्षु समुच्चये मानम्]

**आशिषस्समुच्चयः**—हुतानुमन्त्रणे तन्त्रण देवतानिर्देश । आग्नेयसान्नाय्यफलयोस्समुच्चय सवनीयस्य हुतानुमन्त्रणे भरद्वाजोक्तत्वात् ॥

**अग्नीषो—त्युपदेशः**—सूत्रकारेणा[3]पि समुच्चयवचनात् ।

[अनुमन्त्रणसाधर्म्यहेतुविवरणम् ]

(वृ) **मुख्यानु—दर्शनात्**—अन्नादो भूयासमित्येव मुख्ये [4] साधर्म्यं भवति । सम्सृष्टहविषि दर्शनात् ॥

---

[1] प्रदानसभवात्–घ I. प्रधानविभवात् (मु रा ) II [2] वचनात्–ख. ग. [3] णाग्नि (मु. रा) [4] साधर्म्यमेव–ख. ग

(भा) अग्नीषोमीये तु याज्यानुवाक्ये देवतासंस्कारत्वात् ॥

(सू.) [1]**साकंप्रस्थायीयेन यजेत पशुकाम [2]इत्यमावास्या विक्रियते ॥ १० ॥ २१ ॥ ६२७ ॥**

[ सूत्रोक्तविकारत्वहेतूक्तिः ]

(भा) अमावास्यायां सङ्क्रामुक्त्वा [3]प्रधानाग्नीषोमीयत्वम् तदनन्तर शाखान्तरे साकप्रस्थायीयमनुविदधे । ब्राह्मणेऽपि तदनन्तरं [4]विहित इति साकप्रस्थायीयेन यजेत पशुकाम इति अमावास्या विक्रियत इति ॥

---

(वृ) **अग्नीषोमीये तु–रत्वात्**—देवताप्रकाशकतया तत्संस्कारत्वात् ।

[साकं प्रस्थायीयस्यामावास्याविकारत्वसमर्थनम् ]

[5]**अमावास्या विक्रियते**— अस्यार्थः ;–साकप्रस्थायीयस्यामावास्याविकारत्वे हेतुरुच्यते ,—

**अमावास्यायां–विक्रियत इति**—शाखान्तरे अमावास्यायाः सङ्क्रामोक्त्यनन्तर दर्शपूर्णमासप्रधानानां अग्नीषोमदेवताकत्वमुक्त्वा तदनन्तरं साकप्रस्थायीय उक्तः । अस्मच्छाखायामपि पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यायामिति संक्रामभुक्त्वा साकप्रस्थायीय उक्तः । अतस्साकप्रस्थायीयस्य दोहविवृद्ध्यात्मकत्वात् अमावास्यायाः प्रकृतित्वाच्च सूत्रकारोऽमावास्या विक्रियत इत्याह ॥

---

[1] साकप्रस्थायीयो नाम यत्र अध्वर्यु साक बहुभि· दोहै प्रस्थाय यजति स ।अमावास्याया गुणविकारमात्रम् । न तु सज्ञया कर्मान्तरम् । न चोभयोर्विकार । तत्र च गुणफलं पशव । तेन नित्यफलस्याविरोध (रु) [2] अमावास्यायाम्–क. [3] प्रधानाना चाग्नी–क. घ [4] * विहितं साकम्–क. [5] सूत्रप्रतीकधारणेन वृत्तिरियम्.

[ यागनामार्थः ]

(भा) साकमिति सहत्ववाची । सह प्रस्थानमन्त्र कृत्स्नैरिति साकप्रस्थायीयः ॥

[ यजति घटितवाक्यार्थः ]

तेन यजेत पशुकामस्तस्य प्रयोग कुर्वीतेत्येष श्रुत्यर्थः । तां श्रुतिं सूत्रकार इति [1] शब्देन निर्दिशति ॥

[ यागनामप्रवृत्तिनिमित्तम् ]

सैषा सज्ञा विकारनिमित्ता, उभयोर्दर्शपूर्णमासयोर्विकारोऽन्यतरस्य [2]वेति प्राप्ते आह—अमावास्या विक्रियत इति ॥

---

[यागस्यान्वर्थनामत्वनिर्वाहः]

(वृ) साकमिति–यीयः—कृत्स्नैर्दोहैर्यागार्थमपरेणाहवनीय कुम्भीभिस्सह दक्षिणातिक्रमण [3]साकप्रस्थायीयनामधेयप्रवृत्तिनिमित्तमिति ॥

[प्रयोगपदघटितविवरणाशयः]

तेन यजेत–श्रुत्यर्थः—साकप्रस्थाय्येन यजेतेति न कर्मान्तरचोदना अमावास्याविकारत्वात् । अतोऽत्र यजेतेति न विधिः । प्रकृतदर्शयागप्रयोगमेव विकृत फलाय कुर्वीतेति विध्यर्थः । अभ्युदयेष्टिवत् प्रकृतस्यैव दर्शयागस्य प्रयोगान्तर फलाय चोद्यते ॥

तां श्रुतिं–निर्दिशति—व्याख्यातम् ।

[पुनरुक्तताशङ्कापरिहारः]

उभयोः–विक्रियत इति—उभयोर्दर्शपूर्णमासयोः शाखान्तरे प्रधानानामग्नीषोमीयदेवताविधानानन्तरमुक्तत्वादुभयोर्विकारोऽन्यतरस्य वेति सशये प्राप्ते आह—अमावास्या विक्रियत इति । एतच्च पूर्वमुक्तमपि दार्ढ्यार्थं पुनरुच्यते ॥

---

[1] शब्देनोपदिशति–ग. [2] वेतिसशये प्राप्ते अमावास्या विक्रियत इति, [3] कर्म–ख ग.

[अत्रामावास्याशब्दप्रयोगहेतुः]

(भा) सहवसनाद्देवैरिन्द्रस्य स कलोऽमावास्या ॥

[कर्मापि तन्नाम]

तत्कालप्रयोगात्प्रधान[1]समुदायोऽप्यमावास्या । सा विकारमेति न पौर्णमासी ॥

[अमावास्याविकारत्वविवरणम्]

न चैतत्कर्मान्तर चोद्यते तस्यैव समुदायस्य दोहचतुष्टयविकृतस्य [2]सञ्ज्ञैषा । [3]यथा तस्यैव पुरुषस्य सञ्ज्ञा दण्डी शिखीति ॥

---

[साकंप्रस्थायीयकालेऽमावास्यात्वं श्रौतम्]

(वृ) सहवसना–ऽमावास्या—अमावास्या विक्रियत इत्यमावास्याशब्दस्य व्याख्यानम्। इन्द्रो वृत्र हत्वा परां परावतमित्युपक्रम्य सोऽमावास्या प्रत्यागच्छादि[4]त्युक्त्वा अमा वै नोऽद्य वसु वसतीति इन्द्रो वै देवानां वसु तदमावास्याया अमावास्यत्वमिति च इन्द्रस्य सह-[5]वसनादेष कालोऽमावास्या ॥

[कर्मणि तन्नामप्रवृत्तिहेतुः]

तत्कालप्र–प्यमावास्या—तत्कालवर्तिप्रधान[6]समुदायेप्यमाऽवास्याशब्दो लक्षणया युक्तः ॥

सा विकारमेति न पौर्णमासी—अमावास्याशब्देन कर्मसमुदायस्य प्रतिपादनात् सेति स्त्रीलिङ्गनिर्देश ॥

[संनयत एवैतत्कर्म]

न चैतत्क–दण्डी शिखीति—अत एव सान्नाय्यविकाररूपत्वात् संनयत एव नैन्द्राग्नयाजिन. साकप्रस्थायीयः ॥

---

[1] समवायोऽमावास्या–ग. [2] सञ्ज्ञा–ग [3] यथैकस्यैव (मु रा). [4] त्युक्त्वा पूर्वेने सवसती?–ख. ग. [5] वसनादेस्सकालो–ख. ग. [6] समुदायोऽप्यमा–ख. ग.

[ विकाररूपत्वफलम् ]

(भा) अतश्च गुणविकारेष्वग्नीषोमीयादिषु दाक्षायणयज्ञान्तेषु [1] न पुनः प्रयोगः । नित्यस्य फलस्यानिवृत्तिः ॥

[प्रधानसमुदायो गुणविकारेष्वपि ]

पार्वणयोर्वैमृधस्य च पौर्णमासगुण[2]विकारेषु प्रवृत्तिः ॥

(सू) [3]**द्वौ सायंदोहावेवं प्रातः ॥ ११ ॥ २२ ॥ ६२८ ॥**

(सू) [4]**सायꣳ सायंदोहाभ्यां [5]प्रचरन्ति प्रातः प्रातर्दोहाभ्याम् ॥ १२ ॥ २३ ॥ ६२९ ॥**

(सू) [6]**सर्वैर्वा प्रातः ॥ १३ ॥ २४ ॥ ६३० ॥**

---

[नित्यापूर्वार्थप्रयोगान्तरं नेष्यते]

(वृ) **अतश्च–स्यानिवृत्तिः**—नित्यप्रयोगस्यैव फलार्थतया विकारोपदेशात् न नित्यापूर्वसिध्यर्थं पुन प्रयोग· नित्यादृष्टस्यापि सिद्धत्वात् । तत्स्वर्गादेरप्यनिवृत्ति· ॥

[अन्यत्रापि प्रधानसमुदायो गुणविकारेष्वपि]

**पार्वणयो–प्रवृत्तिः**—स एव प्रधानसमुदायो गुणविकारेष्वपीति । एव [7]सोमाभ्यासे पश्वादिफलेभ्य उक्थ्याद्यनुष्ठाने न पुनर्नित्यार्थं प्रयोग ॥

---

[1] पुनःपुन प्रयोगो (मु रा). [2] विकारेष्वपि–घ [3] यथोक्तेन दोहविधिना दोहयोर्द्वयोरभ्यास कार्य । तत्र सर्वेष्वपि दोहधर्मेषु विभवता तन्त्रत्वम् । अविभूना चावृत्ति यथायथमनुसन्धातव्यौ (रु) I अत्र,—'पूर्वोक्तेन दोहविधिना सायविधानकार्याभ्यास इति द्वौ सायदोहाविति वचनादेवं सायंदोह कार्य II (मु र) [4] सायदोहाभ्या–क [5] चरन्ति–क पूर्वेद्यू रात्रौ सायं दोहाभ्या प्रचरन्ति । प्रात —अपरेद्यु यथाकालं प्रातर्दोहाभ्यामित्येकीय· पक्ष. (रु). [6] पक्षान्तरमाह—पूर्वस्मिन् पक्षे कतिपयप्रधानप्रतिकर्षेण नानाकालत्वात्प्रधानानां तन्त्रस्य प्रतिकर्षोत्कर्षाभ्या आवृत्त्यादिबहुन्यायविप्रतिषेधात् तमुपेक्ष्य अयमेव पक्ष सूत्रकृता अङ्गीकृत इति ज्ञायते, तत्रैव प्रयोगविधानात् (रु). [7] सोमाख्याने–ख. ग. सोमादावभ्यासे (मु. रा).

[पृथक्प्रचारपक्षे कर्तव्यविशेषकालविचारः]

(भा) तत्र यदा सायदोहाभ्या पृथक्प्रचरण तदा विचारयामः,—किं तावत् साय [1]दोहापकर्षात् साधारणस्य [2]तन्त्रस्य प्रतिकर्षः स्वकाले वा प्रयोग इति ?

[तत्र एकीयपक्षः]

स्वकाले प्रयोगमेक आहु. आग्नेयस्य मुख्यत्वात् ॥

[उक्तपक्षे आग्नेयस्य मुख्यत्वायोगः]

तदनुपपन्नम्,—सायदोहयोः पूर्वप्रयोगादाग्नेयस्य मुख्यत्व-[3]निवृत्तिः ॥

[दोहमुख्यत्वसिद्ध्या अपकर्ष एव न्याय्य.]

सायदोहावेव मुख्यौ भवत । अथ च सायदोहधर्माः पूर्वमेव

---

[विचारविषयकर्म]

(वृ) तत्र यदा सायं—रयामः—किं तावत् सायदोहापकर्षात् साधारणस्य तन्त्रस्य पाणिप्रक्षालनादेरपकर्ष ? स्वकाले वा प्रयोग ? इति,

[एकीयपक्षविवरणम्]

स्वकाले प्रयोगमेक आहु. आग्नेयस्य मुख्यत्वात् आग्नेयप्रातर्दोहाना भूयस्त्वाच्च। दर्शात्मकत्वात्साकप्रस्थाय्यस्य दर्शे चाग्नेयस्य मुख्यत्वात् तस्य च प्रातर्दो[4]हेन सहप्रयोगे भूयस्त्वाच्च उत्तरेद्युस्स्वकाल एव तन्त्रमिति ॥

[मुख्यत्वनिवृत्तिहेतुः]

**तदनुपपन्नम्—निवृत्तिः**—रात्रावेव प्रयोगात् तयोरेव मुख्यत्वात् आग्नेयस्य मुख्यत्वनिवृत्ति. ॥

[दोहमुख्यत्वोपपत्तिः]

**सायंदोहा—न्याय्यः**—'प्रजापतिर्यज्ञमसृजत तस्योखे अस्र॒से-

---

[1] पकर्षस्स्यात्—ग [2] तन्त्रस्यापकर्ष.—ग [3] निवृत्तिरस्मिन् कर्मणि—घ.

[4] दोहयोश्च सह प्र—ख ग. घ सह प्र (मु रा)

(भा) प्रवर्तन्ते । तस्मान्मुख्यत्व प्रवृत्तिकारणम् । [1]भूयस्त्वस्यैककारणस्य बाधितत्वादपकर्ष एव न्याय्य· ॥

[भूयस्त्वमुख्यत्वबलाबलनिर्णयः]

अपि च भूयस्त्वान्मुख्यत्वमेव बलीय· । आग्रयण आमावास्य-तन्त्रनियमात् ॥

[दोहयोः प्रासङ्गिकत्वशङ्का]

ननु तन्त्रमध्यपातित्वात्पशुपुरोडाशवद्दोहयोस्तन्त्रं प्रति दौर्बल्यम् ? तदसत्,

[क्रमिकानेकप्रधानरूपत्वान्न प्रासाङ्गिकत्वम्]

न हि दोहयोस्तन्त्रमध्ये पातः। साकप्रस्थायीयेनेति समुदायस्य चोदितत्वात् ॥

---

(वृ) ताम्, इत्यादिदोहधर्मा प्रणीताप्रणयनाद्याग्नेयधर्मेभ्य प्रागेव प्रवृत्ताः । तस्मान्मुख्यत्व प्रवृत्तिकारण दोहयोरेव। भूयस्त्वस्यैककारणस्य ताभ्यां बाधितत्वात् अपकर्ष एव न्याय्यः ॥

[भूयस्त्वदौर्बल्यमन्यत्र दृष्टम्]

**अपि च भूयस्त्वा-नियमात्**—ऐन्द्राग्नस्य नैसार्गिकस्य मुख्यत्वेऽपि तदनुगुणतन्त्रानियमात् ॥

[शङ्काभिप्राय.]

**ननु तन्त्रमध्य-दौर्बल्यमिति**—अयमभिप्रायः ;—क्रमवदुत्पन्न-त्वात्प्रधानानां प्रथमभूताग्नेयप्रयुक्ततन्त्रोपजीवित्वाद्दोहयो. पशुपुरोडाश-वत् प्रासङ्गिकत्वं युक्तमिति ॥

[प्रासङ्गिकत्वाभावोपपत्तिः]

**तदसत्-चोदितत्वात्**—अस्यार्थः—क्रमवदुत्पन्नत्वेऽपि प्रधा-नानां [2] एककार्यसाधनभूतानां तन्त्रानुष्ठानात् सर्वेषां तुल्यवत्तन्त्रप्रयोज-कत्वम् ॥

---

[1] भूयस्त्वैरेक—ग. [2] एकाधिकारसाधनत्राण

[पशुपुरोडाशस्यैतद्वैऽलक्षण्यम् तन्त्रापकर्षश्च]

(भा) पशोस्तु वाक्यान्तरचोदितस्य [1] वाक्यान्तरेण पशुपुरोडाशश्चोद्यते। पशुमालभ्य पुरोडाशम् इति। तस्मादिह सहप्रवृत्तेस्तन्त्रस्य दोहयोरपकर्षे तन्त्रस्यापकर्ष। स चान्यस्तन्त्रभेदः॥

[प्रतिकर्षावचने परदिनानुष्ठिताङ्गानामसंबन्धः]

न च प्रयुक्तस्य प्रधानस्य पूर्वकालदृष्टेरुत्तरेद्यु प्रयुज्यमानैरङ्गैराघारादिभिस्सबन्धस्स्यात्॥

[स्वपक्षे फलितोऽनुष्ठानविशेषः]

तस्मात्प्रधानाना सर्वेषा साधारणानामङ्गानामपकर्ष [2] इत्युत्तरेद्यु-

---

[पशुपुरोडाशे प्रासङ्गिकत्वं युक्तम्]

(वृ) पशोस्तु–श्चोद्यते—अङ्गत्वेन॥

पशुमालभ्य पुरोडाशमिति—अतः पशुतन्त्रस्य मध्ये पातात् प्रासङ्गिकत्वम् पशुपुरोडाशस्य॥

[शङ्कापरिहारे सति फलितस्स्वपक्षः]

तस्मादिह–स्तन्त्रभेद इति—तन्त्रभेदकोऽन्यो नास्ति देशकालाधिकारभेदादि। सायसायदोहा[3]भ्यामित्येतदपि समानतन्त्रेष्वेव द्वयो प्रतिकर्षविधानम्॥

[असम्बन्धोपपादनम्]

न च प्रयुक्तस्य–बन्धस्यात्—प्रधानात्पूर्वमनुष्ठेयानामङ्गानां प्रधानप्रातिकर्षे सति प्रतिकर्षस्य [4] युक्तत्वात्कर्षवचनाभावे सति पश्चादनुष्ठितानामनुपकारकत्वात्॥

[भाष्योक्तप्रयोगे विशेषाः]

तस्मात्प्रधानानां–कार्याणि—स्विष्टकृदादीन्युत्तरेद्युरपि कर्तव्यानि वत्सापाकरणे कुम्भीपराध्र्य इति सूत्रान्तरवचनाङ्गीकरणात् प्राक्-

---

[1] वाक्यान्तरेण च–ग [2] इत्यत उत्तरेद्यु–घ. [3] भ्यामपि–ख. ग.
[4] र्षस्य प्रयुक्तत्वा (मु रा) र्षादुत्कर्षवचना–क

(भा) राग्नेयस्य प्रात[1]र्दोहयोश्च वैशेषिक प्रणीताप्रणयनादि प्रयुज्य पार्वणहोमादि [2] क्रियते ॥

[दोहहोमे विशेष ]

दोहास्तु सर्वहुता एव । न तेभ्यश्शेषकार्याणि । [3] आसादने

[पात्रविशेषेषु प्रोक्षणादौ च तन्त्रम्। अनूहश्च मन्त्रविशेषे]

द्वे कुम्भ्यौ । द्वे [4] अपिधाने । तन्त्रमितराणि । मन्त्रस्य चैकाभिदायिन

[शाखापवित्रात्याधानादि नयनान्तमेककुम्भ्याम् ]

[5] ऊहाभावाच्च । शाखापवित्रात्याधानादिसक्षालननिनयनान्तमेकस्या कृत्वा तथोत्तरस्या कुम्भ्यां दोहनक्रियैकत्वात्पवित्रस्य चासंभवात् ॥

---

(वृ) तेभ्यो बहूना[6]मपाकरण कुम्भी[7]विवृद्धि । सायकाले सायदोह-प्रचारपक्षे प्रयोग· ॥

[भाष्योक्ततन्त्रविषयः]

**आसादने द्विकुम्भ्यौ**—शाखापवित्रेण सह ।

**द्वे अपिधाने**—दोहनेन सह ।

**तन्त्रमितराणि**—पात्राणि शाखापवित्रादीनि । कुम्भीभेदेऽप्य-भेदस्तेषाम् । प्रोक्षणनिष्टपनोपवेषादानाङ्गारनिरूहणानि तन्त्रम् । कुम्भ्यधिश्रयणपर्यूहणे पर्यायेण युगपद्दक्षिणहस्तेनाशक्ते । हस्तावने-जनस्य सायपरिस्तरणोत्तरकालभावित्वादशक्तावदक्षिणस्य कर्मानर्हत्वात् ॥

[अनूहस्थलम् ]

**मन्त्रस्य–भावाच्च**–मातरिश्वनो घर्मोऽसीत्यादेः प्रकृतावूहाभावाच्च॥

[एककुम्भ्यामेवेत्यस्योपपत्ति.]

**शाखापवित्रा–चासम्भवात्**—शाखापवित्रस्यैकस्य युगपदु-भयत्रात्याधानासम्भवात् न च [8] क्रमादुत्तरेषामपि तन्त्रानुष्ठानम् ॥

---

[1] दोहयोरनु–ग. [2] क्रियेत–घ [3] हुतावेव–ग आसामासादने–ग. [4] अभिदाने ?–ग. [5] उहाद्विरभावाच्च ?–क. [6] मुपकरणम्–मु रा. [7] म्भीवृद्धे –क. म्भीविवृद्ध· (मु रा). [8] तदुत्तरेषाम्–क.

[आतञ्चनक्रियैका]

(भा) सक्षालननिनयन[2] [1]ससर्गित्वाच्च । उद्वासनादिपर्यायेण । आतञ्चनार्थानि सर्वाण्येकस्यां प्रक्षिप्याथापरस्याम् आतञ्चनक्रियैकत्वात् ॥

[द्रव्याभिधाय्येकवचनान्तमन्त्रावृत्तिः]

अमृन्मयमिति चैकवचनान्मन्त्रावृत्ति । संनिहितत्वाच्च द्रव्ययोरिदमभिहितमिति विशेषाविज्ञानात् ॥

[न पत्नीमन्त्रावृत्तिः]

असन्निहिताः पत्नय' प्रैषकाले ॥

---

(वृ) संक्षालनासंसार्गित्वाच्च—संक्षालन[2]निनयनससर्गानर्हत्वाच्च तदन्तमेकस्यां कुम्भ्या कुर्यात् ॥

[आतञ्चनप्रकारे एकयोपपत्तिश्च]

उद्वासनादिप–क्रियैकत्वात्—आतञ्चनद्रव्यभेदेऽपि दध्युत्पत्तिफलावच्छिन्नक्रियैकत्व ओदनावच्छिन्नपाकादिवत् उच्छेषणपर्णवल्कौ विभज्य उभयत्र निधातव्यौ ॥

[आवृत्तिहेतूपपत्तिः]

अमृन्म–वृत्तिः—द्रव्याभिधानस्य प्रकृतत्वात् । देवपात्रमित्येकद्रव्याभिधानात् ॥

संनिहित–विज्ञानादिति—एकद्रव्याभिधायि[3]शब्देन सानिहितद्रव्ययोरन्यतरदाभिहितमिति विशेष[4]ज्ञानासभवात् द्वितीयाभिधानार्थमावृत्तिः ॥

[अनावृत्त्युपपत्तिः]

असन्निहिताः पत्नयः प्रैषकाले—अस्यार्थः—अनकपत्नीकस्यापि पत्नीं सनह्येत्यस्याविकार[5]प्रयोगादमृन्मयमित्यस्यापि [6]तुल्य-

---

[1] ल्ननिनयनस–क घ [2] निनयनस्य–घ [3] शब्दो न–ख घ
[4] विशेषविज्ञाना–ख घ [5] प्रयोगममृन्म–ख घ [6] तत्तुल्यशं–क. तत्तुल्याश ङ्कानिराकरणार्थम्–घ

(भा) न च तासां सस्कारः जात्याभिधानवत् ॥

[शाखापवित्रमन्त्रे तन्त्रम्]

इमौ पर्णमिति तन्त्रेणैकत्वात् ॥

[वत्सापाकरणादौ विशेष ]

पृथक्पृथगुपलक्षितानां वत्सानामपाकरणम् ॥

[गोसंस्कारे तन्त्रम्]

तथा गवां सायदोहार्थानाम् । संस्कारस्तन्त्रेण तु भवति ॥

---

(वृ) शङ्कापरिहारार्थं विशेष उच्यते पत्नी॰सनह्येति । प्रैषकाले पत्न्यो न संनिहिता॰ सनहनप्रभृतिसंनिधानात् । तस्मादेकवचनमन्त्रेणास्याभिधानमिति विशेषज्ञानाशक्तेरसमवेताभिधानमिति ॥

**न च तासां संस्कारो जात्याभिधानवत्**—न च तासां संस्कारार्थ॰ प्रैष । किंत्वाग्नीध्रसंस्कारार्थः तस्य प्रैषत्वात् । अत एव प्रैषकाले पत्नीनामसन्निहितत्वात् जात्यभिधानद्वारेणापि पाशमन्त्रवत् प्रकृत्यर्थान्वयसभवमात्रेणापि न तासा संस्कार । जात्यभिधानवदिति— यथा वचनार्थाभावेऽपि जात्यभिधानेन सस्कार तथेह न सभवतीति ॥

[कृतचिह्नवत्सापाकरणम्]

**पृथक्पृ–रणम्**—दोहार्थमुपलक्षितानाम् ।

**तथा–नाम्**—तथा गवामपि पृथक् लक्षणानि कृत्वा सायदोहार्थानां प्रातर्वत्सापाकरणकाले षडवराध्यों वत्सा अपाक्रियन्ते । उभयत्र वत्सापाकरणकाले प्रतिकुम्भि पृथक् कृतचिह्नानां वत्सानां मातृभ्योऽपाकरणमिति यावत् ॥

[गोसंस्कारसिद्धिः]

**संस्कारस्तन्त्रेण तु भवतीति**—गोप्रस्थानादिसंस्कारः ।

[दोहे विशेष]

(भा) पृथक्पृथक् तिस्रस्तिस्र [1]आतञ्चनार्थाः द्व्यहे पुरस्ताद्दोह्याः ॥

[आतञ्चनप्रभेदः]

तत्क्षणादेव दधि यथा भवति तथोपाय आस्थेयः । परिस्तरणान्ते आरण्याशनान्ते वाऽनन्तरमेव पाणिप्रक्षालनादि ॥

(सू) **पात्रसंसादनकाले [2]चत्वार्यौदुम्बराणि पात्राणि प्रयुनक्ति ॥ १५ ॥ ३६ ॥ ६३२ ॥**

(सू) **[3]तेषां जुहूवत्कल्पः ॥ १६ ॥ ३७ ॥ ६३३ ॥**

[संसादनीयवर्जपात्राणि देशश्च संसादनभेदश्च]

(भा) स्फ्योऽग्निहोत्रहवणी चापरतः । पुरस्तात् पत्नीप्राशित्रान्वाहार्यस्थालीडापात्राश्मोपवेषमदन्तीवर्जानि ॥

---

[दोहविशेषविवरणम्]

(वृ) **पृथक्पृथक्-स्ताद्दोह्याः**—तिस्र इति प्रदर्शनार्थम् । एकस्य द्वयोस्तिसृणां वा पृथक्पृथक् । तथा द्व्यह इति प्रदर्शनम् एकाहे द्व्यहे इत्यादे· ।

आतञ्चने कृते,—

[प्रकृत आतञ्चनभेदः]

**तत्क्षणा—आस्थेयः**—रजतनिधानादि. ।

[आरण्याशने पक्षान्तरम्]

**परिस्तरणान्ते—क्षालनादि**—परिस्तरणोत्तर दोहप्रचारपक्षे प्रचारानन्तरं विरमणे कृते आरण्याशनम् ॥

[वर्जनादौ हेतु.]

**[5]स्फ्योग्नि—मदन्तीवर्जानि**—भक्षणाभावात् ।

---

[1] आतञ्चनार्थमुभे पुरस्ताद्दोह्यम्—ग. [2] चत्वारि होमार्थानि पात्राणि जुह्वा सह एकीकृत्य प्रयुनक्ति प्रागुक्तन्यायात् (रु) [3] तस्या जुहूवकल्प ,—क. [4] तेषा संमार्जनादिसंस्कारो जुहूवत्कार्य । तत्र वाच प्राणमिति मन्त्रो वाजित्वा सपत्नसाहमिति ऊह्यते गुणविकृतित्वात् (रु). [5] स्फ्याग्नि होत्र (मु. रा).

(भा) औदुम्बर्योर्जुह्वा सह प्रयोगः । न प्रणीता. पुरोडाशश्रपणार्थ-त्वात् । स्युरदृष्टार्थत्वादित्येके ॥

[वाग्यमः पक्षभेदश्च]

यजमान वाचं यच्छेत्युक्त्वा वाग्यत. पात्राणीत्येवमादि । पशुव-द्वाच यत्त्वा यज्ञयोग॰ । न कुर्वन्तीत्युपदेश औषधार्थ ॥

[कर्तव्यान्तरं विशेषश्च]

पर्यग्निकरणम् । प्रोक्षणीरासादयेत्यादावकृतस्म्प्रैष. । स्रुक्संमार्गे पात्रयोस्सहादानादि । जुहू सम्मृज्य ततः पात्रे अविकृतेन जुहूमन्त्रेण ॥

[लिङ्गवचनाविवक्षातद्धेतवः]

लिङ्गमविवक्षितम् सामान्याभिधानात् । किं सामान्यम् ?

---

(वृ) **औदुम्बर्यो–दित्येके**—आपो वै रक्षोघ्नीः रक्षसामपहत्या इति प्रणीताना रक्षोहननार्थतयाऽदृष्टार्थत्वात् ॥

[ औषधार्थत्वोपपादनम् ]

**यजमान–औषधार्थ इति**—निरुप्यमाणहविरभिमन्त्रणमग्निᐟ-होतारमिति प्रकृत्य तदुदित्वा वाच यच्छति अथ यज्ञं युनक्तीत्यौषध-काण्डमध्यवर्तित्वादौषधार्थ एवेति ॥

[लिङ्गवचनाविवक्षाफलानि]

**लिङ्ग-धानात्**—वाजिनीं त्वा सपत्नसाहीमिति वाजित्वसामा-न्याभिधानपरत्वात् पात्राणीति नपुंसकलिङ्गत्वे सति स्त्रीलिङ्गाविवक्षया पात्रेऽप्यविकारः । तथा—

**किं सामान्यम् ? वाजित्वं ; यथा पत्नीषु पत्नीत्वम्**—पत्नीं सन्नह्येति पत्नीत्वमात्राभिधानेन वचना[1]विवक्षा ॥

---

[1] विवक्षया (मु रा).

(भा) वाजित्वम्; यथा पत्नीषु पत्नीत्वम्। कथं स्त्रीत्ववचन सामान्ये भवतीति चेत्; यथा पुंस्त्ववचनम्। अलिङ्गमसङ्ख्यं च सामान्यम्। तत्र यथा पुंशब्दः एवं स्त्रीशब्दोऽपि। मण्डूकेन विकर्षति मण्डूकिताभिरागहीति॥

[सामान्याभिधानविवक्षाहेतुः]

प्रकरणे च समानकार्याणां मा भूत्संस्कारहानिरिति सामान्याभिधानमाश्रियत इति॥

[संख्याविशेषाविवक्षा]

एष एव न्यायो वचनविरोधेऽपि। इदं देवानामित्याग्नेये केवले अवदानमन्त्रे च॥

---

(वृ) कथं स्त्रीत्व—चेत्—कथं स्त्रीत्व सामान्यवचने भवतीतिचेत्,—सामान्येऽभिधेये कथं वाजिनीमिति स्त्रीत्वम्? नपुंसकत्वमेव स्यात्? परिहरति—

यथा पुंस्त्ववचनमिति॥

दृष्टान्तं विवृणोति—

अलिङ्ग—रागहीति—मण्डूकेनेति पुल्लिङ्गविनियोगे मण्डूकिताभिरागहीति स्त्रीलिङ्गान्तदर्शनात् एवंविधाना सामान्यमात्रवचनतया लिङ्गसङ्ख्यादीनामविवक्षा॥

[भाष्योक्तविवक्षाहेतुविवरणम्]

प्रकरणे च समान—माश्रियते इति—एकप्रकरणवर्तिना समानकार्याणां तुल्यव[1]त्संस्कार्यत्वात् सामान्याभिधानमाश्रियते॥

सङ्ख्याविरोधे यथा—

इदं देवानामित्याग्नेये केवले—निरुप्ताभिमर्शन बहुवचनान्तमेव॥

अवदानमन्त्रे च—अवदानानि ते प्रत्यवदास्यामीति अवदानजात्यभिधानदर्शनात्। बहुवचनान्त[2]मेवावदानद्वित्वेऽपि प्रयुज्यते॥

---

[1] संस्कारकार्यत्वात्—ख ग. [2] न्त एवाव (मु. रा)

[क्वचिदूहपक्षः]

(भा) ऊहमेक आहुर्गुणविकारेषु। तदा [1]वाजित्वेति भवति। वेदाग्राणा विभागः ॥

[पवित्राविसर्गदोहासादने]

न [2] पवित्रविसर्ग·। आज्यान्याभिमन्त्र्य [3] दोहयोरासादन करोति॥

**(सू) [4] आज्यभागाभ्यां प्रचर्याग्नेयेन [5] पुरोडाशे- [6] नाग्नीधे स्रुचौ प्रदाय सहकुम्भीभि[7]रभि-**

---

[ऊह न्यायः ऊहस्थलम्]

(वृ) **ऊहमेक आहुर्गुणविकारेषु**—काम्यनैमित्तिकेषु [8] सस्थाधिकरणन्यायात् कर्मैकत्वेऽप्यधिकारिभेदाद्विकृतित्वादूह इत्येके ॥

**तदा वाजित्वेति भवति**—वाचं प्राणमित्यारभ्य वाजित्वा सपत्नसाहमिति ॥

[भाष्यदर्शितवेदाग्रविभागे विशेषः]

**वेदाग्राणां विभागः**—प्रात[9]दोहपात्रार्थे तयोरपि प्रधानत्वात्। वेदाग्राणि प्रतिविभज्येत्येष पक्षोऽत्र नित्य.। प्रतिपात्र च विभागः प्रतिविभज्येतिवचनात् ॥

[दोहासादने विशेषः]

**न पवित्रविसर्गः—करोति**—पञ्चहोत्रा ॥

---

[1] वाजित्वेऽपि [2] पवित्रापिसर्ग —क घ. त्रावि—ख. ग
[3] दोहयोस्सादनं (मु रा) [4] आश्रावणवद्विस्पष्टार्थमाज्यभागवचनम्। सायदोहयोः सायप्रचारपक्षार्थमिति केचित्, तदयुक्तम्, कुम्भीभिरिति बहुवचनविरोधात्। आग्नेयेन च पुरोडाशेनेति समुच्चयवचनविरोधाच्च। आग्नेयप्रचारानुवादस्तत्रैव विशेषविवक्षया वेदितव्य। यथा 'आग्नेयेन प्रचर्यानन्तरमग्नीधे स्रुचौ दत्वा कुम्भीरादाय दक्षिणातिक्रामन् पुरोनुवाक्या सप्रेष्यतीति। इन्द्रग्रहण महेन्द्रस्याप्युपलक्षणम् प्राकृतदेवतानुवादात्। (रु) [5] च पु—क [6] नाग्नीध्रे ?—क [7] रतिक्रामन्ना—क.
[8] (३-३-१६ जै.सू). [9] र्दोहपानार्थम् ?—क.

(सू) कामन्नाहेन्द्रायानुब्रूह्याश्रावयेन्द्रं यजेति संप्रैषौ ॥ ॥ १७ ॥ ३८ ॥ ६३४ ॥

षोडशी खण्डिका ॥

---

[प्रैषहोमयोः कालः विशेषश्च]

(भा) आज्यभागान्ते कुम्भ्यावादायाभिक्रामन्नाहेन्द्रायानुब्रूहीतीन्द्रयाजिनः। महेन्द्रयाजिनो महेन्द्रायानुब्रूहीति द्वौ ब्राह्मणौ पात्राभ्यामनुजुहुतः। अग्निमावहाग्निं होत्रायावहेति नैतावावाहयति ॥

[इतरतदहःकृत्ये विशेषः]

अन्यदविकृतम्। दोहौ सर्वहुतौ हुत्वा रात्रौ विरमेयु॰ ॥

[श्वस्सादनप्रणयननिनयनप्रोक्षणप्रहरणान्तपवित्राविसर्गाभिघारणाभिमर्शनेषु विशेषः]

श्वोभूते स्तीर्णेषु दर्भेषु अप्रयुक्तान्यपराणि प्रयुज्याप्रयुक्तानि पूर्वाणि प्रयुनक्ति। [1]रात्रौ कृत [2]न पुन. क्रियते। प्रणीताप्रणयनादि सर्वं क्रियते आप्यलेपनिनयनान्तम्। बर्हिष्येव निनयनम्। केचित्प्राचीः कुर्वन्ति। हविःपात्रप्रोक्षणे सर्वासां प्रोक्षणीनामुपयोगः।

---

[अनावाहने हेतुः]

(वृ) आज्यभागान्ते–नैतावावाहयतीति–अग्निस्विष्टकृतोरभावात्।

[अन्याविकारहेतु]

अन्यदवि–विरमेयुः–दोहाभ्यां प्रचरन्तीति यागमात्रोपदेशात्।

[बर्हिष्येव निनयने हेतुः]

श्वोभूते–ष्येवनिनयनम्—[3] सकृदेव लेखानामभावात्।

[केचिदिति पक्षे हेतुः]

केचित् प्राची—कुर्वन्ति—प्राक्त्व्स्य सम्भवात्।

[सर्वोपयोगोक्तिफलम् अन्यश्च विशेषः]

हविःपात्र–मुपयोगः—अतः प्रोक्षणीरासादयेति न प्रैषः।

---

[1] रात्रौ न कृत पुन क्रियते (मु. रा). [2] पुनर्न–ग. [3] सम्भवाल्लेखानिवृत्ति सकृदेवते–ख. ग.

(भा) प्रतितपनादिसम्मार्गप्रहरणान्तमविकृतम् । स्तीर्ण एव प्रस्तरे [1]पवित्रे अपिसृज्य कपालवत्पुरोडाशावित्येवमादि । दोहयोरभिघारण भेदेन । हवी'ष्यासाद्यासाद्यासन्नाभिमर्शनम् ॥

[दोहदेवतावाहनादि]

उपोत्थाय होता आवह देवान् यजमानायाग्निमग्न आवहेत्युक्त्वा दोहदेवतामावाह्य [2]अग्नि होत्रायेत्येवमादि जातवेदस इत्येवमन्त-मुक्त्वोपविशेत् ॥

[वरणादौ विशेषः]

नार्षेय वृणीते । [3]न निगद । अग्नेस्संस्कृतत्वादाग्नेयस्य हविराहुतिप्रभृत्येवाध्वर्यु. प्रतिपद्यते । [4]समानश्शेष' ॥

---

(वृ) पात्रे[5] प्राशित्रहरणं चादाय तूष्णीम् । अघृताक्तत्वात् घृताचीरिति मन्त्राभावः ॥

[अविकृतमित्यतःपरं शेषपूरणम्]

**प्रतितपनादि–त्येवमादि**—प्रतिपद्यते ।

[अभिघारणे मन्त्रः]

**दोहयो–भेदेन**—यस्त आत्मेति ।

[देवतानाम]

**उपो–मावाह्य**—[6]इन्द्र महेन्द्र वा ।

[शेषपदार्थः]

**समानश्शेषः**[7]—दोहप्रचारपार्वणहोमादि'[8] ।

---

[1] पवित्रापिसर्ग –ग [2] ततोऽग्निं होत्रा (मु. रा). [3] न निविद —ग. I. [4] समान शेष–घ. [5] प्राशिते प्राशित्रहरणम् (मु. रा). [6] इन्द्रमावह महेन्द्र वा–ख. ग. [7] शेष–ख ग. [8] होमादि–ख. ग.

[प्रयोगेऽस्मिन् वर्ज्यावर्ज्यविषये पक्षान्तरम्]

(भा) केचित् साधारणानामुत्कर्षं मन्यन्ते । द्वे बर्हिषी । न प्रथमे प्रस्तर । द्वाविध्मौ । पञ्चदश दारूणि परिधयश्च प्रथम इध्मः । न सभरणमन्त्रौ प्रथमे । [1] बन्धनमन्त्र. । यज्ञाभिधानान्नोलपराजि स्तरणम् । [2] द्रव्यसस्कारत्वात् स्फ्याग्निहोत्रहवण्यौदुम्बरवेदाना प्रयोगः ॥

---

[वर्ज्यावर्ज्यनिर्णयपरतत्पक्षीयन्यायः]

(वृ) **केचित्–मन्यन्ते**—उत्कर्षेदित्यपरमिति वक्षमाणन्याथात् ॥

[अत्रपक्षे भाष्यदर्शितवर्जनपरिग्रहोपयुक्तहेतुविवरणादि]

**द्वे बर्हिषि**—रात्रावपि हविरासादनार्थम् [3] ।

**न प्रथमे प्रस्तर इति**—अयं प्रस्तर उभयस्य धर्ता इति प्रयाजानूयाजधारणार्थत्वात्प्रस्तरस्य प्रयाजानूयाजादीनामुत्कर्षे रात्रि-प्रयोगे न प्रस्तरः ॥

**द्वाविध्मौ**—उभयत्र हविःप्रक्षेप इध्माङ्गारेषु कर्तव्योऽदृष्टार्थ-त्वायेति ॥

**पञ्चदश इध्म इति**—आघारानूयाजानामभावात् समिधां निवृत्तिः ॥

**न संभरणमन्त्रौ प्रथमे**—यत्कृष्णो रूप त्रीन् परिधीन् इत्यनयोः सख्याविरोधान्निवृत्ति· ॥

**बन्धनमन्त्रः**—प्रयोक्तव्य एव ।

**यज्ञाभि–रणम्**—यज्ञस्य संततिरसीति यज्ञाभिधानात् यज्ञस्य साधारणत्वादुत्कर्षः ॥

**द्रव्यसं–प्रयोगः**— स्फ्यस्य वेद्यग्निसस्कारत्वात्प्रयोग । अग्नि-होत्रहवण्याः पात्रप्रोक्षणार्थत्वात् औदुम्बरपात्रस्य होमार्थत्वात् वेदस्य चोपवाज[4]नाद्यर्थत्वात् ॥

---

[1] संभरणमन्त्र (मु रा). [2] द्रव्यस्य सं (मु रा) [3] र्थे बर्हि –क [4] व्राजनार्थ–क.

(भा) ब्रह्मवरणं यजमानवाच यच्छेत्यादि पशुवत् । असंप्रैषः न संनहनमन्त्र. संनहनार्थं तत्संस्कार इति । [1] न चाग्रे संनहनं [2] अदृष्टप्रधानोपकारः । अतश्श्वोभूते । न चाय पत्नीसंस्कार । तत्संस्कृताया· क्रियान्तरकरणात् । पात्रयोस्संमार्ग. । नान्येषां प्रयोजनाभावात् । प्रोक्षण्युत्पवनादिसंस्काराः । [3] पवित्राविसर्ग· । ततस्तरणम् । परिधिभिः परिधान-

---

(वृ) ब्रह्मवरणं—स्कार इति—पत्नीसंस्कार इत्युत्कर्ष· । अतः[4] सनद्धाया एवान्वासनम् ॥

नचाग्रे-पकार इति—सनहने प्रधानोपकारो न दृष्ट इति अग्रे प्रथमप्रयोगे दृष्टोपकाराभावान्न सनहनम् ॥

अतश्श्वोभूते—संनहनम् ॥

नचायं पत्नीसंस्कारः—प्रथमप्रयोगे क्रियमाणस्य संनहनस्य क्रियान्तरापकर्षात् ॥

संस्कारस्तु—

तत्संस्कृतायाः क्रियान्तरकरणात्—न च प्रथमप्रयोगे कृत सनहन उत्तरेद्युरुपस्थानादेरुपकरोतीति [5] न संस्कारः ॥

पात्रयोस्संमार्गः—औदुम्बरयो· ।

नान्येषां—ण्युत्पवनादि—इध्मानाम् ।

पवित्रविसर्गः—श्वोभूते प्रोक्षण्युत्पवनार्थं स्थाप्यत्वात् ॥

ततस्तरणम्—बर्हिषः ।

परिधिभिः—वेदस्य च—आसादनमयं वेद इति ।

---

[1] अतश्श्वोभूते न चाग्रे—घ. [2] न दृष्ट प्रधानोपकार —क [3] पवित्रानाविसर्ग —ख ग घ पवित्राविसर्ग (मु रा) [4] अतोस—क. [5] न सन्नहनम् -(मु रा) सन्नहनम्—क.

(भा) माहवनीयाभिमन्त्रणम् । अग्निकल्पनम् । नाधारसमिधौ न [1] विधृती दोहासादनं वेदस्य च । सामिधेन्य उपवाजनम् । नाघारादय आहुतयः । नास्ति प्रवर. । न स्रुगादापनं होतु । प्रचर्य दोहाभ्यां नान्वाहार्यः [2] ऋत्विजां सति बाहुल्ये सत्यपि चोदिते दक्षिणादानस्य चोत्कर्षात् तत. परिधिप्रहरणम् । पवित्राभ्यां संस्रावणम् । तूष्णीं बर्हिष्प्रहरणम्। [3] न वेदस्तरणम् । ब्रह्मा निष्क्रामति । न यजमानभागः । [4] न युनक्ति न विमुञ्चति । विष्णुक्रमादि याजमानं प्रधानसंस्कारत्वात् । श्वोभूते सर्वं यथाप्रकृति ॥

[अत्र विषये उपदेशपक्षः]

उपदेशो नेध्मा[5]बर्हिः । केवल पात्रासादनम् । ब्रह्मवरणम्।

---

(वृ) **सामिधेन्य–होतुः**—प्रयाजाभावात् ।

**प्रचर्य दोहभ्याम्–संस्रावणम्**—औदुम्बराभ्यां संस्रावभागा इति ॥

**तूष्णीं–दस्तरणम्**—उत्तरत्र कार्यसभवात्।

**ब्रह्मानिष्क्रामति न यजमानभागः**—सर्वहुतत्वात् ।

[6] **विष्णुक्रमादि–संस्कारत्वात्**—प्रधानकर्तृसंस्कारत्वात्।

**श्वोभूते सर्व यथाप्रकृति**—एवमन्तः केषांचित्पक्ष. ।

**उपदेशो नेध्माबर्हिः**—तयोरपि सर्व[7]करणार्थतया साधारणत्वात् साधारणनामुत्कर्षपक्षे रात्रौ तयोर्निवृत्तिः ॥

**केवलं पात्रासादनम्**—औदुम्बरपात्रासादनम्।

---

[1] विधृतिदोह–ख ग [2] ऋत्विजामनातिबाहुल्ये (मु रा) [3] न लेपस्तरणम्–घ I न वेदिस्तरणम् (मु. रा) II [4] इद घ–पुस्तके न दृश्यते [5] बर्हिषी (मु रा) [6] विष्णुक्रमादि यथा प्रकृति इति मूले, समानकेषाञ्चित् इति व्याख्याने च पाठ.–ख. ग. [7] सर्वकरणार्थ–क,

(भा) अभिमर्शनम् प्रोक्षणम् दोहासादनम् [1]ततो यागं कृत्वोपरमः। पुनश्श्वोभूते सर्वम् । अधिकं कुर्वन्नाग्नेयादीना प्रयोग दर्शयति। आज्यभागाभ्या प्रचर्य रात्रौ प्रचार· । आग्नेयेन प्रचर्य श्वोभूते । इहा-श्रावयेत्येव लभ्यत इति केचित् । पूर्वगता ब्राह्मणा नापरेणाहवनीयं गच्छन्तीत्युपदेश· ॥

---

(वृ) पवित्रे कृत्वा—

**अभिमर्शनम्**—पात्राणाम् ।

**प्रोक्षणम्**—समार्गं कृत्वा पात्रयोः ।

**दोहासा-र्शयति**–प्रथमपक्षे रात्रौ कृतादधिकं श्वोभूते कर्तव्य-मुपदिशन्नाग्नेयेन च पुरोडाशेनेत्याग्नेयादिना प्रयोग दर्शयतीति। एतदेव विवृणोति—

**आज्यभागाभ्यां–श्वोभूते**–अयमभिप्राय·— आज्यभागाभ्या प्रचर्येत्येतत्सूत्रमपकर्षपक्षे, रात्रावाज्यभागान्ते दोहयोः प्रचार· ॥

**आग्नेयेन प्रचर्यश्वोभूते**—श्वोभूते आग्नेयेन प्रचर्य दोहयोः प्रचार·, इतरथा आज्यभागाभ्यामित्येतदनर्थकम् ॥

**इह श्रावयेत्येवलभ्यत इति केचित्**—आश्रावयेन्द्रं यजेति पाठात् ॥

**पूर्वगता–त्युपदेश**—अपरेणाहवनीयं [2] अतिक्रमणस्याविधा-नात् आहवनीयमग्रेण दक्षिणत· प्रविष्टाना आश्रावणाच्चिरकाल[3]मुपो-त्थापनमात्रमित्युपदेशः । स्वपक्षस्तु अध्वर्युकार्यकरत्वात् तद्वदति-क्रमणामिति ॥

---

[1] न कृत्वोपरम –ख ग [2] य इति आक्रमणस्या—क यमाक्रमणस्या (मु. रा) [3] मुपोत्थानमात्र—क. घ

(भा) उपवीतविधिः श्रौतप्रायश्चित्तार्थः[1] ॥

(सू) **यावत्यः कुम्भ्यस्तावन्तो [2] ब्राह्मणा दक्षिणत [3] उपवीतिनः उपोत्थाय कुम्भीभ्यः पात्राणि पूरयित्वा तैरध्वर्युं जुह्वतमनुजुह्वति ॥ १ ॥ २९ ॥ ॥ ६३५ ॥**

(सू) **[4] स्विष्टकृद्भक्षाश्च न विद्यन्ते ॥२॥३०॥६३६॥**

**[स्विष्टकृद्भक्षे दोहे च विशेषः]**

(भा) [5] विद्यन्ते स्विष्टकृद्भक्षा [6] आग्नेयस्य ; दोहास्तु सर्वहुताः ।

(सू) **[7] समानमत ऊर्ध्वम् सन्तिष्ठते साकंप्रस्थायीयः ॥ ३ ॥ ३१ ॥ ६३७ ॥**

(सू) **[8] दाक्षायणयज्ञेन सुवर्गकामः ॥ ४ ॥ ३२ ॥ ॥ ६३७ ॥**

---

**(वृ) उपवीतविधिः श्रौतप्रायश्चित्तार्थः**—यज्ञोपवीती प्रदक्षिणं दैवानि [9] कर्माणि करोतीति प्राप्तस्य पुनर्वचनात्[10] यदि यजुष्ट इति प्रायश्चित्तार्थम् । इह विधानाभावे नियमातिक्रमे [11] यदस्मिन्नित्यादि स्मार्तप्रायश्चित्तार्थं भवति ॥

---

[1] र्थम्–घ [2] यावत्य कुम्भ्य इति विशेषणमसमासार्थं ब्राह्मणानाम् । ते चर्त्विजोऽभिप्रेता अधिकारात् । अध्वर्युं जुह्वतमिति लिङ्गाच्च (रु) [3] यज्ञोपवीतिन इत्यर्थ । अथवा उपवीतिनो दक्षिणत उपोत्थाय न त्वपरेणाहवनीयमतिक्रम्येत्यर्थ । उपवीतवचनमुत्तरीयनियमार्थम् । मा भूत्सूत्रविकल्प । अथवा सूत्रमेवोपवीतार्थं इति कर्मार्थं वा द्वितीयमुपवीतं विधीयते बोधायनोक्ते (रु) [4] दोहानामिति शेष । तेन दोहा सर्वहुतानि भवन्तीत्युक्तं भवति (रु). [5] विद्यते–**ग.** विवृण्वते –घ [6] द्भक्षण आग्ने. [7] समान ऊर्ध्वं॰–**ख** [8] दाक्षायणेन दृष्टो यज्ञ । कर्मधारय इति केचित्, तन्न शोभते, दाक्षायणत्वनाम्नो विशेषणस्याप्रसिद्धे । यज्ञो दाक्षायणस्येति मानवचनात् सार्वसेनियज्ञ इत्यादिभिर्वैरूप्यायोगाच्च । सोऽपि दर्शपूर्णमासयोर्गुणविकार । कर्मान्तरमित्येके । कात्यायनेनाप्युक्तम् (रु) [9] दैवानीतिप्राप्तस्य–घ. [10] चनात् इह विधाना–**क.** घ [11] तिक्रमे चामन्यस्मिन्नियादि–घ तिक्रमे चान्यस्मिन्नित्यादि–**क**

(सू) द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत ॥ ५ ॥
॥ ३३॥ ६३६ ॥

(सू) आग्नेय[1]योऽष्टाकपालोऽग्नीषोमीय एकादशकपालः पूर्वस्यां पौर्णमास्याम्। आग्नेयोऽष्टाकपाल ऐन्द्रं दध्युत्तरस्याम्। आग्नेयोऽष्टाकपाल ऐन्द्राग्न एकादशकपालः पूर्वस्याममावास्यायाम्। आग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयोत्तरस्याम् ॥
॥ ६ ॥ ३४ ॥ ६३९ ॥

[उपांशुयाजविरहस्तद्धेतुश्च]

(भा) दाक्षायणयज्ञे नोपांशुयाज· आग्नेयादीनामनुक्रमणात् ॥

[अत्र असोमयाजिनोऽग्नीषोमीयोऽस्ति]

असोमयाजिनोऽप्यग्नीषोमीयः पुनर्विधानात्। दध्येव द्वितीयम् ॥

[अत्राग्नीषोमीये दधितद्धर्माः तत्र विशेषश्च]

तच्च [2]स्थानादेकदेवतात्वाच्चोपांशुयाजविकार· ॥

---

[दाक्षायणयज्ञेऽग्नीषोमीये प्रमाणम्]

(वृ) असोमया–पुनर्विधानात्—दाक्षायणयज्ञे तथैवमुत्तर यथादेवतमित्युक्त्वाग्नीषोमाभ्यामिति पौर्णमास्यामिति पुनर्विधानाच्च ॥

[अत्राग्नीषोमीये दधितद्धर्मप्राप्त्यादि विशेषोपपत्तिः]

दध्येव याजविकारः—द्वे पौर्णमास्याविति पौर्णमासी कर्मणोऽभ्यासविधानात् ऐन्द्रं दधीति सान्नाय्य प्रत्यभिज्ञानेऽपि पौर्णमास्या द्वितीयस्योपांशुयाजकर्मणोऽभ्युदयेष्टिवत् द्रव्यदेवतान्तरविधानम्; द्वितीयदेवतात्वाच्च ॥

---

[1] अत्र पुनर्विधानादसोमयाजिनोऽपि ब्राह्मणस्याग्नीषोमीय पुरोडाशो भवति। सन्नयतोऽप्यैन्द्राग्नस्सान्नाय्य च। नित्यमैन्द्रं च तत्सर्वेषाम्। तथा शृतं चोपांशुयाजश्च न भवत, सर्वहविषा पुनरनुक्रमाणात्। आमिक्षामग्रे व्याख्यास्यति (रु)

[2] स्थानापन्नत्वादेकदेवतत्वा–घ.

(भा) प्रकरणात्तु दधिधर्माणा प्राप्ति । अनुपकारकाणां निवृत्तिः ॥

[अत्रैन्द्रयागे विशेषः]

इदानीमुपांशुयाजविकारस्योपकुर्वन्ति । द्वार जातमिति । उपांश्विज्याहुतानुमन्त्रणादीना द्रव्यद्वारत्वादुपांशुयाजधर्मा एव क्रियन्ते ॥

---

[प्राप्तिहेतुः]

(वृ) **प्रकरणात्तु दधिधर्माणां प्राप्तिः**—दर्शपूर्णमासप्रकरणे दधिधर्माणामुपदेशात् अविशेषेण सर्वकरणार्थत्व प्राप्तम् ॥

[निवृत्त्युपपत्तिः]

**अनुपकारकाणां निवृत्तिः**—अस्यार्थः—अङ्गानामकिञ्चित्कराणामङ्गत्वानुपपत्ते· प्रधानापूर्वद्वारेणोपकार जनयित्त्वेवाङ्गत्वनिर्वाहात् दाधिधर्माणामुपाशु [1]याजकार्याभावात् तेषां तन्त्रनिवृत्तिः ॥

[अत्रैन्द्रयागे दाधिधर्माणामुपयोगोपपत्तिः]

**इदानीमुपांशुयाजविकारस्योपकुर्वन्ति**—इदानीमुपांशुयाजात्मकत्वादैन्द्रयागस्य च दधिसाध्यत्वात् दधिधर्मा उपकुर्वन्ति ॥

[द्वारं जातमितिभाष्यभावः]

**द्वारं जातमिति**—अत्रायमभिप्रायः,—साकप्रस्थायीयदाक्षायणयज्ञादीना [2]दर्शपूर्णमास[3]गुणमात्रविकारत्वात् नात्यन्तविकृतत्वमिति सूत्रभाष्यकारयोरभिप्रायः । तूष्णीं कस मृन्मयं चेति वचनात् । इतरथा कसमृन्मययोरूहमेवोपादिशेत् । तथा अग्निष्टोमस्य गुणविकारा इत्यत्र भाष्यकारेण [4]स्पष्टमुक्तम् । एषामग्निचित्यादयो वैकृतध[5]र्मा न भवन्तीति । अत· खण्डसस्थादिवत्प्रयोगविकारमात्रत्वमेव । तस्मादैन्द्र दधीति विध्युत्पत्तिधर्माः कर्तव्या । आतञ्चनार्थं यवागूहोमश्च । एतच्च प्रायश्चित्तप्रकरणे भाष्यकारेण स्पष्टमुक्तम् । वायव्या [6] यवाग्वां

---

1 याजे कार्यान् (मु रा) 2 सर्वपूर्णमास—क 3 मासमात्रगुण—ख ग. 4 स्वयमुक्तम्—घ 5 र्माश्च भवन्तीति ?—ख ग 6 व्या ग्वा (मु रा).

[सान्नाय्ययागेऽत्र नोपांशुयाजविकृतप्रयोगः]

(भा) पूर्णमासे सनयेदिति वचनात्सान्नाय्यप्रधानस्योभयत्र विभाग आग्नेयवत्। तत्र दध्येव नियम्यते। महेन्द्रयाजिनोऽप्यैन्द्र एव समाम्नानात्। न च तस्यामावास्यत्वम् यथा पौर्णमास्यामाग्नेयस्य। अयमेवोपदेशः। [1] सनयतोऽपि भवत्यैन्द्राग्न.। उभयविकार [2] आमिक्षेयं द्वितीयेति वचनात्। सान्नाय्यविकारामिक्षा न वैश्वदे्व्या·।

---

(वृ) सान्नाय्या[3]पूर्वान्निर्वापा(पणा)दयस्त्वर्थलोपान्निवृत्ता·। इह तस्यौषधगुणत्वात् क्रियन्त एवेति॥

**पूर्णमासे—स्योभयत्र विभागः**—अस्मच्छाखोक्तपक्ष उच्यते—सान्नाय्ययागयो. कालद्वये विभज्य [4] विधान न स्थानादुपांशुयाजस्य विकृतप्रयोगविधिः॥

**आग्नेयवत्**—यथोभयत्राग्नेयाविधि।

**तत्र दध्येव नियम्यते**—पूर्णमासे।

**महेन्द्रयाजिनोऽप्यैन्द्र एव समाम्नानात्**—शाखान्तरे।

**न च तस्यामावास्यत्वम्** — सान्नाय्यत्वेऽप्यैन्द्रसान्नाय्यस्य पौर्णमासीकरणत्वेन विधानात्॥

**यथा पौर्णमास्यामाग्नेयस्येति**—अमावास्यासबन्धिनोऽप्याग्नेयस्य पौर्णमास्यन्वयेऽपि यथा नामावास्यत्वम्॥

**अयमेवोपदेश इति**—अस्मच्छाखोक्तोऽयमेव पक्ष उपदेशपक्षः। अस्मिन् [5] पक्षे नोपांशुधर्मा हुतानुमन्त्रणादयः॥

**सान्नाय्य—वैश्वदेव्याः**—सान्नाय्यस्य स्वधर्मयुक्तस्य कथचिद्द्रव्यदेवताविकृतस्योपदेशात्। अतो न वैश्वदेव्यामिक्षाधर्माः प्रसूमयादय॥

---

[1] असंनयतोऽपि—ग. [2] आमिक्षेह द्वितीयेति—घ [3] सान्नाय्यत्वात्पूर्व—(मु रा) [4] न स्थानाद्द्रव्यद्वारत्वादुपा—ख· ग [5] क्ष उपांशु—ख ग.

(भा) वाजसनेयिवचनात्तु वाजिनेज्या भवति ॥

(सू) [1] **व्यावृत्काम इत्युक्तम् ॥ ७ ॥ ३५ ॥ ६४० ॥**

(भा) व्यावृत्कामः—पाप्मना पृथक्त्वमिच्छन् । क्षुरपवि.—क्षुरधारा । ताजक्–तस्मिन्नेव काले । पल्पूलन–समर्दनम् । पौर्णमास्याममावास्यायां [2] प्रधानानि यानि तानि पुन पुन' दाक्षायण इत्ययनशब्देन ।

[अनृतनिषेधे विषयादिः]

अनृतवचनप्रतिषेध क्रत्वर्थ' । तस्य [3] चातिक्रमेऽन्तरितप्रायश्चित्तम् ।

---

(वृ) **वाज्सने–भवति**—वैश्वदेव्यामिक्षाधर्मत्वाभावेऽपि अत्र पूर्वस्यामुत्तरस्यामिति पञ्चदशीप्रतिपदोर्विधिः ॥

**व्यावृत्कामः**—[4] पापपृथ[5]क्करण सुशक करोतीति ।

**क्षुरधारा**—[6] क्षुरस्येव धारा क्षुरधारा ।

**ताजक् तस्मिन्नेव काले**—पुण्यो भवति पापनिवृत्तेः । प्रवामीयते क्षुरतुल्यत्वात् तत्सपर्कं [7] गच्छेदामरणापत्ते । सर्वे[8]स्वारवद्यस्याभिलषित मरण तस्य भवति ॥

**पल्पूलनं–संमर्दनम्**—[9] शोधनद्रव्ये[10]णोषादिना ।

[11] **पौर्णमास्या–याम्**—विधानात् ।

**प्रधाना–निशब्देन**—अभ्यासावगते ।

**अनृतवचन–तेषां समुच्चयः**–पुरुषापराधे श्रौतस्मार्तसमुच्चयात्।

---

[1] व्यावृत्काम एतेन यजेत इत्यादि ब्राह्मणोक्तमप्यनुसन्धातव्यमित्यर्थ । व्यावृत्काम समानेभ्य आत्मनो व्यावृत्तिमीप्सु । क्षुरपवि –असिधारा । ताजक् सद्य । पल्पूलनं–अश्मादिभिर्विना हस्तादिभिर्मर्दनेन शोधनम् (रु) [2] या वा प्रधानानि–घ. [3] चातिक्रमणे–घ [4] पापापृथ–क [5] करण करोतीति क्षुरस्य धारा क्षुरधारा–घ [6] क्षुरस्य धारा–घ [7] गच्छेदात्ममर–क दान्मर–ख ग घ. [8] स्वरादिद्रव्यस्याभिलक्षितम् ?–ख. ग सुरवन्यस्याभिलषितम् (मु रा) [9] शोधनं ? द्रव्यादिना–क [10] णोपाधिना (मु रा) [11] पौर्णमास्याशब्देन–क घ

(भा) [1] व्रातपत्याहिताग्निकालस्य त्रिरात्रमक्षीराक्षारादि तेषां समुच्चय· । केचिदुत्तरमेव पूर्वस्य निवृत्ति । दधि यजमानभागस्य अर्धमासपानं केचित् स एतमर्धमासमिति लिङ्गात् ॥

(सू) ऋत्वे वा [2] जायामुपेयात् ॥८॥ ३६ ॥ ६४१ ॥

[जायाशब्दार्थ·]

(भा) ऋत्वमार्तव तत्र सवर्णाया [3] उपगमनम् । [4] यस्यामधिकृतो [5] जायते सा जाया ॥

---

(वृ) केचिदु–निवृत्तिः—[6]अक्षीराक्षारालवणभोजन स्मार्तप्रायश्चित्तमेव । न पूर्वावस्थागतम् । उत्तराश्रमिण पूर्वाश्रमधर्मनिवृत्तिवत् ॥

दधियज–लिङ्गात्—स एतमर्धमास सधमादं देवैस्सोम पिबतीति देवैस्सहार्धमास [7] सोमसंस्तुतसान्नाय्यपानानिर्देशात [8] ऐन्द्रे दधनि यजमानभाग प्रभूतमवशिष्य भक्षयेत् यावदमावास्याकर्म । सान्नाय्ये च सोमशब्दो निर्दिश्यते सोम· खलु वै सान्नाय्यमिति ॥

[विधेस्तात्पर्यम्]

ऋत्वमा गमनम्—व्यावृत्काम इत्युक्तमिति निर्दिष्टब्राह्मणे न स्त्रियमुपेयादिति निषिद्धस्य ऋतुकाले विकल्प विधीयते ॥

[भाष्योक्तजायापदार्थे मानं उपपत्तिश्च]

यस्या–जाया—सवर्णा । तथाहि—

जायायास्तद्धि जायात्व यदस्या जायते पतिः ।

इति आत्मोत्पत्तिनिमित्तानिन्द्यविवाहप्राप्तपत्नीवचनत्वाज्जाया[9]शब्दस्य सवर्णवचनता । अतश्च 'असुर्यश्शूद्र' इति ब्राह्मणवचनादासुर-

---

[1] व्रातपत्यादि आहिता (मु रा) [2] महिषीम् । अत्र दर्शपूर्णमासव्रतवत् कर्मकालान्येतानि व्रतानीत्युक्त्वा , तेन मन्यामहेऽन्तरालकालव्रतानि यथा चातुर्मास्ये इति कात्यायन (रु) [2] विधीयते यस्यामधिकृत –ख. ग [3] यामुपगमनम्–घ [4] यजति–ग घ [6] अक्षारलवण (मु. रा) [7] सोमसमसस्तुत–ख ग [8] ऐन्द्र दधि–ख ग [9] शब्दस्य । असु–घ

(सू) **सोऽयं दर्शपूर्णमासयोः प्रक्रमे [1] विकल्पोऽनेन दर्शपूर्णमासाभ्यां वा यजेत ॥ ९ ॥ ३७ ॥ ॥ ६४२ ॥**

[उपक्रमविरमणयोर्विशेषः]

(भा) प्रक्रम. आरम्भ. तेनैवान्तो नेय· ॥

(सू) **तेन [2] पञ्चदशवर्षाणीष्ट्वा विरमेद्यजेत वा ॥ ॥ १० ॥ ३८ ॥ ६४३ ॥**

(सू) **सन्तिष्ठते दाक्षायणयज्ञः ॥ ११ ॥ ३९ ॥ ॥ ६४४ ॥**

---

(वृ) विवाहोढायां [3] जातस्य [4] शूद्रत्वात्तस्यापि यज्ञान्वयो निषिध्यते । अधिकारश्च जायाया एव सवर्णापूर्वशास्त्रविहितायामिति स्मरणात् । इतरासां कामत. प्राप्तत्वात् ॥

[भाष्यदर्शितविशेषविवरणं एवंविधव्यवस्थास्थलं फलं च]

**प्रक्रम आ—नेयः**—उपक्रान्तेन यावद्विरमण कर्तव्यं [5] पुन. पुन· । प्रक्रमात्तु नियम्यत इति वचनात् । यत्रैतद्वचनं तत्रैव प्रक्रम नियमः । अतोऽग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्यपशुसोमानां यद्द्रव्यदेवतादिगुणसस्थाकालविशिष्टः प्रयोग आरब्धः [6] न स एवावर्तयितव्यः । प्रयोगे प्रयोगे कल्पान्तराण्यप्यनुष्ठेयानि[7] ॥

---

[1] प्रक्रम एव दर्शपूर्णमासाभ्या विकल्पते । आदित एव प्रक्रम्य अनेन यजेत ताभ्या वा । न तु प्रक्रान्तस्य त्याग अप्रक्रान्तस्य वा ग्रहणमिति (रु) [2] पञ्चदशवर्षताऽस्य दर्शपूर्णमासयोस्त्रिंशद्वर्षतया समिता वेदितव्या प्रयोगतो द्वैगुण्यात् (रु) [3] जातस्य तस्यापि—क. [4] शूद्रस्य (मु रा) [5] न पुन पुन —क [6] ० आरब्ध स एवादर्तव्य (मु रा) [7] अस्मिन् सूत्रे , तेन दाक्षायणयज्ञेन पञ्चदशवर्षपर्यन्तामिष्ट्वा विरमेत्-त्यजेद्यजेतवेत्यस्मिन् पक्षे यावज्जीव यजेत इति वृत्तिर्दृश्यते (मु रा).

[दाक्षायणयज्ञशब्दार्थः]

(भा) [1] दक्षस्यायन [2] दाक्षायण [3]दाक्षायणश्चासौ यज्ञश्च दाक्षायणयज्ञः॥

(सू.) [4] ऐडादधस्सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च [5] व्याख्याताः ॥ १२ ॥ ४० ॥ ६४५ ॥

॥ सप्तदशी खण्डिका ॥

---

[ऐडादधादिशब्दार्थाः निर्वचनफलं च]

(भा) इडादधेन दृष्ट ऐडादध । सर्वसेनादिभिर्दृष्टा यज्ञाः सार्वसेन्यादियज्ञा । नामधेयप्रयोजन ऐडादधेन यक्ष्ये ऐडादध हविरिदमेषां मयीत्येव यथानामोत्तरेषु ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये तृतीये प्रश्ने पञ्चम पटल ॥

---

(सू.) [6] ब्राह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः ॥ १ ॥ १ ॥ ॥ ६४६ ॥

(सू.) तं [7] वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह इति ॥ २ ॥ २ ॥ ६४७ ॥

---

(वृ) इडादधेन–नामोत्तरेषु—तेषां दाक्षायणयज्ञवत्प्रयोगः ॥

इति धूर्तस्वामिभाष्यवृत्तौ तृतीयप्रश्ने पञ्चम पटल ॥

---

[1] दक्षस्यायतन–क I [2] न आवृत्त कर्म दाक्षा–घ II. [3] णश्च यज्ञश्च–ख ग घ III [4] एतेनैडादध–क. ख [5] ते च दाक्षायणयज्ञेन व्याख्याता । तत्समानप्रयोगास्तत्समान फलाश्चेत्यर्थ (रु) [6] यो ब्राह्मणगुणेन प्रकृष्ट. स ब्रह्मा भवति (रु) [7] यजमान इति शेष , तथा याजमानेऽनुवादात् (रु)

[ब्रह्मवरणे कर्ता तत्र कारणं च]

(भा) ब्रह्मवरणमध्वर्युणापि कर्तव्यम् [1] उभयत्र वरणविधानात् ।

[ब्रह्मिष्ठपदार्थः]

ब्रह्मिष्ठो–[2]ब्रह्माधिकः ॥

(सू) **वृतो जपति ॥ ३ ॥ ३ ॥ ६४८ ॥**

[जपे वृतकर्तृकत्वोक्तिफलम्]

(भा) [3]वृतो जपतीति वचनात् यत्र[4] वरणं नास्ति सोमेष्टिषु तत्र जपस्यापि लोप ॥

(सू) **अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवस्सुवर्बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायेत्युक्त्वाऽपरेणाहवनीयं दक्षिणातिक्रम्य निरस्तः [5]परावसुस्सह पाप्मनेति ब्रह्मसदनात्तृणं निरस्य इदमहमर्वाग्वसोस्सदने सीदामि प्रसूतो देवेन**

---

[उभयपदार्थः]

(वृ) **ब्रह्मवरण–उभयत्र विधानात्**—अत्र च याजमाने च ।

[ब्रह्मिष्ठपदार्थविवरणम्]

**ब्रह्मिष्ठो–ब्रह्माधिकः**—वेदवेदार्थपारग. ब्रह्मनिष्ठश्च ॥

---

[1] उभयत्र–याजमाने च–ख ग अत्र च याजमानमेव–क अत्र याजमा (सु रा). [2] ब्राह्मणाधिक –ग [3] यदा एव वृत तदा उत्तर मन्त्रं जपतीत्यर्थ (रु) [4] प्रायणीयादौ (रु). [5] परावसु –क. परावसु–ख.

**सवित्रा बृहस्पतेः सदने सीदामि तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्याय तत्पृथिव्या इत्युपविशति**[1] **आहवनीयमभ्यावृत्याऽऽस्ते ॥ ४ ॥ ४ ॥ ६४९ ॥**

[आसने नियमः कालः पक्षान्तरं च]

(भा) उपविशत्याहवनीयाभिमुख । आस्ते च तत्रैवासमाप्ते । केचित् प्राङ्मुख उपविश्य पश्चात्परिवर्तत इत्याहुः ॥

(सू) **कर्माणि कर्माणि वाचं यच्छति ॥५॥५॥ ६५० ॥**

[वाग्यमने विषयविशेष.]

(भा) ऋत्विग्यजमानकर्मणि ॥

(सू) [2] **मन्त्रवत्सु वा कर्मसु याथाकामी तूष्णीकेषु ॥ ६ ॥ ६ ॥ ६५१ ॥**

[अमन्त्रवत्स्वपि क्वचिद्वाग्यमनम्]

(भा) अमन्त्रवत्यपि वेद्यन्तपरिस्तरणादौ ॥

[तूष्णीकानां मानसत्वम् तद्धेतुश्च]

तूष्णिकेष्वर्थकृत्येष्वपि पात्रप्रक्षालनादिकर्मसु मानसानि वा तूष्णीकानि । स प्रजापतिस्तूष्णीमाघारमाघारयदिति दर्शनात् । यथाऽस्येच्छा तथा प्रयुङ्क्त इति याथाकामी ॥

---

(वृ) **उपविशत्याहवनीयाभिमुख इति**—तत्पृथिव्या इत्युपविशत्याहवनीयमभ्यावृत्येत्येक सूत्रम् ॥

**आस्ते च तत्रैवासमाप्तेरिति**—अर्थान्तरविधि· ।

[केचिदिति पक्षे उपपत्ति.]

**केचित्प्रा—र्तत इत्याहुः**—तत्पृथिव्या इत्युपविशतीति विधायाहवनीयमभ्यावृत्यास्त इति पुनर्विधानात् ॥

[तूष्णीकानां प्राजापत्यत्वमानसत्वयोरुपपत्ति· विशेषश्च]

**सप्रजापति–दर्शनात्**—यत्तूष्णीं तत्प्राजापत्यं इति तूष्णी-

---

[1] उत्तरतो वेदेस्तिष्ठन्नेत जपमुक्त्वा ततो दक्षिणातिक्रम्योपविशति उपविशन्नावृत्याहवनीयाभिमुख आस्ते (रु) [2] अथवा मन्त्रवत्स्वेव कर्मसु वाग्यमननियम । तूष्णीकेष्वनियम इत्यर्थ (रु).

(सू) **यदि प्रमत्तो व्याहरेत् वैष्णवीमृचं व्याहृतीश्च [1]जपित्वा वाचं यच्छेत् ॥ ७ ॥ ७ ॥ ६५२ ॥**

(भा) प्रमत्तः–प्रमादेन व्याहरेत्–उल्लापयेत् ॥

(सू) **ब्रह्मन्नपः प्रणेष्यामीत्यु[2]च्यमाने ॥८॥८॥६५३॥**

अष्टादशी खण्डिका

---

[शानजुपपत्तिः]

(भा) उच्यमान इति वर्तमानसामीप्ये ॥

(सू) **प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्यों प्रणयेति [3]प्रसौति ॥१॥९॥६५४॥**

[प्रणवाद्युच्चैस्त्वकालः]

(भा) नासमाप्ते प्रैषे प्रणवाद्युच्चैः। यज्ञेषु चैतदादय· प्रसवा इति [4]वचनात्।

---

(वृ) कस्य प्राजापत्यत्वदर्शनात् । तस्मान्मनसा प्रजापतये जुह्वतीति प्राजापत्यस्य मानसत्वावगमात् मानसानां तूष्णीकत्वात् । अस्मिन् पक्षे मन्त्ररहितेष्वप्यमानसेषु नित्य वाग्यमनम् ॥

[वर्तमानसामीप्यार्थकत्वे फलम्]

**उच्यमाने इति वर्तमानसामीप्ये**—उक्ते इत्यथः ॥

[भाष्यदर्शितकालग्रहणौचित्यम् उच्चैस्त्वादिव्यवस्था च]

**नासमाप्ते प्रैषे**—समाप्तायां प्रार्थनाया अनुज्ञान युक्तम् ।

**प्रणवाद्युच्चैः**—याजुर्वेदिकत्वात् प्रणवात्पूर्व उपांशु. । परप्रत्यायनार्थत्वात् प्रणवादिः प्रसव उच्चै. । ओमिति ब्रह्मा प्रसौतीत्युक्तेऽपि न केवल प्रणवमात्र प्रसव.। ओमित्युक्थ्यानि शꣳसतीतिवत् प्रसवावयवत्वात्प्रणवस्य ॥

**यज्ञेषु चै-(स्मरणात्) वचनात्**—प्रसवोऽनुज्ञानम् ॥

---

1 प्रमादप्रायश्चित्तमेतत् (रु) 2 न वर्तमानकालो विवक्षित आमन्त्रणमध्येऽनुज्ञानुपपत्ते (रु) 3 अनुजानाति। उपांशुजपमुक्त्वा उच्चै प्रसव । स च प्रणवादि (रु)
4 स्मरणात्–I क. स्मरणाच्च–II. ख. ग. घ.

(सू.) सर्वेष्वामन्त्रणेष्वेवं प्रसव[1]स्तेन कर्मणा यस्मिन्ना-
मन्त्रयते ॥ २ ॥ १० ॥ ६५५ ॥

(भा) यस्मिन् कर्मण्यामन्त्रयतेऽध्वर्यु. प्रणेष्यामि प्रोक्षिष्यामि परिग्रही-
ष्यामीत्येतेषु प्रतिवचनं प्रणय प्रोक्ष परिगृहणानुब्रूह्याश्रावय । प्रणवा-
दीन्येतानि सर्वाणि ॥

(सू) प्रोक्ष यज्ञमिति हविष इध्माबर्हिषश्च प्रोक्षेत् [2] बृह-
स्पते परिगृहाण वेदिं स्वगावो देवास्सदनानि
सन्तु । तस्यां बर्हिः प्रथतां साध्वन्तरहिंस्रा [3] नः
पृथिवी देव्यस्त्वित्युत्तरस्मिन् परिग्राहे । प्रजा-
पतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम्
वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु
मां मनुष्येष्विति [4] प्रवरे ॥ ३ ॥ ११ ॥ ६५६ ॥

(सू.) देवता वर्धयत्वमिति सर्वत्रानुषजति ॥ ४ ॥
॥१२॥ ६५७ ॥

(सू) मित्रस्य त्वा चक्षुषा प्रेक्ष इति प्राशित्रमवदीय-
मानं [5] प्रेक्षते ॥५॥ १३ ॥ ६५८ ॥

---

[प्रसवप्रतिवचनयोः प्रणवादित्वे मानम्]

(वृ) प्रणवा–सर्वाणि—ओमिति ब्रह्मा प्रसौतीत्युक्तत्वात् ॥

---

[1] स्तेन तेन–क ख   यत्र यत्र कर्मणि येनाध्वर्युरामन्त्रयते ब्रह्मन् प्रोक्षिष्यामीत्यादिभिर्निगदै तत्रतत्रामन्त्रितेनैव तेन तेनाभिमन्त्रणविषयेण प्रोक्षणादिना कर्मणा विशिष्ट प्रसव कार्य   [2] प्रोक्षे इति रुद्रदत्तवृत्तौ मुद्रिताया पाठ   [3] ण –ख   [4] एतेषु कर्मसु आमन्त्रित एतान् मन्त्रान् जपित्वा प्रसौति 'सामिधेनीरनुवक्ष्यामिति होतारमितिशेष । स यत्र ब्रूयात् सामधेनीरनुवक्ष्यामीति तदा प्रजापतेऽनुब्रूहीति प्रसौति (रु)   [5] प्रेक्षणे सकृदेव मन्त्र हविर्गणेऽप्यकरणत्वात् अव्यवायाच्च । यथा पशुगणे मनोता । (रु)

[प्राशित्रप्रेक्षणमन्त्रे तन्त्रता तद्धेतुपक्षान्तराणि]

(भा) अवदयिमानस्य प्रेक्षण प्राशित्रस्य । [1]बहुष्वपि सकृदेव मन्त्रः कालभेदात् प्राजापत्येषु मनोतावदकरणत्वात् । केचिदावृत्तिर्विशेष-वचनात् ॥

(सू) **ऋतस्य पथा पर्येहीति [2]परिह्रियमाणं सूर्यस्य त्वा चक्षुषा प्रतिपश्यामीत्याह्रियमाणम् ॥६॥१४॥ ॥ ६५९ ॥**

(भा) परिह्रियमाणमग्रेणाहवनीयम् । आह्रियमाणमात्मसमीपम् ॥

(सू) **[3]सावित्रेण प्रतिगृह्य पृथिव्यास्त्वा नाभौ सादयामीडायाः पद इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डं सादयित्वाऽदब्धेन त्वा चक्षुषाऽवेक्षे इत्यवेक्ष्य सावित्रेणाङ्गुष्ठे[4]नोपमध्यमया चाऽङ्गु-ल्याऽऽदायाऽग्नेस्त्वाऽऽस्येन प्राश्नामि ब्राह्मणस्यो-**

---

[प्राशित्रप्रेक्षणे मन्त्रसकृत्त्वे सदृष्टान्तोपपत्तिः]

(वृ) **अवदीयमानस्य–दकरणत्वादिति**—यथा प्राजापत्यादिपशु-गणेषु अभ्यावर्तते मनोता तत्र वेति क्रियमाणानुवादित्वात्कालभेदा-भावात्तन्त्रत्वमुक्त तद्वदस्यापि क्रियमाणानुवादित्वादकालभेदात्तन्त्रता ॥

[प्राशित्रप्रेक्षणमन्त्रावृत्तिपक्षाशयः]

**केचिदावृत्तिः विशेषवचनात्**—प्रतिद्रव्यमवदानकालभेदा-त्तदानीमेव वक्तव्यमिति विशेषवचनात् ॥

---

[1] बहुदेवतेष्वपि—ग. [2] अग्रेणाहवनीयमाह्रियमाण आसन्नं ह्रियमाण प्रतीक्षत इति शेष (रु) [3] सावित्र प्रतिगृह्णामीत्यन्त प्रतिग्रहे, तथैव ब्राह्मणे पाठात् । आदाने तु आदद इत्यन्त । तथा दर्शितत्वात् (रु) [4] उपमध्यमा अनामिका

(सू) **दरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे सादयामी-
त्यसं[1]म्लेन्त्याऽ[2]पिगिरति ॥ ७ ॥ १५ ॥ ६६० ॥**

एकोनविंशी खण्डिका

---

(भा) सावित्र प्रतिगृह्णाम्यन्त' । आदद इति द्वितीय । [3] एवमनयो-रन्यत्रापि पाठात् । असम्लेन्त्य—असस्पर्शयन् दन्तोष्ठाभ्याम् ॥

(सू) **या अप्स्वन्तर्देवतास्ता इदꣳ शमयन्तु स्वाहा-
कृतं जठरमिन्द्रस्य गच्छ स्वाहेत्यद्भिरभ्यव[4]नीया-
चम्य घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः
सीदेन्द्रस्य त्वा जठरे सादयामीति नाभिदेश-
मभिमृशति ॥ १ ॥ १६ ॥ ६६१ ॥**

[अभ्यवनयनमन्त्रोच्चारणव्यवस्थातद्धेतू]

(भा) अभ्यवनयनम्–[5] अन्तर्नयन प्राशित्रस्याद्भिर्हृदयदेशे । उच्छिष्टे-नैव उत्तरत्राचमनविधानात् ॥

(सू) **वाङ्म आसन्निति [6] यथालिङ्गमङ्गानि ॥ २ ॥
॥ १७ ॥ ६६२ ॥**

---

(वृ) **उच्छिष्टेनैव—मन्त्रोच्चारणम् ॥**

---

[1] म्लत्याऽपि—क ख असम्लेत्य प्राशित्र दन्तैरनभिमृद्य । (रु) [2] अपि-गिरति–निगिरति (रु) [3] एवमन्तयोस्तयोरन्य (मु रा) I एवमन्तयोरन्य–क घ II एवमन्त्रयोरन्य ख ग. III [4] नीयमाचम्य–ख उच्छिष्ट एवाद्भि प्राशित्र अभ्यवनीय–आन्त नीत्वा तत आचामात (रु) [5] अन्तर्निधनम् –ग I. अन्तर्निनयनम् (मु पु ) II [6] अत्र, 'मन्त्रे यल्लिङ्ग वर्तते तल्लिङ्गेन मन्त्रेणाङ्गानि स्पृशति' इत्यधिकम् (मु रा)

(सू) [1] अरिष्टा विश्वानीत्यवशिष्टानि॥३॥१८॥६६३॥

(सू) प्रक्षाल्य प्राशित्रं पूरयित्वा दिशो जिन्वेति पराचीनं [2] निनयाति ॥४॥ १९ ॥ ६६४ ॥

[निनयने विशेषः]

(भा) पराचीनमनिवर्तयन् मुखेन पुरस्ता[3]न्नयति ॥

(सू) मां जिन्वेत्यभ्यात्मम् ॥ ५ ॥ २० ॥ ६६५ ॥

[अभ्यात्मनिनयनप्रकारः]

(भा) मा जिन्वेति [4] पुनर्गृहीत्वा शेषमित्यव[5]चनात्। अभ्यात्मम्-आत्मन उपरि ॥

(सू) यत्रास्मै ब्रह्मभागमाहरति तं प्रतिगृह्य [6] नासंस्थिते भक्षयति ॥ ६ ॥ २१ ॥ ६६६ ॥

[ब्रह्मभागभक्षणकालः तत्प्रमाणं च]

(भा) संस्थिते भक्षणमाध्वर्यवे। सन्तिष्ठेते दर्शपूर्णमासौ इति तत्रोक्तत्वात् ॥

---

[अभ्यात्मपदार्थः]

(वृ) आत्मन उपरि—हृदयदेशाभिमुखम् ॥

[भक्षणकाललाभः भाष्याभितार्थविशेषश्च]

संस्थिते भक्षणमाध्वर्यवे—खण्डसंस्थास्वपि न ब्राह्मणतर्पणान्ते॥

सन्तिष्ठेते—तत्रोक्तत्वात्—आध्वर्यवसमाप्तावुक्तत्वात्।

[7] तेन सह विकल्पनात्। सस्थान्तराणां च तस्य चार्त्विज्यमात्रव्यापारसमाप्तिपरत्वात् निष्क्रमणात्पूर्वं प्राशनम् वचनात् ॥

---

[1] इत्यरिष्टा—क. विश्वशब्दोऽत्र सामर्थ्यात् अवशिष्टविश्वाङ्गाभिधायीत्यर्थ. (रु). [2] पराचीनमेकप्रयत्नेन निनयति (रु) [3] न्निनयति—घ [4] पुनरपो गृहीत्वा [5] अपर पूरयित्वेति कल्पान्तरवचनाच्च इति हेत्वन्तरमप्युक्तम् (रु) [6] न कपालविमोचनात्पूर्वम्, तत्र सस्थावचनात् (रु) [7] एतदादि वचनादित्यन्तो ग्रन्थ क—पुस्तके न दृश्यते.

(सू) [1] ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वा हुताद्य मा माहि॑-सीरहुतो मह्य॑ शिवो भवेत्यन्तर्वेद्यन्वाहार्यमासन्न-मभिमृशति ॥ ७ ॥ २२ ॥ ६६७॥

[अभिमर्शनप्रैषयोः कर्ता]

(भा) अभिमृष्टेऽन्वाहार्ये ब्रह्मणा यजमानेन च प्रैषोऽध्वर्युणोच्यते ।

(सू) [2] ब्रह्मन् प्रस्थास्याम इत्युच्यमाने देव सवितरे-तत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यों प्रतिष्ठेति प्रसौति ॥ ८ ॥ २३ ॥ ६६८ ॥

(सू) [3] भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति यत्किञ्च यज्ञे मृन्मयं भिद्येत तदभिमन्त्रयेत ॥ ९ ॥ २४ ॥ ६६९ ॥

[भिन्नाभिमन्त्रणे विशेषः]

(भा) मृन्मये भिन्नेऽभिमन्त्रणं समुच्चीयते ॥

(सू) [4] ब्रह्मभागं प्राश्यायाडग्निर्जातवेदाः प्रणो यक्ष्य-भिवस्यो अस्मान् सन्नस्सृज सुमत्या वाजवत्येत्या-

---

[भाष्योक्तसमुच्चयविवरणम्]

(वृ) मृन्मये–च्चीयते—मन्त्रैक्येऽप्युभाभ्यां प्रयोक्तव्यम् ।

---

[1] विकृतिषु दक्षिणानेकत्वे ब्रह्माण ब्रह्माण स्थ इत्यादि यथार्थमूहो द्रष्टव्य (रु) [2] प्रसवस्य इह पुनर्वचन ब्रह्मन् प्रस्थास्याम इति बहुवचनेनामन्त्रयत प्रतिष्ठेत्येकवचनेन प्रसव पूर्वजपस्य वर्धयत्वामित्यनुषङ्गलोपश्च यथा स्यातामित्येव-मर्थम्, अन्यथा हि विपरीत प्रयोगो भवेत् (रु). [3] अनेनाभिमन्त्रितं अनेनैवापोऽ-भ्यवहरत्यध्वर्यु अप्सु प्रक्षिपेदित्यर्थ (रु) [4] कपालविमोचनान्ते दिवो भागोऽसीति ब्रह्मभाग प्राश्य आचम्य अयाडग्निरित्यृचा प्रणो यक्षीति यजुषाऽपि उपस्थाय येन मार्गेण प्रविष्ट तेन मार्गेण प्रतिनिष्क्रामति (रु)

(सू) हवनीयमुपस्थाय यथेतं प्रतिनिष्क्रामति ॥ १० ॥
॥ २५ ॥ ६७० ॥

[उपस्थानमन्त्रयोरपेक्षितरूपभेदः]

(भा) अथाऽग्निर्जातवेदा इत्यृक् । प्रणो यक्ष्यभिवस्य इति यजुः ।

[क्वचित्तन्त्रम्]

वरुणप्रघासेषु तन्त्रेणोपस्थान [1] विभवात् ॥

(सू) [2] एवं विहितमिष्टिपशुबन्धानां ब्रह्मत्वं ब्रह्मत्वम् ॥ ११ ॥ २६ ॥ ६७१ ॥

विंशी खण्डिका

---

[एवं विहितत्वोक्तिभावः पक्षान्तर च]

(भा) इष्टिपशुबन्धानामन्यत्रापि यदुक्त ब्रह्मत्व यथा सव्यावृत्तौ ब्रह्मयजमाना [3]विति । तस्याकरणेऽपि न दोष एव विहितामिति वचनात् ।

---

[भाष्यदर्शिततन्त्रहेतुविवरणम्]

(वृ) वरुणप्र–सम्भवात्—विहारद्वयाहवनीययोरनूहेनाऽऽहवनीय–भेदात् ॥

[एवं विहितत्वोक्तेः प्रयोजनाविवरणम्]

इष्टिपशु–नाविति—आश्वलायनेन ।

तस्याक–चनात्—[4] नियमावगते । यत्त्वाध्वर्यवकाण्डे उपादिष्टमिष्टिपशुबन्धेषु तस्याप्यकरणं नियमप्रयोजनम् ॥

---

[1] सम्भवात् (मु रा). [2] यदेव विहित दर्शपूर्णमासयोर्ब्रह्मत्वम् । इदमेव सर्वेष्टीना पशुबन्धादीना च ब्रह्मत्वमित्यर्थ (रु) [3] विति यदुक्त तस्या (मु रा)
[4] तन्नियमावगते (मु रा)

(भा) केचिदाहु. — [1] इष्टिपशुबन्धानां तु यदधिकमपेक्षित तत्तत्रैव विहितमिति । ब्रह्मत्व प्रकरण इत्युपदेश ॥

इति श्रीमदापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये तृतीयप्रश्ने षष्ठ पटल ॥

इति तृतीय प्रश्न

---

इडामेके, अभिघार्येडा, वाग्यता, दक्षिणसद्भय, औपभृतम्, अक्तम्, न्यञ्चम्, आज्यलेपान्, देवाना, फलीकरणहोमम्, यथेतम्, आज्ञातम्, अयाट्, यद्यभिचरेत्, सस्थाप्य, स इन्द्राय, यावत्यः, ब्रह्मिष्ठो ब्रह्मा, प्रणय, या विंशतिः ॥

इडामेक औपभृतमाज्यलेपान् यथेत संस्थाप्य ब्रह्मिष्ठो ब्रह्मा षट् ॥

---

[पक्षान्तरस्याशयः]

(वृ) केचिदाहु – विहितमिति–अस्यार्थ —इष्टिपशुबन्धाना दर्शपूर्णमासप्रकृतित्वादेव सिद्धे एव विहितमिष्टिपशुबन्धानां ब्रह्मत्वमित्यधिकं [2] वचनं मत्वाऽतिदेशपरता सूत्रस्य [3] व्यावर्त्याधिकोक्तसमुच्चयस्सूत्रार्थ इति ॥

[उपदेशपक्षाशय.]

ब्रह्मत्वं प्रकरण इत्युपदेश इति—ब्रह्मिष्ठो ब्रह्मेत्येतावति वक्तव्ये ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोरिति वचनान्न दर्शपूर्णमासप्रकरणे ब्रह्मपटलस्याम्नानम् हौत्रप्रवरादिवत्परिभाषायाम् । अतस्सर्वसाधारण्यप्राप्ताविष्टिपशुबन्धानां विहितमित्युच्यत इत्युपदेशः ॥

इति श्रीकौशिकेन रामाग्निचिता कृताया धूर्तस्वामिभाष्यवृत्तौ तृतीयप्रश्ने षष्ठ पटल

समाप्तस्तृतीय प्रश्न .

---

[1] अय ग्रन्थ ग.–पुस्तके न दृश्यते [2] वचन त्वादेशान्तरसूत्रव्यावृत्त्याऽधिकोक्तसमुच्चयार्थमिति (मु रा) [3] व्याकृतावधिकोक्ते समुच्चयसूत्रार्थ इति–क व्यावर्त्याधिकोक्ते· समुच्चयसूत्रार्थ इति–ख. ग.

# अथ तुरीयः प्रश्नः.

(सू) याजमानं व्याख्यास्यामः[1] ॥ १ ॥ १ ॥ ६७२ ॥

(भा) यजमानस्य कर्म याजमानम् ॥

(सू) यजमानस्य ब्रह्मचर्यं [2]दक्षिणादानं [3]द्रव्यप्रकल्पनं कामानां कामनम् [4] ॥ २ ॥ २ ॥ ६७३ ॥

[द्वितीययजमानशब्दफलम्]

(भा) पुनर्यजमानग्रहणादयजतो मा भूवन्निमे धर्मा इति ॥

---

## अथ तुरीयः प्रश्नः.

[अयजत इति भाष्यभावः]

(वृ) [5]पुनर्यजमान–धर्मा इति—यजमानस्य ब्रह्मचर्यमिति पुनर्यजमानग्रहणात् प्रक्रान्तयागस्यैते ब्रह्मचर्यादयो धर्मा इति ॥

---

1 तत्प्रसङ्गात् क्वचित्पत्नीकर्मापि । यजमानयोर्वा कर्म याजमानम् । उपहूतेयं यजमानेत्यादौ पत्न्यामपि यजमानव्यपदेशोपलम्भात् (रु) 2 ऋत्विक्पारिक्रय· (रु) 3 द्रव्यकल्पनम्–क 4 ब्रह्मचर्यादिचतुष्टय अविशेषेण चोदितमपि सर्वत्र यजमानस्यैव भवति न र्त्विजाम् । वचनादृत्विजामपि भवति, यथा यदि कामयेताध्वर्युरित्यादि । तथा च यावदुक्तमेव कर्म पत्न्यास्सर्वत्रेति न्यायविद । यावदुक्त पत्नया कर्माणि ब्रह्मचर्यं जपश्चेति सत्याषाढ । भरद्वाजस्तु आत्मसस्कारा वपनवर्जं पत्न्या इति (रु) 5 अत्र,—व्याख्यास्याम· प्रतिपादयिष्याम इत्यधिकं (मु. रा).

[द्वितीयं प्रयोजनम् ]

(भा) यजमानाया वा अवचनात् ॥

[तृतीयं प्रयोजनम्]

नियमा ब्रह्मचर्यादयो य एतस्मिन् प्रकरण उच्यन्ते ते यजमानस्यैव भवन्ति । आध्वर्यवो वेद इति समाख्यानादध्वर्यो· प्राप्ता· ; यजमानस्यैव भवन्ति नाध्वर्योः । लोके फलसयुक्तस्यैवोपवासादीनि ।

[तृतीयप्रयोजने औचित्यं शाखान्तरसमानन्यायता च]

अन्यस्मिन्नपि वेदे नियमा यजमानस्यैव ॥

---

[भाष्योक्तद्वितीयप्रयोजनोपपत्तिः]

(वृ) यजमा–चनात्—[1] अथवा पत्न्या यावदुक्तधर्मत्वात् ब्रह्मचर्यादीनामविधानान्निवृत्तत्वात् पुरुषस्यैव नियमा इत्येवमर्थं वा पुनर्वचनम् । ननु यजमानस्य ब्रह्मचर्ये कथ पत्न्यास्तदभावः? व्रत्येऽहनि स्त्रीगमननिमित्ता व्रातपती यजमानस्यैव यथा स्यादिति चेत्; न, तस्या अपि सहाधिकारादविशेष· ; उच्यते,—यदा त्वनपत्या पत्न्यृतुस्नाता तदा [2] देवरेण तन्निमित्ता व्रातपतीति ॥

[भाष्ययोजना]

नियमा–भवन्ति—यद्यपि,—

आध्वर्यवो–प्राप्तः—तथाऽपि ;—

यजमा–ध्वर्योः—इत्येवमर्थं पुनर्वचनम् ।

[तृतीयप्रयोजने औचित्यविवरणम्]

लोके–दीनीति—फलार्थिन· फलसिद्धये योग्यत्वाय ब्रह्मचर्यादिनियमा· ॥

[शाखान्तरसमानन्यायोपपादनम्]

अन्यस्मिन्नपि–स्यैव—ऋक्सामवेदयोरप्युक्ता । फलार्थित्वादितावुपेयादेव। यस्य व्रत्येऽहन्निति प्रकृत्य यदा त्रिरात्रीणा स्यादथैनामुपह्वयेतेति तस्मिन्नेव काले विधानात् ॥

---

[1] अथ पत्न्या (मु. रा) [2] देवरवरणेन–घ.

[क्वचिदृत्विजोऽपि नियमः]

(भा) वचनादृत्विजामपि । योऽस्याग्निमाधास्यन् स्यादित्यादि ॥

[दक्षिणादानकामने यजमानधर्मः क्वचिदन्यस्यापि]

तथा दक्षिणादानादीनि फलसंयुक्तानि । वचनादृत्विजामपि भवन्ति, अनड्वान् होत्रा देय इति । यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमिति च ॥

(सू) [1] **प्रत्यगाशिषो [2] मन्त्रान् जपत्यकरणानुपतिष्ठतेऽनु[3]मन्त्रयते ॥ ३ ॥ ३ ॥ ६७४ ॥**

---

(वृ) **वचनादृत्विजामपि–दित्यादि ;**—नियमा॰ ॥

[दक्षिणादानस्य यजमानधर्मत्वोपपत्तिः]

**तथा–क्तानि**—सुवर्गाय वा एतानि लोकाय हूयन्ते इत्यादिना दक्षिणादानस्य फलसयोगश्रवणात् । तथा यस्यैव विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोतीत्यादिना फलसयोगश्रवणात् । किञ्च स्वत्यागरूपत्वाच्च यजमानस्यैव ॥

**वचनादृत्विजामपि–देय इति ;**—कामानां कामन यजमानस्य । वचनादृत्विजाम् [4] ॥

---

[1] वेदस्याध्वर्यवसमाख्यया सर्वेषा मन्त्राणामाध्वर्यवत्वे प्राप्त उच्यते,—ये आत्माशीरभिवादिन आध्वर्यवे कर्मणि करणतया नियुक्ता मन्त्रा तान् जपति तैरुपतिष्ठते तैरनुमन्त्रयते वा यजमान. न त्वध्वर्यु॰, आशासितृगामिफलत्वादात्माशिषां स्वाम्यर्थत्वाच्च सर्वकर्मफलानाम्। अत सामर्थ्येन समाख्या बाध्यत इति भाव । जैमिनिनाप्युक्तम् (३–८–१५)। करणमन्त्रास्तु प्रत्यगाशिषोऽप्याध्वर्यवा एव ममाग्न इत्यादय । तेष्वप्याशर्यिजमानार्थां । अस्मच्छब्दो भाक्त । जपादीना विषयविभागं दर्शयिष्यति अन्वाधीयमाने जपतीत्यादि । यत्र न दर्शयति तत्र योग्यतयैव व्यवस्था। प्रवरे प्रव्रियमाणे इत्यादौ जप । स्व आयतने मनीषया इत्यादावुपस्थानम् अनुमन्त्रणं वा। वेदिं संमृज्यमानामित्यादावनुमन्त्रणम् । प्रायिकं चैतत् जपादिक्रियान्तराणामपि प्रदर्शनात् पुरोडाशमभिमृशतीत्यादि (रु) [2]प्रत्यगाशिषा—ख. [3] मन्त्रयते वा—ख.
[4] द्रव्यप्रकल्पन, यज्ञसाधनद्रव्याणीध्माबर्हिरादीनि । तेषामुपकल्पनं विहारदेशे स्थापनम् इत्यधिकम् (मु. रा).

[प्रत्यगाशीर्मन्त्राणां प्रमाणानपेक्षं याजमानत्वम् ]

(भा) प्रत्यगाशिष आत्मगामिन. अस्मद्वाचिन उत्तमपुरुषवाचिनश्च। तेषामाशीर्वतामन्तरेणापि वचन याजमानत्वम् । यथा वृष्ट्यादीनामभि-मन्त्रणम् ॥

[अकरणोदाहरणम्]

गर्गत्रिरात्रे जपोपस्थाना[1]नुमन्त्रणादयो ये दूरस्था क्रियाया. ते न

[क्वचित्प्रत्यगाशिषोऽप्याध्वर्यवाः]

करणाः । ये सन्निपत्योपकुर्वन्ति ते प्रत्यगाशिषोऽप्याध्वर्यवा एव । [2]यथाऽग्न्युपसमिन्धनमन्वाधाने ॥

---

[प्रमाणानपेक्षत्वे हेतुः]

(वृ) **प्रत्यगाशिषः—याजमानत्वम्**—फलाशासनस्य यजमानार्थत्वात् ॥

[अकरणमन्त्राः]

**गर्गात्रिरात्रे—अकरणाः**—त्वमग्ने सहस्रमानयेत्यादिना ।

[प्रत्यगाशिष इत्यादिसूत्रार्थः]

**जपोप—अकरणा इति** —प्रत्यगाशिषो मन्त्रान् जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयत इत्यस्यायमर्थः ;—प्रत्यगाशिषो मन्त्रान् जपत्यकरणान् प्रत्यगाशिषो [3]जपति तादृशैरुपतिष्ठतेऽनुमन्त्रयते च । [4]दूरस्थाः क्रियायाः इति क्रियानभिधायिन. कारकाभिधायिनश्च । तेषां मन्त्राणां याजमानत्व प्रत्यगाशिषाम् ॥

[आध्वर्यवत्वे हेतुः]

**ये सान्निपत्योप—र्यवा एव**—करणमन्त्राणां क्रियाकर्त्रैव प्रयोज्यत्वात् ॥

[आध्वर्यवप्रत्यगाशीर्मन्त्राः]

**यथाग्न्यु—धाने**—ममाग्ने वर्च इत्यादीनाम् ।

---

[1] स्थानाभिमन्त्रणानुमन्त्रणादयो—ट [2] यथाग्न्युपसमिन्धन—ग. [3] जपति अनादेशे उपतिष्ठतेऽनुमन्त्रयते वा (मु. रा). [4] दूरस्थानक्रियाया.—ख. ग.

[जपोपस्थानानुमन्त्रणानां व्यवस्थापकम्]

(भा) यत्र सप्तम्या निर्देशस्तत्र जपः, यथा होतृप्रवरेऽध्वर्युप्रवरे च प्रव्रियमाण इति । यत्र [1]तु द्वितीया तत्रोपस्थानमनुमन्त्रण वा। पुनर्वचन नियमार्थम् ॥

(सू) [2]पर्वणि च केशश्मश्रु वापयते ॥४॥४॥६७५॥

[वपनविधेर्नियामकता तत्फलं च शब्दार्थश्च]

(भा) अर्थप्राप्तत्वाद्वपनस्य यदि विद्यतेऽन्यस्मिन् काले नियम्यते। अत

---

[भाष्यदर्शितनियमोदाहरणम्]

(वृ) यत्र तु–णं—वा —नियमार्थम् –– यथाऽऽग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठत इति तत्रोपस्थानमेव । अनुमन्त्रणमिति नियमार्थः पुनरुपदेशः ॥

[कालमात्रनियमविधित्वं यदिशब्दभावश्च]

अर्थप्राप्त–नियम्यते—पर्वणि च केशश्मश्रु वापयते इत्यर्थतः प्रवृत्तस्य वपनस्य कालविधिपरत्वाद्वचनस्य अर्थान्तराभावादिच्छाप्राप्तस्य वपनस्य कालमात्रनियमविधिः । उत्तरत्राऽप्यल्पश इति वचनात् यदि वर्षिष्ठाः केशा विद्यन्ते इच्छा च विद्यते ततोऽस्मिन् काले नियमः। नैमित्तिकभेदेन छेदनभेदनादिना प्रयुक्तानां [3]होमयागादीनां तत्तन्निमित्त-युक्तकर्माङ्गत्ववत् इच्छायां केशभूयस्त्वे च क्रियमाणस्य कादा-

---

[1] द्वितीयया—क ख. ग [2] ऐच्छिकत्वाद्वपनस्य पर्वणि पाक्षिकं सत् नियम्यते वापयत एव पर्वणीति । तेनापर्वण्यनियम । तच्च पितृयज्ञवदनङ्गं स्वकालविधानात्, तेन अकरणेऽपि दर्शपूर्णमासयो कार्यं त्रिंशतं वर्षाणि वा जीर्णो वा विरमेदित्यादिकल्पेषु । कर्माङ्ग वा वपनम्, मृता वा एषेत्यादेलिङ्गात् । तदाऽपि पर्व-ग्रहणात् पथिकृन्मुखाया प्रकृतौ विकृतिषु च पर्वकालासु नेष्यते यथा नैमित्तिकेष्टिषु । केशश्मश्रुग्रहणात् लोमवपनमैच्छिक वेदितव्यम् (रु) [3] सोमयागादीनां (मु. रा)

(भा) इष्टिबहुत्वे पुनः पुनर्न क्रियते। चशब्देनान्यत्रास्य प्रतिषेधोऽनुमीयते॥

**(सू) अप्यल्पशो [1] लोमानि वापयत इति वाजसनेयकम्॥५॥५॥ ६७६॥**

(भा) अप्यल्पश.—अल्पान्यपि लोमानि असमर्थान्यपि श्मश्रूणि॥

---

(वृ) चित्काङ्गता। इच्छायां सत्या नैमित्तिकत्वादवश्य कर्तव्यमेव। अनिच्छाया च केशभूयस्त्वे नियतम्। मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैतीति पुरुषसंस्कारद्वारेणाङ्गत्वात्। मृता वा एषा त्वगितिलिङ्गात् [2] नखभूयस्त्ववद्रोमोद्गमो भूयस्त्वमपि न सहते॥

[चशब्दार्थविवरणम्, यज्ञाङ्गत्वादिपक्षाः सूत्रे नखोपलक्षणं च]

**चशब्देन–नुमीयते**—अपर्व[3]काले च कर्मण्यप्रवृत्तेऽपीच्छायां सत्यां कुर्यादिति। केचित्प्रकरणादेव कर्माङ्गत्वे [4] पर्वग्रहणात्कर्मणोऽनङ्गमिति। अन्ये त्वपर्वकालेऽपि दर्शपूर्ण[5]मासप्रवृत्तौ कर्तव्यमित्याहुः यज्ञियो भूत्वा मेधमुपैतीति लिङ्गात्। केशवस्वामिमते तु लोमनखवपनप्राप्त्यर्थश्चकार इति। स्वमते केशश्मश्रुग्रहणं समानदेशस्य नखस्यापि प्रदर्शनम्॥

[सूत्रे लोमग्रहणस्योपलक्षणता सूत्रार्थश्च]

**आप्यल्पशो–श्मश्रूणि**—लोमग्रहणं प्रदर्शनार्थम्; अस्यार्थः—

---

[1] लोमानि तनूरुहाणि तान्यल्पान्यपि वापयितव्यानि केशश्मश्रुकल्पं सत् उपेक्ष्यताम्। प्रकृतमेव वा श्मश्रु लोमशब्देन विवक्षितम्, लोमविशेषत्वाच्छ्मश्रुण.। अल्पमपि श्मश्रु वापयत एव। केशास्तु अल्पे सन्तो नोप्येरन् (रु). [2] नखवदाचित्भागोद्गमोरोमाणा भूयस्त्वम्—घ. नखवेत्त्वग्भागोद्गमरोम्णा भूयस्त्वम् (मु रा) [3] कालेऽपि च–घ. कर्मप्रवृत्तोऽपि–क. [4] "ङ्गत्वेपर्वक–ख. ग ङ्गत्वे सिद्धे पर्व–क. [5] पूर्वं–ख. ग?

(सू) विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमीति [1]यक्ष्यमाणोऽप उपस्पृशति ॥ ६ ॥ ६ ॥ ६७७ ॥

[वपनस्यैच्छिकत्वम्; वपनोत्तरं स्नानम्। यक्ष्यमाणपदभावश्च]

(भा) यक्ष्य इत्युक्त्वा कामो वपनम्। स्नात्वाऽपामुपस्पर्शनम् यक्ष्यमाण इति वचनात्। अत· [2]अमावास्यायामपि पुनः, कालभेदात् ॥

(सू) तदिदं सर्व[3]यज्ञेषूपस्पर्शनं भवति ॥ ७ ॥ ७ ॥ ॥ ६७८ ॥

---

(वृ) अल्पशः केशान् वापयते अल्पशो लोमानि वापयेत् अपिशब्द· श्मश्रुग्रहणार्थः इति सूत्रयोजनेति। अस्मिन्नपि पक्षे प्रतिपौर्णमासमेव वपन न दर्शे। अधिकारिसस्कारत्वात् एकत्वाच्चाधिकारस्य ॥

[कामशब्दफलम्]

**यक्ष्ये—पनम्**—काम इत्यधिकारः सङ्कल्पप्रदर्शनार्थः।

[उपस्पर्शनकालप्रदर्शनाशयः]

**स्नात्वा—र्शनम्**—वपनोत्तरकालमुपस्पर्शनविधानात्। यदा सङ्कल्पात्प्रागेवापामुपस्पर्शनं ततः पूर्वमेव वपनम् ॥

**यक्ष्यमाण इति वचनात्**—यक्ष्य इति [4]सङ्कल्पाव्यवधानावगते·।

[आवृत्तिहेतुः]

**अतः—भेदात्**—प्रयोगभेदात् प्रयोगा[5]र्थोपस्पर्शनमावर्तते ॥

---

[1] यक्ष्यमाणः — यष्टुं कृतसङ्कल्प सङ्कल्पश्च मनसोऽसाधारणव्यापारत्वान्मानस·। वाचिकोपीत्यपरम् 'यो यक्ष्य इत्युक्त्वा न यजते इति लिङ्गात्। मनसा त्रिस्सङ्कल्पयति वाचा त्रिरुच्चैरिति बोधायन। क्रतुकाम कामयितव्य। कामना प्रकाराश्चोक्ता बोधायनेन। सन्तमपि कामं वर्जयन् परदेवता पिप्रीषेत् दर्शेन यक्ष्य इत्येवमादिरेव युक्तस्सङ्कल्प (रु) [2]वचनात्। अमा—ङ [3]यजति चोदितोष्विष्टिपशुसोमेषु। अतश्च दर्विहोमेषु न भवति (रु). [4]सङ्कल्प्याव्यव—क. [5]गार्थमपामुप—घ.

[एतदुपस्पर्शनवत्तया संग्राह्यकर्माणि उपदेशमतं मानं च]

(भा) एवमिष्टिविकारेष्वपि भवति । सर्वयज्ञा दर्विहोमैस्सह । उपदेशो यज्ञक्रतुसयुक्तेष्वेव । ब्राह्मणे तथा वचनात् ॥

[अग्निहोत्रेनोपस्पर्शनम्]

न त्वेवाग्निहोत्रे, तत्र होमे पुनर्विधानात् ॥

[यक्ष्यमाणत्वकृतोपस्पर्शनकालः]

यज्ञक्रतुषु यक्ष्यमाणो वेष्ट्वा वेति पुरस्तात्प्रणयनस्येष्टि विकारेष्वपामुपस्पर्शनम् ॥

---

[पश्वादिषूपस्पर्शने कालः]

(वृ) **एवमिष्टि–भवति**—पश्वा[1]दिषु यदा सङ्कल्पादूर्ध्वमुपस्पर्शन तदा यक्ष्यमाणशब्दस्य प्रथमपदार्था[2]रिप्सुपरत्वात् प्रणयनस्य प्रथमपदार्थत्वात्पशावाहवनीयप्रणयनात्पूर्वमुपस्पर्शनम् ॥

[दर्विहोमसाधारण्येनोपस्पर्शनप्रापकम्]

**सर्वयज्ञादर्विहोमैस्सह**—यक्ष्यमाणोऽप उपस्पृशतीति विधाय तदिद सर्वयज्ञेष्विति पुनर्वचनात् ॥

**उपदेशो–वचनात्**—अथो आहुः सर्वेषु यज्ञक्रतुष्विति ।

[अग्निहोत्रे तदभावोपपादनम्]

**न त्वेवाग्निहोत्रे**—आरम्भे दर्विहोमेषु प्राप्तिपक्षेऽपि ।

**तत्र होमे पुनर्विधानात्**—होष्यन्नप उपस्पृश्य पालाशीं समिध हुत्वाऽप उपस्पृश्य [3]अन्तर्वेदीत्युत्कर्षापकर्षविधानात् नोपक्रमोपसंहारयो. । अत एवाग्निहोत्रेऽपि तयोर्याजमानत्वम् ॥

[पुरस्तात्प्रणयनादुपस्पर्शने हेतोरुपपादनम्]

**यज्ञक्रतुषु–स्पर्शनम्**—अस्यार्थ —[4] सङ्कल्पोत्तरकालमपामुपस्पर्शन[5]पक्षे साङ्ग[6] प्रधानं प्रति यक्ष्यमाणत्वापाये केवलं प्रधानं प्रति यक्ष्यमाणत्वस्याश्रयितव्यत्वादवदानात्प्रागुपस्पर्शने प्राप्ते प्रणयनात्पूर्वं

---

[1] अश्वादिषु [2]—ख ग [2] र्थप्रारिप्सु–ख. ग. [3] न्तर्वेद्युत्कर्षा–ख. ग.
[4] संकल्पात्परकालम्–घ. [5] र्शनकाले साङ्गम्–ट [6] साङ्ग प्रति–क.

(भा) सोमेष्टिषु ॥

(सू) [1] अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमꣳश्वो यज्ञाय रमतां देवताभ्यः । वसून् रुद्रानादित्यानिन्द्रेण सह देवताः। ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया। इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान् देवान् परिगृह्णामि पूर्वः। अग्निर्हव्यवाडिह तानावहतु पौर्णमासꣳ हविरिदमेषां मयि आमावास्यꣳ हविरिदमेषां मयीति यथालिङ्गमाहवनीयेऽन्वाधीयमाने जपति ॥ ८ ॥ ८ ॥ ६७९ ॥

(सू) अन्तराग्नी पशवो देवसꣳसदमागमन् । तान् पूर्वः परिगृह्णामि स्व आयतने मनीषयेत्यन्तराग्नी तिष्ठन् जपति ॥ ९ ॥ ९ ॥ ६८० ॥

(सू) इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया । इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः । तान् पूर्वः परिगृह्णामि

---

(वृ) कर्तव्यमित्युपस्पर्शनोत्तरकालमन्वाधानजपविधानादुपस्पर्शनोत्तरकालमेव प्रणयनम् ॥

सोमेष्टिषु—सोमार्थस्य प्रसङ्गः ॥

---

[1] सद्यस्कालाया पौर्णमास्या आद्या लुप्यते श्वोयज्ञायेत्यादिलिङ्गविरोधात् । यदा तु अल्पापि पञ्चदशी स्यात् तदा न लोपस्तृतीयस्याः । विकृतिषु तु यथार्थमूहस्सर्वत्र । तथा नामवतीष्विष्टिषु तत्तन्नाम्ना उपलक्षणं कर्मण । अनामकास्तु सामान्यनाम्ना उपलक्षणीया यथेष्टं हविरिति (रु).

(सू) स्व आयतने मनीषयेति गार्हपत्यम् ॥ १० ॥
॥ १० ॥ ६८१ ॥

॥ प्रथमा खण्डिका ॥

---

[सूत्रोक्तजपस्य कचिल्लोपः]

(भा) सद्यस्कालायां पौर्णमास्यामग्निं गृह्णामीत्यृचो लोपः ।

[अलोपपक्षे सम्भवी ऊहः]

यदि तु परिपाठः ; अद्य यज्ञायेत्युच्येत ॥

---

[भाष्योक्तजपलोपनिदानम्]

(वृ) सद्यस्काला–लोपः—[1]श्वो यज्ञाय रमतामिति यज्ञस्य श्वः काल सम्बन्धस्य सद्यस्कालायामभावात् प्रकृतौ चोहानुपपत्तेः लोप एव प्रधानशब्दस्य । [2] असभवाच्च [3] । न च पत्नी˘संनह्यतिवत् प्रकृतिप्रयोगद्वय[4]साधारण[5]त्वादविवक्षा ; तत्र प्रातिपदिकार्थसंभवा- द्वचनाविवक्षा । इह तु व्रीहीणां मेध सुमनस्यमान इतिवत् द्व्यहकाल- प्रयोगे प्रकृत्यन्वयसम्भवात् समवेताभिधायित्वात् सद्यस्कालायां लोप एव ; यवप्रयोगे व्रीहिमन्त्रवत् ॥

यदि तु परिपठः—कर्तव्यस्स्यात् ॥

[ऊहे दृष्टान्तः]

अद्य यज्ञायेत्युच्येत—ऊहेनाद्य सुत्यामितिवत् ॥

---

[1] श्वो यज्ञायेति सद्यस्कालाया विरोधात्–घ. [2] असबन्धाच्च–ख.ग.ट. संबन्धाच्च–क [3] वाच्च । पत्नी–क वाच्च न पत्नी˘ (मु रा). [4] द्वयासाधा–क [5] णादविवक्षा तत्र प्रा–ख. ग. क्षेति-तत्र प्रा–ख. ग.

[विकृतिषु विवक्षितार्थोपलक्षणप्रकारः]

(भा) विकृतौ सद्यस्कालायामह एव । यस्मिंश्चाहनि प्रयुज्यते तस्योपलक्षणम् । इमामूर्जमेकादशीमिति ॥

[क्वचिदुपलक्षकशब्दविशेषाः]

नामधेयविकारश्च यासामस्ति तासां तेनैवोपलक्षणम् ; यथा [1] चैत्रं हविरिति । पञ्चदश्याः परतः प्रथमां द्वितीयामिति ॥

---

[प्रसक्तविरोधपरिहारेणोपलक्षणतानिर्वाहः]

(वृ) **विकृतौ सद्यस्कालाया–पलक्षणम्**—अन्वाधानकालतिथेः इमामूर्जं पञ्चदशीमिति यक्ष्यमाणदेवतापरिग्रहार्थत्वात् कालपरत्वाभावान्न पञ्चदशीविवक्षा । ततोऽन्वाधानतिथ्युपलक्षणम् । यथा—

**इमामूर्जमेकादशीमिति**—पर्वणि सुत्याया[2]मेका दीक्षेति पक्षे दीक्षणीयायां गुणविकृतीनां पूर्वस्यां पौर्णमास्या पूर्वस्याममावास्यायामिति चतुर्दश्या प्रवृत्तौ पञ्चदशीशब्दस्य लोप. । पथिकृन्मुखे च ॥

[उपलक्षकनिर्णयलिङ्गम्]

**नामधेय–हविरिति**—[3]ता इष्टय इत्याचक्षते परोक्षेणेति लिङ्गात् ॥

**पञ्चदश्याः–यामिति**—न षोडशीं न सप्तदशीमिति त्रिंशिनो मासाः पञ्चदशिनोऽर्धमासाः इति दर्शनात् त्रिंशद्गणनायां षोडश्याद्युपलक्षणमपि [4] प्राप्तमिति प्रतिषिध्यते । अमावास्याया च पञ्चदशीमित्येव प्रकृतौ निवेशात् ; अर्धमासे देवा इज्यन्ते । त्वया होता सतनोत्यर्धमासानिति दर्शनाच्चार्धमासमात्रोपलक्षणस्य कर्तव्यता ॥

---

[1] यथा चैन्द्र–ग [2] मेकदीक्षापक्षे–क [3] चित्रायामिष्टौ गुणमात्रविकृतासु प्रकृतिष्वप्यूद दाक्षायणयज्ञादौ नामधेयोपदेशस्य प्रयोजनाभावात् । अनामधेयासु सामान्यनामधेयेनेष्टं हविरिति–क. घ. [4] क्षणमिति प्रतिषिध्यते–क.

[अन्तराशब्दार्थसंबन्धिनौ]

(भा) अन्तराग्नी—गार्हपत्याहवनीययो. ॥

[अन्वाहितजपाङ्गि]

अन्वाधानाङ्गमन्वाहितजप. ॥

[इमामित्यादिलोपः क्वचित्]

इमामूर्जामिति विकृतिषु लोपमेके ॥

[समुदायशब्दैरपि क्वचिदुपलक्षणम्]

यासां समुदायनाम तासा समुदायेनैवोपलक्षणम् । यथा दैवश्येनिक आपाध्यं हविरिति ॥

[उपदेशमतम्]

उपदेशस्त्विदमहमित्येवमन्तमन्वाधानयाजमान न विकृतौ; तस्य समुदायस्याभावात् ॥

---

[अग्निविशेषयोरवधित्वे मानम्]

(वृ) अन्तराग्नी गार्हपत्याहवनीययोः—नान्तराग्नी सचरति यदि पूर्वोऽनुगतस्संचर्यमिति सूत्रकारनिर्देशात् तयोः प्राधान्याच्च ॥

[अन्वाधानस्याङ्गित्वोपपत्तिः]

अन्वाधा–जपः—अन्वाधानानन्तरमुपदेशादेव प्राप्ते अन्वाहितेषु जपतीति पुनरुपदेशात् । अनः सोमेष्टिषु न भवति । प्रायणीयादिषु अन्वाधानाभावात् उत्तरेण विहारमुपविश्य चातुस्स्वर्येण ॥

[इमामित्यादेर्विकृतौ लोपहेतु.]

इमामूर्जमिति–विकृतिषु लोपमेके इति—पौर्णमास॰ हवि· आमावास्य॰ हवि इति पर्वद्वयसम्बन्धिकर्मनिर्देशात् पार्वणहोमवत्समुदाय-विवक्षया विकृतिषु लोप· ॥

यासां समु–पलक्षणम्—दिवश्शेनापाधादीनाम् ।

[उपदेशपक्षाशय·]

उपदेशस्त्व–स्याभावात्–अन्वाधानमन्त्रगणे एकस्य समुदाय-द्वयाभिधायिनो मन्त्रस्य विकृतिष्वसंभवात् । अन्यस्य श्वःकालसबन्ध-

(सू) अयं पितॄणामाग्निरवाड्ढव्या पितृभ्य आ । तं पूर्वः परिगृह्णाम्यविषं नः पितुं करत् इति दक्षिणाग्निम् । अजस्रं त्वा सभापाला विजयभाग॰ समिन्धताम् । अग्ने दीदाय मे सभ्य विजित्यै शरदश्शतम् इति सभ्यम् । अन्नमावसथीयमभिहराणि शरदश्शतम् । आवसथे श्रियं मन्त्रमहिर्बुध्नियो नियच्छतु इत्यावसथ्य[1]म् ॥१॥११॥६८२॥

(सू) इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमीत्य[2]न्वाहितेषु जपति ॥ २ ॥ १२ ॥ ६८३ ॥

(सू) पयस्वतीरोषधय इति पुरा बर्हिष । [3]आहर्तोर्जायापती अश्नीतः । पुरा वत्सानाम[4]पाकर्तोरमावास्यायाम् ॥ ३ ॥ १३ ॥ ६८४ ॥

---

(वृ) नियमात् । यो वै देवताः पूर्वं परिगृह्णाति स एनाश्श्वोभूते यजते इति दर्शनात् । वसून् रुद्रानित्यस्यापि श्वो यक्ष्यमाणदेवतापरिग्रहार्थत्वात् अन्तराग्नी इत्यादीनामप्यनेन समानार्थत्वात् सर्वेषां लोपः ॥

---

[1] सर्वत्रान्वाधीयमानमुपतिष्ठते इति शेष· अनुमन्त्रयत इति वा (रु). [2] अत्र अन्वाधीयमान इति प्रक्रम्य पञ्चानामग्नीना याजमानान्युक्त्वा तेष्वन्वाहितेष्वित्युपसंहारात् न सभ्यावसथ्ययोराध्वर्यवेऽनुक्तमप्यस्ति तूष्णीकमन्वाधानम् इत्यवगन्तव्यम् । मन्त्रवर्णश्च भवति विजयभाग॰समिन्धताम् (रु) [3] आहर्तो —आहरणात् । तथा [4] अपाकर्तोरिति काललक्षणा चेयम् , तेन यदा पौर्णमास्या अन्वाधानपरि

[दर्शादौ दम्पत्योर्भोजनकालः तत्र पक्षभेदाश्च]

(भा) पुरा—पूर्वम् । परिस्तरणानामाहरणादशनम् पौर्णमास्यामपि । अपि वा पूर्वेद्युरिध्माबर्हिरित्येतेन विधानेन । कृत्वा शाखाच्छेदनमशनं ततो वत्सापाकरण बह्वर्थत्वाच्छाखाया. । उपदेशोऽशनं शाखाच्छेदनं वत्सापाकरणमिति छेदनस्य पृथग्ग्रहणात् ॥

---

(वृ) पुरा–दशनम्—दर्शितम् ।

[दम्पत्योर्भोजने पौर्णमास्या विशेषः]

पौर्णमास्यामपीति—पौर्णमास्यां त्वन्वाधानपरिस्तरणोपवासाः इति नियमात् पूर्वेद्युर्बर्हिषोऽभावात् पुराबर्हिष आहर्तोरिति बर्हिश्शब्द कालोपलक्षणात्वात्परिस्तरणपर. । अशनस्य नित्यकर्तव्यत्वात् नास्मिन् पक्षे निषेधः ॥

[अपि वेत्यादिभाष्योक्तार्थपूरणम् ]

अपिवा–विधानेन—सह पुरा बर्हिष आहर्तोरिति निर्देश· प्रवर्तते । पक्षान्तरेऽशनमग्न्यन्वाधानमित्यादय. कल्पा. ॥

[दर्शपौर्णमास्योर्भोजनकालविशेषे हेतूपपादनम् ]

कृत्वावत्सा–खायाः इति—केवलवत्सापाकरणाङ्गत्वाभावात् न प्राक्छेदनादशनम् । पौर्णमास्यां तूत्तरेण गार्हपत्यमित्यस्मात्पूर्वमेव बर्हिराहरणस्यैवाङ्गत्वात ॥

[उपदेशपक्षेऽशनप्राथम्ये हेतूपपादनम् ]

उपदेशोऽशनं–ग्ग्रहणादिति—अग्न्यन्वाधान वत्सापाकरणमिति पदार्थगणनायां छेदनस्य पृथग्ग्रहणाभावात् वत्सापाकरणाङ्ग

---

स्तरणोपवासा एव क्रियन्ते यदा च अमावास्याया न सन्नयते तयो. कालयोरश्नीत. । प्राक्परिस्तरणाना च बर्हिषो वाऽऽहरणात् प्रथमप्राप्ते चोभयोर्मन्त्र । अय चास्मिन्नहनि अर्थप्राप्तस्याशनस्य नियम । तेन सद्यस्कालासु असत्या क्षुधि नेष्यते (रु).

[मन्त्रोच्चारणकालः]

(भा) प्रथ[1]मग्रासे मन्त्रः ॥

[प्रथमग्रासमन्त्रमात्रनिवृत्तिपक्षः]

अथवा प्रथममन्त्रस्य निवृत्तिः ॥

---

(वृ) छेदनम् । उत्तरकार्याणां तदर्थं छिन्नशाखोपजीविता । दर्भादेरपाकरणेऽपि अपाकरणात्प्रागेव शाखाच्छेदनम् । शाखयैव गोप्रस्थानं न दर्भैरिति । अतः छेदनात्पुरस्तादशनम् ॥

[मन्त्रस्य प्रथमग्रासाङ्गत्वे हेतुः]

**प्रथमग्रासे मन्त्र इति**—अस्यार्थः ;—पयस्वतीरोषधय इत्यश्नीत' इति वचनात् करणमन्त्रत्वात् तस्यान्तेन कर्मादेः सान्निपात्यत्वात् प्रथमग्रासस्तस्यादिरिति तत्र मन्त्रः ॥

[गतार्थत्वादवक्तव्यत्वशङ्कापरिहारः]

ननु परिभाषयैव सिद्धत्वान्न वक्तव्यम् ; सत्यम् , द्वात्रिंशत गृहस्थस्येति ग्रासबहुत्वे सति आगन्तूनामन्ते निवेश इति न्यायेन मन्त्रवतां पञ्चग्रासानां अन्ते षष्ठग्रासऽस्य मन्त्रस्य निवेशप्राप्तौ तन्निवृत्त्यर्थमिदं भाष्यम् । तर्हि तन्निवृत्तौ को हेतुः ? उच्यते—एष भोजनस्य ग्राससमुदायनिर्वर्त्यस्य मन्त्रः, भोजनावयवस्य [2]करणमन्त्राः प्राणादयः इत्यसमान[3]विषयत्वात् । अत एव प्रथममन्त्रेण समुच्चयः ॥

[प्रथममन्त्रनिवृत्तिपक्षोपपत्तिः]

**अथवा—प्रथममन्त्रस्य निवृत्तिः**—स्थानापन्नत्वादस्योभयोरन्तेन सन्निपातायोगेन अन्यतरस्य [4]कर्मण्यसम्बन्धाच्च ॥

---

[1] अयग्रन्थ ग –पुस्तके न दृश्यते [2] करणा प्राणादय –घ. [3] मानविशेषत्वात्–ट. [4] कर्मणेऽस–ख. ग कर्मणाऽसं–घ.

[द्वितीयाद्येवप्राकृतमन्त्रपक्षः]

(भा) अथवा द्वितीयादिषु प्राकृता मन्त्रा॰ ॥

[प्राकृतसर्वमन्त्रबाधपक्षः]

[1] अथवा सर्वेषां प्रत्याम्नायोऽयं मन्त्र॰ ॥

[बर्हिराहरणात्पूर्वमशने व्यवस्था]

अमावास्यायामसन्नयतः पुरा बर्हिराहरणात् ॥

(सू) **पौर्णमासायो[2]पवत्स्यन्तौ नातिसुहितौ भवतः॥**
॥ ४ ॥ १४ ॥ ६८५ ॥

[अशननियमो रागप्राप्तस्य]

(भा) अतिसौहित्य—अतितृप्ति॰ । अशनं क्षुत्प्रतिघातार्थम् ;

[नावृत्तिरशनस्य]

तस्यास्मिन् काले नियमस्सत्यामिच्छायां क्षुधि च । अतो

---

[द्वितीयादिषु प्राकृतमन्त्रपक्षाशयः]

(वृ) **अथवा द्वितीयादिषु प्राकृता मन्त्राः**—यथा प्रकृतावाग्नेयधर्मा॰ प्रथमप्रयुक्ता अपि हविरन्तरेण तत्स्थानेऽपहृते द्वितीयादिस्थानापन्नेष्वाग्नेयादिषु क्रियन्ते स्थानमात्रापायेऽप्यङ्गालोपाय ॥

[सर्वमन्त्रप्रत्याम्नायताहेतुः]

**अथवा सर्वेषां प्रत्याम्नायोऽयं मन्त्रः**—मन्त्रकार्ये विधानात् ।

[व्यवस्थाहेतुः]

**अमावा—हरणात्**—अशनं पुरा बर्हिष इत्यविशेष[3]वचनात् ।

[अशनस्य रागप्राप्तत्वम्]

**अशनं—क्षुधि च**—न सौमिकव्रतवन्नित्यता ; तस्याग्नि[4]होत्रस्याविच्छे[5]दायेति विधानान्नित्यता । अतः—अशनस्य रागप्राप्तत्वात् ॥

---

[1] अत्र प्रथमप्रासमन्त्रेण सह पयस्वतीरित्यादिमन्त्रपाठ दर्शयति कश्चित्प्रयोगक्रम॰ [2] उपवास प्रागेव व्याख्यात॰ । तं रात्रौ करिष्यन्तौ अहरपि नातितृप्तौ भवत॰ । तृप्तिश्चान्नस्येत्यस्यापवाद (रु) [3] दर्शनात् पा [4] होत्राविच्छे (मु. रा). [5] दायेति नित्यत्वात्—क. घ

(भा) नावर्तेत इष्टिबहुत्वे ॥

(सू) [1] **अमाषमांसमाज्येनाश्नीयातां तदभावे दध्ना पयसा वा ॥ ५ ॥ १५ ॥ ६८६ ॥**

[आज्येनाशनविधिमाषमांसनिषेधतात्पर्यं पक्षान्तरं च]

(भा) आज्येनेति व्यञ्जननिवृत्ति. मधुवत् । माषमांसस्य प्रतिषेधोऽभ्यवहार्यस्य व्यञ्जनार्थस्य प्रतिषिद्धत्वात् । केचित् [2]स्नेहानां तैलादीनां निवृत्तिस्तुल्यत्वात् ॥

---

[आवृत्तिनिषेधः]

(वृ) **नावर्तेत इष्टिबहुत्वे**--एतत्कालोत्तर क्षुधि इच्छायां च नाशनम्॥

[व्यञ्जननिवृत्तितात्पर्योपपत्तिः]

**आज्येन व्यञ्जननिवृत्तिर्मधुवत्**—'अमध्वश्नाति मध्वशनस्स्यादित्येकम् व्यञ्जनार्थमित्यपरम्' इति दर्शनात् आज्यमश्नातीत्यवचनात् नाज्यमात्रस्याशनम् । किं त्वितिकर्तव्यताभूतत्वेन निर्देशात्तुल्यकार्यव्यञ्जननिवृत्तिः ॥

[व्यञ्जनार्थस्य प्रतिषेधलाभः]

**माषमांसस्य–षिद्धत्वात्**—आज्येन व्यञ्जननिवृत्तिरुक्तेति ।

[स्वेतरस्नेहसामान्यनिवृत्तिलाभनिर्वाहः]

**केचित्स्ने–स्तुल्यत्वात्**—तुल्यकार्यत्वादाज्येन । तस्मिन् पक्षेऽन्येषां व्यञ्जनानां प्रवृत्तिः । माषमांसप्रतिषेधो व्यञ्जनार्थस्याशनार्थस्य च । 'अमेध्या वै माषा' इति दर्शनात् अमेध्यस्य व्यञ्जनार्थेऽप्यभोज्यत्वात् । व्रत्येऽहनि मांस नाश्नातीति मांसस्य यथाकथञ्चित्प्राशनमात्रे प्रायश्चित्तविधानात् ॥

---

[1] माषमासयो. व्यञ्जनार्थयो प्रतिषेध· । आज्यादीनि तु उपसेके नियम्यन्ते । माषशब्दो मुद्गादेरपि कोशीधान्यस्य प्रदर्शनार्थं आप्राशातिकादिति लिङ्गात् बोधायनोक्तेश्च (रु). [2] स्नेहादीना–घ.

(सू) पयस्वतीरोषधय इत्यप आचामत्युपस्पृशति वा ॥ ९ ॥ १९ ॥ ६९० ॥

(भा) आचामिति—भक्षयति । [1] पश्चाच्छौचार्थमाचमनम् ॥

(सू) अपरेणाहवनीयं दक्षिणाऽतिक्रामति ॥ १० ॥ ॥ २० ॥ ६९१ ॥

(सू) एष एवात ऊर्ध्वं यजमानस्य [2] संचरो भवति ॥ ११ ॥ २१ ॥ ६९२ ॥

द्वितीया खण्डिका ॥

---

(सू) दक्षिणेनाहवनीयमवस्थाय व्रत[3]मुपैष्यन् समुद्रं मनसा [4] ध्यायति ॥ १ ॥ २२ ॥ ६९३ ॥

[ध्यानाकारः]

(भा) व्रत समुद्रस्तदुपैष्यामीति ध्यानम् ॥

---

(वृ) लेपनान्तेऽशनम् । पौर्णमास्यां परिस्तरणाहरणान्ते । [5] तदेवमग्न्यन्वाधानमशन व्रतोपायनमिति पदार्थवि[6]धिप्राप्तः क्रमः । अशनमग्न्यन्वाधानमित्युत्तरे त्रयः पक्षाः क्रम[7]विधिप्राप्ताः एतेषां पदार्थानां पूर्वोक्तक्रमेण विकल्प्यन्ते । [8] ते तत्तन्मध्यवर्तिनां तदन्तानां उत्कर्षम(वकर्ष)पकर्षमेतेषां त्रयाणामेव नैरन्तर्येणानुष्ठानं वा विदधति । उत्तरयोः पक्षयोः व्रतोपायनस्य प्रणीताप्रणयनादिकालविधिर्न प्राप्नोति वचनानर्थक्यात् ॥

[ सूत्रार्थः सूत्रे मनश्शब्दफलं च ]

व्रतं—ध्यानम्—व्रतमुपैष्यन् मनसा ध्यायतीत्यस्य सूत्रस्य समुद्रमेव व्रतमुपैष्यन् मनसा तदेव ध्यायतीत्यर्थ इति । ध्यायतीत्येव

---

[1] अयं ग.–पुस्तके न दृश्यते. [2] शास्त्रीययोर्निर्गमनप्रवेशनयोरेष एव पन्था (रु) [3] व्रतमुपैयामीति कल्पान्तरकारमतनिरासार्थं व्रतमुपैष्यान्नीति (रु) [4] ध्यायन्–ख [5] I तथैवम–ख ग. II न तत्रोमशामिति–क. [6] विधिक्रमप्राप्त क्रम –क [7] पक्षा विधिप्राप्ता–क. [8] सतन्मध्य–ख ग

(सू) [1] बर्हिषा पूर्णमासे व्रतमुपैति । वत्सेष्वपाकृतेष्वमावास्यायाम् ॥ ६ ॥ १६ ॥ ६८७ ॥

[बर्हिषाशब्दार्थः]

(भा) बर्हिषा—बर्हिष्याह्रियमाणे ॥

(सू) प्रणीतासु प्रणीयमानास्वासन्नेषु वा हविष्षु व्रतमुपैतीत्युभयत्र [2] साधारणम् ॥ ७ ॥ १७ ॥ ६८८ ॥

(सू) [3] अशनमग्न्यन्वाधानं व्रतोपायनमित्येके । व्रतोपायनमशनमग्न्यन्वाधानमित्येके । अग्न्यन्वाधानं व्रतोपायनमशनमित्येके ॥ ८ ॥ १८ ॥ ६८९ ॥

[अशनादिपौर्वापर्ये पक्षभेदसाधारणांशः]

(भा) यदाऽपि पूर्वमशनव्रतोपायने तदाऽप्यग्निं प्रणीयैव ॥

---

[ लाक्षणिकात्सहार्थतृतीयाविवरणफलम् ]

(वृ) **बर्हिषा—बर्हिष्याह्रियमाणे**— व्रतमुपैतीत्युभयत्र साधारणमिति प्रणीताप्रणयनहविरासादनोत्तरकालता पौर्णमास्यामपि नानन्तरोक्तामावास्यायामेव ॥

[ अशनादिपौर्वापर्यपक्षभेदेषु भाष्योक्तांशव्यवस्थादि]

**यदापि—प्रणीयैव**---अशनमग्न्यन्वाधान व्रतोपायन व्रतोपायनमशनमग्न्यन्वाधानमित्यनयो· पक्षयोरग्निं प्रणीयैवाशनव्रतोपायने । ततोऽन्वाधान अन्वाधानेन [4] क्रमविधानात् । प्रणयनस्य च [5] तदङ्गत्वाभावात् प्रागेव प्रणयनम् । प्रथमतृतीयपक्षयोः बर्हिषा पूर्णमासे इत्यादि काले व्रतोपायनं मध्यमे व्रतोपायनमात्रप्रतिकर्ष । तृतीयपक्षे कुम्भ्या-

---

[1] अत्रापि बर्हिर्वत्सशब्दाभ्या पूर्ववत्काललक्षणा । बर्हिषा ह्रियमाणेन सह (रु).
[2] उभयो· पौर्णमास्यमावास्ययो साधारणमिद कालद्वयमित्यर्थ (रु). [3] त्रय एते क्रमविकल्पा· । त्रयाणामेषा कर्माणि यथोक्तेन मुख्येन सह चत्वार· । तत्र यदाप्यशनं पूर्वं तदाऽपि प्रणयनात्परमेवेति वेदितव्यम् (रु) [4] क्रमनियमात्—ख. ग.
[5] तदर्थत्वा—क

(सू) अथ जपत्यग्ने व्रतपते व्रतं चरिष्यामीति ब्राह्मणः। वायो व्रतपत आदित्यव्रतपते व्रतानां व्रतपते व्रतं चरिष्यामीति रा[1]जन्यवैश्यौ ॥ २३ ॥ ६९४ ॥

(सू) सर्वान् वा ब्राह्मणः ॥ ३ ॥ २४ ॥ ६९५ ॥

[सूत्रोक्तजपे विशेषः]

(भा) अग्नयादीन् देवानभिसन्धायाग्ने व्रतपत इति जपः ।

[सौत्राथशब्दफलम्]

अथ शब्दोऽर्थकृत्यप्रतिषेधार्थः ॥

---

(वृ) सिद्धे मनो ग्रहणात् हुत्वा ध्यायेत्कामस्स्यादित्येवमादौ साभिलापः । अत्र तु मनसैव ॥

[भाष्यदर्शितध्याने व्यवस्थाफलतो जपव्यवस्था च]

**अग्नयादीन्–जपः**—प्रथममन्त्रे आहवनीयाग्नेर्ध्यानम् । वरुणप्रघासेषु भाष्यकारेण उभावग्नी अभिसन्धायेति निर्देशात् । अतोऽन्वाहिताग्नयनुग(मने)मो व्रतोपायने [2]कृते चेत् प्रथमस्य मन्त्रस्य जप. । व्रतोपायने कृतेऽन्वाहितेऽनुगते च कृते तन्नैमित्तिकेऽस्य मन्त्रस्य जपः । अकृते न जपः ॥

यस्मिन् याग तस्यैवाहवनीय(यार्थ)त्वात् द्वितीये वायोस्तृतीये आदित्यस्य चतुर्थेऽग्नेरेव। त्वमग्ने व्रतपा असीति लिङ्गात् ॥

[भाष्यार्थविवरणम् सूत्रार्थविशेषश्च]

**अथशब्दोऽर्थकृत्यप्रतिषेधार्थः**—अर्थकृत्यस्याचोदितस्याचमनादेः समुद्रध्यानानन्तरं प्रतिषेधार्थं । वायो व्रतपत इत्यादित्रयं राजन्यवैश्ययोरेकैकस्यासमानसख्यत्वाल्लिङ्ग[3]विशेषाभावाच्च ॥

---

[1] राजन्यवैश्ययो. एकैकस्य त्रयोऽपि मन्त्रा (रु) [2] कृते च तन्नैमित्तिकस्य–पा. [3] विशेषाच्च–क

(सू) [1] अथादित्यमुपतिष्ठते। सम्राडसि व्रतपा असि व्रतपातिरसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं तेन राध्यासमिति ॥ ४ ॥ २५ ॥ ६९६ ॥

[आदित्योपस्थानान्तकर्मणोऽङ्गत्वं क्वचित्तदभावश्च]

(भा) पयस्वत्याद्यादित्योपस्थानान्त व्रतोपायनाङ्गम् । तस्य सोमेष्टिषु निवृत्ति. ॥

[व्रतस्वरूपम् ]

सत्यवा[2]द्यत इति वाजसनेयिनाम् ; मयि दक्षक्रतू इति वचन च ॥

---

[व्रतोपायनाङ्गत्वोपपत्त्यादि।

(वृ) पयस्वत्याद्या—ङ्गम्—बर्हिषा पूर्णमासे व्रतमुपैतीति प्रकृत्याम्नाय[3] आदित्योपस्थाने [4] व्रतलिङ्गात् ॥

तस्य–निवृत्तिः—प्रायणीयादिषु ॥

[भाष्योक्तिपूरणम् तदुपपत्तिश्च भाष्यकारपक्षश्च]

सत्यवा—नेयिनाम्—व्रतस्वरूपनिर्णयः । अत उर्ध्वं सत्यवादी भवामीति सकल्पपूर्वकं सत्यवादिता व्रतशब्दस्यार्थः । [5] सा च [6] क्रत्वङ्गत्वेनोपेयते । आहिताग्निव्रत एवासत्य[7]वदनप्रतिषेधात् ॥

मयि दक्ष—चनश्च—व्रतोपायनप्रकार इति वाजस[8]नेयिनः । 'प्राणापानावेवात्मन् धत्ते' इति आत्मनि प्राणापानधारणसकल्पश्च व्रतम् । स्वपक्षस्तु व्रत्ये ह्यहानि मांसं वाऽश्नाति स्त्रियं वोपैतीति दर्शनात् तयोर्निवृत्तिसकल्पो व्रतम् । असत्यवदनप्रायश्चित्त तु इहान्तरेणापि वचन भवति । असत्यप्रतिषेधे स्मृतिसिद्धेऽपि पुनराहिताग्निप्रकरणे निषेधात् ॥

---

[1] आदित्यमु—ख अत्र उपनिष्क्रम्योपस्थान अत्रैव तिष्ठत इति पक्षद्वयं दर्शितम् (रु) [2] वाग्यत—ख ग [3] म्नानादादित्यो [4] ने च—घ. [5] स च—क. [6] क्रत्वङ्गेनोपे—ख. ग. [7] वादनप्रति—क. [8] नेयिमतम्—क

(भा) पूर्वमपि मैथुनप्रतिषेधो व्रतचारीत्येव स्यात् ॥

(सू) [1] यद्यस्तमिते व्रतमुपेयादाहवनीयमुपतिष्ठन्ने तद्यजुर्जपेत् ॥ ५ ॥ २६ ॥ ६९७ ॥

[व्रतोपायनस्वरूपादि]

(भा) आहवनीयमुपतिष्ठन्नादित्यमभिसन्धाय जपेत् । तद्व्रतोपायनम् । तत्रानु[2]प्रवेशात् ॥

(सू) [3] उभावग्नी उपस्तृणते देवता उपवसन्तु मे । अहं ग्राम्यानुपवसामि मह्यं गोपतये पशून् इति सायं परिस्तीर्यमाणेषु जपति ॥ ६ ॥ २७ ॥ ६९८ ॥

[परिस्तरणे पक्षान्तरम्]

(भा) गार्हपत्याहवनीययोरेव वा [4]परिस्तरणे । उपस्तीर्यः पूर्वश्चाग्निरपरश्चेति ॥

---

(वृ) पूर्वमपि—स्यात्—एवकारकरणात् आरम्भप्रभृति मैथुनप्रतिषेधः । मयि दक्षक्रतू इति वचन मैथुननिवृत्तिश्च व्रतप्रकार इति अपकृष्य व्याख्या[5]तम् ॥

[एवं विधाभिसन्धिजपसहकृतोपस्थाने मानम्]

आहवनीय–पायनम्—व्रतपा असि तच्छकेयमिति लिङ्गात् ।

तत्रानुप्रवेशात्—आदित्यस्य । अग्निं वावादित्यस्सायं प्रविशतीति लिङ्गात् । एतत्सर्वेषाम् ॥

[जपस्य सन्नियोगशिष्टता]

गार्हपत्या–नानिवृत्तिः—उभावग्नी इति । न त्वपरिस्तरणपक्षे ग्राम्यानुपवसामीति लिङ्गविरोधात् ॥

---

1 गृहमेधीयाद्यर्थं वचनम् (रु) 2 प्रवेशनात्—ग 3 उभाविति लिङ्गात् ब्राह्मणोक्ताग्निद्वयपरिस्तरणविषय एवाय मन्त्र इति केचित्, तदयुक्तम्, परिस्तीर्यमाणेष्वतिबहुवचनात्प्राधान्यान्वयादुभयाभिधानोपपत्तेश्च, यथा बहुष्वागतेषु वसिष्ठवामदेवावागताविति (रु). 4 परिस्तरणम्—घ 5 ख्यानम्—घ.

[परिस्तरणपक्षेषु सर्वेषु याजमानमस्त्येव]

(भा) बहुष्वपि परिस्तीर्यमाणेषु [1]याजमानानिवृत्तिः । तयोरेवाग्नयो-स्संस्कारात् ॥

(सू) [2]**आरण्यं सायमाशेऽश्नात्यमाषमांसम्** ॥ ७ ॥
॥ २८ ॥ ६९९ ॥

[इह माषमांसनिषेधविषय.]

(भा) आरण्यस्य [3]माषमांसस्य प्रतिषेधः ॥

(सू) **अपि वा काममामार्गादामधुन आ[4]प्राशातिकात्** ॥ ८ ॥ २९ ॥ ७०० ॥

---

[याजमानानिवृत्तिहेतुविवरणम्]

(वृ) **तयोरेवाग्नयोस्संस्कारादिति**—बहूनां परिस्तरणेऽपि मन्त्र-स्योभयप्रकाशकतया तत्संस्कारार्थं प्रयोगसभवात् । अथवा यस्य वोभाव-नुगतावित्यादौ द्वयोरेवाधानप्रयोजकत्वात्प्रधानत्वम् । सभ्यावसथ्य संस्कारवत् दक्षिणाग्निसस्कारस्यापि तयोरुपकारकत्वात् प्रधानप्रकाशन-सभवादनिवृत्ति॰ । साय परिस्तीर्यमाणेषु जपतीति वचनात् असाय परि-स्तरणे न भवति ॥

[विशेषविषयतानिदानम्]

**आरण्यस्य माषमांसस्य प्रतिषेधः**—आरण्या[5]शनविधि-शेषत्वादिह पर्युदासस्य ॥

---

[1] याजमानाग्निवृत्ति —ग याजमाननिवृत्ति (मु पु). [2] नैवारादि । तत् सायमाशस्थानेऽश्नाति । माषमासयो पूर्ववत् व्यञ्जनार्थयो प्रतिषेध । अन्यथाग्राम्य-त्वादेव माषस्याप्राप्ते , माषशब्दोऽत्रापि पूर्ववद्व्याख्येय । अश्नातीत्येकवचनात् आरण्याशन पत्न्या नेष्यते भारद्वाजेन तु इष्टा एवामसस्कारास्तस्या (रु). [3] मास-माषस्य [4] प्राशातिक कोशीधान्यम् , यस्मात्प्रशातनेनोद्ध्रियते । तदयमर्थ ,—यदेव किञ्चिदीप्सित व्यञ्जनं तदेव काममश्नीयात् न मार्गमिष्यमाणं भोक्तव्यमिति । मधु-नस्तु अप्रतिषिद्धस्यापि अव्रत्यत्वसामान्यादेव प्रायो निवृत्तिस्स्यादिति प्रतिप्रसव . (रु). [5] शनधान्यविशेषत्वा—क.

[आङर्थानुरोधेन ऐच्छिकविशेषलाभः]

(भा) काममिच्छात आमार्गात्परतो मार्गात् यानि वानप्रस्थानां मांसान्या[1]म्नातानि, तानि न भक्षयति। ये च परतो रसा आमधुनः यानि चान्नानि [2] प्राशातिकादन्यानि पराणि। यत्त्ववार्क्तस्येच्छात· प्राशनम्॥

(सू) **अपो वा न वा किञ्चित्॥ ९॥ ३०॥ ७०१॥**

---

[अभ्यनुज्ञातभक्षणविवरणम्]

(वृ) **कामम्–इच्छातः–म्नातानि–भक्षयति**—आम्नातानि – उपदिष्टानि। आमार्गादिति अभिविधिनिर्देशात् क्रमवतां पठितानामुपादाने वानप्रस्थाना भक्ष्यमांसकाण्डोपदिष्टात् मृगमासात् परस्तनानां[3] भक्षणम्॥

**ये च परतो–पराणि**—तेषामप्यभक्षणम्। प्राशातिकम्—प्रशातनलभ्यं फलादि॥

[आमार्गादित्युक्तिहेतुः यथाकामभक्ष्यात्यन्ताभक्ष्यविशेषलाभः]

**यत्त्ववा–तःप्राशनम्**—अस्यार्थः—आरण्य सायमाशेऽश्नात्यमाषममांसमिति पर्युदस्तेषु प्रतिप्रसवार्थं अपि वा काममामार्गादित्युपादानम्। वानप्रस्थानां भक्ष्यकाण्डेषु मृगमांसपर्यन्तानां रसेषु च मधुपर्यन्तानां अन्नेषु च प्राशातिकपर्यन्ताना भक्षणे याथाकामित्वम्। एभ्योऽवधिभ्यः परेषामभक्षणमेव [4] काममामार्गादित्यादि[5]भाष्यग्रन्थेभ्योऽर्थप्राप्तं प्रतिपाद्यते॥

---

[1] म्नातानि भवन्ति–ज [2] प्राशातिक कोशीधान्यम्। अथवा वृक्षात्पतित पत्रफलानि वा। इति भाष्यग्रन्थः ज.–पुस्तकेऽधिको दृश्यते [3] नामभक्षणम्–क ख, ग. [4] मेवमामार्गा–घ I मेवआमार्गा–क II. [5] दिभाष्यग्रन्थे अवधिभ्य पूर्वेषा कामतो भक्षणविधानात्। उपरितनाना निवृत्तिरर्थप्राप्त–क.

[क्वचिदद्भिस्सहानशनविकल्पः]

(भा) अपोऽश्नीयान्न वा किञ्चिदश्नीयात् ॥

[क्वचिदत्यन्तमेवानशनम्]

ससृष्टहविष्यपो[1]ऽपि नाश्नाति ॥

(सू) न तस्य सायमश्नीया[2]द्येन प्रातर्यक्ष्यमाण-स्स्यात् ॥ १० ॥ ३१ ॥ ७०२ ॥

(सू) [3]आरण्यायोपवत्स्यन्नपोऽश्नाति न वा ॥११॥ ॥ ३२ ॥ ७०३ ॥

---

[अत्यन्तानशननिषेधश्रुतिः]

(वृ) अपो–यात्—यदनाश्वानुपवसति वज्रेणैव साक्षादित्यनुवाद-सरूपविधानात् ॥

[अपामपि प्रातर्यक्ष्यमाणद्रव्यत्वादनशनम्]

**संसृष्ट–श्नाति**—न तस्य सायमश्नीयादिति निषेधात् । दधि मधु घृतमापो धाना भवन्तीति ससृष्टहविषि प्रातर्यक्ष्यमाणद्रव्याशननिषेधात् ॥

आरण्येन नीवारादिना यागे ग्राम्याशनप्रवृत्तौ वचनम् ;—

**आरण्यायोपवत्स्यन्नपोऽश्नाति न वा इति**—आरण्यायोपवत्स्यन् नान्यदारण्यमप्यश्नाति न ग्राम्यम् । किं तु अप एवाश्नाति न वा इति सूत्रार्थ । अतो ग्राम्येण [4]केनापि यागे अन्येषामपि ग्राम्याणामनशनम् ॥

---

[1] पो नाश्नाति (सु पु) [2] यज्जातीयेन हविषा । ततश्च आज्येन अनुपसेच्य पौर्णमास्या सायमाशो भवति । दधिपयोभ्या च दर्शे । तथा अनुपसभ्येष्वपीष्टिपशुषु श्वोभाविषु तत्साधनद्रव्याशननिवृत्ति । येन प्रातर्यक्ष्यमाण इति सामान्यतो निर्देशात्पुन सायग्रहणाच्च (रु) [3] आरण्येनैव हविषा श्वो यष्टाय. तस्य नास्त्यारण्याशनम् । तदा तु इमावेव कल्पौ व्यवतिष्ठेते इत्यर्थ । वानप्रस्थार्थमिद वचनम् , इतरथा व्रीहियवविधानात् । तस्यारण्यनियमाच्च । विकृत्यर्थं वा वचनम् , यत्रारण्य हविः गार्मुत चरु निर्वपेदित्यादौ तदा तु इदमेव वचन ज्ञापकं भविष्यति सोपवसथा अपि विकृतयो लभ्यन्त इति बोधायनश्चाह (रु). [4] केन चिद्यागे–घ.

[विकृतेरपि द्व्यहकालत्वमस्ति]

(भा) आरण्यायोपवत्स्यन्निति वचनात् विकृतेरपि द्व्यहकालत्वमस्ति ॥

(सू) [1]जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति ॥ १२ ॥ ३३ ॥ ७०४ ॥

(भा) जञ्जभ्यमानो—जृम्भमाण. ॥

(सू) अमावास्यां रात्रिं जागर्ति ॥ १३ ॥ ३४ ॥ ॥ ७०५ ॥

(सू) अपि वा [2]सुप्यादुपरित्वेव न शयीत ॥ १४ ॥ ॥ ३५ ॥ ७०६ ॥

(सू) अपिवोपरि शयीत [3]ब्रह्म(व्रत)चारी त्वेव स्यात् ॥ १५ ॥ ३६ ॥ ७०७ ॥

[प्रकृतव्रतशब्दार्थः]

(भा) व्रतोपायनादनन्तर मैथुनप्रतिषेध । व्रतचारी त्वेव स्यादिति व्रतशब्दो मैथुन[4]प्रतिषेधार्थ. ॥

---

[भाष्यदर्शिताभिप्रायोपपत्तिः उपदेशपक्षश्च]

(वृ) आरण्या—मास्ति—आरण्यद्रव्यस्य विकृत्यर्थतयोपवासदर्शनात् । अतश्च यदीष्ट्यादिवाक्यविहितसद्यस्कालत्वेन द्व्यहकालत्वं [5]विकल्प्यते । उपदेशस्तु व्रीहियवालाभे सामान्यान्नीवारे प्रतिनिहितस्य मुख्यद्रव्यधर्मत्वेन ग्राम्योपवासस्यैव प्राप्तावुभयार्थत्वमिति न सद्यस्कालायामारण्याशनम्; सायमाशेऽश्नातीति वचनात् ॥

[ब्रह्मचर्यविधिसिद्धस्य पुनर्वचनतात्पर्यम्]

व्रतोपा—षेधार्थः—अथवा ब्रह्मचर्यविधानात् सङ्कल्पप्रभृति मैथुनप्रतिषेधे पुनर्वचन व्रतोपायनादूर्ध्वं प्रायश्चित्तगौरवार्थम् ॥

---

[1] कर्ममध्ये यदा जृम्भते तदा प्रायश्चित्तार्थमेतद्यजुर्जपेत् (रु) [2] जागरणा शक्तौ सुप्यात् । उपरिशयनमेव तु वर्जयेत् (रु) [3] सर्वथाऽपि तावत् ब्रह्मचर्यं पालयेदित्यर्थ· (रु). [4] प्रतिषेधपर·—क. घ. [5] विकल्पते—घ·

(सू) [1]उभयत्र जागरणमेके समामनन्ति ॥ १६ ॥
॥ ३७ ॥ ७०८ ॥

(सू) आहवनीयागारे गार्हपत्यागारे [2]वा शेते
॥ १७ ॥ ३८ ॥ ७०९ ॥

तृतीया खण्डिका ॥

---

(सू) देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु त्रिरेकादशा इह माऽवत । इदꣳ शकेयं यदिदं करोम्यात्मा करोत्वात्मने । इदं करिष्ये भेषजं इदं मे विश्वभेषजा अश्विना प्रावतं युवमिति [3]जपित्वा श्वोभूते ब्रह्माणं वृणीते ॥ १ ॥
॥ ३९ ॥ ७१० ॥

[ अस्मिन् जपे पक्षान्तरम् ]

(भा) देवा देवेष्विति रात्रौ परिस्तरणादनन्तरमन्येषामुक्तम् ॥

---

(वृ) उभयत्र—मनन्ति—उभयत्र जागरणमिति पौर्णमास्याममावास्यायां च ॥

[अन्ये चात्र शाखिनः]

देवादेवे क्तमिति—अन्येषा शाखिनां परिस्तरणानन्तरमुक्तत्वात् ॥

---

[1] अमावास्याया पौर्णमास्या च (रु) [2] अन्यदाहवनीयागारं अन्यद्गार्हत्यस्यपेति वक्ष्यति । तयोरन्यतरत्रैव शेते [3] I इदं पूर्वसूत्रस्थेन शेते इत्यनेनान्वितमिति पक्षान्तरमुक्तम् (रु) II न चाथ जप. ब्रह्मवरणशेष. कर्मशक्तिप्रार्थनार्थत्वात्. III उक्तं ब्रह्मत्वविधावेव ब्रह्मवरणम्; तस्यानेन काल उच्यते (रु)

[सद्यस्कालायामस्यालोपो हेतुश्च]

(भा) न चास्य सद्यस्कालायां लोपो लिङ्गविरोधात् ॥

[कर्मणि परमात्मप्रीत्यर्थत्वानुसन्धानम्]

आत्मा करोत्वात्मन इति विज्ञानं मन्त्रलिङ्गेन ॥

**(सू) भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे इत्युक्त्वाऽपरेणाहवनीयं दक्षिणाऽ[1]-तिक्रम्योपविशति ॥ २ ॥ ४० ॥ ७११ ॥**

**(सू) [2]पूर्वो ब्रह्मा परो यजमानः ॥३॥ ४१ ॥ ७१२ ॥**

---

[सद्यस्कालायामलोपनिर्वाहः]

(वृ) **न चास्य–विरोधात्**—[3]उभावग्नी इति जप· साय परिस्तरणा-[4]ङ्गम् । स्तीर्यमाणेष्वग्निषु आत्मा करोत्वात्मन इति परिस्तरणानन्तरं[5] देवानां यजमानसमीपे वासो दृश्यते । उपास्मिन् श्वो यक्ष्यमाणे देवता वसन्तीति । देवा देवेष्वित्यत्रापि मन्त्रे त्रिरेकादशा इह मावतेति इहशब्देन समीपे वसतां देवना रक्षकत्वेनाशासनात् रात्रिपरिस्तरण-पक्ष एवास्य मन्त्रस्य जप इति शङ्कायां[6] सद्यस्कालायामपि कर्तव्यत्वे [7]लिङ्गमिदम् । इद॑शकेय यदिद करोम्यात्मा करोत्वात्मने इति चिकीर्षितकर्मशक्त्याशासनात् सद्यस्कालायामपि कर्मणः कर्तव्य-त्वादलोपः ॥

[कर्तुः परमात्मप्रीत्यर्थकर्मकरणप्रवर्तकमानम्]

[8]**आत्मा करो–मन्त्रलिङ्गेनेति**—आत्मने ब्रह्मणे आत्मा करोत्विति [9]विज्ञानमपि कर्तव्यम् ;—

---

[1] योऽय ब्रह्मवरणार्थो मन्त्र तमुक्त्वाऽनन्तरमेव तेन सहातिक्रम्य यजमान उपविशति (रु) [2] पूर्वापरत्व देशत कालतश्च (रु) [3] आत्मा करोत्वात्मन इति । उभावग्नी–क. [4] ङ्गम् । परिस्तरणानन्तरम्–क [5] रकाले देवानाम्–घ. [6] या–क घ. [7] लिङ्गम्–घ. [8] विज्ञानमन्त्रलिङ्गेनेति–घ. विज्ञानं मन्त्र लिङ्गेनेति–क. [9] अपि विज्ञानं कर्तव्यम्–घ.

(वृ) यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यासि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

ब्रह्मार्पण ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥

इति स्मृतेश्च । कथमात्मने ब्रह्मणे इत्युच्यते ? उच्यते,—य आत्मनि तिष्ठन्नात्मनोऽन्तरो+यमयति यस्यात्मा शरीर स आत्मेति जीव-शरिरिके अन्तर्यामिणि आत्मशब्दप्रयोगात् तस्य च परमात्मत्वात् परमात्मनो ब्रह्मत्वेन सर्वशास्त्राप्रसिद्धत्वात् ॥

नारायण. परं ब्रह्म आत्मा नारायण. परः ।

इति नारायणपरब्रह्मपरमात्मशब्दानां सामानाधिकरण्यात् 'नारायणं महाज्ञेयम्' इति सर्वदा ज्ञेयत्वात् 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति श्रुतेश्च । कथमन्याभ्यो देवताभ्यः क्रियमाणं कर्म ब्रह्मेति ध्यायेत् ? यो देवानां नामधा एक एव । स ब्रह्मा स शिवः । चतुर्होतारो यत्र संपद गच्छन्ति देवै· । सर्वे वेदा यत्रैक भवन्ति' इत्यादिश्रुतौ सर्ववेदाना नामधारकत्वेन सर्वदेवस्वरूपत्वेन सर्वयज्ञैरिज्य-त्वेन सर्वविधिवाक्यैर्विधेयत्वेन चावगमात् । चतुर्होतृशब्देन सर्व-यज्ञा उच्यन्ते 'स एता"श्चतुर्होतृनात्मस्परणानपश्यत्' इति । वेद-शब्दो मन्त्रब्राह्मणयोः 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति वचनात् ।

अह हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ।

इत्यादिस्मृतेश्च ॥

[ अध्वर्युयजमानाभ्यां ब्रह्मवरणं उपवेशनक्रमश्च ]

(भा) यजमानस्यापि ब्रह्मवरणम् । अपरो यजमान इति पूर्वप्रविष्टोऽपि पश्चादुपविशति ॥

(सू) भूश्च कश्च वाक्चक्वं गौश्च वट् च खं च धूश्च नूश्च पूश्चैकाक्षराः पूर्दशमा विराजो या इदं विश्वं भुवनं व्यानशुस्ता नो देवीस्तरसा संविदाना-स्स्वस्ति यज्ञं नयत प्रजानतीर्ब्रह्म पूतास्स्थ । को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै । याः पुरस्तात्प्रस्रवन्त्युपरिष्टात्सर्वतश्च याः । ताभीरश्मिपवित्राभिश्श्रद्धां यज्ञमारभ इति प्रणीताः प्रणीयमाना अनुमन्त्रयते । यजमान! हविर्निर्वप्स्यामीत्युच्यमान ओं निर्वपेत्युच्चै-रनुजानाति ॥ ४ ॥ ४२ ॥ ७१३ ॥

---

[ब्रह्मवरणस्योभयकर्तृकत्वे हेतुः]

(वृ) यजमान–रणम्—उभयत्र विधानात् ।

[सूत्रे ब्रह्मयजमानोपवेशनविधिहेतुः]

अपरो–विशति—आसनप्रकल्पने देशनियमात् कालश्च वचनमिति वृणीमह इत्युक्त्वाऽपरेणाहवनीय यजमानस्यापि वरणानन्तरमतिक्रमणविधानात् । ब्रह्मणश्च जपोत्तरकालमति[1]क्रमणविधानात् । [2]पूर्वं स्वस्थान[3] प्राप्तो यजमानोऽपरो यजमान इति वचनादुपवेशनं पश्चात् । अपरदेशस्य तु पूर्वं ब्रह्मणोऽपर यजमानस्येति सिद्धत्वात ॥

---

[1] क्रमवि—क. [2] ‘पूर्वं सिद्धत्वात्’ अय ग्रन्थः ख. ग. घ.—पुस्तकेषु न दृश्यते. [3] स्थानप्राप्तोऽपि—क.

(सू) अग्नि॒ᳬ होतारमिह तᳬ हुवे इति हविर्निरुप्यमाण-[1]मभिमन्त्रयते ॥ ५ ॥ ४३ ॥ ७१४ ॥

[ हविरभिमन्त्रणे आवृत्त्यनावृत्तिपक्षौ ]

(भा) अग्निᳬ होतारमिति वर्तमान[2]क्रियाशेषोऽपि सकृत् क्रियान्तरेण व्यवायात् । केचिदावृत्तिरिति ॥

(सू) हवि[3]र्निर्वपणं वा पात्रमभिमृशत्य[4]भिवा मन्त्रयते ॥ ६ ॥ ४४ ॥ ७१५ ॥

[पात्राभिमर्शनाभिमन्त्रणपक्षौ]

(भा) अभिमर्शनमानिर्वपणात् । केचिद्धविर्निर्वपणस्यैवाभिमन्त्रणम् ॥

---

[हविरभिमन्त्रणानावृत्तिपक्षाशयः]

(वृ) अग्निᳬ होतार—वायात्—यद्यपि हविषा पृथ[5]क्पृथङ्निरुप्य-माण[6]त्वमस्तीति निरूप्यमाणावस्थायामभिमन्त्रणम्, तथाऽपि यावदन्त्य-हविरन्वावपन[7] निरुप्यमाणत्वात् क्रियान्त[8]राव्यधानात् सकृदेव हविषोऽवदीयमानस्योच्यमाना मनोता यथातन्त्रमव्यवाये पशूनाम् ॥

[आवृत्तिपक्षाशय.]

केचिदावृत्तिरिति — प्रतिहविर्निरुप्यमाणकालभेदादभ्यावर्तते मनो तावदेव ॥

[भाष्यस्थाऽर्थः प्रकृतो मन्त्रश्च]

अभिमर्शनमानिर्वपणात्—यावन्निर्वाप पात्रमभिमृशेदित्यर्थः । केचिद्धवि–मन्त्रणम्—पात्रस्य अग्निᳬ होतारमितिमन्त्रेण ॥

---

[1] प्रतिहविरभिमन्त्रणावृत्ति श्रुतौ एकवचनात् वर्तमाननिर्देशाच्च (रु). [2] क्रियाविशेषोऽपि—घ [3] निर्वापण—क. [4] त्यपि वा—क निरुप्यते यस्मिन् पात्रे तद्धविर्निर्वपणम् तस्यादौ अभिमर्शनमभिमन्त्रण वा पात्रसंस्कारत्वात (रु) [5] पृथङ्नि—क [6] माणमस्ति—घ (मु रा) माणावस्थायामभिमन्त्रणं तथाऽपि—क. [7] पन तावन्निरू—क. [8] राव्यवायात्—क

(सू) तदुदित्वा वाचं यच्छति ॥ ७ ॥ ४५ ॥ ७१६ ॥

[वाग्यमनेपक्षौ निर्देशोपपत्तिश्च]

(भा) [1]यजमान वाचं यच्छेत्युक्त. तत्रैव वाग्यमन करोति । अग्निं होतारमिति वोक्त्वा[2] वाग्यमनम् । [3]तदुदित्वेति यजुर्वेदपाठात् ऋचोऽपि नपुसकनिर्देशः ॥

(सू) [4]अथ यज्ञं युनक्ति ॥ ८ ॥ ४६ ॥ ७१७ ॥

(सू) [5]कस्त्वा युनक्ति स त्वा युनक्त्विति सर्वं विहारमनुवीक्षते ॥ ९ ॥ ४७ ॥ ७१८ ॥

चतुर्थी खण्डिका ॥

---

[यज्ञयोगस्य सर्वप्रधानार्थत्वपक्षस्तद्धेतुश्च]

(भा) यज्ञयोगस्सर्वप्रधानार्थ. पुनरथशब्दप्रयोगात् ॥

---

[वाग्यमने विशेषः वापक्षभाष्येऽर्थद्वयं च]

(वृ) यजमान—करोति—तस्मिन्नेव काले प्रणीताप्रणयने ।

अग्निꣳहो—ग्यमनम्—तदुदित्वा वाचं यच्छतीत्यस्य विवक्षाभेदात् निरुप्यमाणाभिमन्त्रणार्थमेवोक्त्वा वाग्यमनमित्येकोऽर्थः । वाग्यमनार्थमग्निꣳहोतारमिति पुनश्च वक्तव्यमित्येकः ॥

[सर्वप्रधानार्थत्वपक्षाशयः]

यज्ञयोग—योगात्—औषधार्थत्वपक्षे अथशब्दोऽनर्थकः ।

---

[1] पूर्वं हि अध्वर्युयजमानयो शाखान्तरीयो वाग्यमनकाल उक्तः । तेनेदानीं स्वशाखास्थः कालो विकल्पते यजमानस्य [2] चोक्त्वा—क [3] तदिति च वाक्यादिसामान्यरूपाविवक्षयाऽपि नपुसके निर्देश (रु) [4] अथशब्द कर्मान्तरत्वद्योतनार्थ. तेन अनौषधतन्त्रास्वपि उपसदादिषु यज्ञयोग कार्यः (रु). [5] कस्त्वा युनक्तीति वाक्यं क —पुस्तके न दृश्यते । I अथ कोऽय यज्ञयोगो नाम ? त दर्शयति (रु) II.

(भा) अदृष्टप्रधानोपकारकत्वाच्च । अतस्सान्नाय्यतन्त्रास्वाज्यतन्त्रास्वपि पशौ च क्रियते [1] पात्राभिमर्शनोत्तरकालम् । न च पुनः पशुपुरोडाशे ॥

[औपदेशिकपक्षः सर्वशब्दाशयश्च]

औषधार्थमित्युपदेशः ॥

---

(वृ) अदृष्ट–रकत्वाच्चेति–ओषधिकाण्डोपकारकत्वाभावाददृष्टार्थत्वात् सर्वप्रधानार्थत्वम् ॥

[न च पुनरिति भाष्यार्थे विवरणम्]

न च पुनः पशुपुरोडाशे—पश्वर्थं कृतत्वात् ।

[उपदेशपक्षाशयविवरणम्]

औषधार्थमित्युपदेशः— औषधकाण्डपाठान्मन्त्रस्य । अस्मिन् पक्षे अथशब्दोऽर्थकृत्यप्रतिषेधार्थः । कथ पूर्वत्राथशब्दानर्थक्यपरिहाराय सर्वप्रधानार्थत्वमुक्तम् ? उच्यते ;—आनन्तर्यमेवाथशब्दस्य मुख्यार्थ. नार्थकृत्यप्रतिषेधः । क्रमोपदेशादेवानन्तर्ये सिद्धे मङ्गलाद्यर्थान्तरासभवादानर्थक्ये प्राप्ते तत्परिहारार्थमगत्याऽऽश्रियते क्रमनियमार्थलक्षितोऽर्थकृत्यप्रतिषेधः ॥

ननु प्राप्तस्य पुनर्वचन नियमार्थमिति क्रमनियम एवाथशब्दस्य मुख्योऽर्थः सभवति ? न क्रमनियम एव सूत्रकारेण क्रियते । अङ्गानां युगपदनुष्ठानासभवादेवानियम. [2] क्रमप्राप्त एव । सूत्रकारानुक्रमणस्य नियमार्थत्वाभावे च 'त्व नो अग्ने' इति क्रमलोपप्रायश्चित्त न कार्यं स्यात् । अतो मुख्यार्थसंभवे न लक्षणेति अथशब्दस्यारम्भार्थत्वेन पूर्वप्रकरणविच्छेदात् सर्वार्थत्वम् । उपदेशपक्षस्तु सूत्रकारशीलानुविधानेन क्वचिदपि प्रकरणभेदार्थं सूत्रकारो न प्रयुक्तवान् पुनः पुनरर्थकृत्यप्रतिषेधे प्रयुक्त[3]वांश्च , औषधकाण्डे अध्ययन चानुग्रहीष्यते इति ॥

---

[1] पात्रप्रयोगोत्तर–ग. [2] क्रम प्रा–क. [3] वाश्चेत्यध्ययन–क.

(भा) सपात्रस्य विहारस्या[1]वेक्षणेन योग ॥

इति आपस्तम्बश्रौतधूर्तस्वामिभाष्ये तुरीये प्रश्ने प्रथम पटल ॥

---

(सू) **चतुश्शिखण्डा युवतिस्सुपेशा घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामान् इति वेदिं संमृज्यमानाम्[2] ॥ १ ॥ १ ॥ ७१९ ॥**

(सू) **यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः । यश्श्रुतेन हृदयेनेष्णता च तस्येन्द्रवज्रेण शिरश्छिनद्मीति[3] स्तम्बयजुर्ह्रियमाणम् ॥ ॥ २ ॥ २ ॥ ७२० ॥**

**[समन्त्रकामन्त्रकह्रियमाणसाधारणमभिमन्त्रणम्]**

(भा) स्तम्बयजुषः तूष्णीं हरणेऽपि [4] याजमानन् ॥

---

(वृ) **सपात्रस्य–योग इति**—विहारमनुवीक्षत इत्येव सिद्धे सर्वशब्द· पात्रप्राप्त्यर्थ· । अत पात्राणामपि योग ॥

इति धूर्तस्वामिभाष्यवृत्तौ चतुर्थे प्रश्ने प्रथम पटल ॥

---

**[तूष्णी हरणेऽपि याजमानसत्त्वसमर्थनम् ]**

**स्तम्ब–जमानम्**—स्तम्बयजुर्हरतीत्युक्त्वा ‘ तूष्णीं चतुर्थम् ’ इति वचनात् तस्यापि स्तम्बयजुश्शब्दवाच्य[5]त्वात् स्तम्बयजुर्ह्रियमाणम् इत्यविशेषवचनाच्च छिनद्मीति लिङ्गात् तस्यापि छेदनम् ॥

---

[1] स्यावेक्षण (मु पु) [2] अनुमन्त्रयते इति शेष (रु) [3] स्तम्बयजुषा पृथक्त्वान्मन्त्रावृत्ति । चतुर्थस्य तु हरणस्य तूष्णीकत्वान्न भवत्यनुमन्त्रणम् (रु).
[4] स्फ्यप्रहृतानि तृणानि स्तब । तत्प्रधानो यज्ञावयव स्तम्बयजु । हरणीय च सतृण पुरीषमुपचारेणोच्यते । (भ भा मिश्र )। यजुर्मन्त्रको दर्भ स्तम्बयजु । तच्च स्तम्बरूपं स्फ्येन छित्वा उत्करदेशे हरेत् (सा भा) [5] त्वाच–ख, ग

(सू) इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् । मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीषु इत्युत्कर[1]मभिगृह्यमाणम् ॥ ॥ ३ ॥ ३ ॥ ७२१ ॥

[उत्कराभिग्रहणे क्वचित्सकृत्त्वम्]

(भा) उत्कराभिग्रहण सकृद्वरुणप्रघासेषु ॥

(सू) यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामीति वेदिं [2]परिगृह्यमाणाम् ॥ ४ ॥ ॥ ४ ॥ ७२२ ॥

(सू) [3]यदुद्घ्नन्तो जिहिंसिम पृथिवीमोषधीरपः अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु [4]पातु तस्मात् । यद्घ्नन्तो जिहिंसिम क्रूरमस्या वेदिं चकृमा मनसा देवयन्तः । मा तेन हेड उपगाम भूम्याः [5]शिवो नो विश्वैर्भुवनेभिरस्त्वित्युद्धन्यमानाम् । भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयांसि यज्ञिया यज्ञं वि च यन्ति

---

[वरुणप्रघासोत्कराभिग्रहणसकृत्त्वहेतुः]

(वृ) उत्करा–घासेषु —तृणपांसुभेदेऽप्युभयोर्न्युप्तयोः तन्त्रेणाभि[6]ग्रहण अभिगृह्यमाणाभिमन्त्रण च तन्त्रेण उत्करस्यैकत्वात् ॥

---

[1] अभिग्रहणस्य तु चतुर्थस्याप्यतूष्णीकत्वाद्धवत्येवानुमन्त्रणम् (रु) [2] उभयो परिग्रहयोरनुमन्त्रयते अविशेषात्, पूर्वं चोत्तर चेति भारद्वाजवचनाच्च (रु).
[3] यद्घ्नन्तो (रु द पा) यदुद्धन्तो–ख. [4] पाततस्मात्–क यद्घ्नन्तो–ख यदुद्धन्तो–ख [5] शिवा–क [6] ग्रहण तदभिमन्त्रण च–घ

(सू) शं चौषधीराप इह शक्वरीश्चेति क्रियमाणाम् । ईडेऽन्यक्रतूरहमपो देवीरुपब्रुवे । दिवा नक्तं च सस्रुषीरपस्स्वरीरिति प्रोक्षणीरासाद्यमानाः ऊर्णा-म्रदु प्रथमानꣳ स्योनं देवेभ्यो जुष्टꣳसदनाय बर्हिः । सुवर्गे लोके यजमानꣳ हि धेहि मां नाकस्य पृष्ठे परमे व्योमन् इति बर्हिरासाद्यमानम् ॥ ५ ॥ ॥ ५ ॥ ७२३ ॥

(भा) क्रियमाण—दक्षिणतो वर्षीयसीमित्येव[1]मादि ॥

(सू) अद्भिराज्यमाज्येनापः सम्यक्पुनीत सवितुः पवित्रैः । ता देवीश्शक्वरीः शाक्वरेणेमं यज्ञमवत संविदाना इत्याज्यं प्रोक्षणीश्चोत्पूयमानाः ॥ ६ ॥ ॥ ६ ॥ ७२४ ॥

[अभिमन्त्रणपौर्वापर्यानुगुणं सूत्रविवरणम्]

(भा) आज्य चोत्पूत प्रोक्षणीश्चोत्पूयमानाः ॥

(सू) [2]उभावाज्यग्रहान् जपतः ॥ ७ ॥ ७ ॥ ॥ ७२५ ॥

पञ्चमी खण्डिका ॥

---

[वर्तमानसमीपभूताविवक्षाग्राह्याध्याहारेण भाष्यावतरणम् ]

(वृ) आज्यं चो–मानाम्—ऊभयोरुत्पवनस्य युगपदसम्भवादुत्पूत-शब्दाध्याहारेण योजना ॥

---

[1] मादि क्रियमाणाम्—ख ग. घ. सीमिति क्रियमाणाम्—क. [2] उभा विति वचनमध्वर्युणा सहप्रयोगार्थम् , याजमानाध्वर्यवकाण्डयोस्संकीर्णत्वात् अमीषा-मित्यभिप्राय (रु).

[उभौ जपत इत्यनयोरर्थविवक्षया पर्यवसितार्थः]

(भा) अध्वर्योरपि चातुस्स्वर्यमाज्यग्रहणेषु ॥

(सू) आशिश्रेम बर्हिरन्तः पृथिव्याꣳ सꣳरोहयन्त ओषधीर्विवृक्णाः । यासां मूलमवधीः स्फ्येन शिवानस्तास्सुहवा भवन्तु । सुमनसो यजमानाय सन्त्वोषधीराप इह शक्करीश्च । वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाश्शतवल्शा अदब्धा इत्यन्तर्वेदि बर्हिरासन्नम् ॥ १ ॥ ८ ॥ ७२६ ॥

(सू) चतुश्शिखण्डा युवतिस्सुपेशा घृतप्रतीका वयुनानि वस्ते । सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् । शिवा च मे शग्मा चैधि स्योना च मे सुषदा चैधि ऊर्जस्वती च मे पयस्वती चैधि । इषमूर्जं मे पिन्वस्व ब्रह्म तेजो मे पिन्वस्व क्षत्रमोजो मे पिन्वस्व विशं पुष्टिं मे पिन्वस्वायुरन्नाद्यं मे पिन्वस्व प्रजां पशून् मे पिन्वस्वेति [1] स्तीर्यमा[2]णाम् ॥ २ ॥ ९ ॥ ७२७ ॥

(सू) ध्रुवोऽसीत्येतैः प्रातिमन्त्रं परिधीन् परिधी[4]यमानान् । [3]अस्मिन् यज्ञ उपभूय इन्नुमेऽविक्षोभाय परिधीन् दधामि । धर्ता धरुणो धरीया

---

[सूत्रारूढत्वं भाष्यार्थस्य]

(वृ) अध्वर्योर–ग्रहणेषु—उभावाज्यग्रहान् जपत इत्यध्वर्योरपि चातुस्स्वर्यप्राप्त्यर्थत्वाद्वचनस्य ॥

---

[1] स्तीर्यमाणाया वेदेरेकत्वात् न धातौ धातौ मन्त्रावृत्ति (रु) [2] णम्–ख.
[3] अस्मिन् यज्ञ इत्यनया सकृदन्तऽनुमन्त्रणम्, परिधीन् परिदधामीति लिङ्गात् अस्मिन् यज्ञे सर्वानिति भरद्वाजवचनाच्च

(सू) नाग्निर्द्वेषाꣳसि निरितो [1] नुदातै इति च ॥ ३ ॥
॥ १० ॥ ७२८ ॥

[परिधीयमानानित्युक्तिफलम्]

(भा) अस्मिन् [2] यज्ञ इति सकृदेव बहुवचनत्वात्। शनैश्चोत्तरपरिधि- स्साद्यते। अत· परिधीयमानानित्युपपद्यते ॥

[प्रत्येकाभिमन्त्रणपक्षः]

केचित्परिधौ परिधावावर्तयन्ति ॥

(सू) युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहवनीयम्। तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो

---

[भाष्यस्थबहुवचनपदार्थ· सर्वानुमन्त्रणतानिर्वाहश्च]

(वृ) अस्मिन् यज्ञे इति—जनत्वात्—परिधीन् दधामीति सर्वपरि- ध्यङ्गम् ॥

शनै—द्यते इति—चशब्दात् अस्मिन् [3] यज्ञे इत्येतदपि परि- धीयमानावस्थायामेव। तस्मादभिभूरस्यस्मिन् यज्ञ इत्युभयो परिधीय- मानावस्थायामेव प्रयोगसम्भवार्थं शनैरुत्तरपरिधिसादनमध्वर्युणा कर्त- व्यम्। [4] तत. परिधीयमानानित्युपपद्यते ॥

[आवृत्तिपक्षाशयः]

केचित्प—यन्तीति—अस्मिन् यज्ञ इत्यस्य सर्वपरिध्यङ्गत्वात् सर्वेषां परिधीयमानावस्थायामेव प्रयोगसम्भवार्थमावर्तेत इति ॥

---

1 नुदाता इति च—ख 2 परिधिषु परिधीयमानेषु जपतीति वदन् भट्टभास्कर- मिश्र न स्वाभिमत स्फुटमाह। सायणोऽप्येतदेवानुससार। ध्रुवोसीत्यादेरेकैक परिधिमन्त्रत्वे प्रतिमन्त्रमितिवत् अस्मिन्नित्यादौ एकैकमित्याद्यनुक्त्या सकृत्त्वं भाष्य भिमतम् 3 यज्ञे इति अत परिधीयमानानित्युपपद्यते—घ 4 तदापरिधी—ख अत परिधी—घ

(सू) यास्ते अग्ने ताभिर्वर्माण्यभितो [1]व्ययस्व मा त्वा दभन् यज्ञहनः पिशाचा इति च ॥४॥११॥७२९॥

[अग्नियोगस्सामान्योक्तो विशेषरूपो विवक्षितः]

(भा) युनज्मी[2]त्याद्याहवनीययोग उपस्थ इत्येवमन्त ।

[प्रकरणाम्नानेऽपि नाहवनीयार्थता व्याहृतीनाम् ]

व्याहृतीनामग्निहोत्रोपसादनादिषु विनियोग ॥

---

[ब्राह्मणे पाठरूपयोगोक्त्या तदुभयविधत्वसम्भवः]

(वृ) युनज्मी-[3]वमन्तः—[4] अनुमन्त्रणमुपस्थान वा । एष वा अग्नेर्योगस्तेनैवैन युनक्तीति लिङ्गात् । सुप्रजस इत्यादिफलस्य तेन हन्मी-[5]त्यादेश्च युक्ताहवनीयात् [6] प्राप्त्यर्थतयाऽऽशासनात् यन्म इत्यादेरन्यत्र वाऽविनियोगदुभाभ्यामाग्नियोगः ॥

[अग्निहोत्रादिषु विनियोगकण्ठोक्तिः भाष्यकृदभिमता]

व्याहृती-नियोगः—याजमानकाण्डे आहवनीययोगार्थं मन्त्रद्वयानन्तरपठिताना व्याहृतीना अग्निहोत्रमेताभिरित्यादिना वचनेनाध्वर्य्वादिकर्माङ्गत्वेन विनियोगात् आहवनीययोगो मन्त्रद्वयेन ॥

---

[1] व्यवस्व-ख [2] अनुमन्त्रयत इति शेष उपातेष्ठत इति वा । युनज्मीति प्रतीकेन द्वयृचस्यैव ग्रहणम् न व्याहृतीनामपि, तासामग्निहोत्रोपसादनादौ विनियोगात् व्यक्तमुक्तेश्च सत्याषाढेन । परिध्यङ्गमिदमनुमन्त्रणम् तत्सन्निधावाम्नानात् । स्यादेतत्, ' युनाज्म त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेन ' इति श्रुते पृथक्कर्मैवेदमग्नियोगो नाम? न, परिधियोगस्यैव तत्राग्नियोगत्वेनाभिप्रेतत्वात्, तद्विमोकस्यैवाग्निविमोकत्वेन ब्राह्मणोक्ते सूत्रकारसमतेश्च । तस्मात् उपसदवभृथगृहमेधीयादिषु परिध्यभावादनुमन्त्रणस्य लोप (रु) युनज्मीत्याहवनीयोपस्थ इत्येवमन्त I. युनज्मीत्याहवनीययोग उपस्थ इत्येव मन्त्र ?-क [3] मन्त्र -क [4] नानुमन्त्रण-क घ [5] त्यादेश्चेति (मु रा) तेनाहमित्यादेश्च-झ. [6] युक्ताहवनीयात्प्राप्यतया-झ

(सू) विच्छिनद्मि विधृतीभ्याᳬ सपत्नान् जातान् भ्रातृव्यान् ये च जनिष्यमाणाः । [1]विशो यन्त्राभ्यां विधमाम्येनानहᳬ स्वानामुत्तमोऽसानि देवाः । विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानमदितं दुर्मरायुम् । सीदन्ती देवी सुकृतस्य लोके धृती स्थो विधृती स्वधृती प्राणान् मयि धारयतं प्रजां मयि धारयतं पशून् मयि धारयतमिति विधृती [2]आसाद्यमाने ॥ ५ ॥ १२ ॥ ॥ ७३० ॥

षष्ठी खण्डिका ॥

---

(सू) [3]अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम् । स दाधार समिधो विश्वरूपास्तस्मिन् स्रुचो अध्यासादयामीति [4]प्रस्तरमासाद्यमानम् ॥ १ ॥ १३ ॥ ७३१ ॥

[क्वचिदेतन्मन्त्राभावः, मन्त्रप्रवृत्तिस्थलं च]

(भा) जुहूसादनपक्षे अयं प्रस्तर इति नास्ति । उतानूयाजानामिति लिङ्गविरोधात् । बहुवचनत्वाच्च सर्वस्रुगासादन एव प्रस्तरमन्त्रः ।

---

[जुहूसादनाधिकरणम्]

(वृ) जुहूसा–विरोधात्—प्रस्तरे जुहूसादनपक्षे ।

[विवक्षितबहुवचनव्यक्तिः तत्फलं च]

बहुव–मन्त्रः—तस्मिन् स्रुचो अध्यासादयामीति बहुवचनात् ।

---

[1] दोहन्यज्ञᳬ इत्यधिकं दृश्यते क–पुस्तके [2] साद्यमाने–क. [3] उतानूयाजानामिति स्रुच इति च लिङ्गविरोधात् । अपि वा जुहूमेव प्रस्तर इति कल्पे लुप्यते मन्त्र प्रायणीयोदयनीययोरनूयाजप्रयाजयोर्यथार्थमूहोऽन्यतरस्य (ख).
[4] प्रस्तरᳬसाद्यमानम्–क

[जुहूसादनदक्षेऽपि मन्त्रानिवृत्तिस्तद्धेतुश्च]

(भा) प्रस्तरजात्येकत्वात्कालान्तरे वर्तमानस्य सस्तव इत्यनिवृत्तिर्वा। साद्यमानमिति पुनर्वचनाच्च ॥

(सू) आरोह पथो जुहु देवयानान् यत्रर्षयः प्रथमजा ये पुराणाः। हिरण्यपक्षाजिरासंभृताङ्गा वहासि मा सुकृतां यत्र लोकाः। जुहूरसि घृताची गायत्री याग्नी कविभिर्जुषाणा। अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवानाग्नेयेन शर्मणा दैव्येनेति जुहूम्। अवाहं बाध उपभृता सपत्नान् जातान् भ्रातृव्यान् ये च जनिष्यमाणाः। दोहै यज्ञ सुदुघामिव धेनुमह-

(वृ) अतः प्रस्तरसादनात्प्रागेव सर्वसादनजुहूसादनयोरन्यतर [1]पक्षसङ्कल्प। तस्मादिडान्तयोर्दर्शपूर्णमासयोरय प्रस्तर इत्यस्य लोप ॥

[क्वचिदूहः]

प्रायणीयेऽननूया[2]जपक्षे आतिथ्याया च अन्यतरस्य वर्तेत्यूहः। उदयनीये चाप्रयाजपक्षे ऊहो विकल्पेन ॥

[श्रुतेः स्तुत्यनुवादत्वात् पुनरासादनशब्दाच्च मन्त्रानिवृत्ति-
[रनूहश्च प्रायणीयादौ]

**प्रस्तर—पुनर्वचनाच्चेति** — प्रस्तराभिधानपरत्वात्प्रयाजानूयाजकर्मणां धारणाभावेऽपि लक्षणयाऽऽज्यधारणानुवादत्वात् सर्वसादनकालप्राप्तत्वेन स्तुत्यनुवादोपपत्तेरुभयत्र प्रस्तर[3]जात्येकत्वादलोप। किंच विधृती आसाद्यमाने इति प्रकृतत्वात् प्रस्तरमित्येतावता सिद्धेऽपि प्रस्तरमासाद्यमानमिति पुनर्वचनाच्च प्रस्तरमात्र प्रधानतया[4]विधेयमिति

[1] पक्ष कल्प्य —घ. [2] ज आतिथ्याया च—घ. [3] जातेरेक—ख ग
[4] ऽभिधेयमिति—ख ग घ.

(सू) मुत्तरो भूयासमधरे मत्सपत्नाः । सुभृदस्युपभृद्‌घृताची त्रैष्टुभेन छन्दसा [1] विश्ववेदाः । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवानैन्द्रेण शर्मणा दैव्येनेत्युपभृतम् । यो मा वाचा मनसा दुर्मरायुर्हृदाऽरातीयादभिदासदग्ने । इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः । ध्रुवासि धरणी [2] धनस्य पूर्णा जागतेन छन्दसा विश्ववेदाः । अव्यथमाना यज्ञमनुयच्छस्व सुनीती यज्ञं नयास्युपदेवान् वैश्वदेवेन शर्मणा दैव्येनेति ध्रुवाम् । स्योनो मे सीद [3] सुषदः पृथिव्यां प्रथयि प्रजया पशुभिस्सुवर्गे लोके । दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः । अयꣳ स्रुवो अभिजिहर्ति होमाञ्छतक्षरश्छन्दसानुष्टुभेन सर्वा यज्ञस्य समनक्ति विष्ठाबार्हस्पत्येन शर्मणा दैव्येनेति स्रुवम् ॥ २ ॥ १४ ॥ ७३२ ॥

सप्तमी खण्डिका ॥

---

(सू) इयꣳ स्थाली घृतस्य पूर्णाऽच्छिन्नपयाश्शतधार उत्सः । मारुतेन शर्मणा दैव्येनेत्याज्य[4]स्थालीम्[5] ॥ ॥ १ ॥ १५ ॥ ७३३ ॥

---

(वृ) केवलजुहूसादनेऽप्यनिवृत्तिरिति । अस्मिन् पक्षे प्रायणीयादिष्वप्यनूहः । उपसत्सु च ॥

---

1 विश्वेवेद 2—ख  2 धरस्य 2—ख  3 सुषसद —ख.  4 स्थालीमाप्याययमानाम्—ख  5 एतदन्ता सप्तमी खण्डिका पठ्यते—ख. पु.

[जुह्वाद्यनुमन्त्रणोपपथानयोर्विकल्पः]

(भा) जुह्वादीनां साद्यमानानामुपस्थानमनुमन्त्रण वाऽधिकारात्।

(सू) [1] तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मोजसा वीर्येण तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिरिति पुरोडाशानज्यमानान्॥ २॥१६॥ ॥७३४॥

(सू) [2] यज्ञोऽसि सर्वतश्श्रितस्सर्वतो मां भूतं भविष्यच्छ्रयताꣳ शतं मे सन्त्वाशिषस्सहस्रं मे सन्तु सूनृताः इरावतीः पशुमतीः प्रजापतिरसि सर्वतश्श्रितः सर्वतो मां भूतं भविष्यच्छ्रयताꣳ शतं मे सन्त्वाशिषस्सहस्रं मे सन्तु सूनृताः इरावतीः पशुमतीरित्याग्नेयं पुरोडाशमासन्नमभिमृशति सर्वाणि वा हवीꣳषि॥ ३॥ १७॥ ७३५॥

(सू) इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय पशवोऽचिकित्सन्। तेन देवा अवतोपमामिहेषमूर्जं यशस्सह ओजस्सनेयꣳश्श्रितं मयि श्रयतामिति प्रातर्दोहम्। यत्पृथिवीमचरत्तत्प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजा-

---

[विकल्पे सूत्रकारसम्मतिः उपस्थाने विशेषश्च]

(वृ) जुह्वादीनां–धिकारात् इति — अकरणानुपातिष्ठतेऽनुमन्त्रयते इत्यधिकारात्। उपस्थानपक्षे उत्थाय॥

---

[1] प्रतिहविरावृत्तिर्मन्त्रस्य तृप्तिरसीत्येकवचनात् अज्यमानामिति वर्तमाननिर्देशाच्च (रु) [2] यदा सर्वाणि तदा आवृत्तिर्मन्त्रस्य यज्ञोऽसीति पुरोडाशाभिधानात् एकवचनाच्च। सर्वाणि हवींषीति च येषामासादनमुक्तमाध्वर्यवे ‘चतुर्होत्रा पौर्णमास्या मित्यादिना तेषामव ग्रहण न त्वाज्यानामपि । कुत ? स्थानादासन्नान्यभिमृशतीति वचनात्। सर्वेषा हविषा उत्तरार्धात्सर्वेभ्यो हविभ्र्य इडामवद्यतीत्यादौ तथा दर्शनाच्च। तेनोपसदादौ अभिमर्शननिवृत्तिराज्यस्य॥ (रु)

(सू) पतिः। इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधि नोन्महेन्द्रं दधि मां धिनोत्विति [1] दधि ॥ ४ ॥ ॥ १८ ॥ ७३६ ॥

(सू) अयं [2] यज्ञस्समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः। तेन लोकान् सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्यामिति सर्वाणि हवींषि ॥ ५ ॥ १९ ॥ ७३७ ॥

[तृप्तिरसीत्यादेर्मन्त्रस्यावृत्तिस्तद्धेतुश्च। आज्यामर्शनस्वरूपं च]

(भा) तृप्तिरसि यज्ञोऽसीत्येवंविधानामेकवचनत्वात् असान्निपातिनामप्यावृत्तिः। प्रधानानुरोधेन [3] वचनानुग्रहश्च। असभवतामभिमर्शने मन्त्रावृत्तिः

---

[मन्त्रावृत्तिहेतुविवरणम्]

(वृ) तृप्तिरसि–नुग्रहश्च —तृप्तिरसि यज्ञोऽस्यय यज्ञ इद[4]मिन्द्रियमित्येवं विधानामसन्निपातिनामक्रियाभिधायिनामावृत्ति एकवचनानुग्रहाय प्रतिप्रधान गुणावृत्तेर्न्याय्यत्वाच्च ॥

[मन्त्रावृत्तेरभिमर्शनस्थानीयत्वोपपत्तिः]

असंभवता–वृत्तिः—ममाग्न इत्येवमादीनां तन्त्रेण प्रयुज्यमानाना[5]मप्यभिमर्शनावृत्तावावृत्तिः सर्वेषां मन्त्रवदभिमर्शनेन सस्कार्यत्वात्। उपदेशस्त्वय यज्ञ इति तन्त्रेण। अय यज्ञस्समसदद्धविष्मान् इति हविर्युक्तयज्ञाभिधानात्। तेन इज्यमानहविषामभिमर्शनम्। हविष्मानितिपदे सङ्ख्याविशेषानुपलब्धेश्च ॥

---

1 आसन्नमभिमृशतीत्यन्वय (रु) 2 यज्ञाभिधानान्नावृत्तिर्मन्त्रस्य भरद्वाजोक्तेश्च (रु 3 वचनानुग्रहाच्च (मु पु). 4 न्द्रिय यत्पृथिवीमित्येव (मु, रा). 5 नानामभिमर्श–घ.

(भा) अज्यानं [1] सहाज्यस्थालीकानामाभिमर्शन सर्वाणि हवींषीति वचनात् ॥

(सू) [2] यो नः कनीय इह कामयातै अस्मिन् यज्ञे यजमानाय मह्यम् । अपतामिन्द्राग्नी भुवनान्नुदेतामहं प्रजां वीरवतीं विदेयेत्यैन्द्राग्नम् ॥ ६ ॥ २० ॥७३८॥

[मन्त्रस्य साधारण्यनिर्वाहः अभिमर्शने विशेषश्च]

(सू) ममाग्ने वर्चो विहवेष्वस्त्वित्यनुवाकेन सर्वाणि हवीꣳष्यासन्नान्यभिमृशेद्यथाभिर्वा ॥ ७ ॥ २१ ॥ ॥ ७३९ ॥

(सू) चतुर्होत्रा पौर्णमास्यां हवीꣳष्यासन्नान्यभिमृशेत्प्रजाकामः पञ्चहोत्राऽमावास्यायां स्वर्गकामो नित्यवदेके समामनन्ति ॥ ८ ॥ २२ ॥ ७४० ॥

अष्टमी खाण्डिका ॥

(भा) ऐन्द्राग्नविकाराणामूहेनाभिमर्शनम् । समुच्चयेनाभिमर्शनं सर्वेषाम् [4] । उक्तत्वात् ॥

इति श्रीमदापस्तम्बश्रौतसूत्रेषु धूर्तस्वामिभाष्यभूषितेषु चतुर्थप्रश्ने द्वितीय पटल ॥

---

[आज्याभिमर्शने पक्षभेदः तद्धेतुश्च]

(वृ) आज्यानां–वचनात्—ध्रौवाज्यमात्रेण सहेति केचित् प्रधानधर्मत्वात् । तस्यापि नेति केचित् । सर्वेषा हविषामुत्तरार्थात् सर्वेभ्यो हविर्भ्य इडा इति निर्देशे आज्यव्यतिरिक्तानामेवोपादनात् ॥

[साधारण्यादिहेतुः अभिमर्शनं तन्त्रेणापि क्वचित्]

एन्द्राग्ने–र्शनम्—समवेतदेवताभिधायित्वात् ।

समुच्चये–मुक्तत्वात्—मन्त्राणाम् । अभिमर्शनावृत्तिश्च । न च विकल्प ॥

---

[1] साज्य (मु. पु) [2] ऊहेनाभिमर्शन वैमृधस्यापि (रु)

(सू) दशहोतारं वदेत्पुरस्तात्सामिधेनीनाम् ॥१॥१॥ ॥ ७४१ ॥

[दशहोत्रादीनामङ्गिनिर्णायकम्]

(भा) दशहोत्रादयः पुरस्तादुपरिष्टादिति यस्य चोद्यन्ते तस्याङ्गम् ।

(सू) अङ्गिरसो मास्य प्रातरनुवाकैरवन्त्विति सामिधेनीनां [1] प्रतिपदि जपति ॥ २ ॥ २ ॥ ७४२ ॥

(भा) प्रतिपत्–आरम्भः । तत्र सकृत् ॥

(सू) अनूच्यमानासु दशहोतार व्याख्यायोच्छुष्मो अग्न इति समिध्यमानम् । समिद्धो अग्निराहुतः स्वाहकृतः पिपर्तु नः । स्वगा देवेभ्य इदं नम इति समि[2]द्धम् ॥ ३ ॥ ३ ॥ ७४३ ॥

(भा) समिध्यमानं समिद्धमिति चाऽग्न्यभिमन्त्रणम् ॥

---

(वृ) विहव्यै चतुर्होतृपञ्चहोतृभ्यामपि तन्त्रेणाभिमर्शन यथासंभवम् ॥ ६६ ॥

इति आपस्तम्बश्रौतवृत्तिस्वामिभाष्यवृत्तौ चतुर्थप्रश्ने द्वितीय पटल ॥

---

[भाष्यदर्शितचोदनोदाहरणम्]

दशहोत्रा–तस्याङ्गम्—[3] यथा पुरस्तादनूयाजानामुपरिष्टाद्वे-[4]त्येवमादि ॥

[समिध्यमानवत्यानिवृत्तिः पक्षान्तरं च]

समिध्य–न्त्रणम् —समिध्यमानवतीसमिद्धवतीभ्यामुपलक्षि--- तस्याग्नेरभिमन्त्रणम् । [5] प्रतिपज्जपोत्तरकाल विधानादेव सिद्धे समिद्धय-

---

[1] प्रथमायामृचि आरम्भे वा (रु) [2] अनुमन्त्रयत इति शेषः उपतिष्ठति इति वा (रु) [3] यथा पुरस्तात्सामिधेनीना पुर–घ [4] द्वेति च–घ [5] उत्तरकाल विधानादेव–घ

(सू) [1] मनोऽसि प्राजापत्यामिति स्रौवमाघार्यमाणम् ॥
॥ ४ ॥ ४ ॥ ७४४ ॥

(सू) स्रुच्य[2]मन्वारभ्य वागस्यैन्द्रीत्यनुमन्त्रयते ॥
॥ ५ ॥ ५ ॥ ७४५ ॥

(सू) देवाः पितरः पितरो देवा योऽहमस्मि स सन् यजे यस्यास्मि न तमन्तरेमि स्वं म इष्टꣳ स्वं दत्तꣳ स्वं पूर्तꣳ स्वꣳ श्रान्तꣳ स्वꣳ हुतम् । तस्य मेऽग्नि-रुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुर्य एवास्मि स सन् यजे इति होतृप्रवरेऽध्वर्युप्रवरे च [3] प्राव्रिय-माणे ॥ ६ ॥ ६ ॥ ७४६ ॥

[देवा इत्यादिमन्त्रप्रवृत्तिनिवृत्ती पक्षान्तरं च]

(भा) देवाः पितर इति प्रवराङ्गम् । अतस्तन्निवृत्तौ निवृत्तिः । सीद होतरित्यत्राप्य[4]निवृत्तिः । केचिन्निवृत्ति ॥

---

(वृ) मान समिद्ध इति पुनरुपादानात् । अतस्तयोरभावे निवर्तते । केचिदनिवृत्तिरिति ॥

[देवा इत्यादेर्निवृत्त्यनिवृत्तिहेतू]

देवाः पितराः—प्यनिवृत्तिः—प्रवरकार्यकरत्वात्तस्य ।
केचित्तु[4]निवृत्तिः—सीदहोतरित्यत्र ।

---

1 आघारमनुमन्त्रयत इति शेष (रु) 2 आघारयितुरन्वारम्भ एवाघारान्वारम्भ । अनुमन्त्रणवचनमन्वारम्भार्थोऽय मन्त्र इति माशङ्कीति (रु). 3 जपतीति शेष । प्रवरस्थानापन्नोऽपि सीदहोतरित्यत्र गोत्रर्षिसबन्धाकीर्तनात् नायं जप । योऽहमस्मि ससन् यजे यस्यास्मि न तमन्तरेमि इति लिङ्गानुसारात् (रु) 4 केचित्तु-नि—क ख ग

(भा) यस्यास्मि न तमन्त[1] रेमीति वैलिङ्ग्यात् ॥

(सू) [2] चतुर्होतारं व्याख्याय वसन्तमृतूनां प्रीणामीत्येतैः प्रतिमन्त्रं प्रयाजान् [3] हुत॰हुतम् ॥ ७ ॥
॥ ७ ॥ ७४७ ॥

[चतुर्होतुरङ्गनिर्देशः]

(भा) चतुर्होता प्रयाजाङ्गम् ।

[प्रयाजाद्यनुमन्त्रणे विशेष ]

प्रयाजानूयाजाज्यभागस्विष्टकृदनुमन्त्रणानि तन्त्रेण वरुणप्रघासेषु ॥

(सू) एको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मो द्वौ मम द्वे तस्य त्रयो मम तिस्रस्तस्य चत्वारो मम चतस्रस्तस्य पञ्च मम न तस्य किञ्चन योऽस्मान् द्वेष्टि यं च वयं द्विष्म [4] इत्येतैर्वा [5] प्रतिमन्त्रम् ॥ ८ ॥ ८ ॥ ७४८ ॥

---

[निवृत्तिपक्षाशयविवरणम् ]

(वृ) यस्यास्मि—ङ्ग्यम्—यस्य ऋषेः सतानजोऽस्मि त नातिक्रामामीति सकीर्तनात् । साद होतरिति ऋषिकीर्तनाभावान्निवृत्तिः ॥

[अनुमन्त्रणावसरः]

चतुर्होताप्र—घासेषु—प्रतिप्रस्थातु पश्चादनुष्ठानेऽपि तदुत्तरकालं तन्त्रेणानुमन्त्रणम् [6] हुतमिति [7]भूतनिर्देशात् ॥

---

[1] रेमीति लिङ्गात् क ख ग रेमीति वैलभ्यात् ?—ग [2] सर्वप्रयाजशेषश्चतुर्होता । अतो न प्रतिप्रयाजमावर्तते (रु) [3] योऽस्मानित्यादे सर्वत्रानुषङ्ग (रु) [4] इत्येतैश्च—ख [5] हुतंहुतं अनुमन्त्रयत इत्यन्वय (रु) [6] ष्ठानात् उत्तरकालं घ. [7] हुतानि घ.

[चतुर्होत्रा सह एको ममेत्यादेर्व्यवस्थायां पक्षभेदः]

(भा) [1] वेत्युक्ते विकल्पो होत्राायाजमानयोरपि । समुच्चय उपदेश ॥

(सू) अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमित्याज्य[2]भागौ ॥ ९ ॥ ९ ॥ ७४९ ॥

(सू) [3] विहृतानुमन्त्रणौ वा ॥ १० ॥ १० ॥ ७५० ॥

(भा) विहृतानुमन्त्रणौ—विभक्तानुमन्त्रणौ वा ।

(सू) अग्निना यज्ञश्चक्षुष्मान् अग्नेरहं देवयज्यया चक्षुष्मान् भूयासम् । सोमेन यज्ञश्चक्षुष्मान् सोमस्याहं देवयज्यया चक्षुष्मान् भूयासमिति [4] विहृतौ ॥ ॥ ११ ॥ ११ ॥ ७५१ ॥

(सू) [5] पञ्चहोतारं वदेत्पुरस्ताद्धविरवदानस्य ॥ १२ ॥ ॥ १२ ॥ ७५२ ॥

---

[भाष्यदर्शितमतिभेदविवरणम् क्वचिद्विकल्पस्यैवेष्टता च]

(वृ) वेत्युक्ते–नयोरपि—होत्राायाजमानेषु समुच्चय इत्युक्तेऽपि विहृतानुमन्त्रणौ[6] वा । एतस्य सू[7]क्तस्य षट्सर्वे वेत्यादिषु विकल्प एव ॥

[उपदेशमते सर्वत्र समुच्चयोपपत्तिः]

समुच्चय–उपदेशः—होत्राायाजमाने[8]ष्वित्यविशेषेण सर्वत्रवचनात् वाशब्दस्य चशब्दार्थत्वेऽप्युपपत्तेः ॥

---

[1] जैमिनिना तु द्वादशे तृतीयान्त्याधिकरणे होत्राणां विकल्पमाशङ्क्य समुच्चय स्थापितः । चतुर्थे याजमानाना समुच्चय स्थापित । वेत्यर्थोक्तविकल्पो होत्रा– ग. वेत्युक्तेर्विकल्पो (मु पु). [2] हुते अनुमन्त्रयत इति शेष (रु) [3] विहृत व्यस्तमनुमन्त्रण ययोस्तौ । (रु) [4] यदा विहृतौ तदा आभ्या पृथगनुमन्त्रयितव्यौ (रु) [5] सर्वहविरर्थं पञ्चहोता न तु प्रत्येकमावर्तते वीप्साभवात् (रु) [6] ण वा [7] सूत्रस्य [8] नेषु समुच्चय इत्यविशेषवचनात् वाश–घ.

[पञ्चहोतुस्तन्त्रताहेतुः दृष्टान्तश्च]

(भा) हविरङ्ग पञ्चहोता तन्त्रेण वा अमध्यवर्तित्वात् । [1] उपसत्सु सुब्रह्मण्यावत् ॥

(सू) अग्नेरहं देवयज्ययान्नादो भूयासमित्याग्नेयं हुतमनुमन्त्रयते । दब्धिरसीत्युपांशुयाजं [2] अग्नीषोमयोरित्यग्नीषोमीयं इन्द्राग्नियोरित्यैन्द्राग्नं इन्द्रस्येत्यैन्द्रं सान्नाय्यं महेन्द्रस्येति माहेन्द्रं अग्नेस्स्विष्टकृत इति सौविष्टकृतम् ॥ १३ ॥ १३ ॥७५३ ॥

[उपांशुयाजसामान्ये दब्धिमन्त्र.]

(भा) दब्धिरसीत्युपांशुयाजमग्नीषोमीयमपि ॥

---

[अङ्गताफलम् ]

(वृ) हविरङ्गं पञ्चहोता—अतः प्रतिहविरावृत्ति ।

[तन्त्रत्वनिर्वाह.]

तन्त्रेण वा अमध्यवर्तित्वात्—पुरस्ताद्धविरवदानस्येति पुरस्तात्कालस्य सर्वसाधारणत्वात् तन्त्रतोपपत्ति । अमध्यवर्तित्वात्—मध्यवर्तित्वे हि [3]पूर्वस्योत्तरस्य वा नियतस्स्यात् ॥

[दृष्टान्ते संगमनम्]

उपसत्सु सुब्रह्मण्यावदिति—यथाऽहर्गणेषूपसत्कालसुब्रह्मण्यायामेतावदहे[4] सुत्यामिति सर्वसाधारणसुत्यानिर्देशस्तन्त्रेण । सुब्रह्मण्या [5] तु तन्त्र स्यात् (११–३–२१) इति मीमांसकमतात् । तद्वत्पञ्चहोताऽपि ॥

[उपांशुयाजसामान्यविषयत्वनिर्वाहः मन्त्रान्तरकृत्यं च]

दब्धिरसि–यमपीति — देवताविशेषानपेक्षमेवोपांशुयाजाग्न-

---

[1] उपसत्सुब्रह्मण्यावत्–घ [2] त्वेपूर्वं क [3] पूर्वस्यवोत्तर घ [4] हे सर्वसुत्या–क. [5] ण्यादितु–घ ण्यातु–ख ग ण्यातु तन्त्रेण–क

(सू) पुरस्तात् [1] स्विष्टकृतोऽन्यदेवतान्येके समामनान्ति ॥ १४ ॥ १४॥ ७५४ ॥

नवमी खण्डिका ॥

---

[शाखान्तरीयपाठे देवतायां विशेषः]

(भा) अग्नेस्स्विष्टकृतोऽह देवयज्ययेत्यस्य पुरस्तादन्यदेवतानां पाठश्शाखान्तरे। तानि हविर्विशेषमनपेक्ष्य भवान्ति॥

(सू) [2] इन्द्रस्य वैमृधस्याहं देवयज्ययाऽसपत्नो वीर्यावान् भूयासमिन्द्रस्य त्रातुरहं देवयज्यया [3] त्रातो भूयासं द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोरृध्यासम् भूमानं प्रतिष्ठां गमेयमित्येके। पूष्णोहं देवयज्यया प्रजानिषयि प्रजया पशुभिस्सरस्वत्या अहं देवयज्या वाचमन्नाद्यं

---

(वृ) तया दब्धिरसीत्यस्य विहितत्वात्। अग्नीषोमयोरित्यस्य त्वौषधार्थता ॥

[भाष्यदर्शितयथालिङ्गत्वोपपादनम्]

**अग्नेः स्विष्ट–भवन्ति**— अन्यदेवतानामनुमन्त्रणानां पाठः। तानि—अनुमन्त्रणानि। यथालिङ्ग वैकृतीरिति देवताविशेषालिङ्गेन विनियुक्तत्वात् ॥

---

[1] अग्नीषोमीयेऽप्युपांशुयाजे दब्धिरसीत्येव मन्त्र। दब्धिरसीत्युपांशुयाजमिति वचनात। न च लिङ्गविरोध, यागाभिधानात् (रु) [2] प्रकृते हुतानुमन्त्रणसमाम्नाये स्विष्टकृन्मन्त्रात्पूर्वं प्राकृतीभ्योऽन्यदेवतान्यपि वक्ष्यमाणानि यजूंषि एके शाखिनस्समामनन्ति (रु) तानि तु प्रकृते असभवात् प्रकरण बाधित्वा तल्लिङ्गानुरोधेन विकृतिषु निवेशयितव्यानि (रु). [3] त्राता—क

(सू) एषेयं विश्वेषां देवानामहं देवयज्यया प्राणैस्सा-
युज्यं गमेयमर्यम्णोऽहं देवयज्यया स्वर्गं लोकं
गमेयं अदित्या अहं देवयज्यया प्रप्रजया पशुभिश्च
जनिषीयेन्द्रस्येन्द्रियावतोऽहं देवयज्ययेन्द्रिया-
व्यन्नादो भूयासमिति [1] यथालिङ्गं वैकृतीः ॥
॥ १ ॥ १५ ॥ ७५५ ॥

[इन्द्रियावत आम्नानफलम् ]

(भा) ऐन्द्राग्नविकारत्वादिन्द्रियावतास्सिद्धे[2] पाठो मन्त्रत्वार्थ [3] ऊहश्चेद-
मन्त्रस्स्यात् ॥

[वैमृधस्य विकृतित्वं तत्फलं च]

विकृतौ भवा–[4] वैकृत्य । वैमृधोऽपि विकृति. । अतः प्रियेणेत्या-
साद्यते ॥

---

[इन्द्रियावत आम्नानफलोपपत्तिः]

(वृ) ऐन्द्राग्न–त्वार्थः–स्यात्—इन्द्रस्येन्द्रियावत इत्यस्यैन्द्राग्न-
विकारत्वादिन्द्रियाव्यन्नाद इति सिद्धे पुन पाठो मन्त्रत्वार्थः ऊहश्चेदमन्त्र-
स्स्यात्। अत एषा श्रेषे यजुर्भ्रेषप्रायश्चित्तम्। एषां वैकृताना मन्त्रत्वात्
यथालिङ्ग वैकृतीरिति । विकृतौ भवा वैकृती—वैकृतीर्देवता[5]
अभिधायानुमन्त्रणम् ॥

वैमृधोऽपि–साद्यते—यद्यपि पौर्णमास्यङ्गम्, तदर्थं वैकृत-
मन्त्रगणे पाठः ॥

---

1 एतैर्यथालिङ्ग वैकृतीर्देवता इष्टा अनुमन्त्रयत इत्यर्थ । एवञ्च एषा प्रत्यक्षसंमा-
म्नानात् सर्वेष्वप्येतद्देवत्येषु हविष्षु हविस्सामान्याविरोधेषु एतान्येवानुमन्त्रणानि भवान्ति
न प्राकृतान्यूह्यन्ते (रु) 2 सिद्धे घ 3 ऊहश्चेव ? 4 वैकृतदेवताभिधायकानु-
मन्त्रणम्–घ. I वैकृतीर्देवता अभिसधाया (मु रा ) II. 5 देवताभिधान-
कानुम (पा)

(सू) अग्निर्मा दुरिष्टात्पात्विति प्राशि[1]त्रमवदीय-
मानम् ॥ २ ॥ १६ ॥ ७५६ ॥

(सू) सुरूपवर्षवर्ण एहीतीडाम्[2] ॥३॥१७॥ ७५७॥

[इडाभिमन्त्रणदशा श्रौताहरणरूपं पक्षान्तरं च]

(भा) सुरूपवर्षवर्ण एहीतीडामवदीयमानाम् । तामाह्रियमाणा[3]मित्यु-
त्पत्तिरेवाऽऽहरणमिडायाः । केचिद्भक्षायाह्रियमाणाया विकल्पमिच्छन्ति ।

[वरुणप्रघासेष्वनूह इडामन्त्रस्य]

देव्या इडाया अभिधानात् इडाद्वित्वेऽप्यनूहो वरुणप्रघासेषु ।

(सू) भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि
दधिष एहीड एहि सूनृत एहीतीडाया उपांशूपहवे
सप्त दे[4]वगवीर्जपति चिदसि मनासि धीरसि

---

[मन्त्रस्येडाविषयत्वहेतुः]

(वृ) सुरूप—यमानाम् इति—प्रकृतत्वेनानु[5]षङ्गात् ।

[उत्पत्तेराहरणरूपतोपपत्तिः]

तामाह्रि—डायाः —उत्पत्तिश्चावदान तदेवाहरणम् ।

केचिद्भ—च्छन्ति—इडाधेनुरित्यनेन मन्त्रेणाहरणरूपेणैव
चोदिताहरणस्य विद्यमानत्वात् ॥

[भाष्यदर्शितानूहहेतुविवरणम्]

देव्या—सेषु—वृष्टिर्वा इडेति वृष्ट्यादिदेवतेडाभिधानात्
वरुणप्रघासेष्विडाद्रव्यद्वित्वेऽपि देवताभेदाभावादिड एहीत्यादीना-
मनूहः ॥

---

1 हविर्ग्रहणादवदानेऽपि सकृदेव मन्त्र यथा चैव तथा ब्रह्मत्वे व्याख्यातम् (रु). 2 अवदीयमानामित्यनुषङ्ग । सकृदत्रापि मन्त्र पूर्ववत् (रु). 3 आह्रियमाणाम्—आवदाय होतृसमार्पमानीयमानाम् इति सायणभाष्यम् । 4 देवगव्यभिधायिनो मन्त्रा देवगव्य इत्युच्यन्ते तथा मनुष्यगव्य (रु) 5 नानुगतत्वात् (मु रा).

(सू) रन्ती [1] रमतिः सूनुस्सूनरीत्युच्चैरुपह्वे सप्त मानुष-गवीः । देवीर्देवैरभिमा निवर्तध्व॰ स्योनास्स्योनेन घृतेन मा समुक्षत नम [2] इदमुदं भिषगृषिर्ब्रह्मा यद्दद् समुद्रादुदचन्निव स्रुचा वागग्रे [3] विप्रस्य तिष्ठति शृङ्गेभिर्दशन्निति च ॥ ४ ॥ १८ ॥ ७५८ ॥

(सू) उपहूयमानायां [4] वायविडा ते मातेति होतार-मीक्षमाणो वायुं मनसा ध्यायेत् ॥ ५ ॥ १९ ॥ ॥ ७५९ ॥

[वायोर्मनसा ध्याने पक्षभेदः]

(भा) वायविडा ते मातेत्यस्यैव ध्यानम् । उपदेशोऽधिक वायुष्टे वत्स इति ॥

(सू) सा मे [5] सत्याशीरित्याशीष्षु । आशीर्म उर्ज-मिति च [6] ॥ ६ ॥ २० ॥ ७६० ॥

---

[भाष्यदर्शितध्यानमन्त्रपक्षद्वयविवरणम्]

(वृ) वायविडा–ध्यानम्—वायविडा ते मातेत्युच्यमानावस्थाया-मेव वायोर्ध्यानम् ॥

उपदेशो–त्स इति—वायुर्वत्सो यर्हीत्युपक्रम्य वायु मनसा ध्यायेदिति निर्देशात् वायोर्वत्सरूपत्वनिर्देशेनाभिध्यान कर्तव्यमिति वायविडा ते मातेत्यस्मादाधिक वायुष्टे वत्स इति ध्यानमित्युपदेशः ॥

---

[1] रमतिस्सूनरी ?—क [2] इदमुपद ?—क ख [3] विप्रेऽभितिष्ठति—क.
[4] वाय्विडाते —क वायव इडा—ख वायो वत्सभूतस्य ते इडा मातेति ध्यानप्रकार-विधि न तु मन्त्र तथा ब्राह्मणे व्यक्तत्वात्, 'वायुर्वत्स' इति प्रकृत्य वायु मनसा ध्याये-न्मात्रे वत्समुपावसृजतीति' (रु) [5] सत्याशीरित्याशीर्म—ख [6] जपतीति शेष । अयं च जप सोमेष्टिष्वपि भवत्येव । एकस्या आशिषो विद्यमानत्वात् । तत्र तु अस्मास्विन्द्र इन्द्रियमित्यादि निवर्तते (रु)

(सू.) इडाया अहं देवयज्यया पशुमान् भूयासमित्युपहूताम् । इडा धेनुस्सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना । सा नो अन्नेन हविषोत गोभिरिडाभ्यस्मा॑ आगादिति भक्षायाऽऽह्रियमाणा[1]म् ॥ ७ ॥ २१ ॥ ७६१ ॥

(सू.) उक्त इडाभक्षो [2] मार्जनी [3] च ॥८॥२२॥७६२॥

[पुनर्विहितमन्त्रविषये व्यवस्थापक्षभेदः]

(भा) उक्तस्य याजमानस्य कस्यचित्पुनरनुक्रमणाद्यन्नानुक्रान्तं तत्प्रवसद्याजमाने न[4] वक्तव्यमिति केचित् ॥

[प्रवसतो न भक्षादि]

न त्वेवमिडाभक्षश्शेषसंस्कारोऽपि । अतो भक्षाभावान्निवर्तते प्रवसतो भक्षमन्त्रः । [5]मार्जनं च दृष्टसंस्कारः अतो निवर्तेत[6] [7]मार्जनम् । प्रैषा प्रत्यगाशिषो न भवन्त्यन्वाहार्यदानं च ॥

---

[पुनरनुक्रमणस्थलप्रदर्शनेन भाष्यार्थः]

(वृ) **उक्तस्य याज—मिति केचित्**—आध्वर्यवोक्तस्य भक्षणमन्त्रस्य[8] पुनर्विधानात् पुनर्वचनैरनुक्रान्तानां प्रवसद्याजमाने प्रयोगाभाव इति केचित् ॥

[प्रवसतो भक्षाद्यभावोपपत्तिः]

**न त्वेवमिडाभक्षः—न्वाहार्यदानं च**—वृष्ट्यादिदेवतासंबन्धेनादृष्टार्थत्वे हविश्शेषप्रतिपत्तिसंस्कारार्थतया प्रयुक्तत्वादृत्विग्भिरेव सर्वशेषभक्षणं कर्तव्यम् । प्रवसतस्तु यजमानस्य भक्षाभावात् मन्त्रलोपः प्राप्तः । मार्जनं च दृष्टसंस्कारः—भक्षयितृसंस्कारः. अतो निवर्तेत मार्जनं मन्त्रश्च । प्रैषाः प्रत्यगाशिषो न भवन्त्यन्वाहार्यदानं च प्रवसतः ।

---

[1] उभयत्रानुमन्त्रयत इति शेषः (रु).  [2] भक्षो भक्षणम् । [3] मार्जनीशब्देन मार्जनं लक्ष्यते तदुभयमुक्तमाध्वर्यव एव यजमानस्यापि, तन्नेदानीं विस्मर्तव्यम् (रु)  [4] न कर्तव्यमिति—घ  [5] मार्जनं दृष्ट (मु रा.)  [6] निवर्तते (मु रा).  [7] तैत । प्रैषा —घ.  [8] मार्जनमन्त्रस्य च पुन.—क. घ.

(भा) अत एवंविधानामपि प्रयोग प्रवसद्याजमाने कथ स्यादिति पुनरनुक्रमणम् ॥

(सू) अग्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसद्दिशां क्लृप्तिरसि दिशो मे कल्पन्ता कल्पन्तां मे दिशो दैवीश्च मानुषीश्चाहोरात्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्ता-मृतवो मे कल्पन्ताꣳ संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां म इति बर्हिषि पुरोडाशमासन्न-मभि[1]मृशति ॥ ९ ॥ २३ ॥ ७६३ ॥

दशमी खण्डिका ॥

---

(सू) अथैनं प्रतिदिशं [2]व्यूहत्याशानां त्वाशापाले-भ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् । अग्न पाहि भजतां भागी भागं मा भागो भक्त निरभागं भजामः । अप-स्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिदꣳ हविस्सौम्यानाꣳ सोमपीथिनाम् । निर्भक्तो ब्राह्मणो नेहाब्राह्मण-स्यास्ति[3] । उपहूतो द्यौः पितोपमां द्यौः पिता

---

(वृ) अत एवं--क्रमणम्---उ (एवमर्थमु)क्त इडाभक्षो मार्जन च उक्तः प्रैष. अन्वाहार्यस्य च दानमिति ॥

---

[1] चतुर्धा कृत्वा सहनिहत पुरोडश मन्त्रेणाभिमृशति (रु) [2] व्यूहति-विभज्य गमयति सकृदुक्तेन मन्त्रेण -रु. [3] सीत्युपहूतो ?—क.

(सू) ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्या-
योपहूता पृथिवी मातोपमां माता पृथिवी
ह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्या-
येत्याग्नीध्रभागस्य [1]वैशेषिकम् ॥१॥२४॥७६४॥

[पुरोडाशस्य व्यूहनाभिमर्शनव्यादेशाः]

(भा) [2]कृते व्यूहने व्यादेशस्तमभिमृशति तमभिमृशेदिति प्रतिदिश व्यूढस्येद ब्रह्मण इत्यादिव्यादेश उपपद्यते ॥

(सू) [3]ब्रह्म पिन्वस्वेत्यन्तर्वेद्यन्वाहार्यमासन्नमभि-
मृशति । इयं स्थाल्यमृतस्य पूर्णा सहस्रधार
उत्सो अक्षीयमाणः । स दाधार पृथिवीमन्तारिक्षं
दिवं च तेनौदनेनातितराणि मृत्युमिति च ॥
॥ २ ॥ २५ ॥ ७६५ ॥

[अन्वाहार्यानुमन्त्रणमन्त्रस्थभागपदार्थोपपत्तिः]

(भा) बहून्यपि द्रव्याण्येको भाग । तस्माद्दक्षिणासु ब्रह्मेत्यस्यानूहः ॥

---

[ब्राह्मणदर्शिताभिमर्शनसमकालताव्यादेशस्य]

(वृ) कृते व्यू—पपद्यते इति—आशानामित्यादि नेहाब्राह्मणस्या-स्तीत्यन्तेन व्यूहने कृते व्यादेशः । तमभिमृशेदिति ब्राह्मणे विधानात् तमभिमृशता व्यादेशः ॥

बहून्यपि–स्यानूहः—विकृतिष्वप्यनेकदक्षिणासु प्रजापते-र्भागोऽसीत्येव ॥

---

[1] व्यूहनमिति विपरिणामेन सबन्ध । पूर्वं तु व्यूहन चतुर्णां भागाना साधारणम् । इद चाग्नीध्रभागस्य वैशेषिकमित्यर्थ । तत्तु आग्नीध्रभागस्येति वचनात् इद ब्रह्मण इत्यादिषु व्यादिष्टेषु भागेष्विति द्रष्टव्यम्—रु [2] कृतेव्यूहन—ड [3] प्रथम-मन्त्रस्य सर्वत्र अविकार भागाभिधानात् । द्वितीये तु आदित पदचतुष्टयस्य ओदनस्थाल्यभिधायिन अन्यत्र तदभावे लोप । सहस्रधाराक्षीयमाणशब्दयोश्च लिङ्गस्याविकार उत्सविशेषणत्वात् । शेषस्तु यथार्थमूह्य (रु)

[पयश्शब्दघटितानुमन्त्रणसाधारण्यम्]

(भा) उदकस्य पयश्शब्देनाभिधानादक्षीरेऽप्यन्वाहार्ये [1] पयस्वा-नित्यस्यानिवृत्ति । दक्षिणान्तरे च पाञ्चभौतिकत्वात् ॥

(सू) [2] **उक्तस्संप्रैषोऽन्वाहार्यस्य च दानम् ॥ ३ ॥ २६ ॥**
॥ ७६६ ॥

[अन्वाहार्यदानार्थप्रैषे पक्षभेद.]

(भा) उक्तस्सप्रैष इति—उभौ सप्रैषौ उत्तरत परीतेत्यपि । प्रथम इति उपदेश ॥

(सू) **एषा ते अग्ने समिदित्यानूयाजिका समिध-माधीयमानाम् । यं ते अग्न आवृश्चाम्यहं वा**

---

[पयश्शब्दघटितानुमन्त्रणस्य साधारण्यनिर्वाहः]

(वृ) **उदकस्य—मन्त्रानिवृत्तिः**—क्षीरे भवतीत्येक इति वैकल्पि-क[3]त्वेऽपि ॥

**दाक्षिणा—कत्वात्**—अनूहः सर्वदक्षिणानां पञ्चभूतसमावेशात् । उर्जस्वान् पयस्वानित्यविकार ॥

[भाष्यदर्शितपक्षद्वयाशय याजमानत्वनिर्वाहश्च]

**उक्तस्सं—तेत्यपि**—यद्यप्युक्तस्सप्रैष इत्येकवचनान्तम् ; तथाऽपि यजमान आह दक्षिणत एतेति परनियोगरूपत्वात् प्रैषत्वात् । उत्त-रत. परीतेति प्रतिग्रहीतॄणामविशेषेणाध्वर्योरपि प्रेष्यत्वाद्याजमानत्वम् ॥

**प्रथम इत्युपदेश इति**—यजमान आह दक्षिणत एतेति तत्रैवोक्तत्वात् ॥

---

[1] पयस्वानिति मन्त्रानिवृत्ति -घ [2] उक्त इडा भक्ष इतिवद्व्याख्या । संप्रैष इति च 'दक्षिणत एत उत्तरत परीत' इति द्वयोरपि सप्रैषयो ग्रहणम् तथा तत्र दर्शितत्वात् (रु) [3] त्वेन–घ.

(सू) क्षिपितश्चरन् । [1]प्रजां च तस्य मूलं च नीचै-र्देवा निवृश्चत । अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतो मा तस्यो-च्छेषि किञ्चन । यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम् । सर्वाँ स्तानग्ने सन्दह याँश्चाहं द्वेष्मि ये च माम् [2]इत्याहितायामग्निम् ॥४॥ २७॥ ७६७॥

[एषा त इत्यस्यावृत्तिः क्वचित् ]

(भा) एषा ते अग्न इत्यावृत्तिर्वरुणप्रघासेषु[3] ॥

(सू) [4]वेदिर्बर्हिः शृतं हविरिध्मः परिधयस्स्रुचः । आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः । संमे सन्तनयो नमन्तामिध्मसंनहने हुते इति [5]संमार्गानृहुतान् ॥५॥ २८॥ ७६८॥

(सू) [6]सप्तहोतारं वदेत्पुरस्तादनूयाजानामुपरिष्टाद्वा ॥ ६ ॥ २९॥ ७६९॥

एकादशी खण्डिका ॥

---

[भाष्यदर्शिव्यावृत्त्युपपत्ति ]

(वृ) एषा ते–घासेषु—समिधमाधीयमानामित्याधीयमानसमिदभि-मन्त्रणार्थत्वात् प्रतिप्रस्थात्रा समिदाधानादेकवचनत्वाच्चावृत्ति ॥

---

[1] प्रजा तस्य–क [2] इदं रुद्रदत्तीयपाठे न दृश्यते । [3] इत उत्तर ग्रन्थो लुप्त ग –पुस्तके [4] बर्हिश्शृतम् ?–क [5] समार्गा —इध्मसनहनानि तेषा च हुतत्व-निर्देश इध्मसनहने हुते इति एतदस्तु हुत तव स्वाहेति च मन्त्रानुकरणाद्द्रष्टव्य (रु). [6] सप्तहातुरनूयाजाङ्गत्वात् अननूयाजे उदनीये न भवति (रु).

[सप्तहोतृजपावसर.]

(भा) सप्तहोताऽनूयाजाङ्गम् ॥

(सू) बर्हिषोऽहं देवयज्यया प्रजावान् भूयासमित्येतैः प्रतिमन्त्रमनूयाजान् हुतं हुतम् ॥ १ ॥ ३० ॥ ॥ ७७० ॥

(सू) [1] उभौ वाजवत्यौ जपतः ॥ २ ॥ ३१ ॥ ७७१ ॥

[व्यूहनेऽनङ्गता तत्फलं च]

(भा) न तु व्यूहनम्। तस्मादननूयाजेऽपि कार्यम्। अध्वर्योरपि जपो वाजवत्यादीनाम् ॥

(सू) वसून् देवान् यज्ञेनाऽपिप्रे॰ रुद्रान् देवान् यज्ञेनापिप्रेमादित्यान् देवान् यज्ञेनापिप्रेमिति प्रतिमन्त्रं परिधीनज्यमानान् समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिस्संमरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहेति प्रस्तरमज्यमानम् ॥ ३ ॥ ३२ ॥ ७७२ ॥

---

(वृ) सप्तहोताऽनूयाजाङ्गम्—सप्तहोतुः पुरस्तादनूयाजानामुपरिष्टाद्धेति । अतोऽननूयाजे न भवति ॥

[व्यूहनस्य तदङ्गताप्रतिषेधहेतुः]

न तु व्यूहनम्—इतरावनुसमिधेत्यादि वाजवतीभ्यां व्यूहतीति समानकर्तृकत्वेऽपि नानूयाजाङ्गं व्यूहनम् अनूयाजसम्बन्धाविधानाभावात् ॥

[वाजवतीजपे चातुस्वर्यम्]

तस्मादननू—त्यादीनाम्—उभौ जपत इति वचनात् । अध्वर्योरपि चातुस्स्वर्येण व्यूहनमन्त्रप्रयोगः ॥

---

1 उभयोर्याजमानाध्वर्यवकाण्डयोः पाठादिति भावः (रु).

(सू) अग्नेरहमुज्जितिमनूज्जेषमिति यथालिङ्गं सूक्तवाकदेवताः[1] ॥ ४ ॥ ३३ ॥ ७७३ ॥

[उज्जित्युपस्थाने मतिभेदः]

(भा) उपांशुदेवताया नोज्जितिरपरिपाठात्। तथाऽऽज्यपानाम्। उपांशुदेवताया एवोज्जितिर्नाज्यपानामित्युपदेशः ॥

(सू) यदा चास्य होता नाम गृह्णीयादथ ब्रूयादे[2]मा अग्मन्नाशिषो दोहकामा इति ॥५॥३४॥७७४॥

(सू) [3]सा मे सत्याशीर्देवान् गम्याज्जुष्टाज्जुष्टतरा [4]पण्यात्पण्यतराऽरेडता मनसा देवान् गम्याद्यज्ञो देवान् [5]गच्छत्वदो म आगच्छात्विति सूक्तवाकस्याशीष्षु यत्कामयते तस्य नाम गृह्णाति ॥ ६ ॥ ३५ ॥ ७७५ ॥

---

[उपांशुदेवताया उज्जित्युपस्थानसमर्थनम्]

(वृ) उपांशुदे—त्युपदेश इति—अपठितत्वेऽपि दर्शपूर्णमासयोरेव देवताना यजमान उज्जितिमिति सर्वदेवतानामविशेषनिर्देशात् यथालिङ्ग सूक्तवाकदेवता इति सूत्रकारवचनाच्च उपांशुदेवताया अप्युज्जितिः। आज्यपानां त्वप्रधानत्वादपरिपठितत्वाच्च निवृत्तिः ॥

---

[1] सूक्तवाके कीर्तिता देवता। ता तल्लिङ्गाभिरूज्जितिभिरुपतिष्ठतेऽनुमन्त्रयते वा। यथालिङ्गमिति समाम्नायसिद्धाना मन्त्राणा लिङ्गवशेन विनियोगात् अनाम्नाताया उपांशुदेवताया आज्यपाना च नोज्जित्युपस्थानम्। अथवा तन्मन्त्रयोरपि शाखान्तरीय पाठोऽनुमीयेत निर्वापादिष्वैवैन्द्राग्नमन्त्रस्य। कुत ? सूक्तवाकदेवता इत्यविशेषवचनात्। सत्याषाढवचनाच्च–(रु) [2] सोमेष्टिषु आशिष एकत्वात् एयमगन्नाशीर्दोहकामेत्यूह (रु). [3] अविकृत एवायं मन्त्रः सोमेष्टिषु (रु). [4] पण्या पण्यतरा–क [5] गच्छतु यज्ञो म आ ?–क

(सू) रोहितेन त्वाऽग्निर्देवतां गमयत्वित्येतैः प्रतिमन्त्रमग्नीधा प्रस्तरं प्रह्रियमाणम् ॥ ७ ॥ ३६ ॥ ॥ ७७६ ॥

[ प्रस्तरप्रहरणानुमन्त्रणावृत्तिः क्वचित् ]

(भा) रोहितेनेत्यावृत्तिर्वरुणप्रघासेषु ॥

(सू) दिवः खीलोऽवततः पृथिव्या अध्युत्थितः । तेनासहस्रकाण्डेन द्विषन्तꣳ शोचयामासि । द्विषन्मे बहुशोचत्वोषधे मो अहꣳशुचमिति प्रस्तरतृणे प्रह्रियमाणे[1] ॥ ८ ॥ ३७ ॥ ७७७ ॥

(सू) विते मुञ्चामीति परिधिषु [2] विमुच्यमानेषु ॥ ९ ॥ ३८ ॥ ७७८ ॥

[अस्यानुमन्त्रणस्याग्निसंस्काररूपता तत्फलं च]

(भा) विते मुञ्चामीत्यग्निविमोक ॥

---

[प्रस्तरप्रहरणकालभेदात्तन्मन्त्रावृत्ति ]

(वृ) रोहितेनेत्यावृत्तिर्वरुणप्रघासेषु—अग्नीधा प्रस्तर प्रह्रियमाणमिति वर्तमानाभिमन्त्रणत्वात् प्रह्रियमाणकालभेदादावृत्ति. ॥

[विमोकस्य अग्निसंस्कारता]

वितेमु—मोक इति—परिधिषु प्रह्रियमाणेष्वित्युक्तेऽपि एष वा अग्नेर्विमोक इति निर्देशात् विते मुञ्चामीति युष्मच्छब्देनाग्नेः प्रधानतया निर्देशाच्च तत्संस्कारता । तथा परिधीनामपि विमोचन प्रहरणार्थतया प्राप्तम् । अत उभयार्थत्वेऽप्यग्निसंस्कारस्य प्रधानत्वम् ॥

---

1 जपतीति शेष (रु). 2 परिधिषु ततस्ततो देशात् प्रह्रियमाणेष्विति यावत् । विमुच्यमानेष्विति वचन एष वा अग्नेर्विमोक इति ब्राह्मणव्याचिख्यासया । परिधियोगे पूर्वं युनज्मित्वेति युक्तस्याग्ने इदानीं परिधिविमोके वितेमुञ्चामीति विमोकाभिसन्धानमेव विमोक इति (रु)

(भा) अंत· परिधिद्वित्वेऽपि नोह्यते पित्र्यायाम् ॥

(सू) विष्णोश्शंयोरिति शंयुवाके। यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे सन्तिष्ठस्व स्योनेन मे सन्तिष्ठस्व सुभूतेन मे सन्तिष्ठस्व ब्रह्म वर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनुसंतिष्ठस्वोपते यज्ञ नम उपते नम उपते नम इति च। इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभिराशीर्दा वसुभिराशीर्वान्। अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहागमेरिति सꣳस्रावꣳ हुतम्॥ १० ॥ ३९॥ ७७९ ॥

द्वादशी खण्डिका ॥

इति आपस्तम्बश्रौतसूत्र धूर्तस्वामिभाष्ये चतुर्थप्रश्ने तृतीय पटल ॥

---

सू) सोमस्याहं देवयज्यया सुरेता रेतो धिषीयेति यथालिङ्गं [1] पत्नीसंयाजान् हुतꣳ हुतम् ॥ १ ॥ १ ॥ ॥ ७८० ॥

[व्यवधानेऽप्यनुमन्त्रणं सिध्यति]

(भा) विहृतेज्यायामपि देवपत्नीना गृहपतेश्च समानमनुमन्त्रणम् ॥

---

(वृ) अतः परिधि–पित्र्यायाम्—विरश्मीन् भागधान् इत्यनयोः परिध्यभावे चानिवृत्ति. ॥

इत्यापस्तम्बश्रौत धूर्तस्वामिभाष्यवृत्तौ तुरीये प्रश्ने तृतीय पटल ॥

---

[व्यवधानेऽप्यनुमन्त्रणस्य साधनम्]

विहृतेज्या–न्त्रणमिति—उपरिष्टाद्वा देवपत्नीभ्य इत्यस्मिन्

---

[1] देवपत्नीना गृहपतेश्च यागान्तरव्यवायेऽपि समानमनुमन्त्रण मन्त्रालिङ्गात् (रु)

(सू) राकाया अहं देवयज्यया प्रजावान् भूयासं सिनीवाल्या अहं देवयज्यया पशुमान् भूयासं कुह्वा अहं देवयज्यया पुष्टिमान् पशुमान् भूयासमिति [1] काम्याः ॥ २ ॥ २ ॥ ७८१ ॥

[काम्याकाम्यसाधारणमनुमन्त्रणम्]

(भा) काम्या इति–अकाम्या [2] अप्येता एवोपलक्ष्यन्ते ॥

(सू) राकाया अहं देवयज्यया प्रजावती भूयासं सिनीवाल्या अहं देवयज्यया पशुमती भूयासं कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयासमिति पत्न्यनुमन्त्रयते ॥ ३ ॥ ३ ॥ ७८२ ॥

(सू) इडास्मानत्तुवस्तां [3] घृतेन यस्याः पदे पुनते देवयन्तः । वैश्वानरी शक्वरी वावृधानोपयज्ञमस्थित वैश्वदेवीत्याज्येडाम् ॥ ४ ॥ ४ ॥ ७८३ ॥

---

(वृ) पक्षे राकादिसपत्नीयहोमव्यवहितत्वेन गृहपतीज्यायामपि गृहपतेः पश्चात्तन्त्रेणानुमन्त्रण देवाना पत्नीरग्निर्गृहपतिरिति मन्त्रस्य तन्त्रपाठात् प्रकृतौ मन्त्रविकारानुपपत्ते. ॥

[भाष्यदर्शितसाधारण्यनिर्वाहः]

काम्याअ–लक्ष्यन्ते––काम्या इत्युक्तेऽपि नित्यपक्षे एता एवाशिष उपलक्ष्यन्ते । अन्येषां हुतानुमन्त्रणानामनुक्तत्वान्नित्यानामपि फलाशासनरूपहुतानुमन्त्रणोपपत्ते ॥

---

[1] काम्यग्रहणेन काम्यदेवता उपलक्षयति न तु नित्या व्यावर्तयति । तेन आविशिष्टमनुमन्त्रण नित्यत्वेऽपि (रु). [2] अपि ता एवो–ख ग घ [3] घृतेनेत्युदकाभिधानान्मासेडायामप्यनूह (रु)

[क्वचिदनूहेनोपहवो याजमानं च]

(भा) इडाद्वयस्यानूहेनोपहवो वरुणप्रघासेषु देवताऽभिधानात् । तन्त्रेण च याजमानम् ॥

(सू) अन्तर्वेदि वेदं निधायाभिमृशति वेदोऽसीति ॥ ॥ ५ ॥ ५ ॥ ७८४ ॥

(सू) पुरा विदेयेति यद्यभ्रातृव्यस्या[1]भिध्यायेत्तस्य नाम गृह्णीयात् तदेवास्य सर्वं वृङ्क्ते इति विज्ञायते ॥ ६ ॥ ६ ॥ ७८५ ॥

[अभिध्यानसदसद्भावपक्षयोः अभिमर्शने विशेषः क्वचित्]

(भा) यद्यभ्रातृव्यस्याभिध्यायेदिति काम्यम् । पुरा विदेयशब्दात्

---

[अनूहेनोपहवोपपत्तिः]

(वृ) इडाद्वय–धानादिति —वृष्ट्यादिदेवतारूपेडाया उपहवाद्वरुणप्रघासेष्वपि देवतैक्यान्न द्विवचनेनोह ॥

तन्त्रेण च याजमानम्—अनूहेन ॥

[अभिध्यानपक्षभेदोपपत्तिः]

यद्यभ्रा–काम्यम्—भ्रातृव्यसबन्धिन. कस्यचिदात्माभिल[1]षितस्य च ध्यान काम्यम् ॥

पुरा विदेयेति–द्रव्यस्य—वेदोऽसि वित्तिरसीत्युक्त्वा शत्रुनाम गृहीत्वा विदेय कर्मासीत्यादि । अत्र तु शत्रोरनर्थकामना यतो विदेयेति लाभवचनादात्माभिल[3]षितध्यान मन्त्रेण । वेदाभिमर्शनस्य नित्यत्वेऽपि फलध्यान काम्यम् ॥

---

[1] तत्र विदेयेत्येतच्छब्दात् पूर्वं भ्रातृव्यस्य स्व गोहिरण्यादि अभिध्यायेत् । इदं मे स्यादिति तस्य नाम गृह्णीयात् । असति तु कामे यथाऽऽम्नातो मन्त्र (ख)

[3] लक्षित–क

नामग्रहण [1] शत्रुद्रव्यस्य । असत्यपि कामे न मन्त्रलोप । अभिमर्शनावृत्तिर्वरुणप्रघासेषु । स्वस्या स्वस्या वेद निधाय वेद्याम् ॥

**(सू)** **या सरस्वती विशोभगीना तस्यां मे रास्व तस्यास्ते भक्तिवानो भूयास्मेति फलीकरणहोमे हुते [2] मुखं विमृष्टे ॥ ७ ॥ ७ ॥ ७८६ ॥**

[मुखविमार्गे पक्षभेदेन प्रवृत्तिनिवृत्त्यादि]

**(भा)** मुखविमार्ग· फलीकरणहोमाङ्ग तेनोपलक्षणात् । तस्मात्सान्नाऽय-तन्त्रासु निवर्तते । अनुत्कर्षपक्षे पुनः पुन क्रियते सवनीयानाम् ॥

---

**(वृ)** **असत्यपि कामे न मन्त्रलोपः**—मन्त्रस्य नित्याभिमर्शनसाधनत्वात् । पाक्षिकलाभाभिप्रायेण विदेयशब्दोपपत्त ॥

[अभिमर्शनावृत्त्युपपत्तिः]

**अभिमर्शनावृ–निधाय वेद्याम्**—पर्यायेणाभिमृशति । [3] वेद-वेद्योस्संस्कारत्वादभिमर्शनस्य तत्तद्वेद तस्या तस्या निधाय पर्यायेणाभिमृशति ॥

[फलीकरणहोमाङ्गत्वहेतुविवरणम्]

**मुखविमार्गः–निवर्तते**—फलीकरणहोमे हुते मुख विमृष्टे इति तत्सबन्धावगतेः ॥

[सवनीयेष्वावृत्तिपक्षोपपादनम्]

**अनुत्कर्ष सवनीयानाम्**—न ह्येतेषा प्रासङ्गिकवैशेषिकमुत्कर्षतीत्यस्मिन् [4] पक्षे प्रतिसवन फलीकरणभेदात् तद्धोमार्थं मुखविमार्गावृत्ति ॥

---

[1] शत्रो शत्रुद्रव्यस्य वा—ग. [2] मुखविमार्गोऽयं फलीकरणहोमसयोगात् तदङ्गम्; अत अनौषधतन्त्रेषु निवर्तते (क) [3] एतदादि ख. ग. घ –कोशेषु न दृश्यते [4] (१२–२५–१४, १५) (आप श्रौ)

(सू) वसुर्यज्ञो वसुमान् यज्ञस्तस्य मा यज्ञस्य वसो-र्वसुमतो वस्वागच्छत्वदो म आगच्छत्विति समिष्ट-यजुर्हुतमनुमन्त्रयते यत्कामयते तस्य नाम गृह्णाति ॥ ८ ॥ ८ ॥ ७८७ ॥

(सू) संयज्ञपतिराशिषेति यजमानभागं प्राश्नाति ॥ ॥ ९ ॥ ९ ॥ ७८८ ॥

त्रयोदशी खण्डिका ॥

---

(सू) दधिक्राव्णो अकारिषमिति सायं दोहम् । इद्ँ हविरिति प्रातर्दोहम् ॥ १ ॥ १० ॥ ७८९ ॥

[क्वचित्स्वाहाकारान्तःपक्षान्तरं च]

(भा) इदं हविरिति सौत्रामणि·[1] स्वाहाकारान्तः । इद हवि-रित्येतावानुपदेशः ॥

(सू) [2]नाब्राह्मणस्साम्नाय्यं प्राश्नीयात् ॥ २ ॥ ११ ॥ ॥ ७९० ॥

---

[यत्कामयते इति सूत्रभागाशयः]

(वृ) यत्काम–गृह्णातीति—अदश्शब्दस्थाने उत्तरां देवयज्या-माशास्ते इति पुन· पुनर्यज्ञप्राप्तेरपेक्षितत्वाद्यज्ञो म आगच्छत्विति निर्देशः । अन्यदपि यत्कामयते तस्य नाम गृह्णाति ॥

[उपदेशपक्षाभिमतो हेतुः]

इदं हविरिति–त्युपदेश इति—प्रकरणपाठितत्वात्तस्य ॥

---

[1] सौत्रामणिक –घ I. सौत्रामणीक (मु पु. II.१९-७-१३ आप. श्रौ)
[2] क्षत्रियवैश्यौ न साम्नाय्येडा यजमानभागौ प्राश्नीत· (रु).

[सान्नाय्यपदग्राह्यार्थः]

(भा) सान्नाय्येडाया· सान्नाय्ययजमानभागस्य च क्षत्रियवैश्ययोः प्रतिषेध· ॥

(सू.) अन्तर्वेदि प्रणीतास्वध्वर्युस्संततामुदकधाराꣳ स्रावयति । सदसि सन्मे भूया इत्यानीयमानायां जपति ॥ ३ ॥ १२ ॥ ७९१ ॥

(सू.) प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्येतैर्य[1]थालिङ्गं [2]व्युत्सिच्य समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पय इत्यन्तर्वेदि शेषं निनीय यद्प्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्धि सरस्वति । या सरस्वती वैशम्भल्या तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्मेति मुखं विमृष्टे ॥ ४ ॥ १३ ॥ ७९२ ॥

(सू) [3]उभौ कपालविमोचनं जपतः ॥ ५ ॥ १४ ॥ ॥ ७९३ ॥

---

[निषेधबीजं निषिद्धसाजात्यातिदेशः]

(वृ) सान्नाय्येडा–प्रतिषेधः—नाब्राह्मणस्सान्नाय्यं प्राश्नीयादिति निषेधात् सोमः खलु वै सान्नाय्य इति सोमतुल्यत्वात् राजन्यवैश्ययोस्सोमपानाभावाच्च निवृत्तिः ॥

---

[1] तत्तन्मन्त्रप्रकाशिताया दिशि [2] तेन तेन मन्त्रेणोर्ध्वमप. क्षिप्त्वा (रु)
[3] उभयोरपि आध्वर्यवयाजमानकाण्डयो पाठात् (रु)

[कपालोद्वासनेऽध्वर्युसाहित्यम्]

(भा) सहाध्वर्युणा कपालविमोचनजपः ॥

(सू) **विष्णोः क्रमोऽसीति दक्षिणे वेद्यन्ते दक्षिणेन पदा चतुरो [1] विष्णुक्रमान् प्राचः क्रामत्युत्तरमुत्तरं ज्यायाꣳसमनतिहरन् [2] सव्यम् ॥६॥१५॥७९४॥**

[विष्णुक्रमे विशेषः]

(भा) [3] विष्णुक्रमेषु सव्य [4] पाद न पुरस्तान्नयति ॥

(सू) **[5] नाऽऽहवनीयमतिक्रामति ॥७॥१६॥७९५॥**

[आहवनीयातिक्रमनिषेधस्य निर्विशयो विषयः]

(भा) न चाहवनीयमतिक्रामति । यत्राऽपि परतो वेदिर्वरुणप्रघाससाकमेधापितृयज्ञेषु ॥

---

[अध्वर्युसाहित्योपपत्तिः जपे चातुस्स्वर्यं च]

(वृ) **सहाध्व–जपत इति**—यानि घर्मे कपालानीत्यस्य आध्वर्यवे याजमाने च पाठात् उभयो प्राप्तत्वादुभयोः कपालविमोचनमिति सहत्वार्थं जपत इत्युभयोश्चातुस्स्वर्यार्थम् । अत उभयोस्सह प्रयोगः ॥

[भाष्यदर्शितक्रमणाविशेषे प्रमाणम्]

**विष्णुक्र–न्नयति**—अनतिहरन् सव्य दक्षिणेन पादेन चतुरो विष्णुक्रमानिति वचनात् । इतरथा दक्षिणेनेत्यनर्थकम् । उभयानुवर्तनस्यावश्य भावित्वात् ॥

[वरुणप्रघासादौ विषयप्रदर्शनभाष्याशयः]

**न चाह–यज्ञेषु**—दर्शपूर्णमासविहारे दक्षिणे वेद्यन्ते प्राचः क्रामन् अनतिहरन् सव्यमिति विधानात् आहवनीयातिक्रमणप्राप्तय-

---

[1] विष्णुक्रमानाम तल्लिङ्गमन्त्राविशिष्टा पदविक्षेपाः तान् दक्षिणे वेदिसीम्नि क्रामति । तेषूत्तरोत्तरमधिकान्तरालंक्रामति न च सव्यं पाद कदाचित्पुरस्तान्नयति (रु).
[2] सव्ये–क [3] विष्णुक्रमेषु च (मु पु) [4] पदम्–ग. [5] यत्रापि आहवनीयसीम्न परतो वेदि· सोमपशुचातुर्मास्येषु तत्रापि न तमतिक्रामति (रु)

(सू) [1] अवस्थाय चतुर्थं [2] जपति ॥८॥१७॥७९६॥

[मन्त्रान्ते क्रमणादिप्रतिषेधः]

(भा) तूष्णीमवस्थाय चतुर्थं जपेत् । [3] न मन्त्रान्तेन ॥

(सू) विष्णुक्रमान् विष्ण्वतिक्रमान् अतिमोक्षानिति [4] व्यतिषक्तानेके [5] समामनन्ति विनिरूढानेके ॥ ९ ॥ १८ ॥ ७९७ ॥

---

(वृ) भावात् नाहवनीयमतिक्रामतीति निषेधानर्थक्यात् यत्राहवनीयात्परतो वेदिर्वरुणप्रघाससाकमेधपितृयज्ञेषु तत्राप्याहवनीयात्पश्चादेव विष्णुक्रमणसमाप्त्यर्थः प्रतिषेध इति ॥

[भाष्येऽपेक्षितपदपूरणम्]

**तूष्णीम—[6]र्थं जपेत्—न मन्त्रान्तेन क्रमणम् ॥**

---

[1] चतुर्थं तु क्रमं तूष्णीं क्रान्त्वा अवस्थाय ततो मन्त्र जपति न तु मन्त्रान्ते क्रामतीत्यर्थ । अथवा तृतीय क्रम क्रान्त्वा तत्रैवावस्थाय चतुर्थं मन्त्र जपति न तु तेन क्रामति । चतुरो विष्णुक्रमानिति मन्त्राभिप्राय द्रष्टव्यम् । कस्मात्? विष्णो क्रमत्वेन एषा क्रमाणा स्तवनात् । तस्य चतुर्थक्रमाभावात् । बाधायनाद्युक्तेश्च (रु). [2] जपेद्विष्णुक्रमम्. [3] न मन्त्रान्तेन क्रमणम्—घ [4] व्यतिषक्तानेत्येके ?—क [5] विनिरूढानेत्येके ?—क प्राकृते याजमानकाण्डे त्रीनेतानेके अधीयते व्यतिषक्ताश्च । तान् यथा प्रथम विष्णुक्रमपर्यायमुक्त्वा अथ विष्ण्वतिक्रमातिमोक्षाणा आद्यौ पर्यायौ ततो द्वितीयमुक्त्वा तेषामपि द्वितीयावित्यादि । अन्ये तु त्रीनेतानधीयाना· (विनिरूढान्) अन्योन्यमसङ्कीर्णानधीयते, यथा ‘समाप्य विष्णुक्रमान् ततो विष्ण्वतिक्रमान् ततोऽतिमोक्षानिति’ । तदेवमेते पूर्वेण केवलविष्णुक्रमकल्पेन सह त्रयः कल्पा उक्ता भवन्ति । केचित्तु विष्णुक्रमवत् विष्ण्वतिक्रमातिमोक्षानपि नित्यानिष्ट्वा तेषा व्यतिषङ्गाव्यतिषङ्गमात्रविकल्पमेनमिच्छन्ति, तदयुक्तम्, विष्णुक्रमवत् तेषा स्वरूपस्य अन्यतोऽसिद्धे । न तावदेषा श्रुतितस्सिद्धि दर्शपूर्णमासमन्त्रब्राह्मणप्रकरणयो केवलविष्णुक्रमाणामाम्नानात् । सूत्रेऽपि त एवानन्तरं नित्यवद्विहिता अनूदिताश्च प्रदेशान्तरेषु यथा ‘पूर्णपात्र निनयति विष्णुक्रमान् क्रामति’ इत्यादि । कल्पान्तरेष्वप्यनुपात्ता एव विष्ण्वतिक्रमादय इति न कुतश्चिदप्येषा स्वरूपसिद्धिं पश्याम । तस्मात् व्यतिषङ्गादिविशिष्टस्वरूपमेवैषामत्र विकल्पत इति सूक्तमिति अस्ति केवलो विष्णुक्रमकल्प इति (रु) [6] र्थं विष्णुक्रमम्—क. र्थं विष्णुक्रमजपः—क

[विष्णुक्रमादेर्व्यतिषक्तत्वपक्षस्वरूपम्]

(भा) व्यतिषक्तेषु विष्णुक्रमेणावस्थाय विष्णवतिक्रमातिमोक्षजपः । व्यतिषक्तानेके समामनन्तीति ॥

[वरुणप्रघासेषु विशेषः]

उत्तरे विहारे विष्णुक्रमादि अवेदिसंस्कारत्वाद्वरुणप्रघासेषु ॥

(सू) **अग्निना देवेन पृतना जयामीति विष्णवतिक्रमाः । ये देवा यज्ञहन इत्यतिमोक्षाः ॥ १० ॥**

॥ १९ ॥ ७९८ ॥

---

[व्यतिषङ्गपक्षविवरणम्]

(वृ) **व्यतिषक्तेषु–दानेके इति**—व्यतिषङ्गस्संसर्गः । प्रथमं विष्णुक्रमं कृत्वा विष्णवतिक्रमाणां [1] प्रथमं जपेत् । अथातिमोक्षाणां प्रथमम् । [2] अथ द्वितीयं विष्णुक्रमं कृत्वा द्वितीयविष्णवतिक्रमम् द्वितीयविष्णवतिक्रमातिमोक्षजपः । तथा तृतीये । तूष्णीं चतुर्थं विष्णुक्रमेणावस्थाय तन्मन्त्रजपः । एष विष्णुक्रमविष्णवतिक्रममोक्षाणां व्यतिषङ्गपक्षः ॥

[विनिरूढपक्षविवरणम्]

विनिरू[3]ढस्यैव प्रयोगः, अव्यवधानेन विष्णुक्रमचतुष्टयं कृत्वा विष्णवतिक्रम[4]त्रयमुक्त्वाऽतिमोक्षत्रयं जपेत् । विष्वतिक्रममोक्षाणां देशान्तरविधानाभावात् अन्त्यविष्णुक्रमदेश एव स्थित्वा तेषां जपः । तदाह,—विष्णुक्रमेणावस्थाय विष्णवतिक्रमातिमोक्षजप इति ॥

[भाष्यदर्शितविशेषविवरणम्]

**उत्तरे विहारे–घासेषु**—वेद्यां विष्णुक्रमादिकरणेऽपि न वेदिसंस्कारार्थता । विष्णुरेव भूत्वा यजमान इति वाक्यशेषात् यजमान-

---

1 तथा–घ. 2 तथा–घ 3 ङ पक्षस्यै–घ 4 त्रयं जपित्वा,

(सू.) अगन्म सुवस्सुवरगन्मेत्यादित्यमुपतिष्ठते ॥ ॥ ११ ॥ २० ॥ ७९९ ॥

चतुर्दशी खण्डिका ॥

---

(सू.) उद्यन्नद्य मित्रमहस्सपत्नान्मे अनीनशः द्विवेनान् विद्युता जहि निम्रोचन्नधरान् कृधि । उद्यन्नद्य विनो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय । शुकेषु मे हरिमाणँ रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि । उदगादयमादित्यो विश्वेन सहसा सह । द्विषन्तं मम रन्धयन् मो अहं द्विषतो रधम् । यो नश्शपादशपतो यश्च नश्शपतश्शपात् । उषाश्च तस्मै निम्रुक्च सर्वं पापँ समूहतामिति च ॥ १ ॥ २१ ॥ ८०० ॥

[उपस्थानपुत्रनामग्रहणादात्मसंस्कारत्वम्]

(भा) आत्मसस्कार एवादित्योपस्थान पुत्रनामग्रहण च । [1]तेषां कर्माङ्गत्वात् । उपस्थानस्य कर्तृसस्कारत्वसम्भवात् । पुत्रनामग्रहण च आत्मसम्बन्धित्वादात्मसस्कार ॥

(सू.) ऐन्द्रीमावृतमन्वावर्त इति प्रदाक्षिणमावर्तते ॥ ॥ २ ॥ २२ ॥ ८०१ ॥

---

[1] तेषामकर्माङ्गत्वात्—क घ

**यद्यभिचरेदिदमहम[1]मुष्यामुष्यायणस्य प्राणं निवेष्टयामीति दक्षिणस्य पदः पार्ष्ण्या [2]निमृद्नीयात् ॥ ३ ॥ २३ ॥ ८०२ ॥**

[अत्र नामग्रहणविशेषविवरणम्]

(भा) आमुष्यायणग्रहणेन गोत्रतद्धितेनाभिधानम् । इदमह देवदत्तस्य गार्ग्यस्येति । यत्र त्वन्यदामुष्यायण तत्र तेनैव; यथा वत्सस्य प्राणमिति ॥

[प्रवरेषु विशेषः]

आचार्यामुष्यायणमनुब्रुवीताचार्यप्रवर वृणीतेति प्रवरमामुष्यायणात्पृथ[3]ग्दर्शयति ॥

[आमुष्यायणशब्दार्थे पक्षान्तरम्]

आमुष्यायणग्रहणे पितुर्नामेति हिरण्यकेशिन । देवदत्तस्य याज्ञदत्तेः प्राण निवेष्टयामीति ॥

---

(वृ) सस्कारत्वम् । तस्मादुत्तरे विहारे वरुणप्रघासेषु तस्य मुख्यत्वात् अन्यतरसबन्धिनां तत्रैव युक्तत्वात् । अवेदिसस्कारत्वादिति भाष्यकारेण वेदिसस्कारनिषेधात् वेद्यां दक्षिणतो विष्णुक्रमादि न बहिर्वेदीति सिद्धम् ॥

[तद्धितान्तप्रयोगस्थलम्]

**आमुष्यायण–भिधानम्**—यद्यभिचरेदिदमह इत्यत्र ।

**इदमहं–प्राणमिति**—यथा [4]वैश्यानाम् । इदमह देवदत्तस्य वात्स्यस्य प्राण निवेष्टयामीति, तेषा प्रातिस्विकगोत्राभावात् ॥

---

[1] आमुष्यायणस्येति गोत्रनिर्देश । बबर प्रावाहणिरित्यादिवत्पितृनिर्देश इत्यन्ये [2] भ्रातृव्य पीड्यमान बुध्वा पार्ष्ण्या भूमिं निपीडयेत् (रु). [3] थग्भूतम्–घ [4] वात्सानाम्–ख, ग.

[तद्धितान्तेऽपि कश्चिद्विशेषः]

(भा) जीवति तु वंश्ये युवप्रत्ययः। यथा गार्ग्यायणस्येति ॥

(सू.) पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीरित्युक्त्वा समहं प्रजया संमया प्रजेति [1] पुनरुपावर्तते ॥ ४ ॥ २४ ॥ ८०३ ॥

(सू.) समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याहवनीयमुपसमिन्धे। वसुमान् यज्ञो वसीयान् भूयासमित्युपतिष्ठते ॥ ५ ॥ २५ ॥ ॥ ८०४ ॥

पञ्चदशी खण्डिका ॥

---

[समिन्धनोपस्थानयोः कश्चिद्विशेषः]

(भा) वरुणप्रघासेषु समिन्धनावृत्ति । तन्त्रेणोपस्थानम् ॥

(सू.) यो नस्सपत्नो योरणो मर्तोऽभिदासति देवाः इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किञ्च न ॥ ॥ १ ॥ २६ ॥ ८०५ ॥

(सू.) अग्न आयूꣳषि पवस इत्याग्निपावमानीभ्यां गार्हपत्यमुपतिष्ठते। अग्ने गृहपत [2] इति ॥ २ ॥ ॥ २७ ॥ ८०६ ॥

---

[भाष्यदर्शितविशेषहेतुः]

(वृ) वरुण—नावृत्तिः—आहवनीयभेदात् पृथगवस्थानादिति ॥

---

[1] स्वस्ति पुनरागच्छतीत्यादिवत् प्रतिनिवृत्तिवचन पुनश्शब्द । पुनरुपावर्तते—प्रसव्य आवर्तत इत्यर्थ । तथा उदक् पर्यावर्तते समह प्रजयेति बोधायन (रु) [2] इति च—क अग्ने गृहपते इति मन्त्र शत हि मा इत्यन्त· (रु)

(सू) [1] पुत्रस्य नाम गृह्णाति तामाशिषमाशासे तन्तव इत्यजातस्य अमुष्मा इति जातस्य ॥ ३ ॥ ॥ २८ ॥ ८०७ ॥

[गार्हपत्योपस्थाने नामग्रहाशासनयोर्विशेषः]

(भा) अजातपुत्रो मृतपुत्रोऽपि । तामाशिषमाशास्ते तन्तव इति [2] पुत्रभेदे आवृत्ति ॥

(सू) ज्योतिषे तन्तवे त्वाऽसावनु मा तन्वाच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा छित्सि मा मानुषादिति प्रियस्य पुत्रस्य नाम गृह्णाति ॥ ४ ॥ २९ ॥ ८०८ ॥

---

[भाष्यदर्शितविशेषविवरणम्]

(वृ), अजा—त्रोऽपि—तन्तव इत्यजातस्येत्यजातग्रहणम् । अमुष्मै ज्योतिष्मतीमिति [3] प्रतिपक्षमात्रतया पुत्राभावमात्रपरत्वान्मृतपुत्रस्याप्युपलक्षणम् । अत उभयोस्तामाशिषमाशास इति ॥

---

[1] द्वे एते यजुषी जाताजातयो पुत्रयोर्नामग्रहणार्थे । तयो प्रथमेन प्रथमं अजातपुत्रस्य नाम गृह्णाति तन्तव इति परोक्षनाम्ना । तच्च तज्जन्मार्थम् । अथ द्वितीयेन यजुषा जातस्य नाम गृह्णाति अमुष्मा इति तदीयनाम्ना । तच्च तत्समृद्ध्यर्थम् । तेन जातस्यापि मृतस्य पुत्रस्य न नाम गृह्णाति । तदेवं पुत्रवतो नामग्रहणद्वय भवति । अपुत्रस्य तु प्रथममेव द्वितीयस्यासभवात् । पुत्रवतोऽपि द्वितीयमेव न प्रथममिति केचित्, तदयुक्तम्, तन्तव इत्यजातस्येत्यविशेषोक्ते भविष्यत्पुत्रार्थं पुत्रवतोऽपि तदानिवारणात् । अजातपुत्रस्येत्यवचनाच्च । बोधायनेन समुच्चयोक्तेश्च । बहुपुत्रत्वे तु स्वस्थानविवृद्ध्या नाम्ना ग्रहणम् । न त्वभ्यासवृत्त्या, सत्याषाढेन तथोक्ते । अकृतनाम्नस्तु नक्षत्रनाम ग्राह्यम् । नैवग्राह्य पुत्र्या, पुत्रस्येति वचनात् (रु).
[2] जीवत्पुत्रभेदे (मु. पु) [3] प्रतिपुत्र (मु. रा).

[प्रियपुत्रसत्त्वे तदभावे च विशेषः]

(भा) देवदत्तानुमातन्वच्छिन्न इत्यामन्त्रणेन नामधेयग्रहणम् । प्रिय-पुत्राभावे ज्योतिषे तन्तवे त्वेति सर्वस्य लोपो मानुषान्तस्य ॥

(सू) अग्ने वह्वे स्वदितं नस्तनये पितुं पच । शं तोकाय तनुवे स्योन इति दाक्षिणाग्निम् ॥५॥३०॥ ८०९॥

(सू) पूर्ववन्नामग्रहणम् ॥ ६ ॥ ३१ ॥ ८१० ॥

[दक्षिणाग्न्युपस्थाने नामग्रहणे विशेषः]

(भा) पूर्ववन्नामग्रहणम् । स एव मन्त्र । अकृतनाम्नो नक्षत्रनाम ॥

(सू) ज्योतिषे तन्तवे त्वेत्यन्तर्वेद्युपविशति [1] ॥ ॥ ७ ॥ ३२ ॥ ८११ ॥

(सू) ज्योतिरसि तन्तवे इत्युपविश्य जपति ॥ ८ ॥ ॥ ३३ ॥ ८१२ ॥

[उपविश्यजपे विशेष.]

(भा) ज्योतिरसि तन्तव इत्यस्यापि लोप· प्रियपुत्राभावे [2] असि सबन्धात् ॥

---

(वृ) देवदत्ता–ग्रहणम्—आमन्त्रितविभक्त्या ॥

[दाक्षिणाग्न्युपस्थाने विशेषान्तरम्]

पूर्वव–मन्त्रः—पूर्ववन्नामग्रहणमिति वचनात् ज्योतिषे त्वाऽसावनुमेत्यादिमानुषान्त । उपवेशनेऽपि न पुनर्ज्योतिषे तन्तवे त्वेति यावदुक्तम् ॥

[उपविश्यजपे प्रतिपुत्रमावृत्ति·]

असि[3]संबन्धात्—पुत्राभिधानात् । अत प्रतिपुत्रमावर्तते ।

---

[1] पूर्ववन्नामग्रहण इत्यधिक क -पुस्तके उपविश्य जपस्यापि लोप अपुत्रस्य मध्यमपुरुषविरोधात् (रु) [2] मध्यमपुरुषसम्बन्धात् इति. (मु रा) [3] सबन्ध पुत्राभिधानात्–क असबन्धात् पुत्राभिधानात्–घ

**(सू.) [1]वेदमुपस्थ आधायान्तर्वेद्यासीनोऽतिमोक्षान् जपति ॥ ९ ॥ ३४ ॥ ८१३ ॥**

[वेदाधानस्यात्रश्यानुष्ठेयता]

(भा) स्तीर्णेऽपि वेदे उपस्थ [1]आधानं न निवर्तते । वेदतृणान्युपस्थ आधायेति हिरण्यकेशिमतात् ॥

**(सू.) [2]अत्र वेदस्तरणं यजमानभागस्य च प्राशनमेके समामनन्ति ॥ १० ॥ ३५ ॥ ८१४ ॥**

[सूत्रदर्शितस्तरणप्राशनैककाल्यानुगुण्यम् ]

(भा) वेदस्तरणंयजमानभागप्राशने अन्योऽन्यसबन्धे ॥

**(सू.) कस्त्वा युनक्ति स त्वा विमुञ्चत्विति यज्ञं [3]विमुञ्चति ॥ ११ ॥ ३६ ॥ ८१५ ॥**

[यज्ञविमोक्षस्वरूपे पक्षभेदः]

(भा) यज्ञविमोको मन्त्रेणैव । केचित्त्ववेक्षन्ते विहार योगे तथा दृष्टत्वात् ॥

---

[भाष्यदर्शितसंबन्धविशदनेनैककाल्योपपत्तिः]

**(वृ) वेदस्तरण—संबन्धे**—अत्र वा वेदस्तरण यजमानभागस्य च प्राशनमित्यासिन् कालेऽनुष्ठानपक्षे उभय सहैव कर्तव्यम् । नान्यतरस्य कालान्तरेऽनुष्ठानम् । अत्र वा यजमानभाग प्राश्नीयादित्यत्र वाशब्द-ग्रहणात ॥

**यज्ञविमोको मन्त्रेणैव**—स त्वा विमुञ्चत्विति मन्त्रोच्चारणेनैव विमोक ॥

---

[1] वेदाधानमुपरिष्टाद्वेदस्तरणपक्षाश्रयणेनोक्तम् । अन्यत्र स्तीर्णत्वाद्वेदस्य । आश्वलायनेन तु पूर्वत्रैव स्तरणमुक्त शेषन्निधायेति । सत्याषाढश्चाह (रु) [2] यदा त्वत्र तदा सहैवोभयोरुत्कर्ष. नान्यतरस्य (रु). [3] मन्त्रोच्चारणमेव विमोक (रु).

(सू.) अग्ने व्रतपते व्रतमचारिषमिति व्रतं [1] विसृजते
॥ १२ ॥ ३७ ॥ ८१६ ॥

[व्रतविसर्गप्रकार. तत्रमन्त्रविषये मतिभेद.]

(भा) यथो[2]पेत तथा व्रतविसर्ग. । य एवमामन्त्रि[3]तश्चरिष्यामीति तस्यैव युक्त चरित मयेत्याख्यातुम् । केचित् सर्वमन्त्रान् इह विभागाकरणात् ॥

[व्रतविसर्जनं क्वचिन्न, सतोऽपि प्रथमेनैवेति पक्षश्च] -

[4]विसर्जनस्यापि निवृत्ति. व्रतोपायनाभावे । सोमे प्रायणीयादिषु व्रताना विद्यमानत्वात् । केचित्तु प्रथमेनैव-व्रतविसर्ग ॥

(सू.) यज्ञो बभूवेति यज्ञस्य पुनरालम्भं जपति ॥
॥ १३ ॥ ३८ ॥ ८१७ ॥

(भा) यज्ञो बभूवेति पुनरालम्भार्थत्वाद्यत्र विरमण दर्शपूर्णमासयोः तत्रान्ते लोप. ॥

---

(वृ) यथोपेतं–ख्यातुमिति—यो यद्देवतासंबन्धमुपैति स तद्देवतासबन्धेन विसृजेदिति ॥

[सर्वमन्त्रपक्षे विवक्षितहेतुः सोमे विशेषः पक्षान्तराशयश्च]

केचित्–करणात्—अग्ने व्रतपते व्रतमचारिषमिति प्रदर्शनार्थत्वात् ॥

विसर्ज–मानत्वात्—सोमे यावदवभृथम् ।

केचित्तु–सर्गः—सर्वेषाम् । एकस्यैव पाठात् ।

[पुनरालम्भविरहस्थलम्]

यज्ञो बभूवेति–लोपः—यज्ञो बभूवेत्यस्य ।

---

[1] यैर्यजुर्भि प्राग्व्रतमुपेतं तैरेव विसृजते । विकारमात्रेण विशेष. (रु).

[2] पेतस्तथा–क [3] तश्च करिष्या–क [4] विसर्ग–क.

[क्वचित्पुनरालम्भविरहः]

(भा) यस्याश्च[1] विकृते[2]रनिष्टः प्रयोगो यथा प्रायश्चित्तार्थाया· ; न तत्र [3] पुनरारम्भ ॥

(सू) [4]गोमानिति प्राङुदेत्य गोमतीं जपति ॥ ॥ १४ ॥ ३९ ॥ ८१८ ॥

[गोमतीजपे विशेषः]

(भा) प्राङुदेत्य—पुरो गत्वा गोमतीजप ॥

(सू) अत्र वा यजमानभागं प्राश्नीयात् ॥ १५ ॥ ॥ ४० ॥ ८१९ ॥

(सू) यज्ञ शं च म उपचम आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्टो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्वेति [5]दर्शपूर्णमासाभ्यां सोमेन पशुना वेष्ट्वा जपति ॥ १६ ॥४१॥ ८२० ॥

[अधिकारसिद्धस्य पुनरुक्तिफलम्]

(भा) पुनर्दर्शपूर्णमासग्रहणात् न विकृतिषु यज्ञशचम इति ॥

---

(वृ) यस्याश्च—र्थायाः—पाथिकृत्यादे ॥

[भाष्यदर्शितविवरणम्]

पुनर्दर्श—चम इति—इतरथा विकृतावप्यनुष्ठाने दर्शपूर्णमासग्रहणमनर्थकम् ॥

---

[1] विकृतावपि यत्र पुन क्रिया इष्टा तत्रैव पुनरालम्भस्य जप. अन्वर्थत्वात्, यथा पश्वाग्रयणेषु (रु) [2] रनिष्ट पुन प्रयोगो—ग. [3] पुनरारम्भमन्त्र —घ [4] सर्वेष्टिपशुषु नित्यो गोमतीजप (रु). [5] अधिकारादेव सिद्धे पुनर्दर्शपूर्णमासग्रहणं तद्विकारेषु मा भूदिति (रु).

[सोमे जपकालः]

(भा) सोमे वृष्टिरसीत्यस्य पुरस्तात् । पशौ तु पुनर्वचन क्रमार्थम् ।

[पशौ पुनरुक्तिभावः पक्षान्तरं बोधायनपक्षश्च]

सर्वत्र [1] कुर्वन्त्युपदेशमतेन । त(दिह)देह पशौ विधानमन्यस्य प्राकृतस्य याजमानस्य निवृत्त्यर्थम् । बोधायनमतिश्च पशौ विधान क्रमार्थमेव । अत· प्राकृतमपि विकल्पेन याजमान क्रियते ॥

(सू) वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागामितीष्वाऽप उपस्पृशति । तदिदं सर्वयज्ञेषूपस्पर्शनं भवति ॥ १७ ॥ ४२ ॥ ८२१ ॥

---

[भाष्योक्तपुनरुक्तिफलविवरणम्]

(वृ) पशौ–क्रमार्थम्—इह सोमेन पशुना वेष्टेति सिद्धे पशौ नियम । आशासानस्सुवीर्यामिति चोपस्थाय यज्ञ शचम इति जपतीति वचन यज्ञशचमात्पूर्वं यूपोपस्थानार्थम् ॥

[भाष्ये सर्वशब्दार्थः]

सर्व–(शेनेति) शमनेनेति—सर्वत्र–विकृतिष्वपि । कुर्वन्ति–प्राप्तत्वात् ।

[निवर्तकत्वप्रकारादि]

तदेह–त्त्यर्थम्[1]—दर्शपूर्णमासविकारत्वादेव पशौ सिद्धे इह पशौ वचनमितरयाजमानपरिसङ्ख्यानार्थम् । दर्शपूर्णमासग्रहणमनुवादमात्रम् ॥

[क्रमाश्रयः]

पशौ–र्थमेव—यूपोपस्थानस्य ।

[प्राकृतयाजमानसिद्धिः]

अतः प्रा–क्रियते—पशौ व्याख्याभेदेन पक्षद्वयसिद्धेः ।

---

[1] कुर्वन्तीत्युपदेश –ग. I कुर्वन्त्युपदेशेन (मु. पु.) II.

[वृष्टिकालः कश्चित्तद्विशेषश्च]

(भा) वृष्टेरेष कालः। इष्टि प्रकृतीना परतो [1] [2] ब्राह्मणभोजनात्।

[इष्ट्वेति पदस्वारस्यं तदनुक्तावतिप्रसङ्गः उपदेशमतं च]

इष्ट्वेतिवचनात् पौर्णमासे दर्शे चावृत्ति । इतरथा दर्शान्ते स्यात्। यक्ष्यमाणो वेष्ट्वा वेति तन्त्रसमाप्तेः । सोमेष्टीना सोमार्थविद्युद्वृष्ट्योः प्रसङ्गः । सर्वयज्ञेष्वदर्विहोमेष्वित्युपदेशः ॥

( सू ) [3] ब्राह्मणा स्तर्पयितवा इति संप्रेष्यति ॥ १८ ॥
॥ ४३ ॥ ८२२ ॥

[ब्राह्मणभोजनफलं तत्प्रमाणञ्च]

(भा) यज्ञतृप्त्यर्थं ब्राह्मणभोजन वाजसनेयिश्रुतेः ॥

---

[भाष्ये एतच्छब्दार्थः]

(वृ) इष्टि–भोजनात्—अतो यज्ञशचमानन्तर प्रयोग. ।

[भाष्यदर्शितस्वारस्यनिर्वाहः]

इष्ट्वेति–समाप्तेः—कालभेदेन प्रयोगभेदात् । प्रतिप्रयोगमावृत्त्यर्थं इष्ट्वेति वचनम् । इतरथा एकाधिकारसाधनत्वादुभयोरन्ते स्यात्। यक्ष्यमाणो वेष्ट्वा वेति तत्राधिकारसाधनभूतकृत्स्नयागसमाप्तेः ॥

[उपदेशमताशय.]

सर्वय–त्युपदेशः—यज्ञशब्दस्य स्वतो यागेष्वेव प्रवृत्तत्वात् ॥

[भाष्ये तृप्तिशब्दार्थः]

यज्ञतृ–यिश्रुतेः—यज्ञतृप्तिर्यज्ञसाकल्यम् ॥

---

[1] न परतो–घ [2] ब्राह्मणा –ऋत्विज सन्निधानात् [3] भोजनादिभि । तेषा च तर्पण यज्ञसमृद्धयर्थम्, यज्ञमेव तर्पयतीति वाजसनेयिश्रुते· (रु).

(सू) [1]प्रवसन् काले विहारमभिमुखो याजमानं जपति ॥ १९ ॥ ४३ ॥ ८२४ ॥

[प्रवसतः स्वकर्मणि कालादिनियमाः]

(भा) प्रवसद्याजमान पूर्वेद्यु. पूर्वेद्युः [2] कालमुत्तरेद्युरुत्तरेद्युःकालम् । अन्यत्र सूत्रे यथाकालवचनात् । पुरुषनियमश्च [3]प्रवसतोऽपि । भोजनं च मन्त्रेण । [4]अप्रवसतोऽपि तत्पुरुषा[5]श्रयम् ॥

[असंभवतां जपः संभवतामपि वाचनिकस्सः]

परार्थानामों निर्वपेत्येवमादीनामकरण पुरोडाशाभिमर्शनादीनाम् आदित्योपस्थानादीनां च । सभवतामपि जप एव । यथेतरेषामभिधेयाभावे प्रयोग [6] एव । आरोह पथो जुहु देवयानानिति

---

(वृ) पुरुष–तोऽपि—ब्रह्मचर्यादि ।

अप्रव–श्रयम्—पुरुषसंस्कारद्वारेण क्रत्वर्थम् ।

परार्था–नादीनाम्—जप एव ।

आदित्यो–नां च—प्रवसतो लोपः ।

संभवतामपि–जप एव—वचनात् ।

[दृष्टान्तोपपत्तिः]

यथेतरेषा–नानिति—एवमादीनां [7] करणम् । पुरोडाशाभिमर्शनादीनां च जुह्वादिसन्निधानाभावेऽपि यथा जपः एवं अभिमर्शनादीनाम् ॥

---

[1] देशान्तरे वसन् स्वे स्वे काले औपवसथ्येऽहनि यजनीयदेशे च विहारदेशाभिमुख याजमानाध्वर्यवकाण्डोक्तान् सर्वानपि याजमानमन्त्रान् जपति । तदीयानि तु कर्माणि अध्वर्युः करोति । भरद्वाजोक्ते . (रु). [2] वैद्युरुत्तरे–क. [3] प्रवसतो भो–घ. [4] प्रवसतोऽपि (मु. पु). [5] श्रयार्थम्–ग. [6] प्रयोग. आरो–ख. I. एवमारोह पथो–क. II. [7] दीनां जुह्वादिसान्निधानाभावेऽपि.

(भा) संस्पर्शनकर्माणि तु भरद्वाजेनाध्वर्योर्बद्धानि ॥

(सू) **प्राचो विष्णुक्रमान् क्रामति ॥ २० ॥ ४४ ॥ ॥ ८२४ ॥**

[विष्णुक्रमसद्भावः मतिभेदः वीप्सोपेक्षाबीजम्]

(भा) गोमतीविष्णुक्रमाणां तु क्रिया । केचित्त्वनाशिषामकरणानां चा[1]प्रयोगः । अवचनाद्वीप्साया प्रतिपद्येव याजमानमित्युपदेशः ॥

(सू) **प्राङुदेत्य गोमतीं जपति जपति ॥ २१ ॥ ॥ ४८ ॥ ८२७ ॥**

---

[संस्पर्शनकर्मपदार्थः[2]]

(वृ) **संस्पर्श – द्धानि** — क्रत्वर्थानि मन्त्रवत्कार्याणि । अथवा संस्पर्शकर्माणि आसन्नाभिमर्शनादीनि ॥

[जपस्य न नित्यकर्मताऽत्र]

**गोमती–क्रिया**—वचनात् । समन्त्रकक्रियानुष्ठानं नित्यं न तु जपमात्रम् ॥

**केचित्त्व–योगः**—अन्येषाऽमप्रयोगः ।

[वीप्सानुक्तितात्पर्यविवरणम्]

**अवचना–त्युपदेशः**—प्रवसन् काले काले [3] इति वीप्साया अवचनात् मुख्यानुष्ठान[4]काल एव याजमानं युक्तम् ॥

---

[1] च प्रयोगः. [2] षां प्रयोग. (? पा). [3] इत्यवचनात्–घ [4] नयुक्तम्–घ. नं नियतम् नतु जपमात्रम् । प्रत्यगाशिषामकरणानां काल एव प्रवसद्याजमानम्–ख. ग.

[प्राक्त्वविधिभावः]

(भा) प्राक्त्वविधानं विहाराभिमुखस्य क्रिया मा भूदिति ॥

षोडशी खण्डिका ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये चतुर्थे प्रश्ने चतुर्थः पटलः

समाप्तश्चतुर्थः प्रश्नः ॥

---

याजमानं, अथ पितॄणां, दक्षिणेनाहवनीयं, देवादेवेषु, चतुश्शिखण्डा, आशिश्रेम, अयप्रस्तरः, तृप्तिरसि, दशहोतारं, इन्द्रस्य, अथैनं, बर्हिषोऽहं, सोमस्याहं, दधिक्राव्ण्णः, उद्यन्नद्य, योनस्सपत्नः, षोडश ॥

याजमानं, चतुश्शिखण्डा, दशहोतारं, सोमस्याहं, चत्वारि ॥

---

## हौत्रकल्पः.

(सू) पुरस्तात्सामिधेनीनां होता[1] हृदयदेशे ऊर्ध्वं प्रादेशं धारयमाणो जपति मयि गृह्णाम्यग्रे अग्निं योनोऽग्निः पितर इति ॥ १ ॥

(वृ) प्राक्त्वविधानम् —विष्णुक्रमगोमत्योः ।

इति श्री कौशिकेन रामाग्निचिता कृताया धूर्तस्वामिभाष्यवृत्तौ चतुर्थे प्रश्ने चतुर्थः पटलः ॥

समाप्तश्चतुर्थः प्रश्नः ॥

---

## इष्टिहौत्रम्

[प्रकरणान्तरस्थस्येष्टिकल्पस्येह विवरणेहेतुः]

इष्टिहौत्रे[2] कल्पकारेण परिभाषाप्रकरणे[3] उक्तेऽपि दर्शपूर्णमासप्रयोगसाकल्यार्थमिह भाष्यकारेणोच्यते ॥

---

[1] स्तात् होता—च [2] त्रं—घ [3] कमपि—घ

(भा) समिदाधानार्था ऋचस्सामिधेन्यः । तासां पुरस्ताद्धृदयदेशं [1]स्पृशन् ऊर्ध्वं प्रादेशं—[2]प्रदेशिन्या युक्तोऽङ्गुष्ठः प्रादेश· तं धारय-

[उक्तजपयोरङ्गनिर्देश· तत्फलञ्च]

माणः [3]। एवमादि सामिधेन्यर्थम् । अतो गृहमेधीये निवर्तते ॥

(सू) अन्तराऽऽहवनीयमुत्करं च प्रतीचीनं गच्छन् जपति ;—कं प्रपद्ये तं प्रपद्ये । यत्ते प्रजापतेश्शरणं छन्दस्तत्प्रपद्ये । यावत्ते विष्णो वेद तावत्ते करिष्यामि । नमो अग्नय उपद्रष्ट्रे नमो वायव उपश्रोत्रे नम आदित्यायानुख्यात्रे । जुष्टामद्य देवेभ्यो वाचमुद्यासं स्वधावर्ती पितृभ्यः शुश्रूषेण्यां मनुष्येभ्यः । प्रशास्त आत्मना प्रजया पशुभिः प्रजापतिं प्रपद्ये । अभयं मे अस्तु । प्राजापत्य-मनुवक्ष्यामि । वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु । वाचं प्रपद्ये भूर्भुवस्सुवरिति । सत्यं प्रपद्य इति [4]वा ॥ २ ॥

[सत्यमित्याद्यवधिस्तद्धेतुश्च]

(भा) सत्यं प्रपद्य इति व्याहृत्यन्तः ॥

---

[सामिधेन्यङ्गत्वे मानम् ]

(वृ) समिदाधानार्था—धेन्यर्थम् —पुरस्तात्सामिधेनीनामिति वच-नात् ॥

[वक्ष्यमाणव्याहृतिजपस्यान्यत्वम् ]

सत्यं—हृत्यन्तः—दशहोतारं व्याख्याय व्याहृतीश्च जपित्वेत्यत्र सत्यं प्रपद्य इत्यनुवाकपठितानां व्याहृतीनां न विनियोगः ॥

---

[1] संस्पृशन्—अ. [2] प्रादेशिन। ?—अ. [3] माण एव एवमादि—घ. [4] वाशब्दो न दृश्यते क्वचित्.

(भा) पू[1]र्वेण सादृश्यात् ॥

[मन्त्रान्तरेषु व्याहृत्यन्तत्वे विशेषः]

अन्येषां[2] पाठाद्विकल्प. ॥

[व्याहृतिजपे मानम्, अव्याहृतिजपपक्षश्च]

संहितो[3]पदिष्टा व्याहृतयो दशहोतारमुक्त्वा सामिधेनीरनुवक्ष्यन्नेता व्याहृतीरिति । केचिदव्याहृतिकम्; व्याहृतीनामुत्तरत्रोपदेशात् ॥ २ ॥

(सू) विष्णोस्स्थाने तिष्ठामीत्यवतिष्ठते ॥ ३ ॥

अन्तर्वेद्यन्यः पादो भवति बहिर्वेदिसन्यः ॥ ४ ॥

---

[व्याहृत्यन्तत्वे हेतुविवरणम्]

(वृ) पूर्वेण सादृश्यात्—क प्रपद्य इत्यनेन; तस्य व्याहृत्यन्तत्वात् ॥

[भाष्येऽन्येषामित्यन्यपदार्थः विकल्पोपपत्तिश्च]

अन्येषामपाठाद्विकल्पः—कं प्रपद्ये इत्यादेः व्याहृत्यन्तस्य शाखान्तरे पाठाद्विकल्पः ॥

[प्रथमाव्याहृतिजपे विशेषः]

संहितोपदिष्टा–हृतीरिति—अतः प्रागविकारस्सत्यं प्रपद्ये इति मन्त्रः ॥

[अव्याहृतिजपपक्षाशयः]

केचिदव्याहृतिकम्—व्याहृतीनामुत्तरत्रोपदेशात् सत्यं प्रपद्ये इत्यव्याहृतिकम् । होत्रकाण्डे पठितानां व्याहृतीनां याज्यादिषु[4] विनियोगः ॥

---

[1] वेंमसंदृश्याद्–ज. [2] अन्येषामपाठात्–ख. ग. घ षा च पाठात्–क. [3] तोवरिष्ठ–ख ग घ. I तोपदिष्ट–क. II [4] यूपयोग.–घ

**अथोर्ध्वस्तिष्ठन् ब्रह्मन् सामिधेनीरनुवक्ष्यामीति ब्रह्माणमामन्त्र्य[1] दशहोतारं व्याख्याय व्याहृतीश्च जपित्वा त्रिर्हिंकृत्योत्तमेन[2] हिंकारेणार्धर्चमुप-सन्दधाति ॥५॥**

(भा) [3] अवस्थानमुभयत्रापि ॥

[ब्रह्मामन्त्रणं प्रैषपूर्वं हुंकारनिवृत्तिश्च हिंकारे स्वरश्च]

(भा) अध्वर्युणा प्रेषितो ब्रह्माणमामन्त्रयते। हिंकृत्येतिवचनाद्धिंकार एव कर्तव्यो न हुंकार इति। स च तेन [4] समानार्थः। तेन समान-ग्रहणात्।

---

[भाष्यस्थोभयपदार्थव्याख्याभेदः]

(वृ) **अवस्थानमुभयत्रापीति**—उभयस्मिन्नपि पक्षे विष्णो. स्थाने तिष्ठामीत्यवस्थानम्। अथवा अन्तर्वेदि दक्षिण पादो बहिर्वेदि सव्य इत्यनेन प्रकारेणोभयत्र देशेऽवस्थानम् ॥

[प्रैषादिक्रमिकप्रयोगस्य सूत्रासिद्धत्वम्]

**अध्वर्युणा—यते**—समिध्यमानायानुब्रूहीति प्रैषोत्तरकाल सामि-धेनीरनुवक्ष्यामीत्यामन्त्रणस्य युक्तत्वात् होतृषदन[5]कल्पनानन्तर मयि गृह्णामीत्यवस्थानान्तं कर्तव्यम्। सामिधेनीभ्यः प्रतिपद्यत इति सूत्र-कारारम्भसामर्थ्यादित्युक्तम् ॥

**हिंकृत्येति—कार . इति**—अश्वलायनेनोक्ताभिर्हिंकारो न भवति ॥

---

[1] ‘प्रजापतेनुब्रूहि+धेहि। ओमनुब्रूहि’ इतितेन प्रसुत (प्रयो—वा) [2] तृतीयेन हिंशब्देन प्रवोवाजा इत्यादि ऋच आह आग्यान्त्येत्रि . [3] वेदिश्रोण्यो पुरस्तात् तिष्ठन् इति प्रयोगवाक्यम् . [4] समानार्थमतेन 2—ग [5] प्रकल्पानन्तरम्—घ

(भा) हिंकाराद्युच्चैः । तेन [1] संबन्धात् ॥

[दशहोतृवचनप्रकारः सामिधेनीविरामे विशेषाः]

वाक्यश आख्यानं दशहोतुः । हिंकारेणार्धर्चमुपसंधायर्गन्तेन प्रणवेन विरामः ॥

(सू) त्रिः प्रथमामन्वाह त्रिरुत्तमाम् ॥ ६ ॥

यं (यां) कामयेत सर्वमायुरियादिति तस्य त्रिरनवानं प्रथमोत्तमे अनुब्रूयात् ॥ ७ ॥

(भा) हिंकारवर्जमेव [2] द्विरुक्तिः ॥

---

[हिंकारांशे उच्चैस्त्वं जपानुषक्तेऽपि]

(वृ) हिंकाराद्युच्चैः—व्याहृतीश्च जपित्वा त्रिर्हिंकृत्येति जपसमान-कर्तृकत्वेऽप्युच्चैरिति सामिधेनीस्वरः ॥

तेन संबन्धात्—उत्तमेन हिंकारेणार्धर्च[3]मुपसंदधातीति सामि-धेनीसंबन्धात् ॥

[दशहोतृव्याख्यानप्रकारलाभः]

वाक्यश आख्यानं दशहोतुः—व्याख्यायेति विशब्द-प्रयोगात् ॥

[भाष्यदर्शितविरामविशेषाविवरणम्]

हिंकारेणा—विरामः—त्रिरनुवचने अर्धर्चसंधानाभावात् हिंकारप्रभृत्यर्धर्चे विरामः ऋगन्तेऽपि ॥

[उच्छ्वासतदभावव्यवस्था]

हिंकारवर्जमेव द्विरुक्तिः—अर्धर्चे प्रणवे चावसानमुच्छ्वा-सश्च । ततस्तृतीये वचने प्रणवेऽनुच्छ्वस्य संधाय उत्तरार्धर्चेऽवस्येत् ।

---

[1] एतेन—क.  [2] द्वि—क. ख ग. I. मेव द्विः—क. II.

(भा) उत्तमायामप्येवमायुष्कामस्य[1] हव्यदातय इत्युच्छ्वासः। अर्धर्च[2]-विरामस्तु प्रणवेनैव ॥

(सू) एकैकामेव सं तन्वन्ननवानमनुब्रूयादित्येके ॥ ८ ॥

[काम्यप्रयोगे विशेषः मतिभेदश्च]

(भा) एकैक[7]सतान[3] एव नार्धर्चविरामः। प्रणवेऽवसानं सर्वत्र काम्ये। तृतीया[4]यामर्धर्चसतानो भवति य आयुष्कामपक्ष· ॥

---

(वृ) उत्तरासां प्रणवेऽनुच्छ्वासोऽनवसान च। त्रिरुत्तमा [5]अभिहिंकारवर्ज-मायुष्कामस्य [6] एव हिंकारवर्जे द्वितीयाद्यनुवचनान्तम् आयुष्कामस्य त्रिरनुवचने अर्धर्चे प्रणवे चानवसानमनुच्छ्वासश्च। प्रणवेऽवसानमुच्छ्वास-श्चैके ॥

उत्तमा—त्युच्छ्वासः—तृतीयवचन उत्तरार्धसंतानस्य [7] कर्त-व्यत्वात् ॥

अर्धर्चविरामस्तु—द्वितीयाप्रभृतीनाम्।

प्रणवेनैव—अवसानमर्धर्चे सदधाति पूर्वस्याश्चोत्तरमित्यादि-संधानवचनात् ॥

[तत्र काम्यादिपक्षविवरणम्]

एकैकसंतान—त्रकाम्ये—सर्वास्वृक्षु एकैकामनुसंतन्वन्ती ते आयुष्कामपक्ष एव ॥

तृतीया—ष्कामपक्षः—तृतीयाया अर्धर्चयोः संतानः न तु त्रिर्विग्रहः ॥

---

[1] क्ति आयुष्कामस्याप्येवम्—अ. [2] हिङ्कारवर्म ? द्वितीयाद्यनुवचनान्त-मुत्तमायामप्येवम् आयुष्कामस्य—अ. [3] अर्धर्चप्रणवेनैव—अ [4] संधान एव ना—अ [9] तीयार्धर्चस—अ [5] हिङ्कार—घ. [6] स्याप्येवम्—घ. [7] विद्यमानत्वात् कर्तव्यत्वात्—क विद्यमानत्वात्—घ.

(भा) स एव नित्य[1] इति केचित् ॥

(सू) तृतीयां सामिधेनीं च त्रिर्विगृह्णाति संततमन्वाहेति सामिधेनीनामविशेषात् ॥ ९ ॥

(सू) विज्ञायते च ; ऋषेर् ऋषेर्वा एता निर्मिता यत्सामिधेन्यः ता यदसंयुक्तास्स्युः प्रजया पशुभिर्यजमानस्य वितिष्ठेरन् । अर्धर्चौ संदधाति संयुनक्त्येवैना इति ते मन्यामहे ॥ १० ॥

(सू) पूर्वस्याश्चोत्तरमुत्तरस्याश्च पूर्वं तौ संदध्यात् ॥ ॥ ११ ॥

(सू) संततमन्वाहेति सामिधेनीनामनुच्छ्वासवादो विज्ञायते च ॥ १२ ॥

(सू) नान्तरर्चौ व्यन्यात् । यद्यन्तरर्चौ व्यन्यादवाने प्राणं दध्यात् । अतिहाय पूर्वस्या अर्धर्चमुत्तरस्या अर्धर्चे व्यनितीति ॥ १३ ॥

[तृतीयायामृचि विशेषः]

(भा) तृतीयायां[2] त त्वा समिद्भिरङ्गिर इति पादे विरम्यार्धर्चे

---

[नित्यपक्षेऽभिमतहेतुः]

(वृ) स एव नित्य इति केचित्—कामसंयोगाश्रवणात् तृतीयां सामिधेनीमित्यादि नित्यपक्षः ॥

[पादे विरमणस्वरूपम्]

तृतीया तन्त्वा—च्छ्वसेत्—पादे विरमणं नोच्छ्वासः ।

---

[1] नोद्वितीय आयुष्कामपक्षे—अ. [2] निवृत्य इति—अ [14] तृतीयां—अ.

(भा) [1]एवोच्छ्व (सेत्) सन् । परमर्धर्चं सप्रणवमुक्त्वोत्तरस्याः[2] अर्धर्चे विरमेत् । एवं त्रेधा विच्छेदो[3] विग्रहः ॥

[संततानुवचने सर्वविषयता संततत्वरूपं मानं च]

संततवचन सर्वत्र सामिधेनीना न प्रथमो[4]त्तमवादः । एता निर्मिता इति वचनात् अर्धर्चसंतानश्रुतेश्च । सततवचनमनुच्छ्वासवादः । परित्यज्य पूर्वस्या अर्धर्चमुत्तरस्या अर्धर्चे उच्छ्वासवादश्रुतेः ॥

(सू.) त्रिरनुवचने नार्धर्चसंतानो विद्यते एकार्षित्वात् ॥ ॥ १४ ॥

[अर्धर्चसंताननिषेधः]

(भा) एकस्य यस्मादृषेः [5]प्रथ[6]मोत्तमोऽनेनार्धर्चसंतानः । अर्धर्चे प्रणवे चावसाय [7]तृतीयेऽनुवचनेऽर्धर्चे संतानो न नानार्षेयत्वात् ॥

---

[भाष्यदर्शितत्रिविग्रहविशदीकरणादि]

(वृ) संतत–त्तमवाद इति ; – [8]त्रिः प्रथमामन्वाहेत्यस्यानन्तरम्–एता निर्मिता इति बहुवचनात् अर्धर्चसंतानश्रुतेश्च अर्धर्चौ संदधातीति सर्वसामिधेनीना सधानवचनात् सधाने चानुच्छ्वासस्य युक्तत्वात् ॥

(वृ) संततवचनमनुच्छ्वासवादः—परित्यज्य पूर्वस्या अर्धमुत्तरस्या अर्धर्चे उच्छ्वासवादश्रुतेः । नान्तरर्धर्चौ व्यन्यादिति [9] शाखान्तरोक्तश्रुत्या समानार्थत्वात् । ' ऋषेर् ऋषेर्वा ' इत्यादिनाऽर्धर्चौ सदधातीति प्रणवे पाठविच्छेदाभावः सततमन्वाहेति प्रणवेऽनुच्छ्वासवादः । प्रथमोत्तमव्यतिरिक्तानामेतौ धर्मौ ॥

एकस्य यस्मा–वसायः—तयोः प्रयोगः प्रणवे अनुच्छ्वासो विद्यत एव प्रथमायाः ॥

---

[1] एवोच्छ्वसेत् सप्रणव–घ [2] स्यार्धर्चे अ. [3] विच्छेदविग्रह –घ [4] त्त-योर्वादः–घ. त्तमपादे [2]–अ. [5] प्रथमे अतो नार्धर्चसंतान –घ. [6] मेनार्धर्चे संतान॰–अ. [7] तृतीये तु–क. [8] यद्यपि त्रिः–घ. [9] दितिश्रुत्यास–घ.

(सू) त्वं वरुण इति वासिष्ठराजन्यानां परिधानीयाऽऽजुहोतेतीतरेषां गोत्राणाम् ॥ १५ ॥

[पुनः परिधानीयापदफलं विशेषश्च]

(भा) [1]आजुहो[2]तीयान्त्येति सिद्धे परिधानीयेति पुनर्विधानादागन्तूना पुरस्ता[3]दस्या निवेश । वासिष्ठशाण्डिल्येभ्य ऊर्ध्वं पूर्वमगस्तीनाम् । आर्षेयवरणप्रतिषेधेन [4]होतुरार्षेयवरणप्रतिषेध इति केचित् ॥ १५ ॥

(सू) नराशꣳसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम् । तनूनपादितरेषां गोत्राणाम् ॥ १६ ॥

[नराशंसेषु व्यूहतो व्यवस्था]

(भा) [5]वेदान्तरोपदेशात् । नराशसो अग्न आज्यस्य वेत्विति वसिष्ठानां शुनकानां च द्वितीयः ॥ १६ ॥

---

(वृ) आजुहो—दस्या निवेशः—अल्पाक्षरपदप्रयोगसंभवेऽपि बह्वक्षरपदप्रयोग अजुहोती[6]येतरेषामित्यत्रापि परिधानीयेत्यनुषङ्ग । [7] तत्रान्त्यशब्देनापि ॥

वासिष्ठ–गस्तीनाम्—बह्वृचप्रयोगपक्षे अत्र्यादीनामपि नाराशसः । अस्मदीयप्रयोगपक्षे यथासूत्रोक्तम् ॥

वेदान्तरोपदेशादिति—आध्वर्यववेदत्वान्निषेधस्य अध्वर्युप्रवरस्यैव निषेध इति सामिधेनीरनूच्य प्रवरमुक्तेति सामिधेन्यनन्तरं प्रवरशसनात् नराशसो द्वितीय इत्यस्य पुरस्तात्प्रतिकृष्य प्रतिषेधनिर्वाह उक्त । वसिष्ठादीनां परिधानीयोक्तिप्रसङ्गेन तेषां प्रयाजविशेषोक्तिः ॥

नराशंसो–तीयः—प्रयाज । अग्ने महां असीत्यादि त्वं परिभूरसीत्यन्तेन अग्नेः स्तुत्यर्थत्वेन प्रवरनिविदो व्याख्याय आवह देवान्

---

[1] आज्यहोतेति अन्तेति—अ I, आजुहोतिधान्याति सिद्धे?—ग II
[2] तीति याज्येति सिद्धे—क. [3] अस्या पुरस्तादानिवेश —क. [4] होतार्षेयवरण ?—अ.
[5] देवतान्तरोप—अ [6] होतेत्युत्तरेषा—क तत्रात्यन्त—ख. तत्राज्य—क

(सू) सामिधेनीरनूच्य प्रवरमुक्त्वा निविदोऽन्वाह ॥ ॥ १७॥

(सू) तासां सप्तपदानुक्त्वाऽपानिति ॥ १८ ॥

इति एकादशी खण्डिका ॥

---

(सू) अथ चत्वार्यथ चत्वारि ॥ १ ॥

(सू) ता अनूच्य देवता आवाहयति या यक्ष्यमाणो भवति ॥ २ ॥

[प्रयाजादिषु क्वचिल्लोप ऊहश्च]

(भा) प्रवरनिविद आवाहनार्थाः । [2] आवाहनीयसंस्कार आवाहनमित्यर्थः । तस्मादनिष्टानां लुप्यते । देवेद्ध इति लिङ्गादाहवनीय आवाहनकर्ता । तस्मादप्सु तद्विकारत्वा[3]दूहः ।

---

(वृ) यजमानायेत्येतैः स्तुतस्याग्नेरावाहनकर्तृत्वेन व्यपदेशादावाहनाङ्गभूताः प्रवरनिविदः ॥

आहवनीय–लुप्यते—[4] तस्मिन् कर्मणि देवतात्वेनानभिमतानां आवाहनं लुप्यते प्रकृतावपि । अत एव यक्ष्यमाणो भवतीत्युक्तम् ॥

देवेद्ध–कर्ता—अग्न आवहेति देवेद्ध इत्यादिना प्रकाशितस्य निर्देशात् ॥

तस्मा–दूहः—वरुणप्रघासादिषु अवभृथे वा आहवनीयविकारत्वात् निवित्स्वावाहने च संबोधनविभक्त्यन्ताग्निशब्दस्थानेऽप्शब्दप्रयोगः । केचित्तु आवाहनार्थं स्वं स्वं कर्तव्यमिति । तत्र वक्ष्यमाणपक्षे अरा" इवापो नेमिर्देवान् यूयं परिभुवस्थ आवहत देवान्

---

[2] आहवनीय–ग [3] दप्यूहः–क. [4] अयं ग्रन्थ – क पुस्तके न दृश्यते.

(भा) आवह देवान् यजमानायेति निवित्समाप्तिः । आज्यपाः प्रयाजानूयाज[1]देवता । अग्निं होत्रायावहेति स्विष्टकृतः । स्वं महिमानमावहेतिचैके स्विष्टकृ[2]द्देवताम् । गार्हपत्यो हव्यवाट् । आवहनीय आवाहयिता । केचिदाहवनीय एवोभयकर्तेति ॥

---

(वृ) यजमानायेति अग्निमावह सोममावहेत्यादि । आचापो देवान् वहत सुयजतायजध्वमाप इति ॥

आवहदे–स्विष्टकृतः—त्वं होतॄणामस्यायजिष्ठ इति अग्ने यदद्य विशो अध्वरस्य होतरिति मन्त्रलिङ्गात् ॥

स्वं महिमान – द्देवताम्—अनूयाजदेवतानामाज्यपशब्देनावाहितत्वात् स्विष्टकृतः पश्चादाशाद्देवताभावात् आनन्तर्याच्च स्वं महिमानमिति स्विष्टकृत इति । स्वमते तु सर्वदेवतावाहनाङ्गत्वेन सर्वदेवतानां स्वकीयं महिमानमावहेति वाक्यशेष इति । एष वै देवानां महिमा यो विष्णुः परमेष्ठीति सर्वदेवतान्तर्यामिणं विष्णुमिति ॥

गार्हपत्यो हव्यवाट्—वृणीध्वं हव्यवाहनमित्यार्षेयव[3]रणे देवतावरणे हव्यवाडग्नेर्वरणम् । स च गार्हपत्यः हव्यवाडग्निरजरः इति मन्त्रे सुगार्हपत्यास्समिष इति लिङ्गात् । किं च हव्यवाहमभिमातिषाहमित्यत्र अग्निं स्विष्टकृतमाहुवेमेति मन्त्रलिङ्गात् । अग्निं होत्रायेति स्विष्टकृत्त्वेन च गार्हपत्यावाहनम् ॥

आहवनीय आवाहयिता—आवाहनकर्तेत्युक्तमेव ॥

केचिदाह–र्तेति—आवाहन हव्यवाहनं च अहवनीयकर्तृकमेव । आधानकाले ममैव सन् वह हव्यान्यग्ने पुत्र इत्याहवनीयाभि-

---

[1] देवता. । आग्निम्–अ. [2] देवता गार्ह–अ. [3] रणे देववरणेह–क. रणे हव्य–घ.

(सू) स वै खलु वाजिनो नावाहयेद्देविकादेव(स्वो)-
सुवो यच्च किंचैतादृक् ते मन्यामहे ॥ ३ ॥

(भा) एतादृक्शब्द[1]स्य ते इत्थं मन्यामहे वयम् ॥

(सू) परप्रधानानां परतन्त्रव्यवेतानां च प्रतिषेध(त्वा)-
स्स्यात्तल्लिङ्गत्वाच्छब्दस्य ॥ ४ ॥

[प्रतिषेधव्यवस्था]

(भा) व(प)रप्रधानो निष्कासेन [2]वारुण । परतन्त्र [3]व्यवेताः सौत्रामणी पशुपुरोडाशाः । एवं विधानामेतादृक्शब्देन प्रतिषेधः । तल्लिङ्गत्वात् [4]तत्सूचकत्वात्तदभिधायकत्वात् ॥

---

(वृ) मन्त्रणे हव्यवाट्त्वप्रतिज्ञानात् । तूर्णिर्हव्यवाडिति च । देवेद्ध इत्यादिनाऽ[5]भिहितस्य आहवनीयस्य हव्यवाहनत्वं निर्दिश्य आवह देवान् यजमानायेति तस्यैवावाहनकर्तृ[6]त्वनिर्देशाच्चोभयकर्तृत्वमाहवनी[7]यस्य ॥

एतादृक्श–हे वयम्—स वै खलु वाजिनो नावाहयेद्देविका [8]देवसुवां च किंचैतादृगिति न्यायप्राप्तानुवादः ॥

परप्रधानो–प्रतिषेधः—अस्यार्थः — वाजिशब्देन प्रयुक्तद्रव्योपजीविनां प्रधाना[8]नां निष्कासेन वारुणयागादीनां प्रदर्शनम् । देविकादेव[9]सुवां परतन्त्रप्रसाङ्गिनां ग्रहणम् ॥

तल्लिङ्गत्वात्–यकत्वात्—अत्रावाहन तन्त्रिणामेव नानुषङ्गिणाम् । आश्वलायनेन वाजिनदेविकादिषु निषेधात् ॥

---

[1] स्यतेऽर्थं मन्या–क. घ. मन्यामहेन्वाहेतीच. II तेत्वं मन्यामहे–ञ III [2] वरुण ?–ञ. [3] व्यपेता –घ I स्यवेता–ञ II [4] सूचकत्वात् –ञ. [5] भिमन्त्रितस्य–क. [5] तृत्वमाहवनीयस्य–क. [6] स्यैव–घ [7] स्वोर्यश्च किंचै–घ. [8] नां परप्र–घ. [9] सुव इति पर–क स्व इति पर–घ.

(भा) एताद[1]कशब्दस्य । परतन्त्र[2]व्यवेतानां [3]देवतानां चावाहनम् ॥ ४ ॥

(सू) एकदेवतानां नानादेवताव्यवेतानां तन्त्र-
मावाहनं विभवात् ॥ ५ ॥

[आवाहने विशेषः]

(भा) एकदेवतानां [4]नानादेवताभिरमिश्राणां सकृदावाहनं यथाऽश्व-प्रतिग्रहे वरुण[5]स्यापि । भवति हि सकृदावाहनं होतुस्तन्त्रत्वात् । यत्र तु देवता[6]न्तरेण व्यवाय. यथा आजस्वतस्सूर्येण ; तत्र पुनरावाहनम् लोकवत् [7] प्रातस्त्वया [8] भोक्तव्य भुक्तवत्सु ब्राह्मणेषु च पुनरिति ॥ ५ ॥

(सू) अथोर्ध्वज्ञुः प्रादेशेन भूमिमभिनिधाय जपती-
दमहं त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण
वज्रेणास्यै पृथिव्या अस्यै प्रतिष्ठाया अस्मादाय-
तनाद्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तं [9]हन्मि ।
यदद्य होतृ(वदध्येति)वर्ये जिह्मं चक्षुः परापतत् ।
अग्निष्टत्पुनराभर(त्पुनरहाजा)ज्जातवेदा विचर्षणिः ।
वसूनां रातौ स्याम रुद्राणामूर्म्यायां स्वादित्या
आदितयेऽनेहसः । चारुमद्य देवेभ्यो वाचमुद्यासं

---

(वृ) एताद–चावाहनम्—इति पक्षान्तरम् ॥
एकदेव–होतुस्तन्त्रत्वात्—देवताभिधानस्यैकत्वाच्च ॥
लोकवत्–पुनरिति—प्रातस्त्वया भोक्तव्यं भुक्तवत्सु ब्राह्मणेषु च पुनरिति ; पुनस्त्वया भोक्तव्यमित्यावर्तते ॥

---

1 कशब्देन–क. ख. ग. घ. (व्या). 2 व्यपेतानां–घ I. व्यपेतानामेवं नावहनम्–अ. II 3 देविकादीनां नावाहनामिति पक्षान्तरम्–घ 4 हविषां नाना–घ. अ. 5 स्य विभवति हि ?–ग. अ. 6 न्तरव्यवायः–ग 7 प्राकृत-स्तया–अ.

(सू) चारुं ब्रह्मभ्यश्चारुं मनुष्येभ्यश्चारुं न(ना)राशंसायानुमतां पितृभिः । ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा विततः पुरुत्रा । तेभ्यो न इन्द्रस्सवितोत विष्णुर्विश्वेदेवा मुञ्चन्तु मरुतस्स्वस्त्येति । अथ यदेनमाहासौ मानुष इति तदुपोत्थाय दक्षिणेन पाणिना दक्षिणमध्वर्योरंसमन्वारभ्य जपति सव्येनाग्नीध्रस्य दक्षिणम् ॥

[अभिनिधाने पक्षान्तरम् जपफलं च]

(भा) प्रादेशेन [1]भूम्याः पीडन [2]वेद्या एवेति केचित् । भूमिमभिनिधाय जपो होतृसंस्कारस्सर्वार्थः ॥

(सू) षष्टिश्चाध्वर्यो नवतिश्च पाशा होतारमग्निमन्तरा विचृ(वृ)त्ताः। सिनन्ति पाकमतिधीर एत्यृतस्य पन्थामन्वेति होता । अग्निमन्वारभामहे होतृवर्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति ॥ ७ ॥

---

(वृ) प्रादेशेन—एवेति केचित्—आश्वलायनेनो[3]क्तम् । स्वमते तु देशमात्रस्य पीडनमिति ।

भूमिमभि—र्वार्थः—इदमह त्रिवृतेत्यादि तं [4]हन्मीति निर्देशात् होतृसंस्कारो [5] भूम्याः सर्वार्थ इति नावाहनार्थ इति । अथोध्वर्वेनुरिति प्रकरणान्तरत्वात् प्रवरार्थ इति [6]केचित्त्वाहुः होतृवर्य इति दर्शनात् ॥

---

[1] भूत्या —अ. [2] देव्या एति [2]—अ. [3] क्तत्वात्—क [4] निर्हन्मीति—घ. [5] स्कारे [6] केचित्पाठः—क. ख ग

[षष्ठीत्यादेः फलम्]

(भा) षष्टिश्चाध्वर्यो इति प्रवरनिमित्तमात्म[1]संस्कार. ॥ ७ ॥

(सू) मयि प्राणापानाविति पा(प्राणी)णी प्रत्याहृत्यो-
रोदेशं स्पृशते ॥ ८ ॥ ८५० ॥

[मयीत्यादेर्विनियोगादि]

(भा) मयि प्राणापानावित्युरोदेशस्पर्शनार्थ. । प्रत्याहरण—तूष्णीं हस्तद्वयेनाभिमर्शनम् । उप[2]देश पाणी प्रत्याहृत्य स्पृशतीति ॥ ८ ॥

(सू) आपृणोषि संपृण प्रजया मा पशुभिरापृणेतीध्म-
संनहनानि मुखं प्रति विधूनुते ॥ ९ ॥ ८५१ ॥

(भा) यथा मुख स्पृशन्नोष्ठ तथा कम्पनमिध्मसनहनानाम् ॥ ९ ॥

(सू) अथा(तथाप)प उपस्पृश्य अग्ने नय सुपथा राये
अस्मान् । एह्यग्न इह होता निषीदादब्धः(ब्धस्सु-
पुर)पुर एता भवानः । अवतांमा रोदसी विश्व-
मिन्वे यजा(जया ?)महे सौमनसाय देवानित्येते
ऋचौ जपन् होतृषदनाय [3]प्रव्रजति ॥१०॥८५२॥

---

(वृ) षष्टिश्चा—त्मसंस्कार इति—अथ यदेनमाहासौ मानुष इति प्रवरसंबन्धावगमात् होतृवर्य इति लिङ्गाच्चात्मसस्कार इति होतुरेव संस्कार इति । यद्यप्यभिमर्शने अध्वर्य्वाग्नीध्रयो. कर्मत्व तदङ्गं च मन्त्रः ; तथाऽपि होतृकाण्डत्वात्तत्संस्कार एव ॥

मयि प्राणा—नार्थः—मयीति लिङ्गात् ।

---

1 सस्कारम् ?—ग  2 देशयथामुख . स्पृशति नोष्ठ तथा-अ  3 प्रजपति ?—ग.

(सू) जघनेन होतृषदनं प्राङ्मुख उपविश्याथ होतृ-षदनमभिमृशत्यहे दैधिषव्येति । अथास्मात्तृणं निरस्यति ॥ ११ ॥ ८५३ ॥

द्वादशी खण्डिका ॥

---

[अभिमर्शनादौ व्यवस्था]

(भा) अथाप उपस्पृश्येत्यधिक ब्राह्मणाभिमर्शने प्रथमम् । होतृषद-नार्थं व्रजति जघनेन होतृषदनस्य पश्चात् ॥ ११ ॥

(सू) शु(ष्क ?)कं प्रच्छिन्नाग्रं वा निरस्तः परावसुस्सह पाप्मनेति ॥ १ ॥ ८५४ ॥

(सू) अथ होतृषदन उपविशति पातं मा द्यावापृथिवी उपस्थ इति दक्षिणपूर्विणं सव्योत्तरिणं वोपस्थं कृत्वा ॥ २ ॥ ८५५ ॥

(भा) उपस्थ उत्सङ्ग. । दक्षिण· पादः पूर्वो यस्योपस्थस्य[1] स दक्षिणपूर्वे [2] उपरि भवति सव्यस्य पादस्य दक्षिण [3] उपरिभावः अपूर्वत्वम् । सव्य उत्तरो यस्य स सव्योत्तर [?] उपरि भवति सव्यः पादो दक्षिणस्य ॥ २ ॥

(सू) अथ जपति सीद होतर्निहोता होतृषदन इति द्वे । पिप्रीहि देवाँ उशतो यविष्ठेत्येषा । वेषि होत्र मुत पोत्रं जनानां मन्धातासि द्रविणोदा ऋता वा । स्वाहा वयं कृणवामा हवींषि देवो देवान् यजत्यग्नि-

---

(वृ) अथाप–प्रथममिति—अग्नेर्गवां ब्राह्मणस्येति सिद्ध प्रथममपा-मुपस्पर्शनम् । अथाप उपस्पृश्येति द्वितीयं वाचनिकम् ॥

---

[1] स्य दक्षिण –ग [2] वीं. [3] व पूर्वत्वम्–क

(सू) रर्हन्। आदेवानाम् त्वमग्ने व्रतपा असि। यद्वो वयं प्रमिनाम। यत्पाकत्रा मनसा। विश्वेषां ह्यध्वराणामनीकं चित्रं केतुं जनिता त्वा जजान। स(स्वआ) आयजस्व नृवतीरनु(ऋक्षु?)क्षाः स्वार्हा इषः क्षुमतीर्विश्वजन्याः। यत्त्वा द्यावापृथिवी यन्त्वापस्त्वष्टा यं त्वा सु जनिमा जजान। पन्थामनु प्रविद्वान् पितृयाणं द्यु(पंजम)मदग्ने स(ग्नेस्स)मिधानो विभाहीत्येतस्य सूक्तस्य षट् सर्वं वा। विश्वेदेवाश्शास्तन मा यथेह होता वृतो मनवै (मनवं?) यन्निषद्य। प्रमे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि। यमिच्छामि मनसा सोऽयमागाद्यज्ञस्य विद्वान् परुष(पुरुष ?)श्चिकित्वान्। स नो यक्षद्देवताता यजीयान्निहिषत्सदन्तरः पूर्वो अस्मान्निषद्य। तदद्य वाचः प्रथमं मसीय येनासुराँ अभिदेवाँ असाम। ऊर्जाद(जतिउ?) उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्। नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः। यजाम देवान् यदि शक्रवाम माज्यायसश्शꣳस मावृक्षि देवा इति ॥ ३ ॥ ८५६ ॥

[अथशब्दभावः]

(भा) अथशब्दोऽर्थकृत्यप्रतिषेधार्थः ॥ ३ ॥

(सू) एतज्ज्ञापित्वा स्रुचावादापयति ॥ ४ ॥ ८५७ ॥

[आदापने मन्त्र. फलं उपपत्तिश्च]

(भा) अग्निर्होतेति स्रुगादापन प्रयाजाङ्गम् । अतस्स्वाहाकृत्यर्थं पुनर्न देवतोपलक्षणम् । अस्माकमन्यत्र स्विष्टकृतः अपरिपाठात् ॥ ४ ॥

(सू) सर्वत्र पुरस्ताद्याज्याया ये यजामहमुक्त्वा व्याहृतीर्दधाति ॥ ५ ॥ ८५८ ॥

(सू) नानूयाजेषु ये यजामहं करोति ॥ ६ ॥ ८५९ ॥

[व्याहृतिकालः पक्षान्तरं च]

(भा) यदि क्रियेत ; येयजामहमुक्त्वा देवतोपलक्षणम् । ततो व्याहृतयो भरद्वाजमतात् तथानूयाजेषु व्याहृतयः । उपदेशो येयजामहानन्तर व्याहृतयो नानूयाजेष्विति ॥ ६ ॥

---

(वृ) अग्निर्होतेति स्रुगादापन प्रयाजङ्गम्—आनन्तर्यादिष्टिहौत्रमन्त्राणा प्रक्रमानुसारेण सूत्रकारेण मन्त्रोपादानरहित विनियोगमात्रं क्रियते सामिधेनीरनूच्येत्यादिना , उपदेशादितराणीति वचनात् । आश्वलायनोक्तविनियोगानुसारेण विशेषसिद्धि । अतोऽग्निर्होतेत्येतत् स्रुगादापनम् ॥

अतः स्वाहा—अपरिपाठात्—स्विष्टकृति तु अग्निं स्विष्टकृतम् अयाडग्निरग्नेरिति पाठात् देवतोपलक्षणम् ॥

यदि क्रियेत—बह्वृचवचनात् भरद्वाजवचनाच्च विकल्पेन सर्वत्र यदि क्रियेत तदा ॥

येयजामह—जेषु व्याहृतयः—येयजामहाभावेऽपि याज्यायाः पुरस्तात् ॥

उपदेशो—जेष्विति—येयजामहमुक्त्वा व्याहृतिरिति सूत्रकारेणानन्तर्योपदेशात् तत उत्तरं देवतोपलक्षणम् । नानूयाजेषु व्याहृतयः येयजामहाभावात् ॥

(सू) अनवानमनूयाजान् यजति । अमत्सतेति वाऽपानिति ॥ ७ ॥ ८६० ॥

[अनवानादिपदार्थः विशेषश्च]

(भा) अनवानं—अनुच्छ्वसन् । अपानिति—उच्छ्वसिति । याज्यानुवाक्यानामनूहस्तद्देवत्यानामागमः ॥ ७ ॥

(सू) पुरस्ताल्लक्ष्मा पुरोनुवाक्या । उपरिष्टाल्लक्ष्मा याज्या । एतद्वा विपरीतम् ॥ ८ ॥ ८६१ ॥

(सू) उभयतो लक्ष्मा पुरोनुवाक्या तथा याज्येत्येके ॥ ९ ॥

(सू) तिष्ठन् पुरोनुवाक्यामन्वाह । आसीनो याज्याम् । उभे तिष्ठन्नासीनो वा ॥ १० ॥ ८६२ ॥

(सू) सा ह त्वै समृद्धा पुरोनुवाक्या यामभिव्याहरन् देवतामेवाग्रेऽभिव्याहरति । सा ह त्वै समृद्धा याज्या यस्यै देवताया अधिवषट्करोति ॥ ११ ॥ ॥ ८६३ ॥

[पुरस्ताल्लक्ष्मादिपदार्थः]

(भा) पूर्वस्मिन्नर्धर्चे यस्या देवता सा पुरस्ताल्लक्ष्मा उत्तरस्मिन्नर्धर्चे यस्या देवता सा उपरिष्टाल्लक्ष्मा ।

---

(वृ) यज्यानु—मागमः—तस्माद्च नोहेदिति विकृतौ देवतान्तरे नोहः ।

[याज्यानुवाक्या विनियोजकम्]

पूर्वस्मिन्न—ल्लक्ष्मा—लक्ष्मवचनाल्लिङ्गेन विनियोगो याज्यानुवाक्यानाम् ॥

[देवतोपलक्षणनिषेध. याज्यानुवाक्यानिर्णयश्च]

(भा) देवतामुक्त्वा यस्या वषट्कार· ॥

न प्रयाजेषु देवतोपलक्षण प्रथमवर्जेषु । पाठक्रमे[1]ण याज्यानुवाक्या विन इन्द्र मृगो न भीम इति वैमृधस्य । विष्णोर्नुक तदस्य प्रियमित्युपांशुयाजस्य वैष्णवस्य । त एवाग्नीषोमीयस्य । वैकल्पिकानामपि देवतानामूहो याज्यानुवाक्यावर्जम् ॥ ११ ॥

---

[पुरस्ताल्लक्ष्मतोपपत्ति.]

(वृ) देवता–ट्कारः—देवतामेवाग्रेऽभिव्याहरतीति देवतापदोपक्रमत्वम् । देवताया [2] अपि वषडिति देवतापदान्तता याज्यायाः ॥

[प्रयाजे देवतानिर्देशव्यवस्थादि]

न प्रयाजेषु–र्जेषु—ब*चाना प्रथमस्य समिधः समिधो अग्न इति पाठात् । न द्वितीयादिषु तनूनपातादि निर्देशो मान्त्रवर्णिकदेवतापक्षेऽपि । इतरथा प्रथममेव पठितव्यम् । निरुक्तकारवचनादग्निदेवतात्व वक्ष्यते माध्यन्दिने । अतोऽपि विकल्पो बह्वृचपक्षेण । तस्मात्समिदादीनां मन्त्रवर्णप्राप्तदेवतानिमित्तनामधेयत्वमिति । केचित्तु समिदादीनामग्नेश्च सह देवतात्वमिति वदन्ति ॥

[याज्यानुवाक्यानिर्णयविशेषः देवतोक्तिविशेषश्च]

पाठक्रमेण याज्यानुवाक्याः—अग्निर्मूर्धेत्यादयः ।

विन इन्द्र–होमीयस्य—उपांशुयाजस्याग्नीषोमा सवेदसेत्येव ॥

वैकल्पिका–वर्जम्—आवाहनस्विष्टकृत्सूक्तवाकादिषु प्रजापतिमात्रपाठो विष्ण्वादेरुप्युपलक्षणम् । न तद्देवताकत्वपक्षे । प्रजापतिनिर्देशस्य प्रदर्शनार्थत्वात् । प्रकृतावूहशब्द. पदान्तरप्रयोगाभिप्रायेण ; अत. इन्द्रमहेन्द्रवत् प्रकृतावप्यपरिपठितदेवतान्तरनिर्देशोपपत्ति· ॥

---

[1] णैव याज्या–अ. [1] अधिवष–क. ग.

(सू) ऋचि प्रणवं दधाति याज्यावर्जम् ॥१२॥८६४॥

त्रयोदशी खण्डिका ॥

---

[प्रणवानुषङ्गस्थालानिमानं च]

(भा) ऋचि प्रणव. सामिधेनीपुरोनुवाक्यानुवच[1]नानुशंसनेषु न जपेषु । [2]बह्वृचवचनात् ॥ १२ ॥

(सू) ओमित्यृचोऽधिप्रणौति ॥ १ ॥ ८६५ ॥

(भा) [3] ऋचोऽधिप्रणौतीति द्वितीयाश्रुति· प्रथमाया अर्थ· ॥ १ ॥

(सू) उत्तमस्याक्षरस्य विकारमेक आहुः ॥२॥८६६॥

[तदाक्रमाक्षरविकारादि]

(भा) [4] उत्तमस्य स्वरस्य [5]व्यञ्जनस्यापि प्रणव यथा अग्ने दीवतं बृहदोम् [6]इति। यदा ऋचि त्वन्त तम्य म्थाने [7]ऋचि प्रणवं दधातीति [8]उत्तमस्या[9]क्षरस्य तु विकार उक्त· ॥ २ ॥

---

[द्वितीयपदार्थः]

(वृ) ऋचि प्रणव–श्रुतिः—श्रुत्यन्तरमित्यर्थ· । न द्वितीयाविभक्त्यभिप्रायम् ॥

प्रथमाया अर्थः—श्रुतेः ।

उत्तमस्य–र्मभेदात्—प्रणवस्योच्चैर्धर्मकत्वमाश्वलायनेन भगवतोक्तमिति धर्मभेदाहकप्रणवयोरधिकत्वमेव तत्र नियतमिति ॥

---

1 नाशंसनेषु–अ 2 बहुवचनात् ?–अ 3 ऋचोऽधिप्र ?–अ 4 त्तरस्य
5 व्यञ्जनस्याप्रापितविकार –ग व्यञ्जनस्यापिविकार प्रणव –अ 6 दोम् ? इति–घ 7 ऋचित्वमन्त्यस्याक्षरस्य ऋचित्व तस्य स्थानर्क्षचि–अ 8 उत्तरस्या–घ.
9 क्षरविकार–घ

(सू) आधिकस्स्यादित्यपरम् ॥ ३ ॥ ८६७ ॥

[सूत्रे सततपदसिद्धार्थः]

(भा) एकैराचार्यैं ऋचोऽधि प्रणौतीति चानया श्रुत्याऽ[1]धिक परिकल्पितम् । यदा त्वधिक [2] तदा अग्ने दीद्यत बृहतोमिति । तथाऽपाꣳरेताꣳसि जिन्वतोमिति उपाश्विज्यास्वधिको नियमः [3] धर्मभेदात् ॥ ३ ॥

(सू) विज्ञायते च ऋचमुक्त्वा प्रणौत्यपरामुक्त्वा प्रणौत्यधिके पुनरेतदुपपद्यते सन्ततमृचा वषट्करोतीति च तद्याज्याया अधिवषट्करोति ॥ ४ ॥ ८६८ ॥

(भा) ऋचमुक्त्वत्यधिकमुपपद्यते ।[4]सततमृचा वषट्करोतीत्यनुच्छ्वासवाद एव । ऋचो वषट्कारस्य च मध्ये नोच्छ्वसिति ॥ ४ ॥

(सू) अपगूर्य वषट्करोतीत्युच्चैर्वादश्शब्दस्य ॥५॥८६९॥

[वषट्कारोच्चैस्त्वम्]

(भा) उच्चैर्वादो वषट्कारस्य याज्यातः श्रुतिद्वयेनापि विधीयते ॥ ५ ॥

(सू) यं कामयेत प्रमायुकस्स्यादिति तस्योच्चैरपगूर्य निखिदन्निव वषट्कुर्यात् । यं कामयेत पापीयान् स्यादिति नीचैस्तरां तस्य याज्याया वषट्कुर्यात् । यं कामयेत वसीयान् स्यादित्युच्चैस्तरां तस्य याज्याया वषट्कुर्यात् । न वसीयान्न पापीया-

---

(वृ) ऋचमु–पपद्यते— ऋचमुक्त्वेतिवत् ।

सततमृचा–च्छ्वसिति —उपाश्विज्यास्वपि ।

[उच्चैस्त्वलाभप्रकारः]

उच्चैर्वा–धीयते—ऋचा वषट्करोतीत्याधिकत्वे सिद्धे याज्या-

---

[1] धिक –अ [2] तथा बृहदेमिति उपाश्विज्यास्वधि–अ [3] त:–ग.

(सू) निति समं तस्य याज्याया वषट्कुर्यात् । उच्चैः क्रौञ्चमिव वषट्कुर्यात्स्वर्गकामस्येति विज्ञायते॥६॥ ॥८७०॥

[वषट्कारोच्चारणभेदफलभेदादि]

(भा) [1]यदा त्वधिकमुच्चैर्याज्यामुक्त्वा [2]निखिदन्निव वषट्करोति यजमानस्य मरणकाम· । [3]प्रतिषेधार्थान्येवप्रकाराणीति[4] [5]न्याय । पापीयान् दरिद्रः पापिष्ठो वा । अतिशयेननीचै नीचैस्तराम् । क्रौञ्चमति-क्रुष्टम् ॥ ६ ॥

(सू) बलीयऋचो वषट्करोतीति तद्वत् ॥७॥८७१॥

बलीयः [6]ऋचो वषट्करोतीत्युच्चैर्वाद एव ॥ ७ ॥

---

(वृ) या अधिवषट्करोत्यपगूर्य वषट्करोतीनि श्रुतिद्वयेनोच्चैस्त्व विधीयते ॥

[अधिकोच्चैस्त्वलाभः]

**यदात्वधिक–ज्यामुक्त्वा**—[1]याज्ययाऽधि (ज्यायाअधि) वषट्-करोतीत्यधिकोच्चैस्त्वपर यदा तदोच्चैर्याज्यामुक्त्वा ततोधिक वषट्कारः । अथवा यदा त्वधिकमित्यादेरपरा व्याख्या—य कामयेत प्रमायुकस्स्यादिति तस्योच्चैरिति पुनरुच्चैस्त्वविधानात् ऋग्धर्मतया प्राप्तोच्चैस्त्वादधि-कोच्चैस्त्वेन याज्यामुक्त्वा ॥

**निखिदन्निव वषट्करोति**—निखिदन्निव–निष्खिदन्निव । अथवा खिद्यमान इव ॥

[प्रकृतन्यायपदार्थः]

**यजमानस्य–न्यायः**—पदाभ्यासप्रतिषेध इति वक्ष्यते ।

---

1 सन्तत–अ 2 तदात्वधि–अ. 3 खिदन्निव–ग. 4 प्रतिषिद्धा–अ.
5 णीतिय –अ. 6 ऋचे–अ.

(सू) यां देवतां यजेत्तां मनसा ध्यायेत्पुरा वषट्कारादिति विज्ञायते ॥ ८ ॥ ८७२ ॥

(सू) वषट्कृत्य प्राण्यापान्य निमिषेत् ॥ ९ ॥

(सू) अपानेनैव प्राणं धारयेन्निमिषेण चक्षुरिति विज्ञायते ॥ १० ॥ ८७३ ॥

[देवताध्याने मानम्]

(भा) देवताध्यान शब्देन [1]निरुक्तस्मृतेः ॥ ९ ॥

(सू) यं द्विष्यात्तस्यौषडितिवषट्कुर्यात् । ओषत्येवेति विज्ञायते ॥ ११ ॥ ८७४ ॥

(सू) वाषडित्येके समामनन्ति ॥ १२ ॥ ८७५ ॥

(सू) वौषाडित्येकेवाक्षदित्येके । वौक्षडित्येके वोक्षाडित्येके॥ १३ ॥ ८७६ ॥

(सू) वषत्कार मामेवाञ्शो अहं त्वां बृहता मन उपह्वये । न मां न मे वाचं हिनसात् । हव्यं देवेभ्योऽभिवहाम्योजस्सहस्सह ओजः । वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीरित्येतद्वषट्कृते जपति । वाग्वषट्कार नमस्ते अस्तु मा मा हिंसीरिति वा ॥१४॥ ॥ ८७७ ॥

[द्विषधातूपादानफलम् वषट्शब्देप्लुतासिद्धादि च]

(भा) औषट् [2]द्वेष्यस्येति प्रतिषेधार्थम् । सर्व[3]स्याद्यस्य प्लुतिः । वषट्कारसमानार्थे [4] पित्र्यायामप्लुतिवचनात् । बह्वृचाना [5]केचिद्वौ-

---

(वृ) देवता-स्मृतेः—स्वर्गकामस्य ।

औषद्वेष्यस्येति प्रतिषेधार्थः—औषत्येव दहत्येव ।

[प्लुततन्मात्रामानम्]

सर्वस्या-षितत्वात्—व्याकरणेन श्रौषड्वौषडित्युपादानात् ।

---

[1] केस्मृता– क्तस्मृते–अ ग [2] षट्द्वेष्यस्य–अ [3] स्या—स्य—ति–अ
[4] पित्रीयाया–घ. क्रयाया . . . स्तितिवचनात्–अ [5] केचित् वषट्श–अ.

(भा) षट्छब्दस्य [1] न पर्यायशब्दस्येति स्वरूपशब्दस्येति[2] परिभाषितत्वात् । [3] त्रिमात्रता प्लुति । यथा वौषडति वषट्कारस्य । एवमन्यत्रा-[4] प्याद्यस्य स्वरस्योपदेशः । [5] हेत्रायाजमानस्य न विकल्पः समुच्चय. । सङ्ख्या[6] युक्ते तु विकल्प एव । यथा षट्सर्वं वेति ॥ १४ ॥

(सू) अङ्गुलीमक्तामिषे प्राणायेति मुखदेशमूर्ध्वमुत्क्ष्योर्जेऽपानायेत्यवाचीनं नियच्छति ॥१५॥८७८॥

(भा) अक्तामुक्षिताम् । मुखस्पर्शनेनोत्कर्षणम् ॥ १५ ॥

(सू) अवान्तरेडामवत्तामङ्गुलीभिर्निगृह्य न मुष्टिं करोति ॥ १६ ॥ ८७९ ॥

(भा) अवत्ता—गृहीताम् । मुष्टिं सहाङ्गुष्ठेन ॥ १६ ॥

(सू) मुखमिव प्रत्युपह्वयते ॥ १७ ॥ ८८० ॥

(भा) मुखतुल्य धारयति ॥ १७ ॥

(सू) यं कामयेतापशुस्स्यादिति पराचीं तस्येत्युक्तम् । ॥ १८ ॥ ८८१ ॥

---

(वृ) त्रिमात्रता—समुच्चयः—बह्वृचानां परिभाषायामुक्तत्वाद्वषट्कारादीनाम् ॥

सङ्ख्या—मुक्षिताम्—अङ्गुलिपर्वणोराज्येन ।

मुखस्पर्शनोत्कर्षणम्—आश्वलायनेनौष्ठयो. स्पर्शनविधानात् ।

अवत्तां—ष्ठेन—अभिग्रहण ता न करोति ।

मुखतुल्यं—धारयति—मुखमिव प्रत्युपह्वयेतेति वचनात् ।

---

[1] न न पर्याय—घ. [2] स्येतिभाषितत्वात्—ञ. [3] त्रि . त्रताति —ञ. भाषितत्वात्—ग. [4] घ्यसीतिवष ?—ञ [5] द्यस्वरस्यो—ञ [6] होत्रा या याजमानेन वि—ञ. I हेत्राया यजमानने नावि—ग. II युक्तेषु वि—ञ वंवेति—ञ. अर्थामुत्थिताम्—ग

(भा) इडा पराची प्रतिचीच व्याख्यास्यते ॥ १८ ॥

(सू) **पदाभ्यासप्रतिषेधस्तु ॥ १९ ॥ ८८२ ॥**

(भा) पदाभ्यासश्च प्रतिषेधश्च पदाभ्यासप्रतिषेधः । स आभ्यां श्रुतिभ्यां क्रियते ॥ १९ ॥

(सू) **विज्ञायते चेडोपहूतेति तत्पराची । उपहूतेति तत्प्रतीची ॥ २० ॥ ८८३ ॥**

(भा) पराचीमिति प्रतिषेध[1]समानस्य पदस्य प्रतीचीमित्यभ्यासविधिरसमानस्य पदस्य । [2]कथम्[2] असन्दिग्धाच्छ्रुत्यन्तरादुत्तरस्मादिडोपह्वातोपहूतेडेति । इडा पराग्यस्माक [3]परिपठिता [4]प्रतिषिद्धा

---

(वृ) **इडापराची प्रतीची च व्याख्यास्यते**—य कामयेतापशुस्स्यादिति प्रतीचीं तस्येडामित्यादिश्रुतेर्व्याख्या ॥

**पदाभ्यासश्च—पदस्य**—अस्यार्थः—अपशुत्वादे[?]र्यजमानानिष्टस्य अशुभरूपस्य फलस्याध्वर्य्वादिभिरपि कामयितुमयुक्तत्वात् पराचीं तस्येडामिति पराचीत्वप्रतिषेधः क्रियते । समानस्य पदस्येति सदृशस्य पदस्येत्यर्थ । इडोपहूतेति पदस्य व्युत्क्रमरूपमुपहूतेत्येतत्सदृशमेकार्थत्वात् । अक्षरैक्याच्च क्रमभेदमात्रात् पदाभेदात् सदृशत्वम् । अतः पराचीं तस्येति सदृशपदद्वयप्रयोगप्रतिषेध । असमानस्य पदस्येति असदृशस्यैकस्यैव पदस्योपहूतेडेत्यभ्यासविधिः ॥

**कथम्—इति**—कथ पराचीं प्रतीची पदयोरयमर्थ इत्यत्राह—

**असंदिग्धा—विकृत्यर्था**—प्रतिषिद्धप्रयोगो विकृत्यर्थः । प्रकृतौ प्रतिषेधोपदेशात् । कथ विकृतौ प्रतिषिद्धस्य निवेश इति चेत्—

---

[1] षेधस्स मासस्य—**अ.** [2] कथमिति—**अ.** [3] पठिता—**अ** [4] प्रतिषेध वित्यार्थो ?—**अ.**

(भा) विकृत्यर्थो । मा भूदनर्थ. [1] पाठ इत्युपहूतेडोपहूतेडेति प्रकृत्यर्थे- अथवा पदाभ्यासस्य तुल्यस्य प्रतिषेध· [2] पराच्यां क्रियते । अतः [3] प्रतीच्युपहव कर्तव्यतया श्रुत्यन्तरेण व्याख्यात [4] उत्तरेण । अथवाऽर्थ. , अस्मदीया न प्रतिषिद्धा [5] । अन्यै[6]व सा यत्र तुल्यः पदाभ्यास इति सङ्कर्षपक्ष ॥ २० ॥

---

(वृ) **मा भूद्–विधानात्**—पराचीत्वमनभ्यास. । नव वा पराचीरिति दर्शनात् तत्प्रतियोगितया प्रतीचीमित्यभ्यासोपदेश उपहूतेडेत्यस्य । यद्यपि श्रुतौ पराच्या· प्रथम· पाठ तथाऽपि पदाभ्यासप्रतिषेध इति द्वन्द्वसमासपक्षे प्रतीच्या [7] अनुष्ठेयतया अभ्यर्हितत्वात् पदाभ्यास-प्रतिषेध इति पूर्वनिपात ॥

**अथवा–क्रियते**—यदा षष्ठीसमास तदाऽपीडोपहूतेति पराच्या एव प्रतिषेध. । एकस्यैव पुन प्रयुज्यमानस्याभिमुख्याभ्यास-त्वेऽपि पदाभ्यासप्रतिषेध इति वचनात् सदृशपदयो· प्रयोगेऽप्यभ्यासता गौणी । तस्या पराचीमिति प्रतिषेध इडोपहूतेति [8] पठितस्य ॥

**अतः प्रती–त्तरेणेति**—प्रतीच्या उपहूतेडोपो अस्मानित्येत-योत्तरेण विज्ञायते चेत्यादिना तच्छ्रुत्यन्तर प्रतीच्योपहवकर्तव्यतया विधिपरतयोपात्तमिति[9] व्याख्यानान्तरम् ॥

**अथवार्थ इति**—व्याख्यानान्तरम् ।

[10]**अस्मदीया–पक्षः**—यत्र शाखान्तरे एकस्यैव पदस्याभ्यासो मुख्यः पठ्यते तस्य प्रतिषेध इति सकर्षपक्ष. । अस्मिन् पक्षे यथा-पाठ प्रयोगः ॥

---

[1] त्वथक –अ [2] पराचय–ख ग घ. [3] प्रतिषिद्धोपहव –ग च्युप-साद –ख [4] इतरेणेति अर्थवाद - ङ [5] द्धा –ङ [6] अस्मदीया न प्रतिसिद्धा। अन्यैव [7] च्यानुष्ठेयरूपतया–ख ग [8] तत –घ. [9] मिति । व्याख्यानान्तर-मथवेति । अस्मदीया–घ [10] अस्मदीयानप्रतिषिद्धा । अन्यैव—प्रतिषिद्धा–ख, ग सायत्रतुल्य पदाभ्यास इति सकर्षपक्ष·–ख, ग.

(सू.) आध्वर्यव एवातोऽन्यानि कर्माणि होतुराम्नातानि भवन्ति उपदेशादितराणीतराणीति ॥२१॥८८४॥

(भा.) आध्वर्यव उक्त [1]हौत्र कार्त्स्न्येन दर्शपूर्णमासयो. । उपदेशो बह्वृचाम्नाय । तस्मादागमयितव्यानितराणि वैकृतानि [2] कर्माणि । बह्वृचशेषत्वादस्मदीयहौत्रस्य । [3]किञ्चिदाम्नायते [4]विकृतौ । तत्र स्वकीये वा बह्वृचाम्नायो वा विकल्प. । यत्र तु पादाभ्यास इति न ह्यकृत्स्न पठेत्सूत्रकार ।

---

(वृ) आध्वर्यव–सयोः—अस्मिन् प्रकरणेऽनुक्ताना हौत्रशेषधर्माणां पञ्चदशसामिधेनीरन्वाहेत्येवमादीना आध्वर्यवकाण्डोपादिष्टत्वात् दर्शपूर्णमासयोर्हौत्र कृत्स्नमस्माकमुपादिष्टमिति ॥

उपदेशो–यहौत्रस्य—ऋग्वेदेन होता करोतीति परिभाषाया-मुक्तत्वात् । अथवा बह्वृचशेषत्वादिति बहुव्रीहिसमास. ।

यत्र किञ्चि–विकल्पः—अस्माक तु प्रकृतिवत् साङ्गोपदेशा-भावाद्विकृतावस्मदीयोपदिष्टबह्वृचाम्नातयोर्विकल्प ॥

यत्र तु–सूत्रकारः—यत्र तु पदाभ्यास इत्यादि [5]वैकृत धर्मो-पदेशः प्रतिषिद्धो विकृत्यर्थ. [6]इत्युक्तम्, तत्र बह्वृचेन विकल्प. । न ह्यकृत्स्नं [7]पठति सूत्रकार इति,—सूत्रकारस्य प्रयोगविधातृत्वात् अकृत्स्नपाठे प्रयोगासभवात् सूत्रकारोपदेशेऽपि विकल्पः ॥

---

[1] उक्त होत्र कार्त्स्नैन [2] वैकृतानि बह्वृच—ग. ञ [3] यत्र किञ्चिदा—घ ञ [4] विकृतावस्मदीयं तत्र—घ [5] दिकृत—ख ग [6] इति तत्र बह्वृ—ख घ [7] पठन्ति ख.—पठन्तीति—ग.

(भा) यत्र तु मन्त्राम्नाय [1]एवात्र नियत आगम ॥ २१ ॥

॥ इति हौत्रकल्पस्समाप्त ॥

---

## अथ पञ्चमः प्रश्नः

(सू) [2]अग्न्याधेयं [3]व्याख्यास्यामः ॥ १ ॥ ८८५ ॥

[आधानेपूर्वाङ्गं संकल्पप्रकारश्च]

(भा) सशोध्यात्मान तपोहोमजपै. सभार्यो मैत्रीं कृत्वा सर्वभूतै.

---

(वृ) **यत्र तु—आगमः**—यत्र तु मन्त्राम्नाय एव याज्यानुवाक्यादिरस्मदीये तत्र बह्वृचात्प्रयोगागमो नियतः दर्शपूर्णमासयो समप्रोपदेशेऽपि बह्वृचप्रयोगो विकल्प्यते ॥

इति श्रीमदापस्तम्बश्रौतसूत्र धूर्तस्वामिभाष्यवृत्तौ
श्रीरामाग्निचित्कृताया हौत्रकल्पस्समाप्त

---

## अथ पञ्चमः प्रश्नः

[भाष्यदर्शितहोमादेर्विशिष्टयोपयोगः प्रमाणं च]

**संशोध्या—भूतैः**—कर्मादिष्वेतैर्जुहुयात् पूतो देवलोकान् समश्नुते इत्यादि श्रुतिदर्शनात् प्रथम चरित्वा पूतो भवतीत्यादिस्मृतिदर्शनाच्च सर्ववैदिककर्मसाधनभूताग्निसंपादनयोग्यतासिद्ध्यर्थं प्रागाधानादधिकारिण· पत्नीयजमानयो· शुद्धि कर्तव्या । अथ वै खलु कोनु पूत

---

[1] एव तत्र तु नियत अगाम —घ. वर्देसू—ङ. [2] एव दर्शपूर्णमासौ व्याख्याय सर्वश्रौतकाण्डोपकारक सर्वप्रथमभावि चाग्न्याधेयमारभते (रु) [2] अग्न्याधेयमितिभावे य·, बाहुलकात् । अग्निराधेयो यस्मिन् कर्मणीति बहुव्रीहिर्वा । तच्च उपनयनादिवत् आवश्यक पुरुषस्य, श्रुते, स्मृतिष्वप्यावश्यकपुरुषसस्कारेषु पाठात् । वसिष्ठवचनात् । आचार्येणापि द्विजातीना वर्णधर्मत्वेन अनुक्रमणात् । मनुनाप्युपपातकमध्येऽनाहिताग्निताया स्मरणात् । बोधायनेनैहिकफलविशेषस्यापि प्रतिपादनात् इति

(भा) यस्मिन्नक्षत्रेऽग्निमाधातुकामः पर्वणि वा तस्य पुरस्तात्संवत्सरे द्वादशाहादौ वा संकल्पं करोति। अग्नीनाधास्ये सर्वक्रत्वर्थम्। यैरस्य-चिकृतो याॅश्च शक्ष्यामि प्रयोक्तुम्। वसन्ते कृत्तिकासु रोहिण्याममु-(मुस्मिन्) ष्मिन्वा पर्वणीति॥

[अरणेराहरणं, विद्युदसिविषये मतिभेद]

(सू) यो अश्वत्थश्शमीगर्भ आरुरोह त्वे सचा।
तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिस्सहेति [1]शमी-
गर्भस्याश्वत्थस्या[2]रणी आहरति॥ २॥ ८८६॥

---

(वृ) यो वै खलु शुद्धे योनौ प्रादुष्ष्यात्। अथ वै तर्हि कस्मादग्निश्शुद्धः यजमानो वा अग्नेर्योनिस्स हि पाप्मना सन्न इति। [3] अस्ति वा अरे तस्य [4] पूतिस्तपस्तप एवास्य पाप्मान निरदहत तस्मादग्नि· पूत कर्मसु सौम्यौ भवतीति दर्शनात्। [5] अथवा अविघ्नेन कर्मसमाप्त्यर्थं च मैत्रं सर्वभूतैः पत्नीयजमानाभ्या कर्तव्यम्॥

**यस्मिन्नक्षत्रे—करोति**—यस्मिन्नक्षत्रेऽग्निमाधास्यन् स्यात् तस्मिन् संवत्सरे पुरस्तादित्यादिवक्ष्यमाणकालानुरोधेन॥

**अग्नीना—पर्वणीति**—संकल्प॥

---

[1] शमीगर्भस्येति षष्ठीसमास (रु) [2] अध्वर्यु। अरणिप्रमाणम् अनुक्तत्वादर्थलक्षण भवति चतुरङ्गुलमुत्सेधा द्वादशाङ्गुल विस्तीर्णा षोडशाङ्गुलमायतामिति बौधायन। चतुर्विंशत्यङ्गुलावेति कात्यायन। 'अरणी चकारयेत् प्रमाण चाङ्गुलैः कुर्वन् गायत्री पठेत् पठतश्चाक्षरसंख्यान्येवाङ्गुलान्यरण्या भवन्तीति' वैष्णवपुराणे (रु). [3] असिवा—ख ग [4] पुन पुनस्तप एव तस्य पाप्मानिरदहत—**ख. ग.** [5] तथा अविघ्नेन समाप्त्यर्थं च सर्वभूतैर्मैत्र कर्तव्यम्—घ होमादिसाधारणत्वात्

(भा) ततोऽरण्योराहरणादि समिदाधानान्तम् । न विद्युदसि , अयज्ञत्वात् । इष्टिषु तु दर्शपूर्णमासविकारत्वाद्विद्युदसि वृष्टिश्च । उपदेशो विद्युदसि संकल्पः । अरण्योराहरणादि पुनश्चेष्टिषु विद्युद्वृष्टी ॥

[अरण्याहरणकर्तृदेशकालादि]

आहरणमरण्यो॰ पूर्वछिन्नयोरपि[1] युगपदेकेन मन्त्रेणौपासनसमीपमध्वर्युणा प्रात॰काले । [2]उत्तरारणिरपि यावज्जीवस्य [3]पर्याप्ताह्रियते । यो अश्वत्थ इत्यवयवे कृत्स्नोपचार । अभिमन्त्रणं च युगपत् ॥

---

[अत्र भाष्यग्रन्थोपलक्षितावधिः]

(वृ) ततोरण्यो–धानान्तम्—ब्रह्मौदनवरदानान्तम् ।

[विद्युदसि सद्भावपक्षे उपपत्तिः]

उपदे–सिसंकल्पः—सर्वयज्ञेष्विति यज्ञग्रहणस्य होमादेरुपलक्षणत्वात् आधानचतुर्होतृजपादिष्वपि कर्तव्यो विद्युदसि । सकल्पात्परतो विद्युद्भवत्येव ॥

[विद्युद्वृष्टोः प्रवृत्तिभेदहेतुः]

अरण्योरा–द्वृष्टी—प्रयोगभेदादित्युपदेश । अनङ्गत्वादिति मीमांसकाः । यदा आधानानन्तरमेव निरुप्यन्ते तदा नित्यौ विद्युद्वृष्टी । यदा तु सद्य इष्टीनामाधानाङ्गत्वेऽपि भवत्येवाधानकृतः ॥

[पूर्वभिन्नग्रहणयुगळाहरणवृक्षव्यपदेशाद्युपपत्तिः]

आहरण–गपत्—अशुष्कयोरग्न्युत्पादनासामर्थ्यात् । पूर्व[4]छिन्नयोरेव द्वादशाहादौ । एकवचनत्वेऽपि मन्त्रपदानां अरणियुगळाभिप्रायत्वादेकवचनस्य सकृदुक्त्यैव युगपदाहर्तव्य नाभ्यास ॥

यो अश्वत्थ–पचारः—अश्वत्थशब्दस्यावयविपरत्वात् ॥

अभिमन्त्रणं च युगपत्—यद्यप्येकवचनान्त. ॥

---

1 रेव–ख ग घ. 2उत्तरारण्यपि–ग 3 पर्याप्तायावज्जीवस्य क्रियते–क.

4भावितत्वात्

(सू.) [1] अशमीगर्भस्येति वाजसनेयकम् ॥३॥८८७॥

[अशमीगर्भेऽपि मन्त्रानिवृत्तिः]

(भा) अशमीगर्भस्याप्यनिवृत्तिर्मन्त्रस्य हिरण्यकेशिमतात् । [2] पृथिवी-शमीति ॥

(मू.) अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञिया᳚-
संभरामि । शान्तयोनिं शमीगर्भमग्नये प्रजनयि-
तवे । आयुर्मयि धेह्यायुर्यजमान इत्यरणी अभि-
मन्त्रय सप्त पार्थिवान् संभारानाहरति । एवं
वानस्पत्यान् पञ्च पञ्च वा ॥ ४ ॥ ८८८ ॥

(सू) भूयसो वा [3] पार्थिवान् ॥ ५ ॥ ८८९ ॥

[पार्थिवभूयस्त्वपक्षे सङ्ख्याभेदः]

(भा) भूयसः पार्थिवान् अष्टौ ; वानस्पत्यास्सप्तैव ॥

---

[शमीगर्भपदविग्रहः]

(वृ) अशमीगर्भ—मतात्—शमीति—शम्या गर्भश्शमीगर्भ इति षष्ठीसमास. न पुनश्शमी यस्य गर्भ इति । पृथिवी शमीतिपृथिवीत्वेन संस्तवाधारत्व शम्याः ॥

[भाष्यदर्शितसंख्याभेदोपपत्तिफलभेदश्च]

भूयसः—पार्थिवा अष्टौ वानस्पत्याः सप्तैव—हिरण्यान्ता अष्टावुपदिष्टाः । सप्तपक्षे शर्कराणा लोपः । हिरण्यस्यावश्य भावि-(भावित) त्वात् । तथा च भाष्यकारः—पञ्चपक्षे ताम्रशकलानि हिरण्य-स्थाने पञ्चम इति वक्ष्यति । केचित् पञ्चपक्षेऽपि पार्थि[4]वान् भूयसोऽष्टौ न लभ्यन्त इति ॥

---

[1] अप्यशमी—क ख अशमीगर्भेऽपि मन्त्रानिवृत्ति अश्वत्थमात्रस्येव शमीगर्भस्तवनात् हिरण्यकेशिबोधायनाभ्यामुक्तेश्च (रु). [2] पृथिवीवशमीति—क घ.
[3] अष्टौ पार्थिवा वक्ष्यन्ते । ते सर्वे भवन्ति सप्तत्वे वानस्पत्यानाम्, पञ्चत्वे तु सप्त अष्ट वा स्यु (रु) [4] वा भूयसो—घ.

(सू.)　न सम्भारान् संभरेदिति वाजसनेयकम् ॥ ६ ॥
॥ ८८० ॥

[असंभारपक्षे कृत्यविशेषः]

(भा)　असभारपक्षेऽपि अरणी अभिमन्त्र्य तूष्णीं निधानम् लिङ्ग-विरोधात् । सभाराणा पूर्वगृहीतानाम[1]प्याहरणमौपासनसमीपे[2] ॥

(सू)　वैश्वानरस्य रूपं पृथिव्यां परिस्रसा । स्योनमा-विशन्तु नः इति सिकताः ।
यदिदं दिवो यददः पृथिव्यास्सञ्जज्ञाने रोदसी संबभूवतुः । ऊषान् कृष्णमवतु कृष्णमूषा इहो-भयोर्यज्ञियमागमिष्ठा इत्यूषान् ॥
उतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य । तत्ते न्यक्तमिह संभरन्तः शतं जीवेम शरदस्सवीराः इत्याखुकरीषम् ।
उर्जं पृथिव्या रसमाभारन्तः शतं जीवेम शरदः पुरूचीः वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवामः इति वल्मीकवपाम् ॥
प्रजापतिसृष्टानां प्रजानां क्षुधोऽपहत्यै सुवितं नो अस्तु उपप्रभिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामि इति [3]सूदम् ।

---

[भाष्यस्थलिङ्गाविरोधपदस्यार्थः]

(वृ)　असम्भार–विरोधादिति—य त्वा समभरन् स सम्भृतस्सीदेति लिङ्गविरोधात् ॥

---

1 प्याहरणे औपासनसमीपम्—क　2 णेसमीपम्—ङ।　3 सूद जलाशयस्य मत् अशोष्यस्य (रु)

यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टाꣳसरिरस्य मध्ये। तस्येदं विहतमाभरन्तोऽछम्बट्कारमस्यां विधेम इति वराहविहतम् ॥७॥ ८९१ ॥

प्रथमा खण्डिका

---

याभिरदꣳ हज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम्। तानश्शिवाश्शर्करास्सन्तु सर्वाः इति शर्कराः।

अग्ने रेतश्चन्द्रꣳ हिरण्यमद्भ्यस्संभूतममृतं प्रजासु तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयम् इति हिरण्यम् ॥ १ ॥ ८९२ ॥

(भा) सिकताः—वालुकाः । ऊषरे[1] भवा ऊषा[2]। आखु[3] करीष आखूत्करः चुचुन्दोत्कर वा। वल्मीकवपा वल्मीकमृत्तिका। सूदश्चलन-मृत्तिका। वराहेण विहतो वराहविहत.। [4]पञ्च सौवर्णानि शकलानि पञ्च राजतानि त्रीणि त्रीणि वा। अति प्रयच्छन्निति लिङ्गात् ॥

---

[हिरण्यसंभारमातिभेदनिबन्धनम्]

(वृ) पञ्चसौ–राजतानि—अग्निपञ्चत्वे ॥

त्रीणि वा—अग्नित्रित्वे ॥

[हिरण्यसंभारः शकलरूप इत्यत्रोपपत्ति.]

अतिप्रयच्छन्निति लिङ्गात्—प्रत्यायतन हिरण्योपासना-नन्तरं द्वेष्याय रजतप्रदानमवगम्यते। न सर्वान्ते। अतः प्रत्यायतन हिरण्यरजतशकलान्यपि। न च हिरण्योपासनकाले सिकतादिवच्छ-कलविभाग। औदुम्बराणि लोहशकलानीति हिरण्यस्थानापन्नताम्र-शकलेषु सम्भरणकाल एव सूत्रकारेण बहुवचननिर्देशात् ॥

---

[1] भवामृत्तिका –क [2] उषा यागावो भक्षयन्ति–क [3] ष –चुचुन्दो-त्कर –क [4] केचित्तु हिरण्यस्यासंभारत्वं मन्यन्ते, तदयुक्तम्; सभाराहरणप्रक-णानिगमनालिङ्गैर्न युक्तमसंभारत्वम् इति (रु)

(सू) इति पार्थि[1]वाः ॥ ३ ॥ ८९३ ॥

(सू) [2]यदि पञ्चौदुम्बराणि लोहशकलानि पञ्चमो भवति ॥ ४ ॥ ८९४ ॥

[लोहसंभरणे विशेषः]

(भा) ताम्राणि तूष्णीम् हिरण्यस्थाने पञ्चमः। [3]एक॰ पुष्करपर्णः।

(सू) अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय। तत्ते न्यक्तमिह सम्भरन्तः शतं जीवेम शरदस्सुवीरा इत्यश्वत्थम् ॥

(सू) ऊर्जः पृथिव्या अभ्युत्थितोऽसि वनस्पते शतवल्शो विरोह। त्वया वयमिषमूर्जं वदन्तो रायस्पोषेण समिषा मदेमेत्युदुम्बरम् ॥

(सू) गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि। सोऽयं पर्णसोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै। देवानां

[ताम्राणां तूष्णं सम्भरणोपपत्तिः]

(वृ) ताम्राणि–पञ्चमः—लोहसामान्याद्धिरण्यस्थाने। अग्नेरेतश्चन्द्रं हिरण्यमिति लिङ्गविरोधात्। हिरण्यस्थानापन्नानामपि ताम्राणां तूष्णीं सम्भरणम् ॥

[पुष्करपर्णैकोपपत्ति॰]

एकः पुष्करपर्णः—तत्पुष्करपर्णेऽप्रथयदित्येकस्मिन्नेव प्रथनावगतेः। पर्णं पृथिव्या॰ प्रथन हरामीति तस्यैवोपादाना देकं पुष्करपर्णम् ॥

[1] सम्भारा इति शेष (रु) [2] यदि चौदु–क उदुम्बरं–ताम्रम् पञ्चसम्भारपक्षे ताम्रमयानि लोहशकलानि पञ्चमस्सम्भारो भवति (रु) [3] एक पुष्करपर्णम्–ख. एकः–घ.

ब्रह्मवादं वदतां यदुपाश्रुणोस्सुश्रवा वै श्रुतोऽसि। ततो मामाविशतु ब्रह्मवर्चसं तत्संभरꣳस्तदवरुन्धीय साक्षात् इत्येताभ्यां पर्णम् ॥

(सू) यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय शमीꣳ शान्त्यै हराम्यहम् इति शमीम् । यत्ते सृष्टस्य यतो विकङ्कतं भा आर्छ-ज्जातवेदः । तया भासा संमित उरुं नो लोकमनु-प्रभाहीति विकङ्कतम् ॥

(सू) यत्ते तान्तस्य हृदयमाच्छिन्दन् जातवेदो मरुतोऽद्भिस्तमयित्वा । एतत्ते तदशनेस्सम्भरामि सात्मा अग्ने सहृदयो भवेहेत्यशानिहतस्य [1] वृक्षस्य। यत्पर्यपश्यत्सारिरस्य मध्य उर्वीमपश्यज्जगतः प्रति-ष्ठाम् । तत्पुष्करस्यायतनाद्धि जातं पर्णं पृथिव्याः प्रथनꣳ हरामीति [2]पुष्करपर्णम्[3] ॥ ५ ॥ ८९५ ॥

द्वितीया खण्डिका ॥

---

(सू) यं त्वा समभरं जातवेदो यथा शरीरं भूतेषु न्यक्तम् । स सम्भृतस्सीद शिवः प्रजाभ्यः उरुं नो लोकमनुनेषि विद्वान् इति [4]सम्भृत्य निद-धाति ॥ १ ॥ ८९६ ॥

---

[1] वृक्षस्य शकलम्–क [2] पर्णमिति वानस्पत्यान्–क. ख पर्णमिति वानस्पत्या (रु पा) [3] तत्र अश्वत्थादयशब्दास्तदवयवपराद्रष्टव्या । अशनिहृताभावे शीतहत वातहत वेति बोधायन (रु). [4] एवमाहृत्यसम्भारान् एकस्थान् कृत्वा निदधाति । अथवा आहरणमेव सम्भरणम् । एव सर्वानाहृत्यसमुदित अनेन निदधातीत्यर्थः । नारण्योरनेन निधानम्, सम्भारालिङ्गत्वात् । अत्र श्राद्धमाह बोधायन. (रु).

[सम्भरणानन्तरकृत्यं अरण्योरसंभरणपक्षश्च]

(भा) तूष्णीमेकस्थान् कृत्वा य त्वेति निदधाति । नारण्योस्सम्भृत्य निधानम् । अतो लोपोऽसम्भारपक्षे ॥

[नान्दीश्राद्धप्रकारः]

निधाय नान्दीश्राद्ध स्मृतेः । प्रदक्षिणमुपचारः । यवास्तिलार्थाः । [1]बादरफलमिश्र [2] च दध्योदन प्रदाय नान्दीमुखेभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधास्त्विति स्वधाकारः [3] । युग्मानां सङ्कल्पः । नान्दीमुखाः पितर. प्रीयन्तामिति वचनम् । नान्दीमुखेभ्यः पितृभ्यो नान्दीमुखेभ्यः पितामहेभ्यो नान्दीमुखेभ्य. प्रपितामहेभ्य इति [4]पिण्डाः । प्राश्नो दध्योदनेन । नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यस्स्वधास्त्विति स्वधा[5]कारः ॥

---

[निधाने अरण्योसम्भरणाद्यभावे च मानम्]

(वृ) **तूष्णीमेक–धाति**—स सम्भृतस्सीदेति स्थापनलिङ्गात् ।
**नारण्योस्संभृत्य निधानम्**—सम्भरणचोदनाभावात्तयो. ।
**अतो लोपोऽसम्भारपक्षे**—सम्भृत्य निधानस्य ।

[प्रत्येकनाम निर्देशलभ्योऽन्वयः]

**स्वधाकारः**—[6]अर्घ्यप्रधानार्थः प्रत्येक सम्बध्यते ।

[युग्मशब्दविवक्षितार्थः भाष्यानुक्तांशश्च]

**युग्मानां सङ्कल्पः**—पित्रादीनामेकैकस्य द्विचतुरादिपुरुषा भोक्तारः । आदितोऽन्तत उभयतो वा विश्वे देवाः सत्यवस्वाख्याः ।

**नान्दीमुखाः–स्वधाकारः**—अर्घ्यदानार्थः ।

---

1 बदरी–ग 2 मिश्रं दध्यो–ग हेभ्य इति–घ 3 र । केचित्स्वधाकारा –ग 4 पिण्डा । एवं स्वधाकार –घ 5 कारम्–ङ. 6 प्रदानार्थ –ख. ग.

[पक्षान्तरम् उपदेशपक्षश्च]

केचित् स्वधाकारं न कुर्वन्ति नित्यस्य श्राद्धस्यागामिनो विकार इति । न विकार इत्युपदेश· । एष [1] सर्वत्र विधि· ।

[नान्दीश्राद्धस्य सर्वत्राद्यत्वमनित्यत्वच]

श्रौतस्मार्तानां चादौ । न नित्यम् । आपस्तम्बेनानिबन्धनात् ।

---

[पक्षान्तराशय·]

(धू) केचित् स्वधा-कार इति—आगामि मासिश्राद्ध प्रतिकृष्यैवं विकृत प्रयुञ्जीत ॥

[उपदेशपक्षाशयः]

न विकार इत्युपदेशः—मासिश्राद्धसंनिध्यभावात् न तस्य प्रयोगविकारः कर्मान्तरमेवेदम् ॥

[नान्दीश्राद्धे मातृपूर्वत्ववचननयनं विशेषश्च]

एष सर्वत्र-चादौ—यदपीद वचनम् ,—

[2]मातॄणां तु भवेत्पूर्वं पितॄणां तदनन्तरम् ।
ततो मातामहानां तु [3] ॥

इति , तत्काम्यविषयम् । जीवपितुर्न पिण्डदानम् । पितुर्हस्ते निक्षिपेत् तं भोजयेद्वा ॥

न नित्यम्—नान्दीश्राद्धम् ।

आपस्तम्बेनानिबन्धनात्—श्रौते स्मार्ते च ।

---

[1] सर्वत्र विधिरय-घ. सर्वत्रविधि -ग. ङ.

[2] 'वृद्धौ श्राद्धत्रय स्मृतम्' इति तुर्य पाद .

[3] आगूरण्योर्हरणादि यन्त्वा
श्राद्धं भवेन्नान्दिमुखाभिधानम् ।
उद्धन्यमानं वपन निधानं
अक्षौदनाग्नेरशन च पत्न्यो· ॥
इति कश्चित्सङ्ग्रहश्लोकः प्रयोगपुस्तके दृश्यते.

अत्र भोजनं जायाप[1]त्योरुपदेश. ॥

(सू) अथ नक्षत्राणि [2] ॥ २ ॥ ८९७ ॥

कृत्तिकासु ब्राह्मण आदधीत [3] मुख्यो ब्रह्मवर्चसी भवति ॥ ३ ॥ ८९८ ॥

[कृत्तिकाधानफलस्वरूपम्]

(भा) मुख्यः—[4]सूच्चारणो भवति । ब्राह्मणख्यातिं च लभते ॥

(सू) गृहांस्तस्याग्निर्दाहुको [5] भवति ॥ ४ ॥ ८९९ ॥

रोहिण्यामाधाय सर्वान् [6] रोहान् रोहति ॥ ५ ॥ ९०० ॥

(भा) रोह पुत्रादिभि ॥

(सू) मृगशीर्षे ब्रह्मवर्चसकामो यज्ञकामो[7] वा ॥ ६ ॥ ९०१ ॥

---

[जायापत्योरत्राभ्यानोपपत्तिः]

(वृ) अत्र भोजनं जायापत्योरुपदेशः—गृहमेधिनोर्व्रत कालयोर्भोजनमिति दिवा विहितस्य भोजनस्यानिषेधात् । उत्तरत्र कालावचनात् । ब्रह्मौदनिकाधानादि ब्रह्मौदनहोमान्त ह्येक कर्म तन्मध्ये चायुक्तत्वात् ।

[कृत्तिकाधानफलस्वपरिनिष्ठितं रूपम् ]

(वृ) मुख्यःसू—च लभते—वेदेन ख्यातिः ब्राह्मण्यातिशयेन वा ।

[भाष्यदर्शितसूत्रास्थरोहपदार्थं]

रोहः पुत्रादिभिरिति—आहिताग्नेः [8] स्वारोहण रोहः पुत्रादिभिरपि क्रियमाणं गजाद्यारोहण स्वसम्बन्धित्वात् ॥

---

[1] त्योरित्युपदेश —ख ग. घ. ङ [2] वक्ष्यन्ते इति शेष (रु). [3] ब्रह्मवर्चसिना प्रथम (रु) [4] स्वाचरणो—घ [5] दहनशील इम दोषमनुजानत अयं काल इति भाव (रु). [6] सर्वानुच्छ्रायान् प्राप्नोति (रु) [7] सरोहण—घ आदधातीति शेष (रु).

**यः पुरा भद्रस्सन् पापीयान् स्यात्स पुनर्वस्वोः ॥ ७ ॥ ९०२ ॥**

(भा) पापीयान्—दरिद्रः पापिष्ठो [1] वा ॥

(सू) **पूर्वयोः फल्गुन्योर्यः कामयेत दानकामा मे प्रजास्स्यु[2]रिति ॥ ८ ॥ ९०३ ॥**

**उत्तरयोर्यः कामयेत भग्यन्ना[3]दस्स्यामिति ॥ ९ ॥ ९०४ ॥**

**[4] एतदेवैके विपरीतम् ॥ १० ॥ ९०५ ॥**

**अथापरम् पूर्वयोराधाय पापयािन् भवत्युत्तरयोर्वसीयान् ॥ ११ ॥ ९०५ ॥**

(भा) वसीयान्—[5] वसुमान् श्रेष्ठो वा ॥ पूर्वयोराधाय पापीयान् भवति असति कामे । दानकामाः—दातु[6]मिच्छन्त्योऽस्य प्रजाः [7] भगी—सुभगः । अन्नादो भोक्तृशक्ति ।

---

[पापीयः पदार्थमानम् ]

(वृ) **पापीयान्—दरिद्रः**—यः पुरा भद्रस्सन् पापीयान् स्यात् इत्यत्र पुवरेवैन वाम वसूपावर्तते इति वाक्यशेषात् ॥

**[असति कामे फलसिद्ध्यपपात्तिः]**

**असति कामे इति**—कामसयोगाश्रवणात् कामाभावेऽपि तस्मिन् कालेऽनुष्ठानादेतत्फल भवति योऽपगुरातै शतेन यातयादितिवत् फलविध्यभावेऽपि फलसिद्धिः ॥

---

[1] अत्रैव श्रौतं लिङ्गमुदाहृतम् (रु) [2] मह्यदातुमिच्छन्तु प्रजा इति काम (रु). [3] भोजनशक्त (रु). [4] पूर्वोत्तरफल्गुन्योरुक्तं कामद्वयं विपर्यस्तं एके समामनन्ति (रु). [5] धनवान्—क श्रेष्ठोवा दानकामा—घ. [6] मिच्छन्त्यस्य प्रजा.—क [7] जा भवन्तीति—ख. ग. घ. ङ.

(सू) हस्ते यः कामयेत प्रमे दीयेतेति ॥ १२ ॥
॥ ९०६ ॥

(भा) प्रदीयेत मे इति ॥

(सू) चित्रायां [1] राजन्यो भ्रातृव्यवान् वा ॥ १३ ॥
॥ ९०७ ॥

[चित्रायामाधाने विशेषः]

(भा) चित्रा अकाम्या राजन्यस्य ॥

(सू) विशाखयोः प्रजाकामोऽनूराधेष्वृद्धिकामः श्रवणे पुष्टिकामः उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामः ॥ १४ ॥ ९०८ ॥

[2] सर्वाणि नित्यवदेके समामनन्ति ॥ १५॥९१० ॥

[नित्यवत्पदार्थ.]

(भा) सर्वाण्ये[3]तानि नित्यान्येव [4] कामविहितान्यपि । नित्यैस्तुल्यानि नित्यवत् ॥

---

(वृ) प्रदीयेत म इति— प्र मे दीयेतेत्यस्यार्थः ।

[अकाम्यताहेतुः]

चित्रा अकाम्या राजन्यस्य—जातिनिबन्धना ।

[सौत्रसर्वशब्दार्थ.]

सर्वाण्ये-हितान्यपि—नक्षत्राणि प्रकृतत्वात् । केचिद्-विहितान्यपि सर्वशब्दाविशेषात् ॥

[नित्यतौल्यं असत्यपि कामे फलप्राप्तिरिति पूर्वोक्तार्थाविरोध-सूतार्थश्च]

नित्यैस्तुल्यानि नित्यवत्—कामाभावेऽप्येतेषु [5] कालेषु

---

[1] राजन्यस्य चित्रा नित्या (रु) [2] काम्यतयोक्तानि नित्यवत्—नित्य यथा तथा कामोपबन्धरहितमित्यर्थ (रु) [3] तान्येव—ड. [4] कामविहितानि केचिदविहितान्यपि क ड. [5] नक्षत्रेषु—घ.

**(सू.) [1]फल्गुनीपूर्णमास आदधीतेत्युक्त्वाऽऽह [2]यत्फल्गुनीपूर्णमास आदध्यात्संवत्सरस्यैनमासन्दध्याद्व्यहे पुरैकाहे [3]वा ॥ १६ ॥ ९११ ॥**

---

(वृ) कर्तव्यम् । ननु कामाभावेऽपि तस्मिन् कालेऽनुष्ठानादेतत्फल भवतीति पूर्वमुक्तम्[4], सत्यम् , गृहदाहदारिद्र्यपापीयस्त्वाद्यनिष्टफलानि भवन्ति । [5]पूर्वस्मिन् पक्षे शुभफलेषु नक्षत्रेषु कर्तव्यम् नाशुभफलेषु अकामेनापि तादृशफललाभात् । इदानीं त्वयमभिप्रायस्सूत्रकारस्य, कामनायामेव तानि फलानि; न नित्यवदनुष्ठाने इति । यथा यं कामयेत पापीयान् स्यादिति तमपरपक्षे याजयेत् इति कामनायामपरपक्षे [6]योग दारिद्र्यम् नित्यवदनुष्ठाने न भवति । यदि सोमेन यजेतामावास्या[7]यामेव पौर्णमास्यां दीक्षामावास्यायां सुत्यमहरिति नित्या[8]नुष्ठाने विधानात् ॥

---

[1] अथपर्वणोराधानं विधास्यन् तत्र फल्गुनीपौर्णमास्याधाने विशेषं दर्शयति (रु). [2] यदि यजमानः फल्गुनीपूर्णमास आदध्यात् एनमग्निं संवत्सर आसन्–आस्ये आदध्यात् । अत्राङ्सवर्णदीर्घग्रस्त । आस्याक्षेपेणाग्निनाशोलक्ष्यते । अत पर्वण प्राक् द्व्यह एकाहे वा काले आधेय इति वक्ष्यमाणेन सम्बन्ध॰. अथवा यदि फल्गुनीपूर्णमास आदध्यात् अध्वर्युरेन यजमानं संवत्सरस्यास्ये आदध्यादितियोजना । परस्मैपदौचित्यात् । अत पर्वण॰ प्राक् द्व्यह एकाहे वा आधेय इत्येव । इयं च फल्गुनीपूर्णमासनिन्दा अनुदितहोमनिन्दान्यायेन उत्तर विधिस्तुत्यर्था नतु तन्निरासार्था विध्यानर्थक्यप्रसङ्गात् । तेन द्वावपिविधीकल्प्येते । भारद्वाजस्तु या पूर्वाभ्या फल्गुनीभ्या पौर्णमासी स्यात् न तस्यामादधीतेत्याह (रु). [3] वा इति ख पुस्तकै न दृश्यते. [4] क्तम् , ग्रह–ख. ग [5] सत्यम् ; पूर्वस्मिन् –ख. ग [6] यागे–घ. [7] या वैव–घ. [8] ष्ठान–घ.

(भा) आसन्–अस्ये[1]। द्व्यहे [2]पूर्वे फल्गुनीपूर्णमासात्त्रयोदश्याम् एकाहे चतुर्दश्याम् ॥

(सू) अमावास्यायां पौर्णमास्यां वाऽऽधेयः ॥ १७ ॥ ॥ ९१२ ॥

(भा) [3]पर्वणो नक्षत्रस्य च [4]विकल्पः समुच्चयासंभ[5]वात् ॥

(सू) वसन्तो ब्राह्मणस्य[6] ग्रीष्मो राजन्यस्य हेमन्तो वा शरद्वैश्यस्य [7]वर्षा रथकारस्य ॥ १८ ॥ ॥ ९१३ ॥

(भा) [8]ऋतौ समुच्चयः ॥

(सू) [9]ये त्रयाणां वर्णानामेतत्कर्म [10]कुर्युस्तेषामेष कालः ॥ १९ ॥ ९१४ ॥

(भा) त्रया[11]णामन्तर्भूता ये कुर्वन्ति ॥

(सू) शिशिरस्सार्ववर्णिकः ॥ २० ॥ ९१५ ॥

---

(वृ) आसन् आस्ये– विकल्पः समुच्चयासम्भवात्–उक्तनक्षत्राणां केषाचिदेव वसन्तादिपर्वसु सम्भवात् ॥

[ऋतावितिपदस्याशयः]

ऋतौ समुच्चयः—पर्वणो नक्षत्राणां वा सम्भवात् ।

[कुर्वन्तीति भाष्यपुराणम्]

त्रयाणा–र्वन्ति—रथकरणम्; ते रथकाराः ।

---

1 आस्ये सवत्सरस्यासेदध्यात् -घ 2 पूर्वफल्गुनी पूर्णमासे त्रयोदशा ?–ग 3 पर्वणोर्नक्ष–क. ग. 4 विकल्पसमुच्चया–ख ग 5 वात्। उक्तनक्षत्राणां केषुचिदेव वसन्तादिषु सम्भवात्–घ. 6 आधानकाल इति शेष (रु). 7 वर्षासु –ख 8 ऋतोस्स–घ 9 किमत्र रथकार इति द्विजातिभ्योऽन्यजातीयस्य अन्तप्ररभवस्य ग्रहणम्? नेत्याह (रु). 10 त्रिषुवर्णेषु अन्तर्भूता एव स्ववृत्तिकार्शिता ये रथं कुर्वन्ति तेषामयमाधानकाल (रु). 11 णामत्रान्त–ग.

**[1]सोमेन यक्ष्यमाणो नर्तुं सूक्ष्मेन्न नक्षत्रम् ॥ २१ ॥ ९१६ ॥**

---

[1] वर्णत्रयसाधारण इत्यर्थ । अत्र वसन्ताद्यृतुक्लृप्ति सौरेण चान्द्रमासेन वा । उभयथाऽपि शास्त्रेषु प्रवृत्ते. । केचित् ‘ चन्द्रमाष्षड्ढोता स ऋतून् कल्पयातीति श्रुते. चान्द्रमसीमेवाहु. , तदयुक्तम् , इतरथाऽपि श्रवणात् ‘ देवसूर्यसोमं क्रेष्याम ऋतून् कल्पयेति ’ कालतन्त्रे तु प्रायः सौरमेवानुरुध्य ऋतुक्लृप्ति प्रवर्तते । तत्र यदामीन-मेषयोरादित्योऽवतिष्ठते ससौरस्तावद्वसन्त । ‘ उदगयनेमकरादौ ऋतवश्शिशिरादयश्च सुर्यवशात् ’ इति वृद्धोक्तिः ॥

‘ शरद्वसन्तयोर्मध्ये विषुवंतु प्रवर्तते ’ ।

इति विष्णुपुराणोक्ते । चान्द्रमसस्तु ऋतु चान्द्रैर्मासैर्भवति । मेषादिगते सूर्ये यो यो दर्श आगच्छेत् तत्तदन्ताश्चैत्रादयश्चान्द्रमसामासा । तत्र चैत्रफाल्गुनौ वसन्त ‘ मुखं वा एतदृतूना यद्वसन्त ’ ‘ मुखं वा एतत्सवत्सरस्य यत्फल्गुनी पूर्णमास ’ इति श्रुते. । ‘ मुखं वा एतत्संवत्सरस्य यच्चित्रा पूर्णमास ’ इति तु मुख्यान्तर्गतत्वाभिप्रायम् , उभयमुखत्वायोगात् । न च विपर्ययश्शक्य आस्थातुम् , फल्गुन्या पौर्णमास्या ऋत्वन्तर्गत्यसम्भवात् । वाजसनेयके च अश्वमेधं प्रकृत्या-म्नायते ‘ तस्माद्वसन्तमेवारभ्य यजेत साया फाल्गुनीभ्या पौर्णमासी भवतीति । तस्मात् फाल्गुन्यादिर्वसन्त । चैत्रादिरित्यन्ये , यथाऽऽहु ,—

मासैर्द्विसंख्यैर्माघाद्यै क्रमात् षडृतव स्मृता ।
शिशिराद्यास्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।

इति । छान्दोग्यकल्पेच ,—शरदिकार्तिके मासि यजेतेति , तस्माद्वैशाखोऽपि चान्द्रो वसन्त इति । यथोक्तानामृतुपर्वनक्षत्राणा सति सम्भवे समुच्चयोन्याय्य आश्व-लायनोक्ते. ‘ यत्र त्रीणि सन्निपतितान्यतुर्नक्षत्रं पर्व च तत्समृद्धं विप्रतिषेधे ऋतुनक्षत्रं बलीय इति सत्याषाढ. । वाजसनेयके तु श्रूयते ‘ यथापिहिताया द्वारि अद्वारा पुरं प्रपि-त्सेत् स जिह्म पुरस्स्यादेव तद्योनक्षत्र आधत्ते तस्मान्न नक्षत्र आदधीतेति । अमावास्यायामग्न्याधाने च प्रशंसादर्शिता । तथा ‘ यासौ वैशाखामावास्या तस्या मादधीत सारोहिण्या सम्पद्यते ’ इति च । तदिदं बोधायनेन व्याख्यातम् ,—यासा वैशाख्या पौर्णमास्या उपरिष्टादमावास्या साऽसकृत्संवत्सरस्य रोहिण्या सम्पद्यते तस्यामादधीतेति । ‘ यदैवैनं यज्ञ उपनमेत् अथादधीत ’ इति श्रुतिमुदाहृत्यव्या-चष्टे , तदेतदार्तस्यातिवेलं श्रद्धायुक्तस्येति । भारद्वाजश्चाह ,—अथातश्श्रद्धधानस्य नर्तुं पृच्छेन्न नक्षत्रमिति (रु).

[ऋतुनक्षत्राद्यनपेक्षणं क्वचित्]

(भा) सोमेन यक्ष्यमाणस्सर्वकर्मभ्य· पूर्वं न कुर्यादादरम्। सोमस्यापि य ऋतुः तस्यापि न सूर्क्षेत् ॥

(सू) **उदवसाय[8] शालीन आदधीतानुदवसाय यायावरः ॥ २२ ॥ ९१७ ॥**

---

[ऋतुनक्षत्राद्यनवेक्षणे मानम्]

(वृ) **सोमेन य–न सूर्क्षेत्**—ब्राह्मणानां सोमपूर्वाधान कुर्वतामृतुनक्षत्रानादरस्य अविशेषेणोक्तत्वात् ॥

[आधानकालमात्रनिषेधपरत्वायोगः]

नर्तून् सूर्क्षेदि[2]त्याधानकालमात्रबाधपक्षे ब्राह्मणस्य त्वनादर विधानमनर्थकं स्यात् । सोमकालत्वेन वसन्तस्याधाने प्राप्तत्वात् । न च तदा सोमाङ्गमेव वसन्तो नाधानाङ्गमिति वाच्यम्, सोमाधानेऽप्याधानस्य सोमाङ्गतया प्रयोगकालापेक्षत्वात् ॥

[सोमेन यक्ष्यमाण इत्यस्याशयः]

सोमेन यक्ष्यमाण इति वचनस्य च सोमाधानयोरानन्तर्यमात्रपरत्वात् ॥

---

[1] इदं ब्राह्मणव्यतिरिक्तविषयमिति (धूसल्या. श्रौ. बै २९७) य आधानानन्तरं सर्वकर्मभ्य प्राक् सोमायदीक्षिष्यते योवा दर्शपूर्णमासारम्भ व्रत्यपश्विज्यादिना कियताचिद्विलम्बेनापि सोम एव पर्यवस्यति स सोमकालानुरोधेनाधान कर्तु ऋतुं नक्षत्रं च न सूक्षेत् नाद्रियेत क्षत्रियोऽपि वसन्त आदधीत यत्रक्वापि नक्षत्रे । पर्व तु सुर्क्षे देव । तत्र सोमपूर्वत्वेऽपि पक्षापवर्गमासापवर्गाभ्या आधानसोमयो पर्वोपपत्ति । ऋतुनक्षत्रग्रहणेप्रदर्शनार्थमित्यन्ये । केचित्पुन सोमकालस्याप्यनेन बाध मन्यन्ते, तदयुक्तम्, प्रकरणात्; आधानकालस्यैवानेन बाधावगमात् नक्षत्रग्रहणाच्च । न हि सोमस्य किञ्चिन्नक्षत्रमुपादिष्टम्! येन तन्निषिध्येत! तस्मादयुक्तस्सोमकालबाध (रु). [2] र्योदाधानम्–ग.

## [1] एकाहं वा प्रयायात् ॥ २३ ॥ ९१८ ॥

तृतीया खण्डिका

---

[वसन्तस्य सोमाधानो भयार्थता भाष्यकृत्संमतिश्च]

(वृ) न सोमाङ्गभूतवसन्ते आधानस्यार्थात्सन्निपातः । किं तूभयार्थ एव वसन्त । तथा भाष्यकारेण सोमाधानेऽप्यमावास्याया कुर्वतो यत्र नाजस्रा. पूर्यन्त इत्यत्रामावास्याधानत्वेन अजस्रप्राप्तिरुक्ता । सोमाधानेऽपि पर्वानादरस्यानुक्तत्वात् । अत एव सोमाधानमेकादीक्षादिपक्षे पर्वण्येव कर्तव्यम् न पुनरेकादश्यादिष्विति केचित् । सोमाधानस्यापि सर्वाक्षेपकत्वात् ॥

[उक्तायोगनिगमनं जैमिनिसंमतिश्च]

तस्मादाधानकालमात्रबाधे नर्तून् सूर्क्षेदिति ब्राह्मणविषयेऽनर्थकमेव । तथा 'उत्कर्षाद्ब्राह्मणस्य सोमस्स्यात्' इत्यत्र (जै सू ५–४–१०) गर्भाधिकरणे सोमेन यक्ष्यमाण इत्यत्र दर्शपूर्णमासोत्तरकालतारूपसोमकाले आधानसोमयोरेकाह[2]स्सम्बन्धबलेन बाधितव्ये तत्तुल्यतया वसन्तानादरेण कालान्तराधाने क्रियमाणे तदहस्सोमसम्बन्धार्थं सोमस्याप्यृतुर्बाधितव्य एव । अतो यदहरेवैन श्रद्धोपनमे[3]दितिवत् सोमेन यक्ष्यमाणत्वाभि सन्धिनिमित्तमाधानसोमयोः कालान्तरविधानमतत् ॥

[स्वाभिप्रायः]

'अस्माकं तु यदैवैन यज्ञ उपनमेदिति सर्वकालानादर उक्त इति भरद्वाजेनोक्तत्वात् तस्याधानस्यापि नक्षत्राद्य[4]नादर उक्त इति ॥

---

[1] शालाया–गृहे नियतवासी शालीन (रु) [2] हसम्बन्ध–घ नाह. सम्बन्ध–ख. [3] दितितत्सोमेन–ख [4] द्यनादर इति–ख.

[शालीन[1]यायावरपदार्थः]

(भा) उदवसानं—देशान्तरगमनम् । सहौपासनेन । शालीन एकस्थान-निवासी । नित्ययाता—यायावरः ॥

तृतीया खण्डिका ॥

---

(सू) उद्धन्यमानमस्या अमेध्यमपपाप्मानं यजमानस्य हन्तु । शिवा नस्सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसातेति प्राचीनप्रवणं देवयजनमुद्धत्य शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु न इत्यद्भिरवोक्ष्य तस्मिन्नुदीचीनवंशं शरणं करोति ॥१॥२३॥९१९॥

[पक्षविशेषेणोद्धननकालः]

(भा) असम्भारपक्षे अरण्योराहरणमुदवसा[2]योद्धननमेव । [3]उदीचीनवशः—उदीचीनवृष्टिः [4] स एव मध्यमः ॥

(सू) [5]तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति ॥२॥२४॥९२०॥

---

[उदवसानस्य नित्यत्वम्]

(वृ) सहौ—निवासी—तस्योदवसान नित्यम् ॥

[यायावरस्याधानदेशः]

नित्ययातायायावरः—तस्यौपासनदेश एव ॥

---

1 अथवा यायावरोऽपि एकाहप्रयाणेन उदवासाय आदधीत (रु).
2 निवासीतस्य—ङ निवशेतस्य—ख. घ 3 उदीचीनान् वशान्निधाय गार्हपत्यशरणकरोति (रु). 4 योद्धन्यमानमेव—क 5 उदीचीनवाश उदीचीन वृष्टया—ग. उदीचीन-वश उदीचीनपृष्ठवश. २—क. उदीचीनपृष्टि —घ

(भा) तस्य पुरस्ताद्गार्हपत्यायतनम् ॥

(सू) **तस्मात्प्राचीनमष्टासु[1]प्रक्रमेषु [2]ब्राह्मणस्याहवनीयायतनम् । एकादशसु राजन्यस्य । द्वादशसु वैश्यस्य ॥ ३ ॥ २५ ॥ ९२१ ॥**

(सू) **[3]चतुर्विंशत्यामपरिमिते यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते ॥ ४ ॥ २६ ॥ ९२२ ॥**

[आधानदेशमानभेदानां सर्वसाधारण्यम् क्वचिन्मतिभेदश्च]

(भा) द्वादशसु विक्रामेषु [4]सर्वार्थोऽस्माकम् ॥

---

[तस्याग्रेणेत्यादिभाष्यविवरणम् ]

(वृ) **तस्य यतनम्**—तस्याग्रेण मध्यम वंश[5]मिति सूत्रव्याख्यानम् । उदीचीनवंशो मध्यमवंशः । तस्य शरणस्य मध्यवंशमग्रेण पुरस्ताद्गार्हपत्यायतनम् ॥

[सर्वार्थित्वमानम् ]

**द्वादशसु–स्माकमिति**—द्वादशसु विक्रामेष्वग्निमादधीतेत्य विशेषश्रवणात् ।

---

[1] तस्य शरणस्य पृष्ठवंशादधस्तन देशमग्रेण गार्हपत्यस्थान भवति (रु) [2] अष्टासुप्रक्रमेष्वर्तितेषु आहवनीयस्थानम् । प्रक्रमो द्विपदस्त्रिपदो वा पद । पञ्चदशाङ्गं बोधायनस्य द्वादशाङ्गुलं कात्यायस्य (रु). [3] चतुर्विंशतिप्रक्रमेष्वाधेय अपरिमिते वा देशे । अपरिमित उक्तात्प्रमाणादूर्ध्वविषयमिति प्रागेवोक्तम् । यावता वा चक्षुषेत्यादि , अस्यार्थ —नाष्टप्रक्रमादिना रज्ज्वा मिमेति किंतु यावतादेशेन यथोक्तान् प्रक्रमान् चक्षुषापरिच्छिनत्ति यदष्टौ यच्चतुर्विंशतिरिति । तस्मान्नातिदूरम्—तस्यावधेरल्पान्तरे सन्निकर्षे आधेय इति , तथाच ब्राह्मणम् ,—चक्षुर्निमित आदधीत इयद्द्वादशविक्रामा इति । सत्याषाढेनाप्युक्तम् । तदेतद्विधित्रयं सर्ववर्णाना अविशेषेण श्रूयते द्वादशसु विक्रामेष्वग्निमादधीत इति ब्रह्मणोक्तपक्षेऽपि हिरण्यकेशिना सर्वार्थत्वेन दर्शित 'द्वादशसु विक्रामेष्वग्निमादधीतेत्यनवयेवन श्रूयते इति (रु) [4] पर्वार्थो–घ ख. [5] मित्यस्य व्याख्यानम्–घ.

(भा) यावन्मन्यते [1] इयदष्टौ विक्रामाः इयद्द्वादशेति चक्षुर्मानम् । चतुर्विंशत्यादि च सर्वेषाम् । यस्मादविशेषेण श्रूयते पुरुषविशेषमनपेक्ष्य । अपरिमितं—असङ्ख्यातम् । अर्वाक् परतश्च प्राप्त [2] तस्मान्नातिदूरमाधेय इति । तस्माद्विहितान्नातिदूरम्—असत्यपि परिमाणे अनतिदूरम् । असत्यपि परिमाणे अतिदूरप्रतिषेधादर्वागपि लभ्यते विहितात् । केचित्परतोऽपि लभ्यते । तेषा लोकप्रसिद्धमतिदूरम् ॥

---

[चक्षुर्मितपरिग्रहेमानम्]

(वृ) **यावन्मन्यते-दशेति**—अस्यार्थः—चक्षुर्निमित आदधीत इयद्द्वादश विक्रामा इत्यस्य प्रदर्शनार्थत्वात्सर्वसङ्ख्यासु चक्षुर्मान सम्बध्यते ॥

[सर्वादिशब्दार्थः]

**चक्षुर्मानं-सर्वेषाम्**—वर्णानाम् ।

**तस्मात्-विहितात्**—चतुर्विंशत्यादेः

**असत्यपिपरिमाणे**—दूरस्थपरिमाणाभावेऽपि ॥

**अनतिदूर-विहितादिति**—[3]अतिदूरप्रतिषेधात् द्वादशविक्रामादीनां च विहितत्वात् ततोऽप्यतिदूरप्रतिषेध. [4] । अपरिमितं चतुर्विंशतेः प्रागपि । एतदुक्त भवति—चक्षुर्मानमपरिमितं सर्वसङ्ख्यास्वतिदूरवर्जितदेशान्तरविधानार्था[5]विति ॥

**केचित्परतोऽपि-लभ्यते**—चतुर्विंशतेः ॥

[विहितात्पर मानलाभहेतुः]

**तेषां-मतिदूरम्**—परावधिनिर्देशाभावात् ॥

---

[1] इयन्त्यष्टौ—**क** इति अष्टौ—**ग** [2] द्विहितादनतिदूरम्—**घ**
[3] अति प्रतिषेधा—**घ.** [4] धात्—**ख. ग** [5] थादिति—**ख**

(सू) [1] दक्षिणतः पुरस्ताद्वितृतीयदेशे [2] गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् ॥ ५ ॥ २७ ॥ ९२३ ॥

[दक्षिणाग्न्ययातनम्]

(भा) ईषद्विगततृतीयदेशे गार्हपत्यस्य समीपे आहवनीयागारे गार्हपत्यागारे वा दक्षिणाग्नेः ॥

(सू) अन्यदाहवनीयागारमन्यद्गा[3]र्हपत्यस्य ॥ ६ ॥ ॥ २८ ॥ ९२४ ॥

अग्रेणाहवनीयं [4] सभायां सभ्यः ॥ ७ ॥ ॥ २९ ॥ ९२५ ॥

तं पूर्वे[5]णावसथ आवसथ्यः [6] ॥ ८ ॥ ३० ॥ ९२६ ॥

(भा) ब्राह्मणस्यापि चत्वार्यगाराणि ॥

[वितृतीयदेशाविवरणेन भाष्यस्यार्थः]

(वृ) **इषद्विगत — क्षिणाग्नेरिति**—अग्न्योरन्तराले पाश्चात्यतृतीयभागस्यैकदेश पुरतो व्युदस्य दक्षिणतो दक्षिणाग्नेरायतनम् ॥

[अगारचतुष्टयसत्त्वेप्रमाणम्]

**ब्राह्मणस्यापि चत्वार्यगाराणीति**—तस्यापि सभ्यावसथ्ययोर्विद्यमानत्वात् गार्हपत्याहवनीयसभ्यावसथ्यागाराणि चत्वारि ।

---

[1] गार्हपत्यस्य दक्षिणत पुरस्ताद्वितृतीयदेशे गार्हपत्याहवनीययोरन्तरालदेशस्य तृतीयोऽश विगत यस्मात् स तथोक्त गार्हपत्यस्य नेदीयसीतिमतनिरासार्थम्। बोधायनेन मध्यदेशवचनात् 'दक्षिणतोविषुवत्यन्वाहार्यपचनस्येति [2] समीपसप्तमीचयम्, वितृतीयदेशस्य पश्चात् स्तोकान्तरेदेश इत्यर्थ (रु) [3] गार्हपत्यागारात्पृथगेव आहवनीयस्याप्यगार कर्तव्यमित्यर्थ । तयोरेवान्यतरत्रदक्षिणाग्न्यायतनम् (रु). [4] सभाद्यूतशाला तत्रास्यायतन स्यादिति भाव (रु) [5] आवसथ. अतिथीना वासभूमि [6] उदीचीनवंशाशाला इत्येतावन्मात्रमुक्तम् हिरण्यकेशिना आधाने, याजमाने त्वगारद्वयमुक्तम् (द्वि प.) । सभ्यावसथ्ययोरायतनमुक्तम् (तृ प) (२-१-१७ आश्व. श्रौ. सू 'पूर्णाहुत्यन्तम्' इति सूत्रांशविवरणावसरे 'आग्नयायतनानि कुर्यात्' इत्युक्तम्। 'यजमानोपस्थानदर्शनात्' इति तुरीयसूत्रविवरणे भाष्ये 'अन्वाहार्यपचनसभ्यानां तूष्णीं सबन्धनमुक्तम्.

(सू) केशश्मश्रु वपते नखानि निकृन्तते स्नाति। एवं पत्नी केशवर्जम् ॥९॥ ३१॥ ९२७॥

(भा) वपते —वापयते [1]॥

[दम्पत्योराधानकाले वेषः]

(सू) क्षौमे [2] वसानौ जायापती अग्निमादधीयाताम् ॥१०॥ ३२॥ ९२८॥

---

[सभ्यावसथ्यपदव्युत्पत्तिः क्षेत्रपरिमाणादिनिरूपणस्थलं च]

(वृ) सभायां [3] भवस्सभ्यः आवसथ आवसथ्यः इति वचनात् तयोरप्य-

[अन्तरालविषयशुल्पविरोधादिपरिहारः]

गारभेदः। एतेषां क्षेत्रपरिमाण विमान च शुल्बोक्ते एव ॥

तत्र यद्यपि गार्हपत्याहवनीययोरन्तराले परिमाणान्युक्तानि; तथाऽपि प्रागपवर्गाण्युदगपवर्गाणि वेति परिभाषोक्तत्वात् प्राग्वोदग्वान्तरालं भवेत्। अतः क्वचित् गार्हपत्यादुदगष्टासु प्रक्रमेषु आहवनीय कुर्यात्। किञ्च अन्तरालस्य कस्मिन्नन्ते गार्हपत्यस्यायतन आहवनीयस्य वेत्यनियमस्स्यात्। यद्यपि तत्रापरेणाहवनीयं यजमानमात्र दीर्घ-चतुरश्रमित्यादिलिङ्गैस्सर्वं नियन्तु शक्यते; तथाऽपि प्रयोगवचनत्वात्तेष। लोमभ्योऽधिस्तम्बयर्जुहुत्वेत्यादिवद्वचनसौकर्यात् प्रागपवर्गपक्षाश्रयण-मित्यपि युज्यते ॥

[अत्रत्यभाष्याशयः वैखानसोक्तेराशयश्च]

अतस्तमस्तसन्देहनिवृत्त्यर्थं तस्याग्रेण मध्यम वशं गार्हपत्या-यतन भवति। तस्मात्प्राचीनमष्टासु प्रक्रमेष्वग्रेणाहवनयियायतन इत्येतमर्थं विधातुमत्र पुनरुच्यते। [4] शुल्बे त्वाग्न्याधेयिक एव विहरे एतावदन्तर न दर्शिके इति वक्तु सस्थानादि विखनसोक्त तत्र द्रष्टव्यम्।

---

[1] वापयते वा—ग. [2] स्नात्वा क्षौम वसीयाताम्। न च ते प्रागाधानात् जह्यातामिति भाव। भरद्वाजस्त्वाह पुरस्ताद्ब्राह्मौदनिकात् परिदधीयातामित्येक पुरस्तात्संभारनिवपनादित्यपरिमिति (रु). [3] यां सभ्य—घ [4] शुल्बाग्न्याधेयिक्—घ.

(भा) क्षौमे—अहते वसानावग्निमादधीयाताम् गार्हपत्यादिकम् । न हि जायापती स्वयमग्निमादधीयाताम्, ब्राह्मौदनिकनिधानादध्वर्यु-रेव[1] । गार्हपत्यादिषु सर्वेष्वाधीयमानेषु कर्माधिकारे जायापती क्षौमे वसानौ सन्निहितौ भवतः । अथवा अध्वर्युमन्वारभेयाताम् ॥

(सू) ते [2]दक्षिणाकालेऽध्वर्यवे दत्तः ॥ ११ ॥ ३३ ॥ ॥ ९२९ ॥

(सू) अपराह्णेऽधिवृक्षसूर्ये वा औपासनादग्निमाहृत्या-परेण गार्हपत्यायतनं [3]ब्राह्मौदनिकमाद[4]धाति ॥ ॥ १२ ॥ ३४ ॥ ९३० ॥

[5]औपासनं निर्मन्थ्यं वा ॥ वा सर्वम् ॥ १३ ॥ ३५ ॥ ॥ ९३१ ॥

[औपासनाग्नेः परिग्रहेऽक्त्वेकदेशपक्षगुणदोषे, उपदेशपक्षश्च]

(भा) असर्वाधान औपासनस्य कर्मानिवृत्तिः ।

---

[सन्निधिमात्ररूपकर्तृत्वोपपत्ति]

(वृ) क्षौमे अहते वसानावग्नि–सांनिहितौ भवतः—अस्यार्थः, क्षौमे वसानाविति क्षौमविधिपरत्वात् जायापतीशब्दस्यानुवादित्वात् आधानस्याग्निकाण्डविहितत्वात् अध्वर्युकर्तृकत्वात् जायापत्योस्सान्निधि-मात्रेण कर्तृत्व कर्मप्रयोगे ॥

[अध्वर्य्वन्वारम्भस्यव्यवहितकर्तृत्वरूपता]

अथवा अध्वर्युमन्वारभेयातामिति—गार्हपत्यादिकर्मसु अन्वारब्धायामुत्तरा आहुतीरितिवत् व्यवहितकर्तृत्वनिर्वाहाय ॥

[अनिवृत्तिप्रतिसंबन्धि]

असर्वाधान औपासनस्य कर्मा निवृत्तिः—औपासनहोमादेः।

---

[1] रेव करोति—घ. [2] अत्राह बोधायनः—अथाभ्या व्रतोपायनीयं पाचयति तस्याशितौ भवतस्सर्पिर्मिश्रस्य पयोमिश्रस्येति । तथा दिवाश्नाति रात्रौ वा उपास्तमयमितिकात्यायन (रु). [3] ब्रह्मौदनार्थोऽग्नि (रु) [4] अध्वर्युरितिशेष । कालविशेषौ पिण्डपितृयज्ञे व्याख्यातौ (रु). [5] सर्वाधाने तद्वर्तिकर्मणा प्रकार उपरिष्टाद्वक्ष्यते (रु).

(भा) सर्वाधाने तद्वर्तिना निवृत्तिः प्रतिनिध्यभावादग्नेः, उत्सृष्टाग्निवत्। आग्नौदानिके च कर्मानुप्रवेशात् तस्य च समारूढत्वात्। श्राद्धे तु होमादुत्तर कर्तव्यम् ब्राह्मणस्त्वाहवनीयार्थ इति तस्यापि प्रधानत्वात्। उपदेशोऽसर्वाधानेऽप्यौपासनस्य पार्वणस्य च निवृत्तिः।

---

[अग्निप्रतिनिधिनिषेधकं मानम्]

(वृ) सर्वाधाने–वादग्नेः––स्वामिनो[1]ऽग्नेर्देवताया इति पर्युदासात्।

[दृष्टान्ते प्रकृतार्थसाजात्यम्]

उत्सृष्टाग्निवत्––यथा उत्सृष्टाग्नेरग्निहो[2]त्रादीनां निवृत्तिः।

[श्राद्धहोमे नैवमनुपपत्तिः]

श्राद्धे तु–नीयार्थ इति––छान्दोग्ये आस्यमाहवनीयमिति श्रुतेः। यस्यास्येन[3] सदाश्नन्तीति स्मृते. आस्यमाहवनीयस्थाने भोजनं होम इत्यवगमात्॥

[श्राद्धे भोजनपिण्डदानयोरपि प्राधान्यं वैश्वदेवे विशेषः केषां चिल्लोपश्च]

तस्यापि प्रधानत्वादिति––भोजनस्यापि। तथा पिण्डप्रदानस्यापि प्रधानत्वात्––तस्यापि साक्षात्पितृतृप्त्यर्थत्वात्। जीवपितृकस्य होमान्तमनारम्भो वेति वचनेन जीवपितृकस्य मन्त्रवत्पिण्डप्रदानासम्भवात् पितृयज्ञाकरणस्योक्तत्वात्। वैश्वदेवस्तु[4] क्रियत एव लौकिके देवयज्ञा[5] लुप्यन्ते। एवमन्यान्यपि यान्यग्निसाध्यानि नित्यानि तानि लुप्यन्ते श्रौतैरेव कर्मभिः कृतार्थत्वात्। आगन्तूनि लौकिकेऽग्नौ क्रियन्ते॥

[उपदेशपक्षे स्थालीपाकनिवृत्तिः]

उपदेशो–ऽनिवृत्तिः––चकारात् स्थालीपाकस्य च॥

---

[1] अयं ग्रन्थ –घ. पुस्तके न दृश्यते [2] होत्रादिनिवृत्ति.–घ [3] स्येनाश्नन्तीति–ख. ग. [4] व तुक्रि–घ. [5] ज्ञोलुप्यते–ख.

(भा) अग्निहोत्रं दर्शपूर्णमासौ [1] पिण्डपितृयज्ञश्च [2] तदर्थां इति ध्रियते त्वौपासनस्तस्मिन् सर्वकर्माणि ॥

(सू) यदि [3] सर्वमौपासनमाहरेदपूपं यवमयं व्रीहिमयं चौदुम्बरपर्णाभ्यां सङ्गृह्यायातन उपास्येद्यवमयं पश्चाद्व्रीहिमयं पुरस्तात्तस्मिन्नादध्यात् ॥१४॥३६॥ ॥९३२॥

[सर्वश औपासनयाधाने औपासनाभावे च कर्तव्यम्]

(भा) सर्वाऽऽधानेऽपि लौकिके [4]आपासनवर्जानि क्रियन्ते । यस्य तु सर्व आहितः तस्य तु निर्मन्थ्य एव पुन[5]राधेयः ।

---

[असर्वाधानेऽप्यौपासनादिनिवृत्तिरुपदेशपक्षे]

(वृ) अग्निहो—सर्वकर्माणि—औपासनपार्वणवर्जानि । अग्निहोत्रदर्शपूर्णमासपिण्डपितृयज्ञानां कालापहारात् तत्कार्यकरत्वात् ॥

[सर्वाधानेऽपि कर्तव्यानां प्रमाणप्रदर्शनम्]

सर्वाधानेऽपि—क्रियन्ते—पाकयज्ञाना नित्यतया यावज्जीव कर्तव्यत्वात् । स एष गृहमेधिनो नित्यो यज्ञः प्रतत इति श्रुतेः । तथा सोमे न ददाति न पचत इति नित्यवद्वैश्वदेवपञ्चमहायज्ञप्रतिषेधात् । यत्रान्यं पश्येत् तत आहृत्येत्यत्र लौकिकाग्नेः प्रतिनिधित्वदर्शनेनात्रापि लौकिकेऽग्नौ कर्तव्यानीत्युपदेशः ॥

[औपासनाभावे ब्राह्मौदनिकाग्निसिद्धिः]

यस्य तु सर्व—राधेयः—[6]अयमभिप्रायः—औपासनाभावे तद्योनिं निर्मन्थ्य ब्राह्मौदनिकमा[7]दधीतेति । अतः श्रोत्रियागारादाहृतमपि यस्यौपासनस्य [8] पूर्वे योनिस्स एव ब्रह्मौदने ॥

---

[1] सौ च तदर्थाविति—ग. [2] तदर्थादिति क्रियेत—ग. [3] सर्वाधानेद्वावपूर्वौ पृथक् पर्णाभ्या सङ्गृह्य ब्राह्मौदनिकायतने क्षिप्त्वा तत्राग्निमादध्यात् (रु) [4] औपासनहोमपार्व—क [5] धेये—ग. पुनराधानोने—क. –ख ग. [6] आस्यायमभि—घ. [7] मादधातीति—घ. [8] पूर्वा संयोनिर्ब्रह्मौदने ?—ख. ग.

(भा) [1]अपूप· पूपलिका । औदुम्बराणि च तानि[2] पर्णानि च औदुम्बरपर्णानि ताभ्यां ग्रहणम् । उपासन क्षेपः आधान—स्थापनम् । तत्कृत्वा यजमानपत्नयोर्भोजनम् व्रतोपायनीयस्य वाजसनेयिमतात् ॥

(सू) **सर्वमप्यौपासनमाहरन्नापूपावुपास्येदित्यपरम् ॥**
**॥ १५ ॥ ३७ ॥ ९३३ ॥**

चतुर्थी खण्डिका ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये पञ्चमे प्रश्ने प्रथम पटल ॥

---

(सू) **अपरेण ब्राह्मौदनिकं लोहिते चर्मण्यानडुहे प्राचीन[3]ग्रीव उत्तरलोम्नि [4]पाजके वा [5]निशायां**

---

(वृ) **अपूपाः पू—पर्णानीति**—अपूपयो· प्रत्येक द्वे द्वे पर्णे । अतो भाष्ये बहुवचनम् । औदुम्बरशब्दस्य विकारतद्धितान्तत्वात् कर्मधारयसमास औदुम्बरपर्णः ॥

**ताभ्यां ग्रहणम्**—उदुम्बरावयवार्थम् ।

**आधानं स्थापनम्**—औपासनस्य ॥

इति आपस्तम्बश्रौत धूर्तस्वामिभाष्यवृत्तौ रामाग्निचित्कृतायाम्
पञ्चमे प्रश्ने प्रथम. पटल .

---

[1] आपलिक —घ पोळका—घ क्षष्कुलिका अपूपा—घ. [2] तानि तस्यावयवपर्णानिताभ्याम्—क [3] ग्रीवमुत्तरलोम्नि—क [4] पाचिके—ख. पाजक बैदलं मह्नसोपकरणम् (रु). [5] निशा चतुर्धाकृताया रात्रेर्द्वितीयो भाग (रु).

(सू) [1]ब्रह्मौदनं [2]चतुश्शरावं निर्वपति ॥ १ ॥ ३८ ॥ ॥ ९३४ ॥

[चर्मणि विशेषः]

(भा) शकटवाहिनश्चर्मे ॥

पाजकः—[3]पटलक । ब्राह्मणेभ्य ओदन ब्रह्मभ्यो वा प्राणेभ्य ओदनम् । ब्रह्मणे प्राणाय जुष्टमिति लिङ्गात् ॥

[ब्रह्मौदनपदस्य कर्मनामधेयत्वपक्षः अन्यपक्षश्च]

कर्मनाम ब्रह्मौदनशब्दः । अतो यत्र परिसङ्ख्या नास्ति तत्र सर्वो विधिस्सामिद्धर्जम् । यथा द्वादश ब्रह्मौदनान् सꣳस्थिते निर्वपेदिति ।

---

[चर्मणि विशेषग्राहकम्]

(वृ) **शकटवाहिनश्चर्मेति**—आनडुहशब्दार्थः । अनोवहनादनड्वान् । अनश्शकटम् ॥

[ब्रह्मौदनशब्दप्रवृत्तिनिमित्तम्]

**ब्राह्मणेभ्य—ह्मौदनशब्द इति**—ब्राह्मणानां भोजने[4] सधर्मक पाकपूर्वके ब्रह्मौदनशब्दो वर्तते ॥

[कर्मनामधेयत्वफलविवरणम्]

**अतोयत्र—द्वर्जम्**—यथा ‘ द्वादशब्रह्मौदनान् सꣳस्थिते निर्वपेत् इति श्व आधास्यमान ’ इति च । यत्र परिसङ्ख्यास्ति यथा ‘ यदाज्यमुच्छिष्येत तस्मिन् ब्रह्मौदन पचति ’ इत्यादिषु ब्रह्मौदनपाकादिप्रकारान्तरोपदेशेन धर्मान्तरपरिसङ्ख्या यत्र तत्र यावदुक्तधर्मको ब्रह्मौदनः । अन्यत्र द्वादश ब्रह्मौदनान् सꣳस्थिते श्व आधास्यमान. पुनर्ब्रह्मौदनं पचतीत्यादौ । तत्रोक्तस्सर्वविधिः । सामिद्धर्जम्—चित्रियसामिद्धर्जम्,

---

[1] ब्राह्मणेभ्य प्राणेभ्यो ओदन ब्रह्मौदन वा ब्राह्मणे प्राणायेति लिङ्गात् (रु).
[2] चतुर्भिश्शरावै परिमितान् व्रीहीन् यवान्वा निर्वपति । ब्रह्मौदनशब्द कर्मनाम । एतेन अन्यत्रापि ब्रह्मौदनचोदनासु नाम्ना धर्मातिदेशस्सिद्धो भवति । भवति चात्र लिङ्गम् तस्मिन् ब्रह्मौदन पक्त्वा चतुरोब्राह्मणान् भोजयेत् शतुश्शराव वौदनामिति (रु)
[3] पडलक.—घ. [4] भोजनेन—ख.

(भा) तासामाधानाङ्ग[1]त्वात्। केचिदाहुः—न कर्मनामधेय गुणोऽत्र विधीयते ब्राह्मणेभ्योऽयमोदन इति तस्यादाने प्राप्ते भोजननियम । तदा यावदुक्ता ब्रह्मौदना. ये [2]त्विह धर्म[3]वन्तः। शरावो—मल्लकः। तेन निर्वपति–क्षिपति । व्रीहीन् यवान्वा ॥

(सू.) देवस्य त्वेत्यनुद्रुत्य ब्रह्मणे प्राणाय जुष्टं निर्वपामीति प्रथमं अपानायेति [4] द्वितीयं व्यानायेति तृतीयं ब्रह्मणे जुष्टमिति चतुर्थम् ॥ २ ॥ ॥ ३९ ॥ ९३५ ॥

(सू) तूष्णीं वा सर्वाणि ॥ ३ ॥ ४० ॥ ९३६ ॥

चतुर्षू[5]दपात्रेषु पचति ॥ ४ ॥ ४१ ॥ ९३७ ॥

न [6] प्रक्षालयति न प्रस्रावयति ॥५॥४२॥९३८॥

---

[समिद्धर्जमित्यस्य भावः]

(वृ कथम् तदङ्गत्वम् [2] आधेयास्त्वेवाग्निमादधानेनेति सूत्र[7]कारोपदेशात्। तस्मात् द्वादशब्रह्मौदनादिषु सङ्कर्षादिवत्सतरीदानान्त निवर्तते । अन्यत्सर्वं भवति ॥

[अकर्मनामतापक्षः]

केचिदाहुः–नियमः—चतुर्थीयोगेन[8] स्वतो दाने प्राप्ते प्राशनविधि. ॥

येत्विह—श्व आधास्यमान इत्यादिषु ॥

ते धर्मवन्तः—प्रकरणैकत्वा[9]दिति ।

निशायामिति द्वितीययामे केशवस्वामिमतात् ।

---

1 ङ्गता कथम्—ख.ग. 2 तथा—ग 3 त्विहते धर्म—क.ज धर्मवत —ङ ये त्विह श्व आधास्यमान इत्यादिषु ते धर्म—घ 4 द्वितीयतृतीययोरपि ब्राह्मण इत्यनुषङ्ग (रु). 5 पात्रपरिमितमुदक उदपात्रम् (रु) 6 तण्डुलानप्सु क्षिप्त्वा हस्तेन न शोधयति न च आपस्ता· स्रावयति किंतु अनिर्णिक्तानेव पचतीत्यर्थ. (रु) 7 कारवचनात्—घ 8 योगेनस्वमतादाने—ख ग. 9 त्वात्.

(भा) न प्रस्रावयति — न गालयति ॥

(सू) क्षीरे भवतीत्येके ॥ ६ ॥ ४३ ॥ ९३९ ॥

(सू) [1] जीवतण्डुलमिव श्रपयतीति विज्ञायते ॥ ७ ॥ ४४ ॥ ९४० ॥

(सू) दर्व्या [2] ब्रह्मौदनादुद्वास्य प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे यतो भयमभयं तन्नो अस्त्वव देवान् यजेहेड्यानिति जुहोत्यभि वा मन्त्रयते ॥ ८ ॥ ४५ ॥ ९४१ ॥

[होमाभिमन्त्रणयोर्विशेषः]

(भा) उद्वास्य—दर्व्या ब्रह्मौदनादुद्गृहीत्वा जुहोति । [3] अभिमन्त्रण स्थालीस्थस्य ॥

(सू) चतुर्धा ब्रह्मौदनं [4] व्युद्धृत्य प्रभूतेन सर्पिषोप-

---

[होमे विशेषः]

(वृ) उद्वास्य–जुहोति—नोपस्तरणाभिघारणे ।

[अभिमन्त्रणपक्षे विशेषः]

**अभिमन्त्रणं स्थालीस्थस्य**—अभिमन्त्रणपक्षे नोद्धरणम् उद्धरणस्य होमार्थत्वात् ॥

---

[1] ईषदनवक्लिन्नतण्डुलमित्यर्थ (रु) [2] ब्रह्मौदनादुद्धृत्य स्व ब्रह्मौदनमुद्वास्य ततो दर्व्या गृहीत्वा जुहोति तमभिमन्त्रयते वा (रु) [3] अत एव वचनात् नोद्गातुरंश सत्यप्युद्गातरि । तथा च तासु ब्रह्मौदनं पचतीत्यत्र त चतुर्भ्यं आर्षेयेभ्यो महर्त्विग्भ्य उपोहतीति तत्प्राप्त्यर्थं यत्न करिष्यतीति (रु) [4] पृथक्पात्रेषु निक्षिप्य (रु).

(सू) सिच्य [1] कर्षन्ननु[2]च्छिन्दंश्चतुर्भ्य [3] आर्षेयेभ्य ऋत्विग्भ्य [4] उपोहति ॥ १ ॥ ४६ ॥ १४२ ॥

[व्युद्धरणकर्ता]

(भा) चतुर्धा व्युद्धर[5]णादि याजमानम् । कर्षन्—सारयन् । [6] नोत्क्षिपति । अनुच्छिन्दन्—अविमुञ्चन् यावदृत्विजा गृहीतम् ॥

[आर्षेयपदार्थः]

ये स्वानृषीन् विदुः त आर्षेयाः । नाचार्य[7]प्रवराः । [8] श्रुतवन्तो वा । एष वै ब्राह्मण ऋषिरार्षेयो यश्शुश्रुवान् इति लिङ्गात् ॥

---

[याजमानत्वे हेतुः]

(वृ) चतुर्धाकरणादि याजमानम्— ऋत्विग्भ्य उपोहतीत्यनेन समानकर्तृकत्वात् ॥

यावद्–तम्—तावत् ।

[आर्षेयार्त्विक्परिग्रहविधि.]

येस्वानृ –लिङ्गात्— चतुर्भ्य एव ददाति नोद्गात्रे यदोद्गाता ॥

आर्षेया एवर्त्विजो ग्राह्या नानार्षेया इत्यनु [9]वादसरूपो विधिः यन्मुग्धाः कुर्वन्त्युत्विजः । अग्निर्मा तस्मादेनस लिङ्गात् ॥

---

[1] भूमेरनुत्क्षिप्य पात्राणि गमयन् (रु) [2] यावदृत्विजो गृह्णन्ति तावदनुत्सृजन् (रु) [3] ऋषि. वेद त ये विदु त आर्षेया वेदतदर्थयो श्रुतवन्त , एष वै ब्राह्मणऋषिरार्षेयोयश्शुश्रुवान् इति लिङ्गात् । ये सप्तभूय पञ्चपुरुष वा योनिं श्रुतवन्त पितृमन्त पैतृमत्या आर्षेयास्ते संहृतकुलीना आर्त्विजीना भवन्ति इति कात्यायन (रु). [4] व्युद्धरणादि याजमान चतुर्भ्य उपोहतीति वचनात् [5] णाद्याजमानम्–ख. ग घ. [6] प्राक्षिपति–ग. इद–घ पुस्तके न दृश्यते [7] प्रचार – ख. ग घ [8] असंप्रज्ञातबान्धवा श्रुतवन्तो वा–ख ग. घ. [9] वादस्सरू–घ.

[ब्रह्मौदनसंप्रदानभूता ऋत्विजः]

(भा) [1] उपोहति— [2] प्रयच्छति । अध्वर्योर्होतुर्ब्रह्मण आग्नीध्र[3]स्य च । तेषां कर्मदर्शनात् । केचिदुद्गातुश्च[4]प्राश्यं तेषां होतुरुक्त इति ॥

(सू) **अपात्ताः [5] प्रथमे पिण्डाः भवन्त्यप्रतिहताः पाणयः । अथ ब्रह्मौदनशेषं संकृष्य तस्मिन्नाज्य-शेषमानीय तस्मिंश्चित्रियस्याश्वत्थस्य तिस्रस्समिध आर्द्रास्सपलाशाः प्रादेशमात्र्यः [6] स्तिभिगवत्यो विवर्तयति ॥ १० ॥ ४७ ॥ ९४३ ॥**

॥ पञ्चमी खण्डिका ॥

---

[सङ्कर्षणकालः कर्ता च]

(भा) गृहीता आद्याः पिण्डाः [7] मुखे अक्षिप्ता· हस्ताः,

---

[कदाचिद्धोतुर्न प्रदीयते]

(वृ) **अध्वर्यो–दर्शनात्** — ऋत्विक्सस्कारत्वादुपयोगाभावे पूर्णाहुत्यन्ते प्रायश्चित्ताधानपक्षे होतुर्नेष्यते ॥

[उद्गातुः प्राशनसद्भावपक्षाशयः]

**केचिदुद्गा–तश्चप्राश्यम्** —प्राश्य मन्यन्ते ।

**तेषां तु हेतुरुक्त इति**—छन्दोगानामुद्गातुरुक्तत्वात् । महर्त्विजां चतुर्णां प्राशनमिति ॥

---

[1] चतुर्भ्य एव ददाति—**ख ग ङ** [2] प्रापयति—**क** स्येति—**क.** [3] ध्रात्र—**ग.** [4] ऋत्विग्भि प्रथमे ग्रासा गृहीता भवन्ति । अप्रतिहताश्च पाणय पात्रेषु । एवस्थिते अध्वर्यु शेषसङ्कर्षणादि प्रतिपद्यते । पिण्ड सव्येन ध्रियते सामर्थ्यात् । सङ्कर्षणं–निष्कषणम् । चित्रिय —लक्ष्मण्य ग्रामतीर्थादिव्यपदेशक इत्यर्थ । स्तिभिगवत्य –फलवत्य । विवर्तयति–विलोडताति (रु). [5] स्तिभगवत्यो—**ख** [6] अक्षिप्ता मुखेषु, अप्रक्षिप्ता मुखे—**म.**

(भा) आत्तपिण्डोऽध्वर्युस्सङ्कर्षणादि करोति । उपसेचनमाज्यशेषस्य ।

[सङ्कर्षणादिपदार्थः]

सङ्कर्षणमेकीकरणम् । चित्रियम् येन ग्रामस्य तीर्थस्य वा नामधेय यथा [1] अश्वत्थो ग्राम इति । केचित् स्थण्डिल[2]वन्तम् । सपलाशाः सपत्राः । स्तिभिगवत्यः—फलवत्य· । विवर्त[3]यीत [4] आलोड[5]यति ॥

(सू) **चित्रियादश्वत्थात्संभृता बृहत्यः शरीरमभिसंस्कृतास्स्थ । प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै इति ॥ १ ॥ ४८ ॥**
**॥ ९४४ ॥**

(सू) **अथादधाति [6] घृतवतीभिराग्नेयीभिर्गायत्रीभिर्ब्राह्मणस्य त्रिष्टुभ्भी राजन्यस्य जगतीभिर्वैश्यस्य ॥**
**॥ २ ॥ ४९ ॥ ९४५ ॥**

[समिधामाधाने कर्ता अथ शब्दफलं च]

(भा) अध्वर्युरादधाति गायत्रीभिर्ब्राह्मणस्यादध्यादिति । अथशब्दोऽर्थकृत्यप्रतिषेधार्थ· ॥

---

[सङ्कर्षणं समिधामाधानं च नयाजमानम्]

(वृ) **आत्तपिण्डो—करोति**—न यजमानः । अथग्रहणात् ।

अथ शब्दाद्याजमानत्वशङ्कायामाह—

**अध्वर्युरादधाति—दध्यादिति**—षष्ठ्या याजमानव्यतिरेकदर्शनादध्वर्यु समिध आदधातीति ॥

**अथश—र्थ इति**—अथादधातीति ।

---

[1] अश्वत्थग्राम इति—क घ [2] वन्त—ख ग वत—ङ. [3] विवर्तयन्ति—घ. यन्ति-घ समिधो विवर्तयति—क [4] ङ—पुस्तके न दृश्यते [5] तीति—ख यन्तीति—ग. समिधोविवर्तयति—क [6] उत्तरसूत्रेणैव सिद्धे घृतवतीभिरित्यनुक्रमणं वैचित्र्यार्थं ब्राह्मणानुकरणार्थं वा (रु).

(सू.) समिधाऽग्निं दुवस्यतेत्येषा । उपत्वाग्ने हविष्मती-र्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम । तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्येति ब्राह्मणस्य । समिध्यमानः प्रथमो नु धर्मः समक्तुभिरिज्यते विश्ववारः । शोचिष्केशो घृतनिर्णिक्पावकस्सुयज्ञो अग्निर्यजथाय देवान् । घृतप्रतीको घृतयोनिरग्निर्घृतैस्समिद्धो घृतमस्या-न्नम् । घृतप्रुषस्त्वा सरितो वहन्ति घृतं पिबन् सुयजाऽयक्षि देवान् । आयुर्दा अग्न इति राज-न्यस्य । त्वामग्ने समिधानं यविष्ठ देवा दूतं चक्रिरे हव्यवाहम् । उरुज्रयसं घृतयोनिमाहुतं त्वेषं चक्षुर्दधिरे चोदयिन्वति । त्वामग्ने प्रदिव आहुतं घृतेन सुम्नाय वस्सुषमिधा समीधिरे । स वावृधान ओषधीभिरुक्षित उरुज्रयाँसि पार्थिवा वितिष्ठसे घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समि-धान ऋञ्जते । इन्धानो अक्रो विदथेषु दीद्यच्छुक्र-वर्णामुदु नो यꣳसते धियमिति वैश्वस्य ॥ ३ ॥ ॥ ५० ॥ ९४६ ॥

षष्ठी खण्डिका ॥

---

[वत्सतरीदानसम्प्रदानम् ]

(सू.) समित्सु तिस्रो वत्सतरीर्ददाति[1] ॥ १ ॥ ॥ ५१ ॥ ९४७ ॥

(भा) वत्सतर्यो—वत्साभावं व्यतिक्रान्ताः स्तन्यपानोपरताः

---

[1] अध्वर्यव इति शेष । तथा च वक्ष्यत्युपोत्तरसूत्रे । नात्र प्रतिग्रहमन्त्राः अयज्ञत्वात् अङ्गदक्षिणात्वाच्च—रु.

अध्वर्योस्ता. ॥

[समिधां नियमः]

समिधः प्रथम एव ॥

(सू) प्राश्नन्ति [1]ब्राह्मणा ओदनम् ॥२॥१३॥९४७॥
प्राशितवद्भ्यस्स[2] मानं वरं ददाति ॥ ३ ॥
॥१४॥९४८॥

[वरदाने मतिभेदः]

(भा) समानो वरस्सर्वत्र । उपदेशः प्रथम एव समानो वर. ।

---

[अध्वर्योस्सम्प्रदानताहेतुः]

(वृ) **अध्वर्योस्ता**—समिदाधानाङ्गत्वात् ।

[भाष्यदर्शितनियमविवरणम्]

**समिधःप्रथम एव**—प्रथमे–ब्रह्मौदने यथेन" सवत्सरे नोपनमेत् समिध. पुनरादध्यादिति । अनुपनमे पुनर्विधानान्न द्वादशाहब्रह्मौदनेषु श्व आधास्यमान इत्यादिषु । [3]अत आधानाङ्गमेव समिधः ॥

[सर्वत्र समानवरदानपक्षे युक्तिः]

**समानो वरस्सर्वत्र**—प्राशितवद्भ्यः समान वर ददातीति प्राशननिमित्तत्वात्समानवरदानस्य श्व आधास्यमान इत्यत्रापि भवति ।

[उपदेशमताशयः]

**उपदेशः प्रथम एव समानो वर इति**—प्राशनस्य पुरुषसंस्कारत्वात् ऋत्विक्संस्कारार्थकर्मानुष्ठानार्थत्वात् दक्षिणादानानुपपत्तेः न प्राशनाङ्गं दानमिति अदृष्टार्थत्वाद्दानस्य प्रथमप्रयोग एव वरदानम्। प्राशितवद्भ्य इति तु क्रममात्रमित्युपदेशः । न चात्र दाने प्रतिग्रहमन्त्राः आदधातिचोदितत्वात् । यज्ञतन्त्रे साङ्गे प्रतिग्रहमन्त्राः । देवा वै वरुणमयाजयन्निति याजननिमित्तविशेषात् ॥

---

[1] ऋत्विज –रु. [2] वरशब्दो व्याख्यास्यते । समानमिति वचनात् अन्येवरा अध्वर्योरेवभवन्ति–रु. [3] एतदादि–घ पुस्तके न दृश्यते.

(सू.) [1]यस्मिन्नक्षत्रेऽग्निमाधास्यन् स्यात्तस्मिन् संवत्सरे पुरस्तादेतास्समिध आदध्याद्द्वादशाहे त्र्यहे त्र्यह एका[2]हे वा ॥ ४ ॥ १५ ॥ ९४९ ॥

[समिधामाधाने पूर्वाङ्गम्]

(भा) यस्मिन्नक्षत्रे पर्वाणि वाऽऽदधाति तस्मिन्नरण्योराहरणादि वरदा[3]नान्त ब्रह्मौदन कृत्वा समिध आदधाति ॥

[एकीकरणादेर्वरदानान्तत्वेहेतुः सूत्रारम्भफलं उपदेशपक्षश्च]

एकीकरणादिवरदानान्तम् ।

---

[वरदानान्तं कृत्वा समिध आदधातीति भाष्याशयः]

(वृ) **यस्मिन्नक्षत्रे—आदधाति——**[4] एकीकरणादिवरदानान्तम् यस्मिन् नक्षत्रेऽग्निमाधास्यन् स्यात् तस्मिन् एतास्समिध आदध्यात्। संवत्सरस्य परस्तात् द्वादशाहादिषु वा आदध्यात् इति सबन्धः। ब्रह्मौदन [5]कृत्वा समिध आदधातीति समानवरदानान्तत्वेऽपि ब्रह्मौदनस्य तन्मध्यवर्तिन. समिदाधानस्य ब्रह्मौदनानङ्गत्वख्यापनार्थं वरदानान्त कृत्वा समिध आदधाति इत्युक्तम्, न पुनर्वरदानोत्तरकाल समिदाधानमिति । तेनायमर्थः—आधाननक्षत्रे पर्वाणि वाऽरण्योराहरणादि वरदानान्त कर्तव्यम्। समिदाधान च स्वक्रमे कर्तव्यम्। तथा पुरस्तात्संवत्सरादिष्वपीति ॥

**एकीकरणादि—**सङ्कर्षणादीत्यर्थः।

**वरदानान्तम्—**ब्रह्मौदनान्तम्।

---

[1] यस्मिन्नहन्याधास्यते तत पुरस्तात्स वत्सरे यत् समान-स्थानमह. तस्मिन् द्वादशाहादौ वा अरण्या हरणादि कृत्वा समिध आदध्यात्—ङ
[2] एकादशाहे वा—क [3] भिति याजननिमित्ताविशेषात्—ग. घ [4] वाऽग्निमादधाति [5] न्त कृत्वा—घ इद घ पुस्तके न दृश्यते

(भा) ब्रह्मौदनाङ्गत्वात् ।

समिधश्शेषनाशे विस्मृताश्चाधेयाः । उपदेशोऽनुगमनप्रयाणानुपनमादिषु पुनस्समिदाधानविधानादेवाङ्गत्वे सिद्धे सद्यस्कालार्थं वचनम् ॥

[सद्यस्कालाधानपरं सूत्रमिति पक्षः]

(सू) [1] आधेयास्त्वेवाग्निमादधानेन ॥५॥१६॥९५०॥

---

[ब्रह्मौदनाङ्गत्वहेतूपपत्तिः]

(वृ) **ब्रह्मौदनाङ्गत्वात्**-- समिदाधानादुपरितनप्राशनवरदानयोरपि [2] ब्रह्मौदनकर्मत्वात् तदन्त कर्तव्यमित्युक्तम् ॥

**समिधश्शेष-धेयाः**---यदाज्यमुच्छिष्यते तेन समिधोऽभ्यज्यादधातीति श्रुतेः अथ ब्रह्मौदनशेषं सङ्क्ष्येत्यादिसूत्रकारवचनाच्च समिदाधानस्य शेषप्रतिपत्त्यर्थत्वमाशङ्क्य परिहरति---' अनाहितस्तस्या

[समिदाधानेनैवाधानसिद्धिः]

ग्निरित्याहु. यस्समिधोऽनाधायाग्निमाधत्ते ' इति वाक्यशेषादनुगमनप्रयाणानुपनमादिषु पुनस्समिदाधानविधानाच्च जुषस्व समिधो ममेति मन्त्रलिङ्गाच्च । समारोपणीयाग्निवृद्ध्याऽमुयत्पत्त्यर्थत्वात् न शेषप्रतिपत्तिद्वारा ब्रह्मौदनाङ्गत्वम् । अतः प्रमादाच्छेषनाशेऽपि अनक्ता. समिध आधेया विस्मृताश्चेत्येवमर्थं आधेयास्त्वेवेति सूत्रम् ॥

[उपदेशमतेन सद्यस्कालार्थत्ववचनोपपत्ति.]

**उपदेशः-र्थं वचनमिति** ---अस्यार्थः---न तावत् समिधां ब्रह्मौदनशेषप्रतिपत्त्यर्थत्वशङ्का , अनुगमनादिषु ब्रह्मौदन पक्त्वेत्येतावतैव साङ्गस्य ब्रह्मौदनस्य कर्तव्यत्वे सिद्धे एतयैवावृता समिध आदध्या-

---

[1] प्रमादात् विस्मृता अप्याधेया एव प्राक्समारोपणात् न तूपेक्षणीया कस्मात् ? अनाहितस्तस्याग्निरित्याहु यत्समिधोऽनाधायाग्निमाधत्ते इति श्रुतिरिति भाव (रु). [2] दनाङ्गत्वात् तदन्तकतव्यम्--घ

[1] केचिदाहु:—प्रायश्चित्ताधानमापदि सद्यस्कालमपि [2]लभ्यते एकाहे चतुर्दश्याम् ॥

---

(वृ) दिति [3] पृथग्विधानात् तासामग्निसंस्कारत्वात् अकरणे प्रत्यवायश्रुत्या सान्तरित पुनराधेयत्वात् [4] तन्निवृत्त्यर्थमिद सूत्रम् । अतः प्रयोगकालविधिप्रकरणोक्तत्वात् सवत्सरादिभ्य [5] उक्तकालेभ्योऽपरकालविधिरिति । तत्रैतावान् विशेषः ; नादितस्सद्यस्कालमाधानम् । मुख्यकल्पोपसहारसमर्थस्यैव, प्रथमाधिकारात् । अनुकल्पत्व चास्य एकाहे सद्यो वेति विकल्पस्य कण्ठोक्त्यभावात् नक्त गार्हपत्यमादधातीति [6] श्रुति समवायाच्च ॥

[आधेयास्त्ववेति सूत्रं आपदि प्रायश्चित्ताधानपरमिति पक्षोपपत्तिः]

केचिदाहुः–प्रायश्चि–लभ्यते—अनाहितस्तस्याग्निरिति वचनादाधानाङ्गत्वात् समिदाधानस्यावश्य प्राप्तत्वात् तदर्थमाधेयास्त्वेवाग्निमादधानेनेत्यस्यानर्थक्यात् अनेन सूत्रेण प्रायश्चित्ताधानस्यापदि सद्यस्कालतोच्यते । आधेया एवाग्नयः आपदि सद्यस्कालमेव न तु द्वादशाहादि कालप्रतीक्षणमिति ॥

दुर्भिक्षे राष्ट्रसंबाधे नित्यदेहात्ययेषु च ।
नित्यनैमित्तिकं काम्यं [7] प्रक्रान्त कार्यमेव तत् ॥

इति आपल्लक्षणम् । काम्य प्रक्रान्तम् । दुर्भिक्षमापदश्वस्तनिकस्य ॥

[एकाहपदेन नक्षत्रस्यापि बोधनम्]

एकाहे–चतुर्दश्याम्—चतुर्दशीग्रहणमुपलक्षणं नक्षत्रस्यापि । पुरस्तादेकाहे एकाहविधानेनाधानदिवसा[9]त्पूर्वाहर्विधिः ॥

---

[1] केचित्त्वाहु –ख. ग ङ. [2] आधेयास्त्वेवाग्निमादधानेनेति इत्यधिकं [3] वाङ्गत्वे सिद्धे–घ [4] पुनर्वचनात्–घ. [5] नतन्निवृत्त्यर्थ–घ [6] उत्तरकाले –ख. ग. [7] श्रुत्यसमवायाच्च–ख. ग [8] प्रशान्तम्–ख ग [9] त्पूर्वाह्न-वीधि –ख. ग

[कदाचिदमावास्यायामग्न्याधानम्]

यदा तु प्रतिपदि पूर्वाह्णे पर्वकालः तदा अमावास्यायाम् ॥

(सू) **अथ व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति नास्याग्निं गृहाद्धरन्ति नान्यत आहरन्ति॥ ६ ॥ ॥१७॥९५१॥**

[व्रतस्य सर्वकल्पसाधारण्यम्]

(भा) असंवत्सरपक्षे च व्रतानि ॥

---

[अमावास्याधाने विशेषाः]

(वृ) यदा तु—मावास्यायाम्—पर्वसन्धेराधानप्रयोगान्तर्भावाय । पूर्वाह्णे[2] सन्धौ पूर्वेद्युरुपक्रम्यामावास्याधानम् । अपराह्णे रात्रौ वा अमावास्यासन्धिपक्षे अमावास्याधानम् । तस्मिन्नहन्युपक्रम्योत्तरद्युराधानम् ॥

[पौर्णमास्याधाने विशेषः]

पौर्णमास्याधाने तु पूर्वस्मिन् पर्वणि सेष्टिसान्वारम्भणीयापवर्गविधानात् पौर्णमास्याश्च तिथिद्वयसम्बन्धस्यापेक्षितत्वात् नाधानमध्ये पर्वसन्धिसंभवः । अतः पूर्वाह्णे सन्धौ न पौर्णमास्याधानमित्येके ॥

[यदा त्वित्यादिभाष्याक्षरार्थः]

**अक्षरयोजना तु ;**—यदा तु प्रतिपदि पूर्वाह्णे [3]पर्वसन्धिः तदा उत्कृष्यामावास्यायां नक्षत्रे वाऽऽधानं कर्तव्यम् । पौर्णमासीसङ्कल्पोत्तरकालं पर्वसन्धिसंनिपातस्यापेक्षितत्वात् । रात्रावमावास्यापर्वसन्धिपक्षेऽप्यमावास्याधानं कर्तव्यमेव पशुसोमादिवत् । सन्धिमदहोरात्रस्यापेक्षितत्वात् ॥

[व्रतस्य सर्वकल्पसाधारण्योपपत्तिः]

**असंवत्सरपक्षे च व्रतानि**—अथ व्रतं चरन्तीत्युपक्रम्य

---

[1] नान्यत आहरन्तीति सूत्रभागः रुद्रदत्त पाठे न दृश्यते । [2] ह्णे पर्वसन्धौ—ख. ग [3] पौर्णमासीपर्व ख ग.

(सू) ब्राह्मौदनिकेन [1] संवत्सरमासीत ॥७॥१८॥९५२॥
[2] औपासनश्चेदाहित [3] एतस्मिन्नस्याग्निकर्माणि क्रियन्ते ॥ ८ ॥ १९ ॥ ९५३ ॥
न [4] प्रयायात् ॥ ९ ॥ २० ॥ ९५४ ॥

अग्निविशेषविवक्षा]

(सू) [5] नानुगच्छेत् ॥ १० ॥ २१ ॥ ९५५ ॥

(भा) नानुगच्छेत् ब्राह्मौदनिकः ॥

(सू) [6] यदि प्रयायादनुवा गच्छेद्ब्रह्मौदनं पक्त्वा एतयैवा वृता समिध आदध्यात् ॥ ११ ॥ २२ ॥ ९५६ ॥

---

(वृ) ब्राह्मौदनिकेन सवत्सरमासीतेति व्रतमध्ये विधानेऽपि एकाहादि-कल्पेऽपि व्रतानि कर्तव्यानि ॥

[अनुगतिनिषेधस्याशयः]

**नानुगच्छेत् ब्राह्मौदनिकः**—यथाऽग्निर्नानुगच्छेत्तथा धारण कर्तव्यम् ॥

---

[1] संवत्सरग्रहणाद्द्वादशाहादीनामप्युपलक्षणम् इतरथा तद्विधिवैयर्थ्यात् (रु)
[2] न तु औपासनैकदेश । तदा एतस्मिन्नेवाग्नौ नित्यनैमित्तिकानि कर्माणि क्रियन्ते। ऊर्ध्वं तु अग्न्याधेयात् नित्यानि लुप्यन्ते। एषामर्था श्रौतैरेवाप्यन्ते। यथा नित्यहोमादीनाम्। नैमित्तिकानि अष्टकादीनि च लौकिकेऽग्नौ क्रियन्ते। एकदेशाधाने पुन औपासन एवैतानि क्रियन्ते। ध्रियते च स नित्यो धार्य इति वचनात्। होमश्चेदानी न लुप्यते। 'उभयं जुहुयात् औपासनमग्निहोत्रं च' इति भरद्वाज । बोधायनश्चाह (रु).
[3] एतस्मिन्नेवास्या—स्व [4] यजमान इति शेष· । याजमानाधिकारे न प्रयातीति सत्याषाढ (रु). [5] ब्राह्मौदनिक इति शेष । नैषोग्निरनुगच्छेदिति भरद्वाज (रु)
[6] अनुगतस्य च यथायोन्युत्पत्ति· औपासनवत्सर्वाधाने । आवृत्—प्रकार· (रु).

[प्रकृतेः आवृत्पदार्थः]

(भा) योनित उत्पादनम्। आवृत्–क्रिया ॥

(सू) यद्येन [1]संवत्सरेऽग्न्याधेयं नोपनमेद्ब्रह्मौदनं पक्त्वा समिध आधाय यदैनमुपनमेदथादधीत ॥ १२ ॥ ॥ २३ ॥ ९५७ ॥

[उपनमः ननक्षत्राद्यात्मकः संवत्सराविवक्षा च]

(भा) यदैनमुपनमेदिति [2]न नक्षत्रं न कालः । अनुपनमे सर्वत्र संवत्सरः प्रदर्शनार्थः ॥

(सू) [3]तस्य याथाकामी भरणकल्पानाम्॥१३॥२४॥९५८॥

---

[उत्पादनवैविध्यसंभवादि]

(वृ) योनित उत्पादनम्— अनुगते सर्वाधानपक्षे योनित उत्पादनम् श्रोत्रियागारादिभ्यः । द्वितीयाधानेऽप्येवमेव । एकदेशाधाने शेषादुत्पत्तिः ॥

[आवृतेति सौत्रपदार्थ]

आवृत्क्रिया–एतयैवावृता-क्रियया—प्रयोगेण ॥

[भाष्यस्य पूरणेन विवरणम्]

यदैनमुपनमेदिति न नक्षत्रं न कालः अनुपनमे—अनुपनमे सति यदो[4]पनमस्तदैव न नक्षत्रादिकालापेक्षा ॥

सर्वत्रसंवत्सरः प्रदर्शनार्थः—प्रथमकल्पेऽप्यनुपनमेऽपि द्वादशाहादीना प्रदर्शनार्थः ॥

---

[1] संवत्सरग्रहणमत्रापि प्रदर्शनार्थम् । तत्र तत्र काले अग्न्याधेयाशक्तौ प्रायश्चित्तमेतत्कृत्वा यदा शक्नुयात् तदा आदधीत। तत्र तु नक्षत्रदेरप्यनादर इति केचित्। पूर्वसूत्रे चात्र ब्रह्मौदनात्पृथक् समिधा ग्रहणात् ब्रह्मौदनाङ्गत्वमासामेव बाधित भवति। आधेयास्त्वेवाग्निमादधानेनेति वचनाच्चाधानाङ्गत्वम् । तस्माद्ब्रह्मौदनान्तरेषु समिधो न भवन्ति (रु). [2] त्रादिकाल.–घ ङ.—काला घ [3] अनुपनताग्न्याधेयस्य यावदुपनाम ब्राह्मौदनिकोक्तभरणकल्पाना याथाकामी तद्भरणकालोक्तानि व्रतानि भवन्ति न वेत्यर्थः (रु) [4] पपास्तिस्त–घ.

[भरणकल्पव्रतानामैच्छिकत्वम्]

(भा) [1]भरणकल्पव्रतानि तानि करोति न वा ॥

(सू) [2]**द्वादशाहं चरेदेकाहं वा ॥ १४ ॥ २५ ॥ ९५९ ॥**

[व्रतचर्याप्रकारादि]

(भा) संवत्सरादिभ्य ऊर्ध्वं कृते प्रायश्चित्तेऽमुष्मिन्नाधास्यामीति चरेद्द्वादशाहमे[3]काहं वा ॥

(सू) [4]**श्व आधास्यमानः पुनर्ब्रह्मौदनं पचति ॥**
**॥ १५ ॥ २६६ ॥ ९६० ॥**

[द्वितीये ब्रह्मौ[5]दने विशेषः मति[6]भेदश्च]

(भा) पुनर्ब्रह्मौदनपाक एकाहे [7]विरत कृत्वा सर्वतः । श्व आधास्यमान इत्यविशेषवचनात् । केचित्त्वनुपनमन एव[8] ॥

---

[भरणकल्पव्रतकालादिप्रदर्शनभाष्यविवरणम्]

(वृ) **संवत्सरादिभ्य ऊर्ध्वम्**—अनुपनमे । व्रतानुष्ठानपक्षे **कृते प्रायश्चित्ते** । ब्रह्मौदनावृत्त्यादौ **अमुष्मिन्नाधास्यामीति** सङ्कल्प्य ततः पूर्वं **चरेद्द्वादशाहमेकाहं** **वा** व्रतम् । सङ्ख्याद्वयनियमात् ॥

[प्रथमप्रयोगेऽपि द्वितीयं ब्रह्मौदनम्]

**पुनर्ब्रह्मौ—सर्वतः**—प्रथमप्रयोगेष्वपि एकाहेऽप्यनुपनमे च ।

**श्व आधास्य—वचनादिति**— पूर्वेद्युर्ब्रह्मौदने कृते एकाहपक्षेऽपि पुनर्ब्रह्मौदनः कर्तव्य इति ॥

[पक्षान्तराशयः]

**केचित्त्वनुपनम एव**—पुनः प्रयोग इति तदानन्तर्यात् ।

---

[1] भरणकल्पोव्रतानि—घ [2] यदा उपनतमग्न्याधेयं तदा पुनरपि द्वादशाहमेकाह वा व्रतानि चरित्वादधीत (रु). [3] मेकाह—घ. [4] अधिकारात् अयमपि अनुपनताग्न्याधेयस्य विधि. । अन्यत्तु मत श्वआधास्यमान इत्यविशेषवचनात् सर्वस्याय नित्य. पुनर्ब्रह्मौदनः । तेन योऽपि एकाहव्रतकल्पेन श्व आधाता तस्याप्याववर्तनीय इति (रु) [5] पितरम् ?—क ग. घ [6] पीतरम् ?—ख [7] सर्वत्र—घ ख. ग [8] नम एव—ख ग घ ङ.

(सू) [1] योऽस्याग्निमाधास्यन् स्यात्स एतां रात्रिं व्रतं चरति न मांसमश्नाति न स्त्रियमुपैति ॥१६॥ ॥ २७७ ॥ ९६१ ॥

[ऋत्विजां व्रतम्]

(भा) योऽस्याग्निरिति सर्वेषामृत्विजां व्रतम् ॥

(सू) प्रजा अग्ने संवासयाशाश्च पशुभिस्सह। राष्ट्राण्यस्मा आधेहि यास्यासन् सवितुस्सव इत्युत्तरेण गार्हपत्यायतनं [2] कल्माषमजं बध्नाति ॥ १७ ॥ ॥ २८ ॥ ९६२ ॥

सप्तमी खण्डिका ॥

---

(सू) अथ यजमानो [3] व्रतमुपैति वाचं यच्छत्यनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामि ॥ १ ॥ २९ ॥ ९६३ ॥

[यजमानव्रत तत्रत्यविशेषश्च]

(भा) अनृतवचनप्रतिषेधोऽर्वागप्याधानात् ।

---

[अवचनसत्वेऽपि सर्वर्त्विग्व्रतत्वसिद्धिः]

(वृ) योऽस्याग्नि–व्रतम्—योऽस्याग्निमित्येकवचनश्रवणेऽपि आधानकर्तृत्वाविशेषात् सर्वैर्नियमः कर्तव्य इति । योऽस्याग्निमित्यस्य योय इत्यर्थः । [4] भक्षयतीति–स स इत्यर्थ इतिवत् ॥

[प्रागपत्यस्याशयः]

अनृतव–धानात्—नाहिताग्निव्रतकाल एव ।

---

[1] आधास्यन्नित्यध्वर्योरेवग्रहणम् । सर्वर्त्विजामुपलक्षणं वा । तथा च भरद्वाज ,—अध्वर्युरेव व्रत चरेदित्येक सर्वर्त्विज इत्यपरमिति (रु) [2] कल्माष — कृष्णबिन्दु (रु). [3] सत्यवचनसङ्कल्पेनात्र व्रतोपायनमभिप्रेतम् मन्त्रलिङ्गात् । ब्राह्मौदनिककालव्रताना प्रागेवोपेतत्वाच्च (रु). [4] सूत्रस्थस्याश्नातिपदस्य विवरण स्यात्?

(भा) अनृतात्सत्यमुपैमीति लिङ्गात् । [1]दैवाभिधानाद्वैदिकी–दैवीवाक् ता गृह्णामीत्युत्तरकाल प्रयुङ्क्ते । [2]ततोऽवाग्यमेऽपि समस्तस्य मन्त्रस्य प्रयोगः ॥

(सू) **वीणा [3]तूणवेनैनमेतां रात्रिं जागरयन्ति ॥**
॥ ३ ॥ ३० ॥ ९६४ ॥

(भा) तूणवो वंश· ॥

(सू) **[4]अपि वा न जागर्ति न वाचं यच्छति ॥**
॥ ३ ॥ ३१ ॥ ९६५ ॥

(सू) **[5]शल्कैरेतां रात्रिमेतमिन्धान आस्ते शल्कै-**

---

[अनृतनिवृत्तिः कर्माङ्गं, तदतिक्रमे प्रायश्चित्तं च]

(वृ) **अनृतात्स—ङ्गात्**—मन्त्रेणानृतनिवृत्तिपूर्वकसत्यप्राप्तिसङ्कल्पात् कल्माषाजबन्धनाधूर्ध्वं कर्माङ्गमनृतानिवर्तनम् । तदतिक्रमे यजुर्भ्रेष-प्रायश्चित्तम् । आहिताग्निव्रतरूपस्यातिक्रमे व्रातपती । सर्वत्र त्रिरात्र-मक्षीरादिभोजन स्मार्तम् । पुरुषार्थातिक्रमे प्रायश्चित्त च समुच्चीयते ॥

[दैवीवाग्ग्रहणोक्तिभावः]

**दैवाभि—मन्त्रस्य प्रयोगः**—मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामीति सर्वासां मनुष्यवाक्त्वेऽपि लौकिकवाङ्निवृत्तिपरत्वाद्दैवीशब्दस्य वैदिकी दैवी वाक् ता वाच गृह्णमि अत ऊर्ध्वं वैदिक्या प्रायेण प्रयोग इति । तस्मादपि वा न जागर्ति न वाच यच्छतीत्यस्मिन् पक्षे मानुषवाग्यमनाभावेऽपि कृत्स्नमन्त्रप्रयोगो व्रतोपाय[6]नार्थ· ॥

[वीणादिकरणत्वोपपत्ति· एकवचनोपपत्तिश्च]

(वृ) **तूणवो वंशः**—वीणावादेन तूणवध्वनिना च जागरयन्ति

---

[1] वैदिकी दैवीवाक्–**क ग** [2] अतो–**क ग.** [3] तूणवो वंश (रु).
[4] अस्मिन् पक्षे वाग्यमनमन्त्रस्य लोप । दैवी वाच यच्छामीति लिङ्गात् (रु).
[5] शल्कै –शकलै । जागरणपक्षे मन्त्रावृत्तिः । विपर्यये तु सकृदेव [6] नार्थम्–**ख. ग.**

राग्निमिन्धान उभौ लोकौ सनेमहम्। उभयो-
र्लोकयोरृद्ध्वातिमृत्युं तराम्यहमित्येतया ॥ ४ ॥
॥३२॥९६६॥

[इन्धनावधिः]

(भा) [1] शल्केन्धने मन्त्रावृत्तिः । एतमग्निम् आसमारोपणात्। अजाग्रदग्निं शमयिष्यति [2] इत्युत्थाप्यते शल्केन्धनेनाग्निः ।

(सू) तस्मिन्नुपव्युषमरणी [3] निष्टपति जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते। अग्निमश्वत्थादधिहव्यवाहम् । शमीगर्भाज्जनयन् यो मयोभूः। अयं ते योनिर् ऋत्विय इत्येताभ्याम् ॥ ५ ॥ ३३ ॥ ९६७ ॥

[उपव्युषनिष्टपनपदयोरर्थः]

(भा) समीपमुषसः—उपव्युषम्। मन्त्रेण तपन निष्टपनम् ॥

---

(वृ) यजमानम्। तूष्णीवेनेत्येकवचन समाहाराभिप्रायेण॥

शल्केन्धने-णादिति—शल्कैरिन्धीतैतां रात्रिमिति वचनात् प्राक्समारोपणादेव ।

अजाग्र-प्यते-न्धनेनाग्निः—जागरणमग्नेरुपदीपनम् ॥ ८१ ॥

समीपमुषसः-उपव्युषम्—[4] तस्मिन् ।

[निष्टपनेविशिष्याग्निः]

मन्त्रेण तपनं-निष्टपनम्—तस्मिन्नग्नौ नौपासनादौ ।

---

[1] महान्तिकाष्ठान्याधायस्वपिति (रु) [2] दीप्यते—ख ग. [3] निष्टपनानन्तरमाग्निमुद्वासयेत् भस्मापोह्येत्युत्तरत्रवचनात् अनुगमयत्येतमाग्निमिति कल्पान्तरेषु व्यक्तवचनाच्च (रु) [4] तस्मिन्नुपव्युषे? घ.

(भा) तपने कृतोऽग्नेरुद्वापनम् ।

(सू) अग्नी रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इत्यरणी अभिमन्त्रय मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथः पुरोगामित्यरणी आह्रियमाणे यजमानः [1] प्रतीक्षते ॥ ६ ॥ ३४ ॥९६८ ॥

(सू) दोह्या च ते दुग्धभृच्चोर्वरीतेते भागधेयं प्रयच्छामीति यजमानाय प्रयच्छति ॥७॥३५॥९६९॥

(सु) आरोहतं दशतं शक्वरीममर्तेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तराꣳ समाम् दर्शमहं पूर्णमासं यज्ञं यथा यजा इति प्रतिगृह्यर्त्वियवती स्थो अग्निरेतसौ गर्भं दधातां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथः । ते मत्प्रातः प्रजानिष्येथे ते मा प्रजाते प्रजनयिष्यथः । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके इति [2] प्रतिगृह्याभिमन्त्रयते यजमानः ॥ ८ ॥ ॥३६॥९७०॥

अष्टमी खण्डिका

---

[उद्वासन पदार्थः]

(वृ) तपने कृते—अग्नेरुद्वापनम्—उपशमनं लौकिकस्य । वैदिकस्य अदृष्टरूपस्य तपने समारूढत्वात् ॥

---

[1] प्रथम निष्टप्ते अभिमन्त्र्य तत आह्रियमाणे प्रतीक्षते (रु) [2] पुन प्रतिगृह्येति वचनमानन्तर्यार्थम्, माभूदवश्यकृत्यैरप्यभिमन्त्रणस्यव्यवाय इति (रु).

[अग्नेः प्रतिग्रहप्रकार मानं च]

(भा) [1] हस्तद्वयेन प्रतिग्रहः दशतमिति लिङ्गात् ।

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये पञ्चमे प्रश्ने द्वितीय पटल ॥

---

(सू) मयि गृह्णाम्यग्रे अग्निं यो नो अग्निः पितर इत्युभौ जपतः । अपेत वीतेति गार्हपत्यायतनमुद्धत्य शं नोदेवीरभिष्टय इत्यद्भिरवोक्षति[2] ॥ १ ॥

(भा) अपेत शन्नो देवीरभिष्टय [3] इति द्वौ एकस्मिन्नायतने ॥

---

[भाष्यदर्शितलिङ्गोपपादनम् ल्यपोऽभिप्रायश्च]

(वृ) हस्तद्वयेन–लिङ्गादिति—शक्वरीति लिङ्गस्तुल्या हस्तद्वयाङ्गुलीनां निर्देशात् । शक्वरीणा दशतमारोहतमित्यरण्योर्निर्देशाद्धस्तद्वयेन प्रतिग्रह । प्रतिगृह्याभिमन्त्रयत इति पुववर्चनादभिमन्त्रणादि यावन्मन्थन हस्तगते एवारणी । सद्यस्कालाधानेऽपि ऋत्वियवतीस्थ इत्यस्यानिवृत्तिः अरण्योरभिधानात् ।

इति श्रीमदापस्तम्बश्रौतसूत्र धूर्तस्वामिभाष्यवृत्तौ
पञ्चमे प्रश्ने द्वितीय पटल

---

[भाष्यदर्शितैकावोक्षणोपपत्तिः]

अपेत – आयतने—नैकैकः प्रत्यायतनम् । द्वयमुक्त्वैव दक्षिणाग्नेरित्यादिविधानात् ॥

---

[1] द्वयेनारण्यो प्रति ख ग –पुस्तकयो पाठ . [2] एषामायतनान्यप्ये वमेवमेकैकैकमुद्धत्यावोक्षति (ङ] [3] इति पदार्थद्वयमेकैकस्मि न्नायते—घ.

(सू) एवं दक्षिणाग्नेराहवनीयस्य सभ्यावसथ्ययोश्च॥ ॥ २ ॥ २ ॥ ९७२ ॥

एवमनुपूर्वाण्येवैष्वत उर्ध्वं कर्माणि क्रियन्ते ॥ ॥ ३ ॥ ३ ॥ ९७३ ॥

सिकतानामर्धं द्वैधं विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेः । अर्धं त्रैधं विभज्य[1] पूर्वेषु ॥ ४ ॥ ४ ॥ ९७४ ॥

[सिकतानिवपने पक्षान्तरम्]

(भा) यदा अग्नित्रय [2]तदा अर्धस्याहवनीयायतन[3] एव क्षेपः ।

(सू) एतेनैव [4]कल्पेन सर्वान् पार्थिवान्निवपति ॥ ॥५॥४॥ ९७५॥

अग्नेर्भस्मासीति सिकता निवपति संज्ञानमित्यूषान् ॥ ६ ॥ ६ ॥ ९७६ ॥

तान् निवपन् [5]यददश्चन्द्रमसि कृष्णं तदिहास्त्विति मनसा ध्यायति ॥७॥ ८६२ ॥

---

[अग्नित्रयपक्षे प्राथमिकार्धद्वैधीकरणमस्त्येव]

(वृ) यदाग्नित्रयं—यतन एवक्षेपः—अपरयोरग्न्योरर्धस्य विभागेन निवपनविधानात् आग्नित्रित्वे पञ्चत्वे च तयोस्तथैव कर्तव्यम् । पारिशेष्यादर्धस्याहवनीयायतने निधानम् । सम्भृतस्य सर्वस्य विनियोज्यत्वात् ।

---

[1] पूर्वेष्वायतनेष्वितिशेष. । यदा न सभ्यावसथ्यौ तदा अर्धं सर्वं आहवनीय एव (रु) [2] तस्याहवनीया–घ [3] नीय एव–क तदार्धस्याहवनीय–ङ. [4] कल्पो विभाग प्रकार (रु) [5] यदद इति चन्द्रलक्ष्मध्यानप्रकार ब्राह्मणानुसाराद्दर्शित न मन्त्र इति द्रष्टव्यम् (रु)

(सू) उदेह्यग्ने अधिमातुः पृथिव्या विश आविश महतः सधस्थात् । आखुं त्वा ये दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपामित्याखुकरीषम् । यत्पृथिव्या अनामृतं संबभूव त्वे सचा । तदग्निरग्नयेऽददात्तस्मिन्नाधीयतामयम् इति गार्हपत्यायतने वल्मीकवपा निवपति ॥ ८ ॥ ८ ॥ ९७८ ॥

यदन्तरिक्षस्येति दक्षिणाग्नेः यद्दिव इति पूर्वेषु ॥ ९ ॥ ९ ॥ ९७९ ॥

(भा) यदन्तरिक्षस्यानामृत यद्दिवोऽ[1]नामृतमित्यनुषङ्गः ॥

(सू) उत्समुद्रान्मधुमाँ उर्मिरागात्साम्राज्याय प्रतरां दधानः । अमी च ये मघवानो वयं चेषमूर्जं मधुमत्संभरेमेति सूदम् । इयत्यग्र आसीदिति वराहविहतम् ॥ १० ॥ १० ॥ ९८० ॥

(सू) [2]आपो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा । अदॄंहथाश्शर्कराभिस्त्रिविष्टप्य जयो लोकान् प्रदिशश्चतस्र इति शर्कराः । [3]द्वेष्यं च मनसा ध्यायति ॥ ११ ॥ ११ ॥ ९८१ ॥

नवमीखण्डिका

---

(सू) ऋतं स्तृणामि पुरीषं पृथिव्यामतेऽध्यग्निमादधे सत्येऽग्निमादध इत्यायतनेषु संभारानन्नु[4]व्यूहति । ॥ १ ॥ १२ ॥ ९८२ ॥

---

[1] अनामृतमित्योदरुभयत्रानुषङ्ग । इमौ तु मन्त्रौ 'तद्वायुरमयेऽददात्तदादित्योऽमयेऽददादिति विकृतरूपौ पठितौबोधायनेन (रु) [2] अदो—ख. [3] निर्वपन् द्वेष्य मनसाध्यायति । पञ्चसंभारपक्षे ताम्राणा शकलान तूष्णीं निवपनम् (रु).
[4] अनुव्यूहति प्रथयति (रु)

(सू) संया वः प्रियास्तनुव इत्येषा । संवस्सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः सꣳसृष्टः प्राणो अस्तु वः इति वानस्पत्यान् संसृज्य [1] सिकतावन्निवपतीतः प्रथमं जज्ञे अग्निरित्येतया ॥ २ ॥ ॥ ९८३ ॥

(सू) यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्षे दिवि या पृथिव्याम् । ताभिस्संभूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्न इति गार्हपत्यायतने सौवर्णे [2] हिरण्यशकलमुत्तरतस्संभारे[3] ष्वूपास्यति ॥ ३ ॥ ९८४ ॥

(सू) चन्द्रमग्निं चन्द्ररथं हरित्वचं वैश्वानरमप्सुषदं सुवर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः [4] इत्युपास्तमभिमन्त्रयते॥ द्वेष्याय [5] रजतं प्रयच्छति॥ ४ ॥ ९८५ ॥

(सू) यदि द्वेष्यं नाधिगच्छेद्यां दिशं द्वेष्यस्स्यात्तेन निरस्येत् ॥ ५ ॥ ९८६ ॥

(भा) यां दिश द्वेष्योऽवस्थितः तेन निरसनम् ।

(सू) एवं [6] सर्वेषूपास्य करोति॥ ६ ॥ ९८७ ॥

---

[भाष्येऽपेक्षितपदपूरणम्]

(वृ) यां दिशं–निरसनम्—तेन प्रदेशेनेत्यर्थ. ।

---

[1] सिकतावत् अर्ध परयोर्द्वेधा त्रेधाचार्ध पूर्वेष्वित्यर्थ (रु). [2] हिरण्यस्य पार्थिवसम्भारत्वेऽपि वचनादुत्कर्ष (रु) [3] तत्सभरणार्थमुपर्युत्तरभागेन्यस्यति (रु) [4] इत्युपात्त–ख [5] रजतं वृषलाय वा ज्ञाताय वाऽति प्रयच्छतीति बोधायन (रु) [6] आयतनान्तरेष्वपि एव हिरण्यमुपास्यशेषमपि तत्र तत्र करोतीत्यर्थ (रु)

[हिरण्योपासनादौ क्रमः पक्षान्तरं च]

(भा) [1] हिरण्योपासनदानाभि[2]मन्त्रणान्येकैकस्य। ताम्रशकल मन्त्रेणोपास्य तूष्णीमभिमन्त्र्य रजतदानम् ।

उपदेशः औदुम्बरशकलस्य तूष्णीमुपासनम्। नरजतस्य सभरणम् नापि दानम् ।

(सू) [3]ब्राह्मौदनिकाद्भस्मापोह्य तस्मिन् शमीगर्भा-
**दग्निं मन्थति ॥ ७ ॥ १८ ॥ ९८८ ॥**

[भस्मापोहने पक्षान्तरं विशेषः]

(भा) असभारपक्षे अवोक्ष्यायतनानि भस्मापोहनम्[4] ।

---

[अभिमन्त्रणान्तस्यैकैकस्मिन् करणे मानम्]

(वृ) **हिरण्योपा—कैकस्य**—अन्ते[5] एव सर्वेषूपास्य करोतीति विधानात् ।

[हिरण्ये चन्द्रमन्त्रविनियोगोपपत्ति ]

**ताम्रशकलं—दानम्**—अग्नेरेतश्चन्द्रमिति चन्द्रशब्दस्य हिरण्य शब्दसमानाधिकरणतया हिरण्यवचनत्वात् चन्द्रमग्निमित्यस्य ताम्रशकले निवृत्तिः ।

[उपदेशमते नरजतसम्भरणदाने। ताम्रे च विशेषः]

**उपदेश—नापिदानम्**— अग्नेरेतश्चन्द्रामिति लिङ्गविरोधात् तूष्णीं सम्भरणमुक्तम् । हिरण्ययोनिर्वहेति लिङ्गात्तूष्णीमुपासनम् । निधायातिप्रयच्छन्निति हिरण्यसम्बन्धित्वाद्रजतस्य हिरण्याभावे सम्भरणदाननिवृत्तिः ॥

---

[1] हिरण्योपासनमभि—ङ. [2] भिमन्त्रणदाना—ग. ङ. [3] ब्राह्मौदनिका-दितिषष्ठ्यर्थेपञ्चमी । तथा ब्राह्मौदनिकस्येत्येवभरद्वाज । तस्य भस्मापनीयतस्मिन् देशेमन्थति (रु) [4] न मेव—क घ ङ. [5] त्रिकान्ते—ख ग

[1] अपोह्य–अपनीय तस्मिन्नेवायतने मन्थति । शमीगर्भादिति ब्राह्मणम् ॥

**(सू) उद्यत्सु [2] रश्मिषु दशहोत्राऽरणी [3] समवदधाति ॥ ८ ॥ १९ ॥ ९८९ ॥**

[रश्म्युदयस्वरूपं मानं च]

(भा) [4]अनुदिते ये रश्मयः तेषूद्यत्सु । नक्तं गार्हपत्यामितिवचनात् ।

**(सू) सहाग्नेऽग्निना जायस्व सह रय्या सह पुष्ट्या सह प्रजया सह पशुभिस्सह ब्रह्मवर्चसेनेत्यु[5]पतिष्ठत्यश्वेऽग्निं मन्थति ॥ ९ ॥ २० ॥ ९९० ॥**

[उपस्थाने दिक् अरणिसमवधानेदेशश्च]

(भा) [6]सहाग्न इति प्राङ्मुखोऽध्वर्युः । प्राच्यामरण्यां त्वक्तः अपरस्मिन् प्रदेशे ।

---

[शमीगर्भादिति सूत्रे पाठस्य प्रयोजनं पक्षभेदेन]

(वृ) अपोह्य–ब्राह्मणम्—ब्राह्मणपाठ सूत्रकारेण बद्धः न त्वशमीगर्भनिवृत्त्यर्थः ॥ उपदेशस्तु तस्मिन्नेवायतने शमीगर्भादग्निं मन्थति । अशमीगर्भादन्यत्राप्ययमेव सिद्धान्तः । पूर्वस्मिन् पक्षे शमीगर्भग्रहणस्यानर्थक्यात् ॥

[भाष्योक्तप्रदेशोमानम् उपस्थाने अश्वसम्बन्धश्च]

सहाग्न इति–प्रदेशे—योनिदेशे, विखनसोक्तेः । उपतिष्ठति- समीपेऽश्वे तिष्ठति ॥

---

1 अयं ग्रन्थ ग पुस्तके न दृश्यते 2 प्राच्याजातप्रकाशायामित्यर्थ । अन्यथा अर्धोदिते सूर्य आहवनीयमित्यनेन विरोधात् नक्तंगार्हपत्यमितिश्रुतेश्च (द).
3 अधरस्यामुत्तरां स्थापयति । तत्र प्रतीचीनप्रजननामरणिं निधायेति बोधायन. (द)
4 उपतिष्ठति समीपस्थे (द). 5 अनुदिता–क ? 6 समीपेऽश्वेतिष्ठतीति सह–क

(सू) श्वेतोऽश्वोऽ[1]विक्लिन्नाक्षो भवति रोहितो वा सितजानुरपि वा य एव कश्चित्साण्डः ॥ १० ॥ ॥ २१ ॥ ९९१ ॥

[अश्वविशेषणे मतिभेदः]

(भा) [2]अविक्लिन्नाक्ष·—[3]अलेपनाक्षः । विक्लिन्नाक्ष इत्युपदेश· । सहाण्डाभ्या साण्डः ।

(सू) मथ्यमाने [4]शक्तेः साङ्कृतेस्साम गायति । धूमे जाते गाथिनः कौशिकस्य । अरण्योर्निहितो जातवेदा इति च ॥ ११ ॥ २२ ॥ ९९२ ॥

दशमी खण्डिका ॥

उपावरोह जातवेद इति [5]निवर्तमानमभिमन्त्रयते ॥ १ ॥ २३ ॥ ९९३ ॥

---

[अश्वविशेषणविमतिमूलकसौत्रपक्षान्तरानुत्थिततपरिहारौ]

(वृ) अविक्लिन्नाक्षः–त्युपदेशः—अकारप्रश्लेषे प्रमाणाभावात् । ननु अविक्लिन्नाक्षो विक्लिन्नाक्षो वा सम्भवति लोकेऽश्व· । तत्रानेनोभयथाव्याख्यातेनानियमेन अश्वमात्रग्रहणे द्वितीय विशेषणोपादानं सूत्रकारस्य व्यर्थं स्यात्, न, यस्यैक विक्लिन्नमक्षं अन्यथा चेतरत् तस्य सर्वत्र प्रतिषेध एव ॥

शक्तेः–साङ्कृतेः—शक्तेः साङ्कृतेरित्यादि सामविशेषः ॥

---

[1] अवक्लिन्नाक्षो [2]–ख [2] अस्विन्ननेत्र (रु). [3] अलेपन –क. ग.
[4] शक्तिनादृष्टं साम (रु) [5] निर्वृत्तमात्रम् (रु)

(भा) [1] निर्वर्तमान—पतितमात्रम् ॥

(सू) अत्र [2] चतुर्होतॄन् यजमानं वाचयति ॥ २ ॥ ॥ २४ ॥ ९९४ ॥

(भा) [3] पञ्चानुवाकाः ऋतुमुखीयवर्जाः चतुर्होतारः ।

(सू) अजन्नग्निः पूर्वः पूर्वेभ्यः पवमानः शुचिः पावक ईड्यः इति जातमभिमन्त्रयते॥ ३ ॥ २५ ॥ ॥ ९९५ ॥

(सू) जाते यजमानो वरं[4] ददाति ॥ ४ ॥ २६ ॥ ९९६ ॥

[पुनःजातग्रहणफलम्]

(भा) [5] जातमिति वचनात् बलवति जाते वरो वरयितव्यः ॥

---

[शानजन्तस्य भूतक्तान्तेन विवरणोपपत्ति]

(वृ) **निर्वर्तमानं—पतितमात्रम्**—अरण्यामुत्पन्नमात्रम् । निर्वर्तमानमिति वर्तमानसामीप्याद्वर्तमानप्रत्ययः ॥

**पञ्चानुवाकाः**—चित्तिस्स्रुगाद्याः । **ऋतुमुखीयवर्जाः**—वाग्घोतेत्येतद्वर्जाः । **चतुर्होतार इति**—अत्र चतुर्होतॄन्यजमान वाच-

[चतुर्होतृपदे वचनभेदेन समाख्याभेदः]

यति । चतुर्होतॄन् व्याख्यायाज्यैरुद्रायतीत्यादिषु चतुर्होतृबहुत्वनिर्देशेषु चतुर्होतृशब्दः पञ्चानुवाकानां [6] वाचकः । ऋतुमुखीयस्य तु ऋतुमुख ऋतुमुखे जहुयादिति सर्वकाम इति तत्रैव विनियोगः । तस्मान्नु हैनां-श्चतुर्होतार इत्याचक्षत इति श्रुतेः सर्वेषां चतुर्होतृत्वम् । एकवचनप्रयोगे पृथिवी होता चतुर्होतॄणामित्येष एव ॥

**जातमिति वचनात्**—जातमभिमन्त्रयत इति ॥

---

[1] निर्वर्त्यमानम् (मु पु) निवर्तमानम्—ग ङ [2] चित्तिस्स्रुगाद्यान् पञ्चानुवाकान् (रु). [3] त्रिपञ्चा—क [4] पूर्ववदध्वर्यव एव (रु) [5] जातवचनात्—क [6] प्रतिपादकाः—ख. ग [7] प्रतिषेध—ख निषेध—ग

(सू.) [1] गौर्वै [2] वरोऽति वरोऽन्यो धेनुर्वरोऽतिवरोऽन्योऽनड्वान् वरोऽतिवरोऽन्यः पष्ठौही वरोऽतिवरोऽन्यः॥ ५ ॥ २७ ॥ ९९७ ॥

[वरातिवरत्वोपपत्तिः]

(भा) तत्र वरचोदनासु वरयितव्ये देये प्राप्ते गौरेव [3] देया । साहि [4] वरयितव्यान्याभ्योऽपि जातिभ्यः। गोजातावपि धेन्वादय एव देयाः यदितु विद्यते, पुनरनुक्रमणात् । पष्ठौही—पञ्चवर्षा ।

अतिवरो बहुमूल्योऽश्वादिः । तस्यापि [5] वरचोदनासु दानमिहोपदेशात् लिङ्गाच्च । तस्माद्यज्ञे वरो दीयत इति ।

---

[गोरेववरयितव्यत्वेहेतुः]

(वृ) तत्रवरचो–जातिभ्यः—बहुफलत्वात् [1] प्रशस्तत्वाच्च ।

गोजाता–पञ्चवर्षा—गवादीनां दानमिहोपदेशात् ।

[अश्वादेर्दानस्य प्रापकमानम्]

अतिवरोबहुफलोऽश्वादिः–मुपदेशात्—अतिवरोऽन्य इत्यश्वादीनामुपदेशादन्यत्रापि वरचोदनासु अश्वादेरपि प्राप्तिः ।

लिङ्गाच्च–दीयते इति—तस्मादश्व[6] सवर्येत्याह्वयन्तीत्युक्त्वा तस्माद्यज्ञे वरो दीयते इति अश्वदानस्य यज्ञमात्रसबन्धितया निर्देशात् ।

---

[1] वरस्य स्वरूपमाह (रू) [2] वरोवरयितव्य । सचगो । कुत [2] तस्या एव जात्यन्तरेभ्यो बहुफलत्वेनवरयितव्यत्वात् । अन्यस्तु अजाश्वादि जाति । अतिवर —वरजातीयमतीत्यवर्तते नवर इत्यर्थ । गोस्तुत्यर्थं चैतत् । यथा अपशवो वा अन्ये गो अश्वेभ्य इति। ततश्च वरचोदनासु गौरेव देयेत्यर्थ । गोष्वपि सम्भवे धेनुर्देया सद्य फलत्वात् । अनड्वान् देय उद्वहनकर्षणादिभि प्रकृष्टफलत्वात् । पष्ठौषी—गर्भिणीद्वैरूप्याच्च प्रकर्ष । अतिवरोऽन्य इतिपुन पुनरनुक्रमणं च तत्तत्प्रशसार्थमेव (रु). [3] देय. सहि–क ङ घ [4] एतदादि पञ्चवर्षा इत्यन्तम्–ख ग कोशयोर्नदृश्यते [5] चोदना पृथगुपादानमि–अ. [6] दश्व वरीय-इत्युक्त्वा–ख, ग

[पुनर्यजमानग्रहणफलं पक्षान्तरं च]

दाने यजमानस्य सिद्धत्वात् पुनर्यजमानग्रहण नयनमपि यजमानेन कर्तव्य स्वयम् अन्यत्र तु त्याग[1]मन्त्रः । अन्योऽपि प्रयच्छति । केचित्तु प्रायश्चित्तमन्त्राधेय यजमानसान्निध्ये यथा स्यादित्येवमर्थं यजमानग्रह[2]णम् ।

**(सू) जातं यजमानोऽभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यं दीर्घायुत्वाय शतशारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्यायेति ॥ ६ ॥२८ ॥ ९९८ ॥**

(भा) अभिप्राणन–उपर्युच्छ्वास ॥

---

[पुनर्जातग्रहणफलम्]

(वृ) जातेऽग्नौ वरदान नैमित्तिकमाधानाङ्गमिति दर्शयितुं पुनर्जातवचनम् । अतो नाग्निसस्कारार्थत्व दृष्टार्थं दानमिति ॥

[भाष्यस्थनयनपदार्थः]

**दानेयज–प्रयच्छतीति** — अध्वर्य्यादिगृहप्रापणमपि यजमानेन कर्तव्यम् ।

[पक्षान्तराशयः]

**केचित्तु–ग्रहणम्**—इत्याहुः । दानमित्येव प्राप्ते सति वरदाने यजमानग्रहणं नैमित्तिकान्तरेऽपि प्रायश्चित्ते यजमानस्य सन्निध्यर्थम् ॥

[जातग्रहणलभ्यार्थः]

**अभिप्रा–च्छ्वासः**—वरस्य प्रकृतत्वात् तस्य प्राणन माभूदिति जातवचनम् ॥

---

[1] त्यागमात्रे–ग ङ [2] ण पुनः–क. [3] प्रयाणमपि–ख. ग

(सू) अजीजनन्नमृतं मर्त्यासोऽस्रोमाणं तरणिं वीडु जम्भं दश स्वसारो अग्रुवस्समीचीः पुमा ँसं जातमभिस ँरभन्ताम् । इति जातमञ्जलिनाभि गृह्य सम्राडसि विराडसि सारस्वतौ त्वोत्सौ समि न्धातामन्नादं त्वान्नपत्यायेत्युपसमिध्याथैनं प्राञ्च-मुद्धृत्यासीनः सर्वेषां मन्त्राणामन्तेन रथन्तरे [1]गीयमाने यज्ञायज्ञिये च यथर्ष्याधानेन प्रथमया व्याहृत्या द्वाभ्यां वा प्रथमाभ्यां च सर्पराज्ञीभ्यां प्रथमेन च घर्मशिरसा ॥ ७ ॥ २९ ॥ ९९९ ॥

[अभिग्रहणेकर्ता तद्विशेषश्च]

(भा) अञ्जलिग्रहणाद्याध्वर्यवम् । उत्तरत्रोर्ध्वज्ञु [2] नियमादिह सर्वा [3] सीन एव प्रथमायां स्वयमातृण्णायाम् । अन्यत्रानियमः द्वाभ्याम्—प्रथमद्वितीयाभ्यां व्याहृतिभ्याम् ।

---

[अभिग्रहणस्याध्वर्यवत्वे हेतूपपत्तिः]

(वृ) अञ्जलिग्रहणाद्याध्वर्यवम्—प्रजापतेस्त्वा प्राणेनेति प्रत्यगाशीष्ट्वाभावात् । अत एव प्रकृतयजमानकर्तृविच्छेदाय पुनर्जातवचनम् ।

[उत्तरशब्दार्थः]

उत्तरत्रो—र्वासीनः—उत्तरत्र—दक्षिणाग्न्याधाने ।

प्रथमायां च स्वयमातृण्णायाम्—तत्रापि ऊर्ध्वज्ञुद्वितीया-मिति विशेषनियमात् ।

[व्याहृतिद्वयग्रहणस्य प्रथमद्वितीयविषयत्वेनियामकम्]

द्वाभ्यां—हृतिभ्याम्—त्रिभिरक्षरैर्गार्हपत्यमादधातीति श्रुतेः ॥

---

[1] सम्भारेषु निदधातीति वक्ष्यमाणेनसम्बन्ध । अभिग्रहणमाध्वर्यवम् । अभि-गृह्णन्त्यग्निमञ्जलिमग्नेरुपरिकृत्वा । उद्धृत्य ऊर्ध्वाञ्जलिनागृहीत्वा । आसीन सम्यगासिन दक्षिणाग्नावूर्ध्वज्ञुरासीन इति विशेषवचनात् । यद्वा दक्षिणाग्नाविवऊर्ध्वज्ञुत्वादिनियमो-नास्तीत्यर्थ. (रु) [2] मुद्धत्या—क [3] श्वेतवारवन्तीययोर्य—ख [4] नियमादिहापि—ग. [5] र्वासीन —ख. ग घ. ङ.

(सू) [1] भृगूणां त्वा देवानां व्रतपते व्रतेनादधामीति [2] भार्गवाणामादध्यात् आङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधामीति यो ब्राह्मण आङ्गीरसस्स्यात्। आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामीत्यन्यासां ब्राह्मणीनां प्रजानाम्। वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामीति राज्ञः। इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामीति राजन्यस्य मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनादधामीति वैश्यस्य। ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामीति रथकारस्येति यथर्ष्याधानानि ॥ ८ ॥ ३० ॥ १००० ॥

एकादशी खण्डिका ॥

---

(भा) भृगूणा त्वाङ्गिरसा इत्यस्मच्छाखोक्तमपि लभ्यते। अङ्गिरसाम् इमे भृगव इत्यन्ता भृगव। अथातोऽङ्गिरसामयास्या इत्यारभ्य आत्रे.। अत्र्यादीनामादित्यानामिति। अभिषिक्तो—राजा। राजन्यः—क्षत्रियः।

(सू) भूर्भुवस्सुवरिति व्याहृत्यः भूमिर्भूम्नेति [3] सर्पराज्ञियः। घर्मश्शिरस्तदयमाग्निः संप्रियः पशुभिर्भुवत्। छर्दिस्तोकाय तनयाय यच्छ वातः प्राणस्तदयमाग्निस्संप्रियः पशुभिर्भुवत्। स्वदितं लोकाय तन-

---

(वृ) भृगूणां—ङ्गिरसां च—भृगूणां त्वाङ्गिरसामित्यविकृतो मन्त्रः समस्तपाठात्।

---

[1] अथ समाख्याभिरुपदिष्टानियथर्ष्याधानादीनि स्वरूपेण दर्शयति (रु).
[2] भार्गवस्या—ख [3] चतसृस्सर्पराज्ञिय इति सत्याषाढ (रू).

याय पितुं पच। अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निस्संप्रियः पशुभिर्भुवत्। यत्ते शुक्र शुक्रं वर्चश्शुक्रा तनूश्शुक्रं ज्योतिरजस्रं तेन मे देदिहि तेन त्वादधेऽग्निनाग्ने ब्रह्मणेति घर्म[2] शिरांसि ॥ ॥ १ ॥ ३१ ॥ १००१ ॥

(भा) यत्ते शुक्र इति तृतीय एव घर्मशिरसि ॥

(सू) यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः। ताभिस्संभूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने प्राणं त्वाऽमृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै। दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमाददे अग्ने गृहपतेऽहे बुध्न्य परिषद्य दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा मूर्धन् सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामीति सम्भारेषु निदधाति ॥ २ ॥ ३२ ॥ १००२ ॥

(सू) सुगार्हपत्यो विदहन्नरातीरुषसश्श्रेयसीश्श्रेयसी र्दधत्। अग्ने सपत्नाँ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याधीयमानमभिमन्त्रयते यजमानो घर्मशिरांसि चैनमध्वर्युर्वाचयति ॥ ३ ॥ ३३ ॥ ॥ १००३ ॥

द्वादशी कण्डिका

---

[1]त्रीणि घर्मशिरांसि तृतीय घर्मशिर ब्रह्मणेत्यन्त (रु)

[शमनहोमकालः]

(भा) आधीयमान—स्थाप्यमानम् । वाचने कृते घर्मशिरसां शमनं

[ज्ञातार्थवाचन]

[1] अवगच्छत्यपि [2] ग्रन्थे वाचन वचनात् ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये पञ्चमप्रश्ने

तृतीय पटल

---

(सू) [3] अर्धोदिते सूर्य आहवनीयमादधाति ॥ १ ॥

॥ १ ॥ १००४ ॥

(भा) निधानमेवार्धोदिते आहवनीयस्य हिरण्यकेशिन. ॥

---

[शमनहोमेवाचनानन्तर्यसाधनम्]

(वृ) वाचने—शमनम्—आधीयमानाभिमन्त्रणानन्तर वाचनवचना-च्चशब्दाच्चाभिमन्त्रणेन समुच्चयाव[4]गते साहित्यावगतेः । अतो वाचनोत्तरकाल शमनहोम. ।

[अज्ञातुरनधिकारः]

अवगच्छ—वचनात्—ज्ञाते वचनमिति न्यायेन विदुष एवाधिकारात् ।

इति आपस्तम्ब श्रौतसूत्रभाष्यवृत्तौ रामाग्निचित्कृताया पञ्चमे प्रश्ने

तृतीय पटल.

---

[भाष्ये हिरण्यकेशिग्रहणफलम्]

निधानमेवा—केशिन इति—न विकल्पार्थे हिरण्यकेशि-

---

[1] आगच्छत्यपि ग्रन्थे—क. ग्रन्थ—ख ग घ. [2] गूढे—ग [3] अर्धोदितेऽग्ने प्रतिष्ठापन यथास्यात्तथा प्रारम्भ कार्य (रु). [4] गमात्साहि—ख.ग

(सू) [1]उदिते–ब्रह्मवर्चसकामस्य ॥ २ ॥ २ ॥ १००५ ॥

[उदितपदार्थः पक्षान्तरं च]

(भा) उदिते–सर्वोदिते ब्रह्मवर्चसकामस्य । अन्तरेणापि काम वाजसनेयिनाम् ॥

(सू) गार्हपत्ये [2]प्रणयनीयमाश्वत्थमिध्ममादीपयति सिकताश्चोपयमनीरु[3]पकल्पयते ॥ ३ ॥ ३ ॥ ॥ १००६ ॥

(भा) इध्मस्य न सख्या प्रणयनार्थस्य ॥

(सू) [4]तमुद्यच्छत्योजसे बलाय त्वोद्यच्छे वृषणे शुष्मायायुषे वर्चसे। सपत्नतूरसि वृत्रतूः यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः। पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि। दिवः पृथिव्याः पर्यन्तरिक्षाद्वातात्पशुभ्यो अध्योषधीभ्यः। यत्रयत्र जातवेदस्सम्बभूथ ततो

---

[स्थापनपूर्वाङ्गकालः]

(वृ) ग्रहणम्, व्यक्तं तस्य मतादित्यर्थः । सम्भारेषु स्थापनात्पूर्वे पदार्थाः प्रागुदयादेव । इतरथा अर्धोदय आधानानुपपत्तेः ॥

[वाजसनेयिमतेहेतुः]

उदिते–अर्धोदिते–नेयिनाम्—ब्रह्मवर्चसकामाभावेऽपि सर्वोदिते नित्य· प्रगे इति वाजसनेयिनः ॥

[इध्मसंख्याऽपरिग्रहेहेतुः]

इध्मस्य–र्थस्य—इहानुपदेशात् दर्शपूर्णमासप्रकृतित्वाभावाच्च

---

[1] तत्र गार्हपत्यस्याप्युदितादानमाह सत्याषाढ सर्वानुदितेब्रह्मवर्चसकामस्येति (रु). [2] प्रणयनार्थमिध्म (रु). [3]पात्रेण गृह्णाति (रु). [4] त आदीप्तमिध्मं उद्धरति (रु)

नो अग्ने जुषमाण एहि। उदु त्वा विश्वे देवा इत्येताभिश्चतसृभिः ॥ ४ ॥ ४ ॥ १००७ ॥

(सू) उपरी [1] वाग्नि [2] मुद्यच्छति ॥ ५ ॥ ५ ॥ १००८ ॥

[उद्यमने विशेषः]

(भा) उद्यमनमिध्मगतस्याग्नेः उपरि गार्हपत्यस्य ॥

(सू) उद्यतमुप [3] यतं धारयति ॥ ६ ॥ ६ ॥ १००९ ॥

(भा) [4] उद्धृतस्य सिकताभिर्धारणम् ॥

(सू) अथाश्वस्य दक्षिणे कर्णे [5] यजमानमग्नि [6] तनूर्वाचयति या वाजिन्नग्नेः पशुषु पवमाना प्रिया तनूस्तामावह या वाजिन्नग्नेरप्सु पावका प्रिया तनूस्तामावह या वाजिन्नग्नेस्सूर्ये शुचिः प्रिया तनूस्तामावहेति [7] धारयत्येवाग्निम् ॥ ७ ॥ ७ ॥ ॥ १०१० ॥

[वाजिग्रहणफलं पक्षान्तरं च]

(भा) या वाजिन्नित्यश्वस्याभिधानात्कमण्डल्वादौ निवृत्तिः। आदित्यस्य वाजिशब्देनाभिधानादनिवृत्तिरुपदेशः तस्य सर्वत्रावस्थानात् ॥

---

[उपर्युद्यमनेमानम्]

(वृ) उद्यमन—पत्यस्य—उपरीवाग्निमुद्गृह्णीयादिति वचनात् ॥

उद्यतस्य—सिकताभिर्धारणम्—उद्यतस्य—गार्हपत्योपरिस्थितस्यैव ।

[उपदेशपक्षाशयः]

आदित्यस्य—स्थानादिति—वायुस्साक्षि. अदित्यो वाजी इति

---

[1] इव ईषदर्थे [2] अग्निमुद्धरन् किं चिदुद्गृह्णाति—(रु) [3] सिकताभिरुपगृहीतम्—(रु) [4] उद्यतस्य—क घ. ङ [5] निहितमुख—ख. [6] अश्वस्य दक्षिणे कर्णेवदन् यजमान वाचयति—(रु) [7] ननिदधाति—(रु).

(सू.) अथाग्नीध्रो लौकिकमग्निमाहृत्य मथित्वा वोर्ध्व-ज्ञुरासीनो दक्षिणमग्निमादधाति यज्ञायज्ञीये गीयमाने यथर्ष्याधानेन द्वितीयया व्याहृत्या तिसृभिस्सर्पराज्ञीभिर्द्वितीयेन च घर्मशिरसा ॥

यास्ते शिवास्तनुवो जातवेदो या अन्तरिक्ष उत पार्थिवीर्याः। ताभिस्संभूय सगणस्सजोषा हिरण्य योनिर्वह हव्यमग्ने। व्यानं त्वामृत आदधाम्य-न्नादमन्नाद्याय गोप्तारं गुप्त्यै। दिवस्त्वा वीर्येण पृथिव्यै महिम्नान्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे। अग्नेऽन्नपा मयोभुव सुशेव दिवः पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय पृथिव्यास्त्वा मूर्धन् सादयामि यज्ञिये लोके। यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामीति संभारेषु निदधाति ॥ ॥ ८ ॥ ८ ॥ १०११ ॥

त्रयोदशी खण्डिका ॥

---

[शमने कर्ता तत्कर्तृत्वेहेतुश्च]

(भा) शमनमपि दक्षिणाग्नेराग्नीध्र एव अध्वर्यो व्यापृतत्वात् ॥ निर्देशात् तस्य च ब्रह्मरूपत्वेन सर्वपदार्थेष्ववस्थानात् कमण्डल्वादावप्य-निवृत्तिः ॥

---

[शमनहोमे आग्नीध्रकर्तृकत्वोपपत्तिः]

(वृ) शमनमपि–व्यापृतत्वात्—यद्यपि होमे अध्वर्योः सामान्यत प्राप्तिः आग्नीध्रस्य चाधानाविधानम्; तथाऽप्यध्वर्योरन्यत्र व्यापृतत्वात् अग्नीध्र एव शमनहोम कुर्यात् ॥

---

1 गार्हपत्या-द्योर्ध्वज्ञु—ख.

(सू.) यो ब्राह्मणो राजन्यो वैश्यश्शूद्रो वाऽ[1]सुर इव बहुपुष्टस्स्यात्तस्य गृहादाहृत्यादध्यात्पुष्टिकामस्य ॥ ॥ १ ॥ ९ ॥ १०१२ ॥

(भा) असुर इव [2] निरश्रीर्यः । बहुपुष्टो—बहुधनः ॥

(सू.) गृहे [3] त्वस्य ततो नाश्नीयात् ॥ २ ॥ १० ॥ ॥ १०१३ ॥

[4] अम्बरीषादन्नकामस्य वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य ॥ ३ ॥ ११ ॥ १०१४ ॥

[दक्षिणाग्नेराहरणापादानम्]

(भा) अम्बरीषो भ्राष्ट्रम् । योनित एवाहरणमहरहरपि दक्षिणाग्नेः ॥

(सू.) वामदेव्यमभिगायत आहवनीय उद्ध्रियमाणे* प्राचीमनुप्रदिशमित्येषा। विक्रमस्व महाँ असि वेदिषन्मानुषेभ्यः । त्रिषु लोकेषु जागृहि प्रजया च

---

(वृ) असुरइवानिरश्रीयः—शोभना रा' यस्य नास्तीत्यसुरः । बहुपुष्टो बहुधन इति—बहुपुष्टोऽपि लोभादिना धनरहित इव यो वर्तते तस्य गृहात्पुष्टिकामस्य ॥

अम्बरीषो—भ्राष्ट्रं—भर्जनपात्रम् ।

[अम्बरीषस्यापियोनित्वोपपत्तिः]

योनितए—णाग्नेः—अहरहरेनं दक्षिणत आहरन्तीत्यत्राम्बरी-[5] षादिभ्योऽपि ॥

---

[1] असुरनिदर्शन च पोषातिशयदर्शनार्थम् । सहिन्नृशंस बलिष्ठश्च सन् पुंस पुसो धनमादायस्फीततरोभवति–(रु) [2] निष्कृप –क. [3] अस्य बहुपुष्टस्य गृहे ततोनाश्नीयात् यजमान –(रु). [4] भ्राष्ट्रम्–(रु). अत्र बोधायन.—आपि वा गार्हपत्यादेवान्वाहार्यपचनमादधातिति । लिङ्ग चात्रप्रदर्शित 'तस्य त्रेधा-माहिमान व्यौहदिति । विट्कुलाद्वित्तवतो वैकयोनय इत्येक इत्याश्वलायन.–(रु). [5] पहारिभ्योऽपि –ग.

धनेन च। इमा उ मामुपतिष्ठन्तु रायः आभिः प्रजाभिरिह संवसेय। इहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेदः इति प्राश्वोऽश्व-प्रथमा [1] अभिप्रव्रजन्ति ॥ ४ ॥ १२ ॥ १०१५ ॥

[प्रव्रजन मन्त्र पठित्व बहुवचनोपपत्ती पक्षान्तरं च]

(भा) प्रव्रजनमन्त्रा अध्वर्युयजमानयोः। अश्वेन सह बहु [2] वचनम् ॥ केचिदश्वहर्तुरपि [3] मन्त्राः ॥

(सू) [4] दक्षिणतो ब्रह्मा रथं रथचक्रं वा वर्तयति याव-च्चक्रं त्रिः परिवर्तते ॥ ५ ॥ १३ ॥ १०१६ ॥

[रथचक्रप्रवर्तनदेशः]

(भा) दक्षिणत [5] आहवनीयायतनस्य रथचक्रप्रवर्तनम् ॥

(सू) षट्कृत्वो द्वेष्यस्य ॥ ६ ॥ १४ ॥ १०१७ ॥

जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽग्निं हरति

---

[अभिप्रव्रजन्तीति बहुवचनोपपत्तिविवरणम्]

(वृ) प्रव्रजनम–वचनमिति—अश्वस्य मन्त्राभावेऽपि गमनस्य विद्यमानत्वात् बहुवचनमविवक्षितम्।

केचिदश्वहर्तुरपि मन्त्राः—अश्वनयनकर्तुरपि [6] मन्त्राः बहु-कर्तृकसमन्त्रक क्रियासिध्यर्थम् ॥ ४५ ॥ ९०१ ॥

[आहवनीयाग्रहणहेतुः]

दक्षिणत–वर्तनम्—प्रणीयमानस्याग्नेर्भाविनीमवस्थामाश्रित्या-हवनीयशब्दः ॥ ४६ ॥ ९०२ ॥

---

[1] अश्वयजमानापेक्षया बहुवचनम् तेन गमन मन्त्रा यजमानस्यापि भवन्ति [2] वचनात्–क. [3] मन्त्रा–घ ङ [4] दक्षिणतो विहारस्य गमयति चक्रं तथावत्रि परिवर्तते (ख) [5] अहवनीयस्य ग ङ [6] मन्त्र–घ.

**नाभिदघ्ने [1] तृतीयमास्यदघ्ने तृतीयम् । न कर्ण दघ्नमत्युद्गृह्णाति ॥ ७ ॥ १५ ॥ १०१८ ॥**

[आस्यपदार्थः]

**(भा)** जानुदघ्ने—जानुप्रमाणे । एवमुत्तरयो. ।
आस्यग्रहणेन सर्वस्य मुखस्य ग्रहणम् ॥

**(सू) [2] यद्युद्गृह्य निगृह्णीयान्मुखेन संमायादध्यात् ॥ ॥ ८ ॥ १६ ॥ १०१९ ॥**

[उद्ग्रहणपरिमाणोल्लङ्घने प्रायश्चित्तं मतान्तरं च]

**(भा)** यद्युद्गृह्यनिगृह्णीयात् जानु[3]दघ्नादिपरिमाणान्नीचैर्धारयेत् । मुखेन संमाय स्थापन प्रायश्चित्तम् । [4] समान तुल्यधारणम् विहितदेशा-

---

(वृ) **जानुदघ्ने—जानुप्रमाणे—एवमुत्तरयोः**—नाधिक कर्णप्रमाणात् ।

[आस्यपदस्यार्थविशेषपरताहेतुः]

**आस्यग्र—ग्रहणम्**—न कर्णदघ्नमिति प्रतिषेधात् ॥

[भाष्यदर्शितप्रायश्चित्तपक्षयोर्विवरणम्]

**यद्युद्गृह्य—धारयेत्**—विहितपरिमाणादूर्ध्वं नीत्वा परिमाणान्नीचैर्यदि धारयेत्; तदा ;—

**संमानं—श्चित्तम्**—दक्षिणाग्नौ ।

---

[1] षट्कृत्वोयावत्परिवर्तेत इन्यनुषङ्ग (रु) [2] द्वितीय—क [3] यदिजान्वादि प्रमाणाघ्नाभ्यादि प्रमाणेऽभिमुद्गृह्य तत प्रमाणात् पुनर्नीचै गृह्णीयात् तदा एनं मुखतुल्यं धारयित्वा आदध्यात् तदेवात्र प्रायश्चित्तमिति भाव (रु) [4] दघ्नपरि—कु [5]समानतुल्याधारणम् [2]—कु

(भा) दूर्ध्वे[1]नयने सवप्रायाश्चित्तम्। उपदेशः यद्युद्गृह्य निगृह्णीयादेतदेव प्रायश्चित्तम् । मुखेन समायाधान नित्यम् ॥

(सू) नाग्निमादित्यं च व्यवे[2]यात् ॥९॥१७॥१०२०॥

(सू) [3]दक्षिणतः परिगृह्य हरति ॥१०॥१८॥१०२१॥

(सू) अर्धाध्वे यजमानो वरं ददाति॥११॥१९॥१०२२॥

(सू) अर्धाध्वे हिरण्यं निधाय नाकोऽसि ब्रध्नः प्रतिष्ठा संक्रमण इत्यति[4]क्रामति ॥ १२ ॥ २० ॥ १०२३ ॥

[हिरण्यमिधाता]

(भा) अर्धमध्वनोऽध्वार्धम् । अर्धाध्वे हिरण्यनिधानाद्याध्वर्यवम् ॥

(सू) प्राश्वमश्वमभ्यस्थाद्विश्वा इति दक्षिणेन पदो-

---

(वृ) उपदेशो–यश्चित्तम् — विहितपरिमाणादूर्ध्वनयने नीचैर्धारणमेव ॥

[संमायाधानानित्यत्वे सूत्राशयः]

मुखेन–नित्यम्—अस्मिन् पक्षे यद्युद्गृह्य हरेदित्यध्याहृत्यान्वयः ॥

[नाग्निमादित्यंचेति सूत्राभिप्रायः]

नाग्निमा–यात्—अध्वर्युरात्मनः पश्चादग्निं न हरेत् । यस्मिन् प्रायश्चित्ताधाने पश्चादेवादित्यः तदा पश्चादेव न पुरस्ताद्व्यवाये सर्वप्रायश्चित्तम् ॥

[निधातृविशेषग्राहकमानम्]

अर्धमध्वनोऽध्वार्धम्–ध्वर्यवम् —तत्र हिरण्य निधायेति वक्तव्ये अर्धाध्वग्रहणात् प्रकृतकर्तृविच्छेदः ॥

---

[1] नयने प्रायश्चित्तमित्युपदेश –ङ [2] अभ्यगारस्थानामयमन्तरागमनप्रतिषेध (रु) [3] आत्मनो दक्षिणत प्रसारिताभ्यां हस्ताभ्या धारयन् हरति (रु) [4] अध्वर्युरितिशेष (रु)

(सू) [1] त्तरतस्संभारानाक्रमयति । यथाऽऽहितस्याग्नेरङ्गाराः पदमभ्यववर्तेरन्निति ॥१३॥२१॥१०२४॥
प्रदक्षिणमावर्तयित्वा यदक्रन्द इति पुनरेवाक्रमयति ॥ १४ ॥ २२ ॥ १०२५ ॥

(भा) द्वितीयस्याक्रमणमन्त्रस्य कमण्डल्वादौ निवृत्तिः अर्वच्छब्दात् अनिवृत्तिरुपदेशः ॥

(सू) [2] पुरस्तात्प्रत्यञ्चमश्वं धारयति ॥ १५ ॥ २३ ॥ ॥ १०२६ ॥

(भा) पुरस्तादाहवनीयस्य प्रत्यङ्मुखोऽश्वो धार्यते ॥

(सू) [3] पूर्ववाडश्वो भवति ॥ १६ ॥ २४ ॥ १०२७ ॥

[पूर्ववाट्पदार्थः]

(भा) पूर्वे वयसि वहतीति पूर्ववाट् ॥

---

[द्वितीयाक्रमणमन्त्रस्यानिवृत्तिपक्षे हेतुः]

(वृ) द्वितीयस्याक्र–निवृत्तिः—यदक्रन्द इत्यस्य ।
अर्वच्छब्दात्—अग्निर्वा अर्वेत्यभिधानात् ।
अनिवृत्तिरुपदेशः—कमण्डल्वादावपि ।

[तादृगश्वपरिग्रहप्रकरणम्]

पूर्वे–वाट्—अश्वः । उपतिष्ठत्यश्व इत्यादिषु ।

---

1 उत्तरत –उत्तरेण पार्श्वेन । पार्श्वत आक्रमयेदिति श्रुतेः । इति प्रकारार्थ. । तथा नामसंभारानाक्रमयति , यथा तेषु आहितस्य अग्ने. अङ्गाराः तत्पदमभ्यववर्तेरन् तत्रैव स्वयमेवपतिष्यन् इत्यर्थः ? (रु). 2 आक्रामन् तं चाश्व आहवनीयायतनस्य पुरस्तात् प्रत्यङ्मुख धारयतीत्यर्थ तथा प्रदक्षिणमावर्त्य प्रत्यञ्चमाक्रमयतीति कल्पान्तराणि । द्वितीयमपि प्राञ्चमेवाक्रमय्य तत. प्रत्यङ्मुखोधार्य इत्येके (रु). 3 पूर्ववाट् युवा । अश्व पूर्ववाहामिति युवानमित्येवेदमुक्तं भवतीति बोधायन (रु)

(सू) तद्भावेऽनड्वान् पूर्ववा[1]डेतानि कर्माणि करोतीति पैङ्गायनिब्राह्मणं भवति ॥१७॥२५॥१०२८॥

चतुर्दशी खण्डिका ॥

---

[अश्वानुकल्पः]

(भा) एतानि कर्माणि—अग्निमन्थनस्थापनादीनि करोति ॥ प्रतिनिधिः पूर्ववाडनड्वान् ॥

(सू) [2]कमण्डलुपद आदधातीति बह्वृच ब्राह्मणम् ॥ ॥१॥२६॥१०२९॥

(सू) अजस्य पद आदधीतेति वाजसनेयकम् ॥ २ ॥ ॥२७॥१०३०॥

[पदशब्दगौणताविधानद्वयफलं च]

(भा) कमण्डलुः—करकः तस्य मूले पदोपचारः । स चाजश्च

---

[प्रतिनिधिसम्भवः]

(वृ) प्रतिनिधिः—ड्वान्—तद्भावे इति वचनात् ।

---

[1] एतानि कर्माणि—उपतिष्ठत्यश्व इत्यादीनि तत्र अश्वप्रतिनिधित्वात् अनडुह्यपि अश्वालेङ्गाना मन्त्राणा अनिवृत्तिः । अज कमण्डल्वोस्तु निवृत्ति । अश्वविकल्पत्वात् (रु) [2] अस्ति कमण्डलुशब्द पशुजातिविशेषवचन यथा चतुष्पाद्भ्यो ढाङ्त्यत्र शाब्दिकवृद्धैरुदाहृतं कामण्डलेय इति । विवृत च कमण्डल्वादिशब्दा पशुजातिविशेषवचना इति । अस्ति च करकवचना इति । तत्र पशुवचनोऽयमिष्यतेन करकवचन पशुशब्दमध्यपठितत्वात् पदशब्दसमभिव्याहाराच्च । न च करकपृष्ठे पदोपचार इति वाच्यम् , मुख्यार्थे सभवत्युपचाराश्रयणस्यायुक्तत्वात् । अश्वस्य पदे अजस्य पदे इति पूर्वापराभ्या वैलक्षण्यप्रसङ्गाच्च ( ,

(भा) [1]प्रव्रजनप्रभृति विकल्पते ।

[विधौ विषयव्यवस्थामतिभेदश्च]

पूर्वमश्वकर्तृकम् । उपदेश एतानि कर्माणि करोतीत्यनुवर्तयति । अतः कमण्डलुरजश्च मन्थनाद्येव ॥

(सू) अथ यजमानश्शिवा जपति ये ते अग्ने शिवे तनुवै विराट् च स्वराट् च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ सम्राट्चाभिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां ते मा जिन्वताम् । ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां ते मा जिन्वताम् । यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादधे इति ॥ ३ ॥ २८ ॥ १०३१ ॥

(सू) [2]यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति [3]ताभिरेनं परा भावयति ॥ ४ ॥ २९ ॥ १०३२ ॥

---

(वृ) पूर्वमश्व–कर्तृकम्–कमण्डलुपद आदधीतेत्याधानमात्रविधनात्। उपदेश–र्तयतीति—न प्रव्रजनादीनि । एतानीति [4]वचनादशेषाणि ॥

[प्रस्थापनमन्त्राः]

यास्ते अग्ने–स्थापयति—यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्य [5]द्विष्यादिति ॥

---

[1] प्रव्रजनात्प्रभृति विकल्प्यते–ग प्रव्रजनादिर्विकल्प्यते–क [2] अनेन पारक्षुद्रेण यजुषा द्वेष्यं प्रति प्रहिणोति तं घोरतनुविशिष्टमग्निं मन्त्रलिङ्गात् । ताभिरिति घोरतनूना परामर्शः । मन्त्रार्थत्वेन आसा बुद्धिस्थत्वात् पराभावन–उत्सादनम् (रु) [3] ताभिरेवैन (पाठा) [4] वचनादविशेषात् । वचनाविशेषात्–घ. [5] द्विष्यादित्येतत् अमुङ्गच्छान्तम्.

[एतन्मन्त्रसाध्यं कर्म पराभवस्वरूपं च]

(भा) यास्ते अग्ने घोरा इति पारक्षुद्रः । तेन द्वेष्यार्थमग्निं प्रस्थापयति । ताभिस्तनूभिर्घोराभिः । पराभावः—सर्वनाशः । न च स्थान-[1]लाभः शत्रु पराभावयति ॥

(सू) [2]अरण्येऽनुवाक्या भवन्ति ॥ ५॥ ३० ॥
॥ १०३३ ॥

(भा) अरण्येऽनूच्यन्त इत्यरण्येऽनुवाक्याः घोराः । ताश्च वक्तव्या भवन्ति । अनुवाकद्वयमुभयत्र ॥

[तस्य पारक्षुद्रत्वं नेति पक्षः पक्षान्तरं च]

[3]उपदेशो न पारक्षुद्रः । [4]केचिदनुवाकममु[5]द्रुच्छान्तमिच्छन्ति ।

---

(वृ) सर्वनाश· न च स्थानलाभ —कचिदप्यनवस्थान शत्रोः

[अरण्येनूवाक्यशब्दतो भागः तद्विनियोगश्च]

अरण्येनू—घोरा·—यास्ते अग्ने घोराः यास्ते अग्ने घोरास्त्रिक्चेत्यनुवाकद्वयम् । क्षुच्च तृष्णा चेत्याद्या घोरास्तनुवः ॥

ताश्च वक्त—यत्र—पराभावे नितमने च ।

[अपारक्षुद्रत्वोपपत्तिः]

उपदेशो न पारक्षुद्रः—सूत्रकारेण यास्ते अग्ने घोरास्तनुव इत्युक्त्वा अरण्येऽनुवाक्या भवन्तीति निर्देशात् । अरण्येऽनुवाक्यैकदेशघोरतनूनामेव विधानं सूत्रकारेण कृतमिति न शाखोक्तयजुःप्रयोग इति ।

[केचिदितिपक्षे भाष्यदर्शितमन्त्रपरावध्युपपत्तिः]

केचिदेक—[6]न्तमिह—विनियुक्तविनियोगासम्भवादनुवाकद्व -

---

[1] भङ्ग –क ङ [2] घोरास्तन्वोऽत्रप्रयोक्तव्या भवन्तीत्यर्थ । ताश्च यास्ते अग्ने त्रिक्चेत्यनुवाकौ (रु). [3] उपदेशोऽनुवाकद्वयमेव न पा—क. [4] केचिदेकमनुवाकममु–क. [5] गच्छान्तमिह तथोत्तरमुत्तरत्र—क. [6] च्छान्तामिति हेतुविनि–ख.ग.

(भा) तथोत्तर परत्र ॥

(सू) यदिदं दिवो यददः पृथिव्यास्संविदाने रोदसी संबभूवतुः । तयोः पृष्ठे सीदतु जातवेदाश्शम्भूः प्रजाभ्यस्तनुवे स्योनः इत्यभिमन्त्र्य पुरस्तात्प्रत्यङ् [1] तिष्ठन्नाहवनीयमादधाति ॥ ६ ॥ ३१ ॥ १०३४ ॥

(भा) अभिमन्त्रण कृत्वा प्रत्यङ्मुखस्तिष्ठति पुरस्तादाहवनी[2]यायतनस्य।

(सू) बृहति गीयमाने श्यैतवारवन्तीययोर्यज्ञायज्ञीये च यथर्ष्याधानेन सर्वाभिर्व्याहृतीभिस्सर्वाभिस्सर्पराज्ञीभिस्तृतीयेन च घर्मशिरसा यास्ते शिवास्तनुवोजातवेदो या अन्तरिक्ष उत पार्थिवीर्याः । ताभिस्संभूय सगणस्सजोषा हिरण्ययोनिर्वह हव्यमग्ने । अपानं त्वाऽमृत आदधाम्यन्नादमन्नाद्याय गोप्तारं गुप्त्यै दिवस्त्वा वीर्येण पृथिव्यै महिम्नाऽन्तरिक्षस्य पोषेण पशूनां तेजसा सर्वपशुमादधे । अग्ने सम्राडजैकपादाहवनीय दिवः

---

(वृ) यस्य [3]व्यवस्थयोर्नेतव्यम् । तत्र प्रथम पराभावनेऽमुगच्छान्त तदन्तस्य निर्देशात् । सर्वत्र पाप्मा द्वेष्य व्यावृत्ति पाप्मना भ्रातृव्येण गच्छन्तीति वचनादिति भाष्यकारवचनात् योऽस्मान् द्वेष्टीति [4]पापे असम्भवादमुङ्गच्छान्तमेव ॥

तथोत्तरं परत्र—जिवचेत्येतदपि अमुंगच्छान्तं परत्र नितमने इति केचित् ॥

---

[1] तिष्ठन्नेवादधाति । प्रह्वस्तिष्ठन् इति तु भारद्वाजः (रु). [2] यस्यायतनस्य—क. [3] द्व्यवस्थयो—ग. [4] पाप्मान्यसम्.

(सू) पृथिव्याः पर्यन्तरिक्षाल्लोकं विन्द यजमानाय । पृथिव्यास्त्वा मूर्धन् सादयामि यज्ञिये लोके । यो नो अग्ने निष्ट्यो योऽनिष्ट्योऽभिदासतीदमहं तं त्वयाऽभिनिदधामीति सम्भारेषु निदधाति ॥ ७ ॥ ॥३२॥१०३५॥

पञ्चदशी खण्डिका ॥

---

(भा) व्याहृत्यादि धर्मशिरोन्त[1] मध्वर्युणोक्तं पश्चादाह-यजमानः ॥

(सू) आनशे व्यानशे सर्वमायुर्व्यानशे । अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव यो-निरस्मि । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेद इत्याधीयमानमभिमन्त्रयते यज-मानः ॥ १ ॥ ३३ ॥ १०३६ ॥

(सू) [2] व्याहृतीस्सर्पराज्ञीर्धर्मशिरांसीति सर्वेष्वा-धानेषु यजमानोऽनुवर्तयते येनयेनादधाति ॥ २ ॥ ॥ ३४ ॥ १०३७ ॥

(भा) येन येन यजुषा य यमग्निमादधाति [3] स्थापयति ॥

(सू) [4] नाहितमनभिहुतमग्निमुपस्पृशति आज्येनौषधी-भिश्च शमयितव्यः ॥ ३ ॥ ३५ ॥ १०३८ ॥

---

[1] मध्वर्युरुक्ता पश्चादाधानम्—ग ङ [2] एतस्मिन् त्रये येन येन मन्त्रेणा-ध्वर्युं आग्नीध्रो वाऽग्निमादधाति त त मन्त्रं तेन तेन सह पठति यजमान. (ङ). [3] ययमादधाति—क. [4] तीक्ष्ण इवायमग्नि. नाशमित. स्प्रष्टव्यः (ङ).

[शमने प्रकारभेदाः पक्षान्तरं च]

(भा) अकृतशमनो[1]ऽग्निर्न स्प्रष्टव्यः । आज्येनौषधीभिश्च शमयितव्यः । सर्वेष्वाधानेष्वाहुतित्रयेण [2] नाहवनीय एव । उपदेश [3]एकैकया शमनम् तृतीयया सभ्यावसथ्ययोरपि । बोधायनमतिश्च शमन व्याहृतीभिरग्नीन् शमयित्वेति । केचिद्दक्षिणाग्न्याहवनीययोरिदानी कुर्वन्ति । नास्त्यभिमर्शनेनार्थः पूर्वमिति ॥

---

[आहुतित्रयस्य सर्वसाधारण्यनिर्वाहःसंवादश्च]

(वृ) सर्वेष्वाधानेष्वाहुतित्रयेण—व्यस्तनिर्देशेऽपि समृष्टाभ्यामेव होमः । ओषधीराज्ये निधायेति हिरण्यकेशिवचनात् । आहुतित्रयनिर्देशाच्च । इतरथा षड्भवन्ति ॥

[आहवनीयमात्रविषयत्वशङ्कापरिहारौ]

नाहवनीय एव—यद्यपि तदनन्तरमुक्ताः अनभिहुतस्योपस्पर्शननिषेधात् सर्वाग्नीना शमनहोमाः ॥

[पक्षान्तरयोराशयः]

उपदेशए-मतिश्च—अग्निपृथिवीगायत्र्यादीनां गार्हपत्यादिषु व्यवस्थया सबन्धो मन्त्रगतानाम् । अत एकैकया । बोधायनमताच्च व्यवस्था । अथवा बोधायनमतिश्च ॥

सर्वत्र-यित्वेति—सर्वत्र व्याहृतिभिश्शमनहोम इति बोधायन ॥

[पूर्वमभिमर्शनवैफल्योपपत्तिः]

केचिद्दक्षिणा-पूर्वमिति—तेष्वभिमर्शनकार्याभावात् । अस्मादेवाहवनीयोद्धरणे गार्हपत्यस्य काष्ठादिस्पर्शव्यवहितस्पर्शस्याप्युपस्पर्शनत्वेनाभ्यनुज्ञानादकृतशमनस्याग्नेः काष्ठादिव्यवहितस्पर्शनमपि न कर्तव्यम् । आज्येनौषधीभिश्च जुहोतीति पुनर्वचनं सामिदाधानेन विकल्पार्थम् ॥

---

[1] शमनो नस्प्र—क [2] णाहुतित्रयेण नाहुतित्र ?—क. ग. [3] एकैकधा—ग.

(सू) [1]या ते अग्ने पशुषु पवमाना प्रिया तनूर्या पृथिव्यां याग्नौ या रथन्तरे या गायत्रे छन्दसि तां त एतेनावयजे स्वाहा! या ते अग्नेऽप्सु पावका प्रिया तनूर्यान्तरिक्षे या वायौ या वामदेव्ये या त्रैष्टुभे छन्दसि तां त एतेनावयजे स्वाहा। या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि याऽऽदित्ये या बृहति या जागते छन्दसि तां त एतेनावयजे स्वाहेत्येतैः प्रतिमन्त्रमाज्यमौषधीश्च जुहोति ॥ ॥ ४ ॥ ३६ ॥ १०३९ ॥

(सू) समिध आदधातीत्येके ॥ ५ ॥ ३७ ॥ १०४० ॥

(सू) [2]ब्रह्माग्न्याधेये सामानि गायति ॥ ६ ॥ ॥ ९२६ ॥ ३८ ॥ १०४१ ॥

(सू) प्रतिषिद्धान्येकेषाम् ॥ ७ ॥ ३९ ॥ १०४२ ॥

(सू) व्याहृतीभिरेवोद्गीथं भवतीति वाजसनेयकम् ॥ ॥ ८ ॥ ४० ॥ १०४३ ॥

षोडशी खण्डिका.

---

[व्याहृत्युद्गीथे गाता]

(भा) व्याहृतीभिरुद्गीथ—उद्गान अध्वर्युणैव प्रयुज्यमानासु ॥

---

[3][अध्वर्योर्गातृत्वसिद्धिः]

(वृ) व्याहृतीभि—ज्यमानासु—अतः प्रथमया व्याहृत्येति प्रयोगकाले गानविशिष्टप्रयोगोऽध्वर्योः व्याहृतीभिरुद्गीथमित्यत्र कर्त्रन्तरानुपदेशात् ॥

---

[1] समानोऽयं विधिस्सर्वाग्नीनाम्, नाहितमनाभिहुतमग्निमुपस्पृशतीति सामान्यनिर्देशात्। पूर्वोत्तरयोरपि विध्योस्सामान्याधिकारत्वात् विकल्प चाह भरद्वाज। आधानानन्तरं सर्वैर्मन्त्रैरेकैकं शमयेदाहवनीयं वेति (रु). [2] छन्दोगाना तु ब्रह्मोद्गात्रोर्विकल्पः (रु). [3] अत्रप्र—घ.

[सामविधिनिषेधव्याहृतिपक्षास्त्रय इति तत्रापि व्याहृते-रुच्चारणं ब्रह्मकर्तृकमिति]

(भा) [1]केचित्कल्पत्रयम्, प्रतिषेधादक्रिया साम्नाम्; क्रिया वा विधानात्; उद्गानकाले व्याहृति[2]गानम् । केचिदुच्चारण ब्रह्मणः ॥

इति श्री आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये

पञ्चमेऽप्रश्ने चतुर्थ पटल.

---

(सू) ततस्सभ्यावसथ्यावादधाति लौकिकमग्निमाहृत्य मथित्वाऽऽहवनीयाद्वा यथर्ष्याधानेन ॥ ॥१॥१॥१०४४॥

---

[सामविधिनिषेधव्याहृत्युद्गीथादिपक्षाणामुपपत्तिः]

(वृ) केचित्–साम्नाम्—उपवीता वा अस्याग्नयो भवन्तीत्यादिना प्रतिषेधात् ॥

क्रियावा–तिगानम्—रथन्तरमभिगायत इत्यस्मिन् काले व्याहृतिभिरुद्गान ब्रह्मणेति ॥

केचिदुच्चारणं ब्रह्मण इति—कल्पान्तरम् । व्याहृतीभिरेवोद्गीथ भवतीत्युद्गानकाले व्याहृतीनामुच्चारण ब्रह्मणा । प्रकृतत्वाद्ब्रह्मणः ॥

इति कौशिकेन रामेणाग्निचितात्कृतायाम् आपस्तम्बश्रौत-

धूर्तस्वामिभाष्यवृत्तौ पञ्चमे प्रश्ने चतुर्थ. पटल .

---

1 केचित्तु–क. ङ. 2 तिभिर्गानम्–ख. ग. घ.

[त्रयाणामेवाग्नीनामाधानमित्यत्रमानन्]

(भा) [1] विकल्पेनाधान सभ्यावसथ्ययोर्हिरण्यकेशिमतात् । प्रतिषिद्धौ सभ्यावससथ्या[2]वेकेषामिति गार्हपत्यादपि दक्षिणाग्नेराधानम् । यत्रेधाऽग्निराधीयत इति । [3] आश्वलायनश्चैकयोनय इति । यत्रेधाऽग्निराधीयत इत्येतदेवाग्नि[4]त्रयस्य विधायकम् । [5] अन्यत्राविधानादनुवादसरूपो विधिः । यथा यद्येना नालभेत वायव्यस्य शिर उपदध्यादिति । [6]अतश्च त्रयाणामेवाधानमुक्त्वा इष्टय उक्ताः अस्माकम् ॥

---

[यत्रेधाग्निरित्यादेरग्नित्रित्वपरत्वोपपत्तिः]

(वृ) गार्हपत्या–धानम्–यत इति—त्रिधाभूतोऽग्निराधीयत इति । ननु अनुवादसरूपोऽयम् ? सत्यम् —

यत्रेधा–विधायकम्। अन्यत्रा—विधिः—पञ्चमलकारान्ततया विधायक एव ॥

यथा यद्येना–ध्यादिति—यदि नालभेतेति शाखान्तरे पञ्चपशूनामनुवादसरूपो निषेध. ॥

अतश्चत्र–अस्माकम्—इतरथा इष्टिविधानं सर्वान्ते स्यात् ।

---

[1] यथर्ष्याधानमेवानयोराधानमन्त्र । नित्यमाधान सभ्यावसथ्ययो सूत्रकारमतात् । वैकल्पिकं चाहु सत्याषाढबोधायनभरद्वाजा । श्रुत्यापि तयोराधानविकल्पोऽवसीयते, उभयथाऽपि लिङ्गोपलम्भात्। आधाने तावत्, तस्मादेतावन्तोऽग्नय आधीयन्ते पाङ्क्त वा इद सर्वमिति । विपर्यये च यत्रेधाग्निराधीयते इति तथा त्रयाणामाधानमुक्त्वा अनन्तरं इष्टिविधान च अग्नित्रित्वे लिङ्गम् । आचार्येणापि क्वचिदग्नित्रयाणा अनुक्रमण इतरयो अनित्यत्वाभिप्रायमित्येके यथा मन्थेत् गार्हपत्य या प्रकृतिर्दक्षिणाग्ने· समाप्येतरावित्यादौ । तस्माद्विकल्पो युक्तः । बोधायनस्त्वत्रानुग्रहमुक्तवान् 'आहवनीये वा सभ्यावसथ्यसङ्कल्प इति । भारद्वाजश्चाह—'अथ सभ्यावसथ्यौ न शक्नुयात् यो नित्यस्तस्मिन् मन्त्रप्रयोग इति (रु) [2] वेतेषा–क. [3] आश्वलायनस्य चैक–क. [4] त्रित्वस्य–क. [5] अन्यत्राविधाना–ङ. [6] ततश्च

[पञ्चानामाधानमित्यत्र प्रमाणं तत्फलं विकल्पः[1]]

(भा) उत्तमेऽनुवाके तु पञ्चानामाधान नित्यानुवादसरूपेण । तस्मादेतावन्तोऽग्नय आधीयन्ते ब्राह्मणेनेति अतो विकल्पः । मुख्येन प्रदर्शन ब्राह्मणेन । अतस्सर्ववर्णा[2]नामपि पञ्चत्वम् [3]अधिदेवने राजन्यस्य होमदर्शनात् ॥

[राजन्यस्यैव जनसभासम्भवः]

[4]एव वा पञ्चोप[5]पद्यन्ते[6]ब्राह्मणे प्रविष्टेति । [7]तथा सति सभाभावात् ब्राह्मणस्य । पशवः खलु वै ब्राह्मणस्य सभेति लिङ्गात्

---

[तस्मादेतावन्त इत्यादेस्तत्पञ्चत्वपरत्वोपपत्तिः]

(वृ) उत्तमेनु–ह्मणेनेति—पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा इत्युक्त्वा तस्मादेतावन्तोऽग्नय आधीयन्ते इति पञ्चाग्नयो विहिताः त्रैवर्णिकानाम् पङ्क्तिशब्देन पञ्चसङ्ख्योपलक्षणात् । सापञ्चममुदक्रामत् अग्नीन् वाव सा तान् व्यक्रमतेत्यादिप्रकृतत्वाच्च ॥

[अतो विकल्प इति भाष्यपूरणम्]

अतो विकल्प इति—त्रैवर्णिकानाम् । अग्नित्रित्वपञ्चत्वयोः ।

[पङ्क्तिर्वा ब्राह्मणे इत्युदाहरणमात्रम्]

मुख्येन–ह्मणेनेति—पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टेत्यत्र ब्राह्मणशब्द. प्रदर्शनार्थः ॥

अतस्स–ञ्चत्वविधिः—अविशेषेण विधानात् । किञ्च—

अधिदे–दर्शनात्—ब्राह्मणग्रहण प्रदर्शनार्थम् ।

[प्रकारान्तरेणाब्राह्मणयोः पञ्चाग्निसिध्युपपत्तिः]

एवं वा–विष्टेति—पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टेत्यत्र अकारप्रश्लेषेण राजन्यवैश्ययोः पञ्चत्वविधिः ॥

---

[1] विकल्प मुख्येन—क. ङ. [2] मग्निपञ्चत्व—घ [3] ञ्चत्वविधि —ख. ग. [4] अत एव वा पञ्चत्व एवं चा पञ्चत्व—ङ. [5] पद्यते—ग. ङ. [6] अब्राह्मणे—क. [7] तथा सभा भा—क. [8] ब्राह्मण इति ब्रा—घ

(भा) ब्राह्मणस्य सभानुग्रहश्चोपपद्यते। ब्राह्मणस्य जनसभाया अभावात्। राजा हि सेव्यते सर्ववर्णैः। शाला तु विद्यते सभ्यस्थान ब्राह्मणादीनां यथर्ष्याधानेनाधाय सभ्य शमनं कर्तव्यम्। तथाऽऽवसथ्यमपि।

[सभ्यावसथ्योत्पत्तिस्थानादि]

पुनः पुन· कर्माणि। [1]सैव तयोर्योनिः। अनुगतयोश्च। पूर्वोत्पन्नान्यपि प्रायश्चित्तान्यमद्यभावाच्च न कृतानि॥

[प्रायश्चित्तविषये उपदेशमतं स्वमते विशेषाश्च]

तेषां पूर्णाहुत्यनन्तर क्रियेत्युपदेश.। न तु तत् [2]अनन्तर हि दोषः, प्रायश्चित्तानि [3]कर्तव्यानि यत्सम्भवति तत्कर्तव्यम्। अतोऽनाज्ञातम्। [4]अन्तरित वा यत्रान्तराय· ब्राह्मौदनिकेऽपि। दक्षिणाग्नावुत्पन्ने भुव इति। अनुत्पन्ने[5] त्वनाज्ञातजप एव। गार्हपत्यादीनां सम्बन्धा व्याहृतय.। [6]न ता अन्यस्मिन्नग्नौ॥

---

(वृ) सैव तयोर्योनिः–अनुगतयोश्च—लौकिक मन्थनादि।

[उपदेशपक्षाशयः]

पूर्वोत्प–पदेश इति—आहवनीयादिसपत्तिः पूर्णाहुत्यनन्तरम्। तदन्तत्वादाधानस्येति। च शब्दस्तुशब्दस्यार्थे॥

[अनाज्ञाते विशेषः]

न तु त–नाज्ञातम्—जुहुयाज्जपेद्वा।

अन्तरितं वा–दनिकेऽपि—सर्वप्रायश्चित्तानाज्ञातादि।

दक्षिणाग्नावुत्पन्ने भुव इति—आहुतिः; यजुर्भेषात्।

अनुत्पन्ने–स्मिन्नग्नौ—कर्तव्याः।

---

[1] सेव त्वेतयो–ङ [2] न तु तत् अनन्तरं दोषात्–ग न तु तदनन्तरं दोषात्–ङ. [3] कर्तव्यानि प्रायश्चित्तानि–ग [4] तत्रयम्–ख. ग. घ [5] त्पन्ने भावना–क. ग [6] नवा–ग

(सू) अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः। अग्निर् ऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहे महागयम् इति [1] तिस्र आश्वत्थ्यस्समिध एकैकस्मिन्नादधाति ॥ २ ॥ २ ॥ १०४५ ॥

(सू) आहवनीये वा तिस्रः ॥ ३ ॥ ३ ॥ १०४६ ॥

[समित्त्रयाधानेऽनुसमये मतभेदः]

(भा) साधनभेदात् क्रियाभेदाः समित्सु। अत प्रत्यृचं समिदाधान सूत्रकारेण [2] बद्धम्। समित्त्रयेण पञ्चानामनुसमयः। समित्त्रयस्यैक [3]-जातीयत्वात्। पवमान[4]देवतैकत्वाच्च [5] संस्कारैकत्वमिति ॥

---

[क्रियाभेदावश्यम्भावहेतवः]

(वृ) साधन—समित्सु—मन्त्रसमिद्भेदात्। [6]एकक्रियायां मन्त्रबहुत्वस्यादृष्टार्थत्वप्रसङ्गात्। तिसृभिरिति [7] समस्तविनियोगाभावात्।

[सूत्रोक्ते भरद्वाजसंमतिः]

अतः प्रत्यृ—बद्धम्—द्रव्यपृथक्त्वेऽभ्यावर्तेत[8] इति भरद्वाजः।

[काण्डानुसमयोपपत्तिः]

समित्त्र—जातित्वात्—एक[9]प्रकारसाधनत्वात्।

पवमान—कत्वमिति—संस्कार्यैकत्वाच्च समित्त्रयेणानुसमयः। अग्ने पवस्वेति द्वितीयस्य कृत्स्नपाठाभावात्सहितः न [10] कूश्माण्डः पारक्षुद्रारण्यकानां कृत्स्नपाठदर्शनात् ॥

---

[1] कारैश्वब— [2] जातित्वात्—ग. [3] देवतैकत्वाच्च [4] संस्कारैकत्वम्, अत केचित्—क. [5] तिस्रस्तिस्र आश्वत्थी एकैकश तिसृभि प्रत्यृचं एकैकास्मिन् आदधातीत्यर्थ, (रु) [6] अनेकक्रिया—ख ग. [7] सामस्त्यविनि—घ [8] तैत एवेति—ख. ग. [9] प्रकरण—घ [10] कौश्माण्डपार—ख ग

(भा) केचित् एकैकयाऽनुसमयः समित्सु क्रियाभेदात् ॥

(सू) समुद्रादूर्मिर्मधुमाँ उदारदुपाँशुना सममृतत्वमानट् । घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः । वयं नाम प्रब्रवामा घृतेनास्मिन् यज्ञे धारयामा नमोभिः । उपब्रह्मा शृणवच्छस्यमानं चतुश्शृङ्गोऽवमीद्गौर एतत् । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेशेति शमीमय्यो [1] घृतान्वक्तास्तिसृभिस्तिस्र एकैकस्मिन्नादधाति । आहवनीये वा तिस्रः ॥४॥४॥१०४७॥

(भा) न घृतान्वक्ता आश्वथ्य. मूलादारभ्याग्रादक्ताश्शमीमय्यः मन्त्रलिङ्गाच्च ॥

[तिसृग्रहणफलम्]

(भा) [2] तिसृभिरित्यृक्परिज्ञानार्थम् ॥

---

[पदार्थानुसमयपक्षे हेतु.]

(वृ) केचिदेकैक–भेदादिति—द्रव्यभेदेन । अत एकैकां क्रियां सर्वेषु समाप्य क्रियान्तरप्रयोगः ॥

[शमीमयीष्वेव समित्सु घृताञ्जनम्]

न घृता–दक्ताः—अन्वक्ताः ।

शमीमय्य—घृतान्वक्ता इति तासु विधानात् ।

मन्त्रलिङ्गाच्च—शमीमयमन्त्रेषु घृतस्य नाम गुह्य प्रब्रवामाघृतेनेति च शमीमयीनां घृतसंबन्धित्वावगमात् ॥

[ऋक्परिज्ञानपदविवक्षितार्थः]

तिसृभिरित्यृक्परिज्ञानार्थम्—तिस्र ऋचस्त्रिष्टुभ इति ज्ञात्वा समिदाधानार्थम्[3] ॥

---

[1] अन्वक्ता आनुपूर्व्येण सर्वाक्ता (ड) [2] तिसृभिरिति लिङ्गमृक्परिज्ञानार्थम्—क [3] धानम्—ख ग.

(भा) गार्हपत्ये तिस्र आधाय [1]शमी मयीः । [2]इतरेष्वपि तिस्रस्तिस्र आदधाति ॥

(सू) [3]एवं नानावृक्षीयाः । प्रेद्धो अग्ने दीदिहि पुरो न इत्यौदुम्बरीं समिधमादधाति । विधेम ते परमे जन्मन्नग्ने इति वैकङ्कतीम् । तां सवितुर्वरेण्यस्य चित्रामिति शमीमयीम् ॥ ५ ॥ ५ ॥ १०४८ ॥

[एवं शब्दपुनस्समिच्छब्दयोराशयः]

(भा) नानावृक्षीया अपि घृतान्वक्ता जातिभिन्ना अपि तिसृभि[4]स्तिस्र एव एकैकस्मिन्नाधीयन्ते । पुनस्समिद्वचनाच्च प्रकृष्टमिन्धन याः कुर्वन्ति शुष्कास्ता आधीयन्ते ॥

(सू) [5]ततस्तूष्णीमाग्निहोत्रं [6]कुर्वीन्ति ॥ ६ ॥ ६ ॥ ॥ १०४९ ॥

[समित्पदस्य यौगिकार्थग्रहणे न्यायः]

(वृ) एवमिति—धीयन्ते—एव नानावृक्षीया इति वचनात् ।

पुनस्सामि—आधीयन्त इति—औदुम्बरीं समिधमिति पुनर्वचनात् समिन्धनसमर्थाः शुष्का आधेयाः । तदभावे शुष्का यज्ञीयाः नार्द्राः । अर्थद्रव्यविरोधेऽर्थो बलीयानिति ॥

---

[1] मयी इतरे—ख ग घ. [2] मय्य इतरेष्वपि तिस्रस्तिस्र आदधाति—क च. [3] एवमितिपूर्ववत् । घृतान्वक्तास्तिस्रस्तिस्र एकैकस्मिन्नित्यर्थ (रु). [4] स्तिस्र एकैक—ख. ग. घ [5] पूर्वाहुतिरेव तूष्णीम्, सर्वमन्यत्समन्त्रकम्, सर्वं तूष्णीं क्रियेतेति क्वचिद्व्यक्तदर्शनात् प्रातर्होमधर्मकं च कालसामान्यात् । अयथापूर्वमाहुती जुहोतीति लिङ्गाच्च । प्रातरग्निहोत्रस्यान्तेति सत्याषाढभारद्वाजौ । बोधायनमताच्च सर्वं तूष्णीं उभयधर्मकं च । यथा सर्वं तूष्णीमनुक्रामन् उच्च मार्ष्टि अव च मार्ष्टीति । तथा उभे एवैते सायंप्रातरग्निहोत्रे प्रतिजुह्वन्मन्यत इति च पयसाऽत्र होम । काम्यत्वाद्द्रव्यान्तराणाम् । अज्ये न वेति तु बोधायन (रु). [6] जुहोति—क नेदमग्निहोत्रम्, अपि तु कर्मान्तरमाधानाङ्गम् । अग्निहोत्रवज्जुहोतीत्याध्वर्यवमेव सर्वं मन्त्रवर्जम् (हिर. श्रौ. व्या. वैज)

[अस्मिन् कर्मणि अमन्त्रकांशे न्यायः]

(भा) तूष्णीमग्निहोत्रम्, पूर्वाहुतिरेव तूष्णीम् । अन्यत्सर्वं मन्त्रवत् सर्वं तूष्णीमित्यन्यत्र वचनात् । विकृतौ चोद्यमानो धर्मः प्रधानार्थो भवतीति ॥

[विकृतौ बोधितधर्मस्य प्रधानार्थत्वे दृष्टान्तः
अस्मिन् प्रकृतिः तत्र विशेषश्च]

यथा सप्त ते अग्ने इति पुनराधेये पू[1]र्वाहुतिरे[2]व । प्रातर्होमविकारश्च । अयथापूर्वमाहुती जुहुयादिति लिङ्गात् । आदित्यायाग्निं गृह्णामीति । ऊर्जे त्वेत्यूर्ध्वमत्येवमादि कार्यम् ॥

---

(वृ) तूष्णीमग्नि–वचनात्—[3] मृतहोमे सर्वं तूष्णीं क्रियेतेति (आप. श्रौ. ९-११-६) वचनात् ॥

[प्रधानविषये तूष्णीत्वे हेतुः]

पूर्वाहुतिमात्रधर्मत्वेन्यायोऽभिधीयते,—

विकृतौ चो—भवतीति—एकदेशबाधेनाप्युपपत्तौ कृत्स्नबाधासंभवात् ॥

[तूष्णीमग्निहोत्रस्य प्रातर्होमविकृतित्वोपपत्तिः]

प्रातर्होम–ति लिङ्गात्—अस्यार्थः—होतव्यमग्निहोत्रां न होतव्या इत्युपक्रम्य यद्यजुषा जुहुयात् अयथापूर्वमाहुती जुहुयात् इति निर्देशात् । प्रातर्होमविकारपक्षे सूर्यो ज्योतिरिति मन्त्रेण होमे क्रियमाणे प्रातर्होमरूपत्वस्य स्पष्टत्वात् अग्निहोत्रहोमस्य प्रातरुपक्रमत्वप्रसङ्गात् अयथापूर्वत्वं स्यात् । सायमुपक्रमत्वादग्निहोत्रस्य ।

---

1 र्वा—ङ तत्रापि वकारं विलख्य तं निरस्यर्णाकारो लिखित 2 रेवं प्रातर्होम—ङ 3 घृतहोमेन—ख. घ.

[होमे देवता हविर्देवतामतिभेदश्च]

(भा) आग्नेयस्तु होमः अग्निः परा भवेदिति लिङ्गात् । अत आग्नेयं हविरिति केचित् । [1] अनिर्दिष्ट[2]देवतात्वात् सौर्यं [3] हविरित्येव होम· ॥

[तूष्णीं कार्यांशाः सम्मतिः होमे द्रव्यं च]

इध्माधानादि सर्वं तूष्णीमित्युपदेश· ॥

---

(वृ) सायहोमविकारत्वे अग्निर्ज्योतिरिति यजुषा क्रियमाणेऽपि सायमुपक्रमत्वाविरोधाद्यथापूर्वत्वमेव स्यात् । तस्मात्प्रातर्होमविकारत्वेऽपि तूष्णीं होमे प्रातर्होमत्वानभिव्यक्तेः अयथापूर्वमित्यभावात् तूष्णीं होमविधिप्रशंसोपपत्तेः प्रातरग्निहोत्रावृतेति हिरण्यकेशिवचनाच्च ॥

[होमे आग्नेयत्वोपपत्तिः]

**आग्नेयस्तु— लिङ्गादिति**—अस्यार्थ·—यन्न जुहुयात् अग्निः परा भवेदिति होमाकरणे देवताग्नेर्विनाशः प्रतीयते । [4] स चैवमुपपद्यते वैदिकाश्रयदेवतारूपाग्नेर्होमसप्रदानत्वम् । तथाभूतस्य च होमाभावेन विनाश । चतूरात्रमहूय[5]मानोऽग्निरिति वक्ष्यमाणत्वात् । अस्य कर्तव्यस्य होमस्याकरणे विनाशप्रसङ्गात् । तथा ज्योतिष्मतीष्टयामुक्तम्—एष एव सोऽग्निरिति । तस्मादा[6]हितोऽग्निरेवात्र देवता चतुर्थ्यन्तेन [7] ध्येया । अग्निसस्कारावगमात प्रातर्होमे सूर्यदेवतान्वयोऽग्निदेवतान्वयश्च । अतः गर्भेभ्यस्त्वेत्यत्र आग्नेयं हविः इत्येव ॥

[तूष्णीमित्युपदेशमतौ प्रमाणम्]

**इध्माधानादि सर्वं तूष्णीमित्युपदेशः**—तूष्णीं होतव्यमिति प्रयोगविधानात् ॥

---

[1] निर्दिष्ट—ख ग [2] देवतत्वात्. [3] हविरित्येक—क. [4] तच्चैवमुप—घ [5] मान इति—घ [6] हिताग्निरेवा—ख. ग [7] ध्यात्वा—ख ग.

(भा) बोधायनमतिश्च । [1] अकाम्यत्वाच्च पयसा होम· ॥

[अग्निहोत्रस्थाने अनुकल्प·]

(सू) अपि वा द्वादशगृहीतेन स्रुचं पूरयित्वा प्रजापतिं मनसा ध्यायन् जुहोति । [2] साऽग्निहोत्रस्य स्थाने भवति ॥ ७ ॥ ७ ॥ १०५० ॥

[अस्या· पूर्णाहुते· स्थानी प्रजापतिध्यानाकारश्च]

(भा) साङ्गस्य स्थाने पूर्णाहुति· । प्रजापतये स्वाहेति मनसा ।

(सू) यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति यजमानो द्वेष्याय प्रहिणोति ताभिरेनं [3] नितमयति । आरण्येऽनुवाक्या भवन्ति ॥ ८ ॥ ८ ॥ १०५१ ॥

सप्तदशी खण्डिका ॥

---

(वृ) बोधायनमतिश्च—साङ्गस्य प्रधानस्य तूष्णीकत्वमिति बोधायनमतिश्च सर्वं तूष्णीमिति ॥

[पयोहोमत्वे प्रमाणम्]

अकाम्य–होमः—पयसा नित्यहोम इत्याश्वलायनमतात् तद्विकारत्वाच्चास्य ॥

[साङ्गस्थानिकत्वे हेतुः]

साङ्गस्य स्थाने पूर्णाहुतिः—साग्निहोत्रस्य स्थाने इति विधानात् । तूष्णीमग्निहोत्रमितिवत् प्रजापतिं मनसा ध्यायन् अग्निहोत्र जुहोतीत्यवचनात्[4] ॥

[चतुर्थ्यन्तनिर्देशे हेतुः]

प्रजापतये स्वाहेति मनसा—प्रजापतेर्देवतात्वान्मनसा चतुर्थ्यन्तनिर्देशः ॥

---

[1] कामत्वा—ख ग. [2] सा आहुतिः साङ्गस्याग्निहोत्रकर्मण स्थाने भवति (रु) [3] निगमयति—क पराभावयति-ख ग्लपयति शेष पूर्ववत् (रु). [4] तीति वचनात्—ग.

(भा) नितमयति—निरुच्छ्वास करोति ॥

(सू) द्वादशगृहीतेन स्रुचं पूरयित्वा सप्त ते अग्ने समिधस्सप्त जिह्वा इति सप्तवत्या पूर्णाहुतिं जुहोति। हुतायां यजमानो वरं दत्वा शिवा जपति। ये अग्नयो दिवो ये पृथिव्यास्समागच्छन्तीषमूर्जं [1]दुहानाः। ते अस्मा अग्नयो द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो भूत्वा यथालोकं पुनरस्तं परेत स्वाहेति जुहोति ॥ १ ॥ ९ ॥ १०५२ ॥

[अग्न्याधेयावधिनिर्देशः]

(भा) सप्तवत्येति [2]ज्ञानार्थम्। पूर्णाहुत्यन्तम् शिवाजपान्तमग्न्याधेयम् हुतायामिति तदङ्गत्वेन निर्देशात् ॥

---

[पूर्णाहुत्यन्तं शिवाजपान्तमिति भाष्याशय अङ्गान्तरमादायानुपपत्तिपरिहारश्च]

(वृ) पूर्णा – निर्देशादिति—पूर्णाहुत्यन्तमग्न्याधेयमित्याश्वलायनसूत्रस्याप्ययमेवार्थः। ननु पवमानेष्टयोऽप्याधानाङ्गम्? सत्यम्; अङ्गम्; न तु नित्यम्। अनित्यान्यप्यङ्गानि सन्ति, यथा पश्वेकादशिनी तिस्रोऽनूबन्ध्या इत्यादीनि। [3]यथाऽऽहाश्वलायनः—यदि त्विष्टयस्तनुयुरिति। तथाऽऽपस्तम्बोऽपि—सेष्टिसान्वारम्भणीयमपवृज्येति। यदीष्टयो नित्याः सान्वारम्भणीयमपवृज्येत्येवा [4]वक्ष्यत् ॥

[कदाचिदिष्टयोऽनित्या अपि]

प्रथमाधाने नित्या एव। यदाहवनीये जुह्वति तेन सोऽस्याभीष्टः प्रीतो भवतीत्यग्नेर्देवतात्मनः सस्कारत्वात् ॥

---

[1] दधाना –क. [2] ज्ञापनार्थं–क. [3] किंचाश्वलायनोयदि–ख. किंत्वाश्व–ग [4] वक्ष्यति–घ.

(सू.) अथ विराट्क्रमैर्यजमान उपतिष्ठते अथर्व पितुं मे गोपायान्नं प्राणेन संमितम् । त्वया गुप्ता इषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्यन्वाहार्यपचनम् । नर्य प्रजां मे गोपाय मूलं लोकस्य संततिम् । आत्मनो हृदयान्निर्मितां तां ते परिददाम्यहमिति गार्हपत्यम् । शꣳस्य पशून् मे गोपाय विश्वरूपं धनं वसु । गृहणां पुष्टिमानन्दं तांस्ते परिददाम्यहमित्याहवनीयम् । सप्रथ सभां मे गोपायेन्द्रियं भूतिवर्धनम् । विश्वजनस्य छायां तां ते परिददाम्यहमिति सभ्यम् । अहे बुध्निय मन्त्रं मे गोपाय श्रियं च यशसा सह । अहये

---

[क्वचित्तदनित्यता तद्धेतुश्च]

(वृ) प्रायश्चित्ताधाने तु सस्कृतस्य पुनस्संस्कारानपेक्षा । न च देवतात्मनोऽग्नेर्नाशः । यदेवास्य ज्योतिः परापतित तदेवावरुन्ध इति ज्योतिष्मतीष्ट्याम् [1] तस्याश्रयभूता[2]ग्निसस्कारावगमात् । [3] आधानप्रभृति यजमान एवाग्नय [4] इति श्रुतेश्च विद्यमानत्वात् ॥

[प्रायश्चित्ताधान संस्कार्यम्]

लौकिकज्योतिर्मात्रमेव परापतितं तदेवान्यदुपयुज्यमान सस्कारमर्हति । न देवताग्निः । करणेऽभ्युदयः । सोऽस्याभीष्टः प्रीतो भवतीति

[कश्चिद्धोमोऽग्निसंस्कारः]

दर्शनात् । येऽग्नय इति होमाऽग्निसस्कारः इष्टिवत् ॥

---

1 तस्यामाश्र—ख. ग. 2 र्निस्संसा—ख. ग. 3 धानान्तरं—ख. ग.
4 यो भवन्तीति—घ.

(सू) **बुध्नियाय मन्त्रं श्रियं यशः परिददाम्यहमित्याव-सथ्यम् । पञ्चधाऽग्नीन् व्यक्रामद्विराट् सृष्टा प्रजापतेः ऊर्ध्वा रोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिरिति सर्वान् ॥ २ ॥ १० ॥ १०५३ ॥**

अष्टादशी खण्डिका ॥

---

(भा) विराट्क्रमेभ्योऽनन्तर[1] अधिदेवनोद्धननादि निषसादहोमान्त राजन्यस्यैव । अग्निपञ्चत्वे [2]त्रित्वेऽपि पञ्चधाऽग्नीनित्युपस्थान विराजोऽभिधानात् । पार[3]क्षुद्रादयोऽपि [4]विराट्क्रमा विकल्पेन गार्हपत्यादयो लभ्यन्ते [5]मा भूदनर्थक. पाठ इति समानार्थत्वात् ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये पञ्चमे प्रश्ने पञ्चम पटल .

---

(वृ) **विराट्क्र–स्यैव**—अस्यार्थो मृग्यः ।

**अग्निपञ्च–भिधानात्**—पञ्चधा विराट् सृष्टेत्यन्वयात् नाग्नि-पञ्चत्वपरता ॥

**पारक्षुद्रा अपि–लभ्यन्ते**—अस्मच्छाखोक्ताः नर्यप्रजा मे गोपाय अमृतत्वाय जीवसे इत्याद्याः ॥

**समानार्थत्वान्मा भूदनर्थकः पाठ इति**—तदा गार्हपत्यादि-प्रजागोपनादेः गार्हपत्यादिकार्यत्वात् ॥

इति श्रीमदापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्यवृत्तौ
रामाग्निचिता कृतायां पञ्चमे प्रश्ने
पञ्चम पटल

---

[1] न्तरविदिदेवनो ? [2] दित्वेऽपि. [3] क्षुद्रा अपि–क. ङ. [4] विराट्-क्रमादिकल्पेन–ङ. [5] समानार्थत्वान्माभूदनर्थक. पाठ इति–ख ग घ.

(सू) [1]आग्नेयस्याष्टाकपालस्य तन्त्रं प्रक्रमयति ॥१॥१॥१०५४॥

(सू) निरुप्तं हविरुपसन्नमप्रोक्षितं भवति । अथ सभाया मध्ये अधिदेवनमुद्धत्यावोक्ष्याक्षान्न्युप्याक्षेषु हिरण्यं निधाय समूह्य व्यूह्य प्रथयित्वा 'निषसाद धृतव्रत' इति मध्येऽधिदेवने राजन्यस्य जुहोति ॥२॥२॥१०५५॥

[लघुनिर्देशापेक्षाफलम् उपसादनान्तस्यकालश्च]

(भा) अप्रोक्षितमिति सिद्धे गुरुकरणात् निर्वापाङ्गमुपसादनम्। अतस्साक॰ सूर्येणोद्यतेत्युपसादनान्त क्रियते ॥

---

[लघुनिर्देशप्रकारः; भाष्यदर्शितफले प्रमाणोपपत्तिः]

(वृ) अप्रोक्षित–सादनम्—हविरप्रोक्षितमित्येतावता कालविशेषे सिद्धेऽप्युपसादनस्य निर्वापाङ्गत्वज्ञापनाय गुरुकरणम् । अत एव आग्रयण निरुप्य एता आहुतीरिति निर्वापानन्तरश्रुतानामज्यानिहोमाना उपसादनादनन्तर सूत्रकारोपदेशः ॥

अतः साक–क्रियते—उदय[2]कालेऽनीकवदादिषु ।

---

[1] तेष्वाहितेषु तन्त्र प्रक्रमयति । तच्च पौर्णमासं तन्त्रम् तत्रैव प्रयोगतो मुख्यत्वात् । तथा तमेव हेतुमुक्त्वाऽऽह भरद्वाज तस्मिन्नारूढमप्याग्नेयं पौर्णमासविकार स्यादिति । तन्त्र प्रक्रमयतीति च व्याख्यातं प्राक् । उपसादनवचनेनैव सिद्धे निरुप्तवचन अप्रोक्षितवचन च उपसादनस्य निर्वापाङ्गत्वख्यापनार्थं प्रोक्षणस्यानङ्गत्वख्यापनार्थं च । तेन साकं सूर्येणोद्यता निर्वपतीत्यादौ उपसादनान्त क्रियते वैचित्र्यार्थं वा । यत्र दीव्यन्ति तदधिदेवनम् । अक्षा विभीतकाः । समूह्य–संहृत्य । व्यूह्य–वियुत्य । प्रथयित्वा–प्रसार्य । राजन्यग्रहणात् न वर्णान्तरस्याय होम (रु).

[2] कालेनिकवदा–ख ग. नेकपदा–ग.

[पक्षान्तरम्]

(भा) केचिन्निरुप्त हविरिदं देवानामित्यकृते (उपसादनान्ते कृते) कृते वा प्रोक्षणीसंस्कारे उद्धननादि कर्तव्यमिति विकल्पमाहुः। तदा तु (तदिति [2]) प्रोक्षादिकर्मेत्येकं पक्षमाश्रित्योच्यते। द्यूतस्थानम्—आधिदेवनम्। उद्धनन—खननम्। अवोक्षणम्—अवाङ्मुखेन हस्तेन। अक्षाः—विभीतकाः। [1] समूहनमेकीकरणम्—हिरण्यस्योपरिष्टाद्‌ध्यूहनम्। प्रसारणम्-प्रथनम्—यथाऽन्योन्यस्योपरि न [2] तिष्ठति ॥

[हिरण्यहोमो न सर्वस्य]

अधिदेवनमध्ये हिरण्ये होमो राजन्यस्यैव ॥

(सू) [3] आवसथे परिषदो [4] मध्ये हिरण्यं निधाय मन्त्रवत्या हिरण्ये जुहोति 'प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वद-

---

[पक्षान्तरस्याशयः]

(वृ) केचिन्नि—त्यकृते—[5]उद्धननादेः कालत्रयनिर्देशार्थं गुरुकरणमिति केचित् व्याचक्षते। अन्वावापान्त एकः कालः उपसाद[6]नान्ते अन्यः ॥

तदा तु—त्योच्यते—कृते प्रोक्षणीसंस्कार इत्यस्मिन् पक्षे।

न तिष्ठन्ति—अक्षाः।

[हिरण्यहोमस्य सूत्रानुक्तस्यानुष्ठापकमानम्]

अधिदेव—स्य मध्ये—स्यैव—मध्येऽधिदेवन [7]इत्यस्यायमर्थः—आधिदेवने यन्मध्य तस्मिन्निति। तत्र निहिते हिरण्ये होमः। यद्यपि मध्येऽधिदेवन इत्येतावदुक्तम् तथाऽपि हिरण्ये होमः यदध्वर्युरनग्नाविति निन्दितत्वात् ॥

[राजन्यस्यैवेत्यत्र हेतुः]

(वृ) राजन्यस्यैवेति—यद्यपि [8]सभ्याङ्ग होमः तथाऽप्युद्धननादिभोजनान्तं राजन्यस्यैव नेतरयोः राजन्यग्रहणात् ॥

---

[1] व्यूहनमेकीकरण हिरण्यस्योपरिष्टाद्वा व्यूहनम्—घ [2] तिष्ठन्ति—घ
[3] आवसध्ये—ख. [4] आधानप्रेक्षिणो जनस्य मध्ये (रु). [5] उपस्थानादे—घ.
[6] नान्ते वा एकःकाल—ख. ग. [7] इत्यस्यैवमर्थः—घ [8] साङ्गहोम.—ख. ग.

(सू) त्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकाꣳसि चक्रिर' इति ॥ ३ ॥ ३ ॥ ॥ १०५६ ॥

(भा) आवसथो—यत्रातिथीनां निवासः । परिषदो—जनाः—आधान-प्रेक्षकाः ॥

[मन्त्रवत्येति पदफलम्]

मन्त्रवत्येति ज्ञानार्थम् ॥

(सू) 'उत नोऽहिर्बुध्न्यश्शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु न' इत्युक्त्वा शत-[1]मक्षान् यजमानाय प्रयच्छन्नाह व्रीहिभ्यो गां दीव्यताहिꣳसन्तः परूꣳषि विशसतेति ॥ ४ ॥ ४ ॥ ॥ १०५७ ॥

(सू) संप्रैषान् कुर्वन्ति ॥ ५ ॥ ५ ॥ १०५८ ॥

एकोनविंशी खण्डिका ॥

---

(वृ) मन्त्रवत्येति—र्थम्—अध्वर्युयजमानयोः उभयोः कर्तृत्वात् ।

[भाष्ये ज्ञानार्थमित्यत्रस्थलान्तरसाधारणाविवक्षा]

एवमन्यत्रापि ज्ञानार्थेषु यजमानस्यापि ज्ञानम् ।

---

1 अक्षान् प्रयच्छन् संप्रेष्यति कितवान् । व्रीहिभ्यो हेतुभ्य व्रीहिन् क्रेतुं मूल्यत्वेन गान्दीव्यत—ता पण कृत्वा दीव्यत तस्या पर्वाणि अहिंसन्तस्तां विशसत विशनशब्देन तत्कार्य विभागो लक्ष्यते जीवन्त्या एव गो. अङ्गानि तवेदं ममेदं इति विभजतेत्यर्थ. (रु).

(भा) व्रीहिभ्यो गां दीव्यताहिंसन्त. परूंषि विशसतेति सम्प्रैषमक्षान् यजमानाय प्रयच्छन् । परूषि—पर्वाणि । विशसत—विभजत । अहिंसन्तः कितवाः पर्वाणि परि[1]गृह्णन्तु ॥

(सू.) [2]**कृतं यजमानो विजिनाति ॥१॥६॥१०५९॥**

[यजमानस्य जयलाभप्रकारः]

(भा) ममेद् तवेदमिति तथा क्रियते यथाऽङ्गानि [3]विजानाति कृतेन येन यजमानः ॥

---

[व्रीहिभ्य इति विभक्त्यर्थः हिंसारूपं च]

(वृ) **व्रीहिभ्यो–प्रयच्छन्**—अस्यार्थः—व्रीहिसिध्यर्थं गा पण कृत्वा दीव्यत । अहिंसन्त.—गोमारणमकृत्वा ॥

**परिगृह्णन्ति**—गोरङ्गानि कर्णादानि ॥

[पणनेन व्रीहिसम्पत्तिप्रकारविवरणम्]

**कृतं य–विजिनाति–उपहरन्ति**—अस्यार्थ. ;—कृत गृहीत्वा यजमानः विजिनाति जयति । कृतशब्दः चतुस्सङ्ख्यावचनः । कलिर्द्वापरः त्रेता कृतामिति अक्षपर्वणा सङ्ख्या । तत्र चतुष्क[4]पर्वसङ्ख्यां गृहीत्वा यजमानो जितवानस्मीति गां गृहीत्वा तया च गवा क्रीत्वा व्रीहीन् अवहत्यौदनं कृत्वा । सभासद्भ्यः—आधानप्रेक्षकेभ्यः ॥

---

[1] गृह्णन्ति—ख ग. [2] कृतत्रेताद्वापरकलिनामानो द्यूतप्रकारा ये कृतमयानामिति श्रुतावया इत्याख्यायन्ते । न्युप्तेष्वक्षेषु चतुष्कशो विभज्यमानेषु यत्र सर्वे भागास्समाभवन्ति तत्कृत नाम । अथ यत्रान्ततस्त्रयोऽवशिष्यन्ते सा त्रेता यत्र द्वौ स द्वापर यत्रैकस्स कलि । तथा च श्रुति., ये वै चत्वारस्तोमाः कृतं तत् अथ ये पञ्चकलिस्स इति । तत्राक्षाणा शवत्वात् कृतेन प्रकारेण यजमानो विजिनाति विजयते (रु). [3] विजिनाति कृतेनायेन यजमानम्—क. [4] पर्वणां ?—घ.

(सू) [1]तया यजयन्ति तदन्नं संस्कृत्य सभासद्भ्य उपहरन्ति ॥ २ ॥ ७ ॥ १०६० ॥

(भा) तया च क्रीत्वा व्रीहीन् व्रीह्योदन सभासद्भ्य उपहर्तव्यः ।

(सू) आवसथे भुञ्जते [2] ॥ ३ ॥ ८ ॥ १०६१ ॥

[उद्धननादिशेषि तत्र मानं च]

(भा) उद्धननादि भोजनान्त सभ्यावसथ्याङ्गम् । यत्सभाया विजयन्ते । यदावसथेन्न हरन्तीति लिङ्गात् ॥

(सू) क्लृप्ति[3]सामनसीभ्यामग्नीन् यजमान उपतिष्ठते । कल्पेतां द्यावापृथिवी येऽग्नयस्समनसः इति ॥ ४ ॥ ९ ॥ १०६२ ॥

[सभ्यावसथ्याङ्गताफलम्]

(भा) अतोऽग्नित्रित्वे उपसाद[4]नान्ते क्लृप्तिसामनसीभ्यामुपस्थानम् ॥

[मन्त्रनिर्देशवैचित्र्यहेतुः]

सर्वत्र नामधेयोपदेशन ऋक्परिज्ञाना[5]र्थम् । वासन्तिकावृतू ग्रैष्मावृतू इति यथर्तु सन्नामो [6] मन्त्रस्य । यद्यप्येकस्यैव पाठ. हिरण्यकेशिमतात् ॥

---

[1] तया गवा क्रीतान् यावतो व्रीहीन् लभन्ते ते कितवा तैस्सर्वैरन्नं संस्कृत्य सभासद्भ्य. कृते आवसथे उपहरन्ति, यदावसथेऽन्न हरन्ति इति लिङ्गात् तत्र भोजनविधानाच्च (रु). [2] सभ्या इति शेष । अधिदेवनोद्धननादि भोजनान्तं कर्म सभ्यावसथ्ययोरभावे नेष्यते । यत्सभाया विजयन्ते यदावसथेऽन्नं हरन्तीति लिङ्गात् । केचित्पुनरत्रापि राजन्यस्येत्यनुवर्तयन्ति अधिदेवनसंस्कारस्य राजन्यसंयोगात् तस्य च देवनार्थत्वात् राजसूयाश्वमेधादिषु देवनस्यापि राजन्ययजमानसंयोगित्वाच्च (रु) [3] तत्र यथर्तूपतिष्ठत इति सत्याषाढ । तद्यथा सामनस्या वासन्तिकावृतू ग्रैष्मावृतू इत्यादि (रु) [4] न्ते कृते—क. [5] र्थे —ङ. [6] मन्त्रस्य हिरण्य—ङ.

[इष्टेराद्यन्तरूपम्]

(भा) इष्टिर्विद्युदादि ब्राह्मणतर्पणान्ता[1] ॥

[आहवनीयसंस्कारावशेषः]

आहवना[2]यस्त्वाश्वपदिक एव अग्निसंस्कारस्यासमाप्तत्वात् ।

(सू) [3]प्रोक्षादि कर्म प्रतिपद्यते ॥५॥१०॥१०६३॥

[4]आग्नेयस्य दक्षिणाकाले दक्षिणा ददाति ॥६॥११॥१०६४॥

[अग्न्याधेयदक्षिणाकालः अन्वाहार्यधर्मविरहश्च]

(भा) अग्न्याधेयस्य दक्षिणा आग्नेयस्य दक्षिणाकाले [5]दीयन्ते । तस्मान्नान्वाहार्यधर्मो दक्षिणानाम् । नचाग्नेयस्यान्वाहार्य. ताभिरेव परिक्रयसिद्धे । समानकालत्वात् । यथा गृहस्थनिमित्तकृतः प्रदीपः पुत्राणामपि सहभोजनार्थं साधयति न पृथक् तेषा भोजनेऽन्यः साध्यते ।

---

[पूर्वं विद्युदस्य करणेऽयं पक्षः]

(वृ) इष्टिर्विद्यु–णान्ता—ब्राह्मणतर्पणान्ता यदि पूर्वं न कृतो विद्युदसिः, कृतश्चेत् स एव विभवेत् ॥

[संस्कारसमाप्त्यवसरः]

आहवनीय–प्तत्वात्—सर्वेष्ट्यन्तेऽग्निसंस्कारसमाप्तिः । आश्वपदिकग्रहण कामण्डल्वादिपदिकादेरप्युपलक्षणम् ॥

[भाष्ये अग्न्याधेयस्येत्येतल्लाभः]

अग्न्याधेयस्य–दीयन्ते—आग्नेयस्य दक्षिणाकाले दक्षिणा इति निर्देशात् । आधानदक्षिणा एव आग्नेयदक्षिणाकाले दीयन्ते ।

ताभिरेव—आधानदक्षिणाभिरेव ।

---

[1] परितोषणान्ता–ङ परिवेषणान्ता–क. ख ग [2] यस्याश्व–क ख. ग [3] प्रोक्षणाङ्गत्वात्प्रोक्षणीसंस्कारोऽप्यत्रैव क्रियते (रु). [4] आग्नेयस्य दक्षिणाकाले अग्न्याधेयस्य दक्षिणा ददाति । अतो नैष्टिकान्वाहार्यधर्मा भवन्ति । नचाग्नेयस्यान्वाहार्यं तासामेव प्रसङ्गात् । बोधायनीयमतात्तु नित्योऽन्वाहार्यस्सर्वेष्टीनाम् (रु). [5] दीयते–ख. ग.

[अङ्गदक्षिणा क्वचित्पृथगेव]

(भा) [1]एव युक्तस्याङ्गस्य पृथग्दक्षिणा देया । यत्रापि नाम्नायते ।

[पृथगङ्गदक्षिणामानम्]

तत्र च लिङ्गानि । यथाऽन्वारम्भणीयायां वैमृधे च । न ह्यप्राप्तां दक्षिणां विदध्यात् । दक्षिणाद्रव्यसङ्ख्यादिनियमश्च । यथा मिथुनौ गावौ दक्षिणा इति ॥

(सू) अजं [2]पूर्णपात्रमुपबर्हणं सार्व[3]सूत्रमग्नीधे ॥ ७ ॥ १२ ॥ १०६५ ॥

(भा) उपबर्हण—शिरस उपधान नानावर्णैस्सूत्रै. । रूपाणामवरुध्या इति ॥

---

[आग्नेयस्य पृथग्दक्षिणावश्यकत्वम्]

(वृ) एवं वियुक्त–म्नायते—अङ्गानामपि प्रधानप्रयोगाद्बहिः प्रयोज्यानां दक्षिणा देया प्रयोगाङ्गत्वाद्दक्षिणायाः प्रयोगान्तरेऽनुपकारकत्वात् ॥

[अङ्गविशेषेषु पृथग्दक्षिणा श्रुतिसिद्धा]

तत्र च – वैमृधे च—दक्षिणा[4]दर्शनात् । अन्वारम्भणीयाग्रहणं अन्योपकारकस्यापि तद्दक्षिणाप्रसङ्गशङ्कया । पृथक्प्रयोज्यानामप्यङ्गानां प्रधानदक्षिणोपजीवित्वे सति वैमृधादिषु ॥

न ह्यप्राप्तां–मश्च–दक्षिणेति—तथा सति वाक्यभेदप्रसङ्गात् । तस्मात् पृथक्प्रयोज्येषु दक्षिणाभेदः ॥

उपबर्हणं–सूत्रैः—कृतम् । सार्वसूत्रम् ॥

---

[1] एवविधस्य साङ्गस्य—ग घ एव वियुक्तस्याङ्गस्य—ख [2] पूर्णपात्रो नाम पुष्कलचतुष्टयसमितो व्रीह्यादिः । पुष्कलमिति च द्वात्रिंशन्मुष्टिसमितं द्रव्यमित्याचक्षते । उपबर्हणमुपधानम् तच्च सार्वसूत्रं सर्ववर्णै सूत्रैः कृत भवति (रु). [3] सूत्रमित्यग्नीध्रे—क [4] र्शनम्—घ

(सू) [1] वहिनमश्वं ब्रह्मणेऽध्वर्यवे वा ॥८॥१३॥ ॥१०६६॥

(भा) वहति तस्मिन् काले इति वही ।

(सू) [2] आहवनीयदेशेऽनड्वाहमध्वर्यवे ॥ ९ ॥ १४ ॥ ॥ १०६७ ॥

(सू) अपरेण गार्हपत्यं [3] धेनुं होत्रे ॥ १० ॥ १५ ॥ ॥ १०६८ ॥

[धेनुदानादौ विशेषः]

(भा) धेनुर्दाने सवत्सा; उपकारसिद्धेः । आलम्भे त्ववत्सा । एकया क्रियासिद्धेः ॥

[सोमक्रयणश्रुतावेतदर्थसिद्धिः]

उभयत्र लिङ्गदर्शनम् दश सपद्यन्ते, द्वन्द्विन. पशून् इति ॥

[धेनोः दाने आलम्भे च विशेषहेतूपपत्तिः]

(वृ) धेनुर्दाने सवत्सा उपकारसिद्धेः—धेनोर्दाने पयो दोहनं प्रयोजनम् । वत्सेन च विना दोहनासिद्धेः दाने सवत्सा धेनु ।

आलम्भे त्ववत्सा एकया क्रियासिद्धेः—[4] एकया धेन्वा क्रियानिर्वृत्तेः ॥

[सोमक्रयणश्रुतावेतदर्थसिद्धिविवरणम्]

• उभयत्र—द्वन्द्विनः पशून् इति—दाने सवत्सत्वे दर्शनम्; सोमक्रये धेन्वा क्रीणातीत्यत्र सवत्सत्वे दश सम्पद्यन्ते इत्यनुवादोपपत्तिः इतरथा नवद्रव्याणि भवेयुः । तथा द्वन्द्विन इत्यत्र आलम्भे वत्सरहितायाः दर्शनम् । सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविति द्वन्द्विनः

---

[1] वहनसमर्थो वही। तस्य च विभवे सति अदातुर्दोष स्मर्यते । यथा मनुः—
प्राजापत्यमदत्वाश्वमग्न्याधेयस्य दक्षिणाम् ।
अनाहिताग्निर्भवति ब्राह्मणो विभवे सति ॥ इति ॥ (रु)

[2] तत्र स्थितायेत्यर्थ (रु) [3] धेनुर्दानाय चोद्यमाना वत्समप्याकर्षते तेन विना धेनूपकारासिद्धेः। भवति चात्र लिङ्गं यथा धेन्वा सहनवक्रयद्रव्याणि विधाय निगमयति श्रुतिः दशसंपद्यन्त इति (रु). [4] क्रियानिर्वृत्तेरित्येतावन्मात्रम् घ.–पुस्तके दृश्यते

(सू) वासो मिथुनौ गावौ नवं च रथं ददाति तानि साधारणानि सर्वेषाम् ॥ ११ ॥ १६ ॥ १०६९ ॥

(सू) [1] आद्वादशभ्यो ददातीत्युक्त्वाऽऽह काममूर्ध्वं देयमपरिमितस्यावरुद्ध्या इति विज्ञायते ॥ १२ ॥ ॥ १७ ॥ १०७० ॥

[द्वादशीदक्षिणाव्यक्तिः उपर्यपिदित्सायां व्यवस्था च]

(भा) आद्वादशभ्य इति गौर्द्वादश. । इच्छन्नूर्ध्वं [2] ददाति । षडाद्या [3] स्वेक कल्प ददाति ॥

(सू) [4] ऊर्ध्वमादिष्टदक्षिणाभ्यो वदति षड् देया द्वादशदेयाश्चतुर्विंशतिर्देया इति ॥१३॥१८॥१०७१॥

---

(वृ) पशूनालभते इति । अत्र द्वे धेनू भौमी इत्येतद्वन्द्वम् । तत्रापि सवत्सत्वे चतुष्टय स्यात् ॥

[गोर्द्वादशत्वे मानम्]

**आद्वादशभ्य इति गौर्द्वादशः**—दक्षिणादाने गौर्वै वर इति सामान्येन गोजातेरेव [5] प्रकृतत्वात् । द्रव्यविशेषानुपदेशे गोरेव नियतत्वात् ॥

[ऐच्छिकं दानं श्रौतमपि]

**इच्छन्नूर्ध्वं ददातीति**—काममूर्ध्वं देयमित्यस्यार्थः ।

[द्वादशान्तानामादिष्वदक्षिणात्वे हेतुः]

[6] **कस्मादूर्ध्वम् ?**

---

[1] एता दक्षिणा दत्वा भूयस्तावतीर्गा ददाति यावतीभि पूर्वाद्वादशपर्यन्त इत्युक्त्वा पुनराह ब्राह्मण काममूर्ध्वं देयमिति । एतदुक्त भवति द्वादश तावदेता नियता तत ऊर्ध्वमपि शक्तिश्रद्धयोस्सत्योर्यथाकामं ददातीति । आहेति विज्ञायत इति चोभयवचनमादरार्थं भवति (रु) [2] नूर्ध्वे–ङ [3] स्तेकम् ?–ङ [4] एताश्च दक्षिणा देया इति वदति ब्राह्मणम् । ताश्च द्वादशभ्य आदिष्टदक्षिणाभ्योधिका नित्या. । न च ताभिर्व्यतिकीर्यन्ते न च ताभिर्विकल्पन्त इत्यर्थ. । केचित्तु सूत्रकृतो विपरीतं मन्यन्त इति तन्निरासार्था श्रुतिव्याख्या । काममूर्ध्वं देयमित्यानियमे प्राप्ते षडादिसख्यानियम ख्याप्यत इत्येके (रु) [5] प्राप्तत्वात्–घ. [6] तस्मा–घ.

[काममूर्ध्वमित्यनियमपरिहरेण दानकल्पाः]

**(भा)** द्वादशदक्षिणापर्यन्ता आदिष्टदक्षिणाः; [1] ताभ्य ऊर्ध्वं काममूर्ध्वमित्यनियमे प्राप्ते षड्द्वादश चतुर्विंशतिर्वा [2] ददाति ॥

**(सू)** [3] **एता विकल्पन्ते ॥ १४ ॥ १९ ॥ १०७२ ॥**

[उक्तदेयेषु व्यवस्था]

**(भा)** एता [4] विकल्पन्ते परस्परेण । दित्यवाट् दित्यौ ह्री च नित्यौ षडाद्यासु । द्विवर्षो दित्यवाट् । तथा दित्यौहि । वृषणौ यस्य विद्येते स मुष्करः ॥

**(सू)** **येषां पशूनां पुष्टिं भूयसीं कामयेत तेषां [5] वयसाम् ॥ १५ ॥ २० ॥ १०७३ ॥**

---

**(वृ)** **द्वादशद्–भ्य उर्ध्वम्** — तास्वेव पर्यवस्यत्वादिष्टदक्षिणाशब्दः ॥

[काममूर्ध्वमित्यत्र व्यवस्थाविवरणम्]

**ताभ्य-ददाति**—[6] आदिष्टदक्षिणाभ्यः काममूर्ध्वमित्युक्त्वा विकल्पविधानात् ॥

[व्यवहितसूत्रविवरणप्रवृत्तिहेतुः]

दित्यवाडादीनां[7] विकल्पशङ्कया चाकृष्य सूत्र व्याख्यायते ।

**दित्यवाद्–डाद्यासु–मुष्करः ॥**

---

[1] आभ्य ऊ–घ [2] घ.—पुस्तके न दृश्यते [3] तास्वेतास्संख्यामिथो विकल्पन्ते । समुच्चये षडादिसंख्याविलयप्रसङ्गात् द्वाचत्वारिंशद्देया इति वक्तव्यत्वाच्च (रु). ता विकल्पन्ते–क [4] विकल्प्यन्ते–ख ग. [5] एकहायनप्रभृति आपञ्चहायनेभ्यो वयांसीति वक्ष्यति । यद्वयोऽवस्थाना पशूना वृद्धिमिच्छेत्तदवस्थेषु वयस्सु षडाद्या गावो देया इत्यर्थ (रु) [6] नादिष्टदक्षिणा हि [7] दीनामपि वि–ख. ग.

[पशुवृद्धिविशेषमिच्छतो दानकल्पः विकल्पे पक्षान्तरं च]

(भा) येषामेकहायनादीनामापञ्चहायनेभ्यो वृद्धिमिच्छति तस्य वयसः षट् द्वादश चतुर्विंशतिर्वा ददाति । अन्यैस्तु सूत्रकारै. सहादिष्टद-दक्षिणाभिरेतास्सख्या विकल्पन्ते न परस्परेणेति ॥

(सू) दित्यौ[1] ह्रीं दद्यादित्यवाहं च मुष्करम् ॥ १६ ॥ ॥ २१ ॥ १०७४ ॥

(सू) [2]वर्धमानां दक्षिणां ददाति ॥ १७ ॥ २२ ॥ ॥ १०७५ ॥

(भा) न वृद्धा दीयते दक्षिणा ॥

(सू) यद्यनाढ्योऽग्नीनादधीत काममेवैकां गां [3]दद्या-

---

(वृ) येषां पशूनामिति सूत्रस्यार्थः ;—

येषामेकहाय–ददाति—वाजपेये वयसोवयस इत्यत्र दक्षिणा-विधाने एकहायनादि[4]नियमदर्शनाच्च वयस्सख्यापेक्षास्वेकहायनप्रभृत्या-पञ्चहायनेभ्यो वयस्सु यद्वर्षाणां पुष्टिं भूयसीं [5] कामयेत तेषा तद्वयसा षडादिकल्पेन दानम् पशूनामपि वृद्ध्यर्थम् । न च पुष्टिं भूयसी॰ मित्यस्मिन्नपि पक्षे दित्यवाडपि नित्यः ॥

अन्यैस्तु सूत्रकारैः–स्परेणेति—बद्धम्–वर्णितम् ।

[न वृद्धादीयते इत्यंशस्सूत्रारूढः]

वर्धमाना दक्षिणामित्यस्यार्थ. ,—

न वृद्धा दीयते दक्षिणा—वृद्धिरहितायाः प्रतिषेधः ॥

---

1 द्विवर्षादित्यवाट् । मुष्कर —साण्ड । तौ च देयेषु वयस्स्वन्तर्भाव्याविल्यर्थ अधिकावेतौ नित्यौ च षडादिकल्पेष्विल्येके (ङ) 2 सर्वादक्षिणावर्धमानैव दातव्या, न क्षीयमाणा । 3 दद्यात्रगवा–क. 4 नियमात्–घ 5 भूयसीमित्यस्मिन् पक्षे दित्यवाडपि नित्य –ख. ग.

(सू) स्सा [1] गवां प्रत्याम्नायो भवतीति विज्ञायते ॥
॥ १८ ॥ २३ ॥ १०७६ ॥

[बहुगोदानाशक्तस्य प्रत्याम्नायः गोव्यतिरिक्तं न निवर्तते]

(भा) अनाढ्यः—यस्य नास्ति दक्षिणासंपत्। काममेवेति वचनात् प्रकृतास्वनडुद्धेन्वादिष्वेका दीयतेऽन्या वा। सा च गवामेव स्थाने भवति, न रथादीनन्यजातीयान्निवर्तयति, नाप्यङ्गदक्षिणाः, अतुल्यकालत्वात् ॥

(सू) [2] सिद्धमिष्टिस्संतिष्ठते ॥ १९ ॥ २४ ॥ १०७७ ॥

विंशी खण्डिका.

---

[सिद्धमिष्टिरिति निर्देशस्थले ज्ञेयांशः]

(भा) सिद्धमिष्टिरिति यत्र वचनं तत्र कपालविमोचनान्ता संस्था; न शय्वन्ताद्याः खण्डसंस्थाः ॥

---

[काममेवेत्यतदाशयः]

(वृ) अनाढ्यः–ऽन्यावा—काममेवेति[3]च्छाया प्रकृता वा अप्रकृता वेत्यनियमः ॥

[गोः दक्षिणान्तरानिवर्तकत्वहेतुविवरणम्]

सा च गवामेव–कालत्वात्—कार्य[4]भेदात् ॥

[भाष्यदर्शितज्ञेयांशे हेतुः]

सिद्धमिष्टिरिति—संस्था—[5]यथासिद्धाया इष्टेः संस्थावचनात् ॥

---

[1] गवा प्रत्याम्नाय इति वचनात् गोरन्यत्सर्वं दातव्यम्। अङ्गदक्षिणाश्च न निवर्तन्ते। असमानकालत्वादसमानार्थत्वाच्च। बोधायनेन तत्रानुग्रह उक्त प्रसिद्धा अभ्याधेयदक्षिणाददाति ताश्चेन्नाधिगच्छेत् वासांस्येतावन्ति मन्थान्वौदनान्वैतावतो दद्यादिति (रु) [2] यथा प्रकृतौ सिद्ध तथा समाप्यत इत्यर्थ. (रु) [3] तीच्छया–घ. [4] कालभेदत्वात्–ख ग. [5] तथासि–ख. ग

(सू) [1] पवमानहवींषि सद्यो निर्वपेत् ॥ १ ॥ २५ ॥
॥ १०७८ ॥

(भा) सद्यः—समानेऽहनि यस्मिन्नेवाधानम् ॥

[पवमानहविषां कालान्तरम् तत्र च पक्षान्तरम्]

(सू) [2] द्वादशाहे द्व्यहे त्र्यहे चतुरहेऽर्धमासे मास्यृतौ
संवत्सरे वा ॥ २ ॥ २६ ॥ १०७९ ॥

(भा) आधानाद्द्वादश एवाहनि पवमानहवींषि । एवमुत्तरत्रापि । द्वादश्यां [3] पुरस्तादादध्या[4]दित्यन्यत्र पुरस्ताद्वचनात् । केचित् द्वादशाहे गते इति सर्वत्राध्याहरन्ति । तेषां तु त्रयोदशेऽहनि ॥

(सू) [5] न सोमेन यक्ष्यमाणः पुरा संवत्सरान्निर्वपेत्
॥ ३ ॥ २७ ॥ १०८० ॥

[क्वचिद्वत्सरान्ते प्रवमानहवींषि]

(भा) सोमेन यक्ष्यमाण. सर्वकर्मभ्यः पूर्वम् ॥

---

(वृ) सद्यस्स–वाधानम्—तस्मिन्नेवाहनि पवमानहवींषि ॥
एवमुत्तरत्रापि—द्व्यहादौ ।
द्वादश्यां–द्वचनात् केचित्–हनि—द्व्यहे चतुरहादौ वा ॥
सोमेन–भ्यः पूर्वम्—सोमाधान कुर्वन् ॥

---

[1] पवमानहवींषि नाम त्रीण्यनन्तर वक्ष्यमाणानि तानि सद्य. समानेऽहनि –यस्मिन्नाधान तस्मिन्नेव निर्वपेत (रु) [2] सर्वत्रातीत इति शेष [3] पुरस्तादित्यत्र–ख [4] दित्युक्त–ङ [5] सवत्सरकल्प एवासोमपूर्वे आधान इत्यर्थ (रु)

(सू) निर्वपेदित्येके ॥ ४ ॥ २८ ॥ १०८१ ॥

(सू) [1] यदि निर्वपेदग्नये पवमानायाग्नये पावकायाग्नये शुचय इति तिस्र आज्याहुतीस्सोमदेवताभ्यो वा हुत्वा निर्वपेत् ॥ ५ ॥ २९ ॥ १०८२ ॥

[सोमदेवताभ्य आहुतिद्रव्यं विशेषाश्च]

(भा) यदाऽपि सोमदेवताभ्यस्तदा आज्याहुती. । आग्नेयेन समानतन्त्रेष्वपि हुत्वैवारम्भः । अग्नये पवमानाय स्वाहा । एव पावकशुच्योः । सोमदेवताभ्योऽपि तिसृभ्य एव । यासामावाहनम् । इन्द्राय वसुमते स्वाहेति । एव मुत्तरे ॥

(सू) समानतन्त्राणि नानातन्त्राणि वाऽऽग्नेयेन समानतन्त्राणि ॥ ६ ॥ ३० ॥ १०८३ ॥

(सू) यं कामयेत [2] पापीयान् स्यादिति तस्यैकैकमेतानि हवीꣳषि निर्वपेत् । न वसीयान् न पापीयानिति तस्य साकं सर्वाणि । यं कामयेतोत्तरं वसीयान् श्रेयान् स्यादिति तस्याग्नये पवमानाय

---

(वृ) यदापि–हुतीरिति—सोमदेवताभ्य इत्यत्रापि तिस्र आज्याहुतीरिति [3] सम्बन्ध· ॥

[तिसृभ्य एवेत्यत्र हेतु ]

आग्नेयेन–मावाहनम्–सवनत्रय[4]व्यापि देवतात्रयस्य युक्तत्वात् ॥

---

[1] यदापि सोमदेवताभ्य तदाऽपि तिस्र एवाज्याहुतयास्तिसृभ्यस्सवनदेवताभ्यो होतव्या तासामेवावाहनात् (रु) [2] अत्र पूर्वयो कल्पयो निन्दा उत्तर विधिप्रशसार्थो, न तु पूर्वनिवृत्त्यर्थौ तयोरप्यनन्तरमेव विहितत्वात् । अतस्त्रयोमी कल्पा विकल्पन्ते (रु) [3] त्यनुषङ्ग -घ. [4] व्याप्तदे

(सू) **निरुप्य पावकशुचिभ्यां [1] समानबर्हिषी निर्वपेत् ॥ ॥७॥ ३१ ॥ १०८४ ॥**

(सू) **[2] शतमानं हिरण्यं दक्षिणा ॥ ८ ॥ ३२ ॥ ॥ १०८५ ॥**

[भिन्नाभिन्नतन्त्रत्वे दक्षिणाविवेक]

(भा) समानतन्त्राणि त्रीण्यपि । [3] तदा वाऽविभक्त शतमान दीयते ।

[नानातन्त्रमानम्]

नाना[4]तन्त्राणि, एक निरुप्योत्तरे समस्येदिति वचनात् । तदा विभागेन शतमानदानम् ॥

[पवमानदक्षिणाव्यवस्था]

आग्नेयेन [5] समानतन्त्रेषु न पवमानदक्षिणाः । अग्न्याधेयदक्षिणाभिरर्थस्य सिद्धत्वात् । पापीयान् स्यादिति [6] एकैक नानातन्त्रप्रतिषेध. ॥

---

(वृ) **समानतन्त्राणि त्रीण्यपि**—पवमानानि ।

[भिन्नतन्त्रत्वाश्रयः]

**नानात – वचनात्** — इष्टिद्वयरूपनानातन्त्रत्व पवमानहविषामेव ॥

[भाष्योक्तप्रतिषेधोपपत्तिः]

**पापीयान्–प्रतिषेधः**—पवमानहविषाम् । अत एव नानातन्त्राणि वेत्यत्र एक निरुप्य उत्तरे समस्येदित्यथमेव पक्षः ॥

---

1 समानबर्हिषी–समानतन्त्रे (रु) 2 शत मानानि यस्य तच्छतमानम् (रु) 3 तदाचाविभक्त–ख घ तथाचा विभक्तम्–ग 4 चाणि च–घ 5 आग्नेयस्य पवमानतन्त्रेण–ङ आग्नेयस्य नानातन्त्रे न पवमानदक्षिणा –ङ आग्नेयसमानतन्त्रेण पवमानतन्त्रेण पवमानदक्षिणा –क 6 तन्त्रेषु

(सू.) [1] पूर्वयोर्हविषोर्द्वे त्रिंशन्माने उत्तरस्मिंश्चत्वारिंशन्मानम् ॥ ९ ॥ ३३ ॥ १०८६ ॥

[नानातन्त्रे शतमानदक्षिणाविवेकः]

(भा) [2] उत्तरौ नित्यौ न काम्यौ । नानातन्त्रेषु पूर्वयोर्हविषोर्विभागेन शतमानदानम् ॥

(सू.) येन हिरण्यं [3] मीयते तेन मीत्वा ददाति ॥
॥ १० ॥ ३४ ॥ १०८७ ॥

---

[पक्षयोः स्वरूपं]

(वृ) उत्तरौ–नित्यौ—न वसीयान् न पापीयानिति समानतन्त्राणीत्युक्तः पक्षः । य कामयेतोत्तर वसीयानित्ययमपि । एक निरुप्योत्तरे समस्येदित्येकः पक्षः ॥

[कामनाश्रवणेऽप्यकाम्यता]

न कम्याविति—य कामयेतोत्तर वसीयानित्यपि [4] नित्ये कामः न केवलकाम इत्यर्थ ॥

[शतमानदक्षिणाविवेकविवरणम् ]

नानातन्त्रेषु–दानम्—पूर्वयोर्भिन्नतन्त्रत्वात् । [5] प्रथम पृथक त्रिंशन्मानयोर्दानम् । द्वितीया[6]यामपीष्टौ भेदेन दानम् उत्तरस्य चत्वारिंशन्मानत्वात् । समानतन्त्रेषु पूर्वयोर्युगपद्दानं उत्तरस्य भेदेन सङ्ख्याभेदात् ॥

---

[1] एकैकस्मानानातन्त्र—क ख [2] यदा नानातन्त्राणि तदैवं विभज्य ददाति । दाप्याग्नेयेन समानतन्त्राणि तदापि समुच्चयश्शतमानस्य । तत्र च लिङ्गं वासः श्यामाके मुष्करो दाक्षिणेति (रु) [3] उत्तरेण—ञ [4] न कामादिति—घ नित्ये काम —ख ग. [5] पृथक्त्रिं—घ. [6] यायामिष्टौ—घ.

(भा) आद्यमान [1] गुञ्जिका । केचिद्वटबीजम् ॥

(सू) सिद्धमिष्टिस्सन्तिष्ठते ॥ ११ ॥ ३५ ॥ १०८८ ॥

एकविंशी खण्डिका ॥

इति श्रीमदापस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्ये

पञ्चमे प्रश्ने षष्ठ पटल

---

(सू) ऐन्द्राग्नमेकादश[2]कपाल[3]मनुनिर्वपत्या[4]दित्यं च घृते चरुम् ॥ १ ॥ १ ॥ १०८९ ॥

[ऐन्द्राग्ननिर्वापकालः]

(भा) यस्मिन्नहनि पवमानहवींषि तस्मिन्नेवाहन्यैन्द्राग्नादीनि ।

---

[सूत्रे आद्यमानरूपानुपदेशस्योपपत्तिः]

(वृ) आद्य–बीजम्—येन हिरण्यं मिमीत इति तयोरन्यतरस्य प्रदर्श[5]नम् ॥

इति आपस्तम्बश्रौतसूत्रधूर्तस्वामिभाष्यवृत्तौ रामाग्निचित्कृतया

पञ्चमे प्रश्ने षष्ठ पटल ॥

---

[सद्यस्कालत्वे हेतुः]

यस्मिन्नहनि–ग्नादीनि—अनुविसर्पेदिति विधानात् कालान्तरा[6]विधानाच्च ।

---

[1] येन धनमानादिना हिरण्य मिमते वणिज परिच्छिन्दन्ति तेन मीत्वा ददाति । एतेन मानपरिमाणमपि वणिक्प्रसिद्ध्यनुसारीति दर्शित भवति (रु). गुञ्जम्.
[2] कपाल निर्वप–ख [3] संस्थाप्य पवमानहवींषि तस्मिन्नेवाहनि तस्मिन्नेवाग्नावनु निर्वपेत्. [4] आदित्यमित्यदितेस्तद्धितो नादित्यात् । इय वा अदितिरिति वाक्यशेषात् (रु). [5] र्शनात् [2]–घ [6] रविधानाच्च–ख ग.

[उत्कर्षपक्षे व्यवस्था तत्र हेतुश्च]

(भा) इष्ट्युत्कर्षपक्षे फलवतामग्निहोत्रादीनामुत्कर्षः। असमाप्तत्वादग्न्याधेयस्य।

[इदानीमाग्रयणं उपदेशपक्षः पक्षान्तरं च]

आग्रयण चतुश्शरावो लौकिके [1] औपासनशेषे वा। उपदेश· कुर्वन्त्यग्निहोत्रादीनि बोधायनमतात्॥

---

[उत्कर्षणीयानां रूपम्]

(वृ) **इष्ट्युत्कर्षे—त्कर्षः**—स्वतन्त्राधिकाराणा न काम्यानामेव।

[अग्न्याधेयासमाप्तिविवरणम्। मतभेदः विशेषश्च]

**असमाप्तत्वादग्न्याधेयस्य**—इष्टीनामाधानाङ्गत्वात्। तथा च भाष्यकार· पुनराधाने 'आधानाङ्गमिष्टय उभयत्रेति' वक्ष्यति। ब्राह्मणे च तनुवो वावैता अग्न्याधेयस्येति वचनादाधानैककार्यकरत्वम्। तथा योऽग्निमाधत्ते ऐन्द्राग्नमेकादशकपालमनुनिर्वपेदित्यादिवचनादैन्द्राग्नादेरप्यङ्गत्वम्। त[2]स्मात् साङ्गाधानपरिसमाप्तावाहवनीयादिसिद्धेरिष्टकानां द्वादशाहादिषूत्कर्षपक्षे आहवनीया[3]दिषु साध्याना [4] साधिकाराणां अग्निहोत्रदर्शपूर्णमासादीनामुत्कर्ष·। मीमासकमतेन तु अनङ्गत्वपक्षेऽपि अग्न्युत्पत्त्येककार्यकरत्वाभिप्रायेणासमाप्तिवचनम्। इष्ट्युत्क[5]र्षविधिबलादेव होमाकरणेऽप्यग्निनाशाभावादग्निरक्षणार्थमप्यग्निहोत्र न कर्तव्यम्। दैवात् द्वादशाहाद्युत्कर्षेऽप्यसमाप्तत्वाविशेषात् सर्वप्रायश्चित्तमेव॥

[बोधायनानुसारिण उपदेशपक्षस्योपपत्तिः]

**उपदेशः—त्रादीनि**—इष्टीना कृष्णाजिनदीक्षादिवत् उत्पन्नाग्निसंस्कारत्वात् आहिताग्नितया कर्मस्वधिकारात् कर्तव्यान्यग्निहोत्रादीनीति। अपि च आधा[6]नाङ्गतूष्णीकाग्निहोत्रविधिशेषे; यन्न जुहुयात् अग्नि· परा भवेदिति सामान्येनाग्निधारणहेतूनां कर्तव्य-

---

[1] इद क ङ.–पुस्तकयोर्न दृश्यते. [2] स्मादे सा–घ [3] दिसाध्याना–घ. [4] स्वाधिकाराणा–ख. ग. [5] त्कर्षबलादेव [6] नाङ्गम्–ख ग

(भा) केचित्पवमानहविषामुत्कर्षे ऐन्द्राग्नादीनि तदहरेव कुर्वन्ति। यजुरुत्पूतेन घृतेन श्रपणं चरोः। पवित्रवत्याज्ये कर्णानावपतीत्यस्य चरुषु दर्शनात् ॥

(सू) [1] सप्तदश सामिधेन्यः ॥ २ ॥ २ ॥ १०९० ॥

(सू) [2] चतुर्धाकरणकाले आदित्यं ब्रह्मणे परिहरति ॥ ॥ ३ ॥ ३ ॥ १०९१ ॥

[विनैव चतुर्धाकरणं प्रधानम्]

(भा) अचतुर्धाकृतो ब्रह्मणे दीयत आदित्यः ॥

(सू) तं चत्वार [3] आर्षेयाः प्राश्नन्ति ॥ ४ ॥ ४ ॥ ॥ १०९२ ॥

---

(वृ) त्वावगते। अत एव सोमाधाने दैवात् सोमारम्भोत्कर्षेऽपि अग्निहोत्राद्यनुष्ठानम् ॥

[पावमानोत्कर्षेऽपि सद्य एवैन्द्राग्न इति पक्षोपपत्तिः]

**केचित्–कुर्वन्ति**—योऽग्निमाधत्ते ऐन्द्राग्नमेकादशकपालमनुनिर्वपेदिति आधानानन्तरं निर्वाप्यत्वात्। द्वादशसु रात्रीष्वनुनिर्वपेदित्युत्कर्षस्य पवमानहविस्सान्निधौ विधानात् ऐन्द्राग्नादीनि तदहरेव [4] कर्तव्यानि ॥

[चतुर्धाकरणपरिहारप्रकारद्वयम्]

**अचतुर्धाकृतो ब्रह्मणे दीयत आदित्यः**—चतुर्धाकरणकाले आदित्यं ब्रह्मणे परिहरतीति चतुर्धाकरणप्रत्याम्नायतया परिहरणविधानात्। अथवा परिहृत्य चतुर्धाकरणं चतुर्णां प्राशने चतुर्धाकरणस्यावश्यकत्वात् परिहरणं न चतुर्धाकरणप्रत्याम्नायः क्रियारूपत्वाच्च [5] ॥

---

[1] आमावास्यं तन्त्रम्। अस्या ऐन्द्राग्नस्य मुख्यत्वात् चरुषु विशेषाश्च दर्शपूर्णमासयोरेव दर्शिता (रु) [2] चतुर्धाकरणकाले प्राप्ते आदित्यमविभक्तं ब्रह्मणे प्रयच्छति (रु). [3] तं ततो विभज्य भक्षयन्ति चत्वार इति वचनात् ब्रह्माप्यत्रैव भक्षयति न तु सङ्स्थिते (रु). [4] कुर्वन्ति–घ. '[5] च मन्त्रस्य' इत्यधिकम्–घ

[आर्षेयपदप्रयोजनम्]

(भा) पुनरार्षेयग्रहणात्त एव कर्तारो नियम्यन्ते । अन्यत्र तत्पुत्रादयोऽपि ॥

(सू) **प्राशितवद्भ्यस्समानं वरं ददाति । धेन्वनडुहोर्दानमेके समामनन्ति । सिद्धमिष्टिस्सान्तिष्ठते ॥**
॥ ५ ॥ ५ ॥ १०९३ ॥

[वरोऽयं दक्षिणात्मकः इष्टेः]

(भा) समानो वर एवेष्टिदक्षिणा ॥

[अत्र आमावास्यपौर्णमासतन्त्र व्यवस्था]

[1] ऐन्द्राग्नस्य मुख्यत्वादामावास्यतन्त्रम् । अन्यत्र तु पौर्णमासतन्त्रमेव ॥

---

[आर्षेयपदप्रयोजननिर्वाहद्वैविध्यम्]

(वृ) **पुनरार्षे—अन्यत्र**—प्राशनाशक्तौ । **तत्पुत्रादयोऽपि**—प्राश्नीयुः । अथवा त एव कर्तार इति देवभूतर्त्विग्ग्राहिणामपि आधानकर्तार एवेष्टिकर्तारो नियम्यन्ते ॥

[प्रयोगाङ्गत्वमिष्टिदक्षिणाकालिकत्वं च ब्रह्मौदनवरवैलक्षण्यमस्य वरस्य]

**समानो–क्षिणा**—प्राशितवद्भ्यस्समानमिति प्राशनसंबन्धावगमेऽपि दक्षिणायाः स्वभावतः प्रयोगाङ्गत्वात् इष्टिदक्षिणाकालत्वाच्च इष्टिदक्षिणैव न ब्रह्मौदनवरदानवत्प्राशनाङ्गत्वम् ॥

[अन्यत्र पौर्णमासतन्त्रतोपपत्तिः]

**अन्त्र–न्त्रमेव**—आग्नेयस्योभयकालसंबन्धेऽपि प्राथम्यादाग्नेय-

---

[1] सत्याषाढ सू. व्या. वैजयन्त्या तु पञ्चाना समानतन्त्रता मुख्यत्वभूयस्त्वाभ्या पौर्णमासतन्त्रत्व चाह.

(सू)   अग्नावैष्णवमेकादशकपालमनुनिर्वपत्यग्नीषोमीयमेकादशकपालं विष्णवे शिपिविष्टाय [1] त्र्युद्धौ घृते चरुम् ॥ ६ ॥ ६ ॥ १०९४ ॥

[आग्नावैष्णवादेर्दक्षिणा]

(भा) त्र्युद्धिः—त्रिकाण्डः। अस्या अन्वाहार्यो दक्षिणा ॥

(सू)   सिद्धमिष्टिस्संतिष्ठते ॥ ७ ॥ ७ ॥ १०९५ ॥

(सू) · [2] आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनस्समामनन्ति ॥ ८ ॥ ८ ॥ १०९६ ॥

[अनुनिर्वाप्य सर्वप्रत्याम्नायस्य कालादिः]

(भा)   आदित्यस्यापि त एव कालाः सद्य आद्य तत्स्थानापत्ते·। नास्य परिहरणम् पुनस्सामिधेनीविधानात्। याज्यानुवाक्याः—

(वृ) विकाराणां पौर्णमासतन्त्रत्वम्। अत आग्नेयस्य पवमानहविषां च आग्नेयविकाराणां पौर्णमासतन्त्रत्वम्। आग्नावैष्णवादीनामग्नीषोमीयविकारत्वात् पौर्णमासतन्त्रता ॥

[भाष्ये दक्षिणाप्रदर्शनहेतुः]

**अस्या अन्वाहार्यो दक्षिणा**—अन्यस्यानुक्तत्वात् ॥

[पूर्वोक्तादित्यचरुधर्मकत्वाभावः]

**आदित्यस्यापि–विधानात्**—पूर्वादित्यधर्मकत्वमस्य नास्ति सामिधेनीनां पुनरुपदेशेन परिसंख्यानात् ॥

---

1. त्रीणि पर्वाणि यस्यास्स्थाल्या सा त्र्युद्धि । सत्याषाढस्त्वेतामिष्टिं पूर्वेष्ट्या सहैकतन्त्रामुक्तवान्। क्रमस्तु हविषामन्योऽभिहित, यथाग्नीषोमीयमेकादशकपालमनुनिर्वपेदाग्नावैष्णवमेकादशकपालमादित्यैघृते चरु विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरु सप्तदशसामिधेन्य इति (रु)   2. पवमानहविर्भिरस्या कालो व्याख्यात तत्स्थानापत्ते । पूर्वादित्यधर्मास्तु न भवन्ति, सप्तदशसामिधेनीकत्वस्य पुनर्विधानात् (रु).

(भा) अग्निर्मूर्धा भुवो यज्ञस्येत्याग्नेयस्य। अग्न आयूंषि पवस इति षट् पवमानहविषाम्। इन्द्राग्नी रोचना श्नथद्वृत्रमित्यैन्द्राग्नस्य। अदितिर्न उरुष्यतु महिमूषु मातरमित्यादित्यस्य। अग्नाविष्णू अग्नीषोमा सवेद सा युवमेतानि प्रतत्ते अद्य, किमित्ते विष्णो इति शिपिविष्टस्य इति प्रधानहविषाम्। शेष प्रकृतिवत् हविष.॥

(सू) सिद्धमिष्टिस्संतिष्ठते ॥९॥९॥१०९७॥

[1] अग्निहोत्रमारप्स्यमानो दशहोतारं मनसाऽनुद्रुत्याहवनीये [2] सग्रहं हुत्वाऽथ सायमग्निहोत्रं जुहोति ॥१०॥१०॥१०९८॥

[अग्निहोत्रसंकल्पः कामनापक्षभेदादि]

(भा) अग्निहोत्रमारप्स्ये तेन यावज्जीवं होष्यामि जीर्णो वा विरमण करिष्य इति सङ्कल्प.। स्वर्गका(म) मनां मीमांसकाः (४-३-

---

[अग्निहोत्रसङ्कल्पप्रकारभेदमानम्]

(वृ) अग्निहोत्र–होष्यामीति—[3] बह्वृचब्राह्मणश्रुतेः।

[4] जीर्णो वा विरमणं करिष्ये इति—वाजसनेयिश्रुतेः।

[स्वर्गकामनाकार्यत्वे हेतुः]

स्वर्गकामं मीमांसकाः—अश्रुतफलत्वाद्विश्वजित्पितृयज्ञादिष्विव स्वर्गफलता॥

---

[1] एवमग्नयाधेय व्याख्यायानन्तर कालप्राप्तस्यारम्भप्रकारमाह (रु) [2] पवमानहविषामुत्कर्षेऽग्निहोत्रादेरप्युत्कर्ष·, अग्नयाधेयस्यापरिसमाप्तत्वात् सर्वेष्ट्यन्ते विधानाच्च। अतो यस्मिन्नहनि सेष्टिकमग्न्याधेयं सतिष्ठते तस्मिन्नहन्यग्निहोत्रकाल तस्मिन्नेवाश्वपदिकेऽग्नावध्वर्युणा दशहोतरि हुते सायमग्निहोत्र जुहोति यजमान। यथाचैतदेव तथोपरिष्टाद्व्यक्तीभविष्यति। सग्रहमिति आहवनीय इति च विस्पष्टार्थम् (रु) [3] बह्वृचश्रुतेः –घ [4] जीर्णो वा इति सङ्कल्प.–ख ग.

(भा) १५–१६) अबन्धनात्कामस्य न काम इत्युपदेशः। यत्रापि बन्धः तत्राप्यकामहतश्रुतस्य प्रतिषिध्यते फलम् ॥

[कामनायां उपदेशपक्षाशयविवरणम् ]

(वृ) **अबन्धना–पदेशः**–सूत्रकारेणाबन्धनात् न फलकल्पना ।

[फलश्रुतिसत्त्वेऽप्यधिकारिभेदेन तदविवक्षापि]

**यत्रापि–बन्धः**—सूत्रकारेण दर्शपूर्णमासादिषु ।

**तत्राप्यकाम–ध्यते फलमिति**–अस्यार्थ·—ज्ञानकर्मसमुच्च-यान्मोक्षसिद्धेः कर्मसु फलेच्छा न कर्तव्या । श्रोत्रियस्य चाकामहतस्येति कामिनो मोक्षाभावात् । स्वर्गादिश्रवणेऽपि मुमुक्षोस्तादिच्छयाऽनुष्ठान-मयुक्तम् । **आकामहतश्रुतस्य**—आकामहत इति श्रुतस्येत्यर्थः । व्यासमताच्च ‘कामात्मता खल्वपि न प्रशस्ता’ इति । भगवद्गीतासु च ‘सङ्ग त्यक्त्वा फल च’ इति बहुशो दर्शनात् ॥

[कर्मणां मोक्षविरोधित्ववादनिरासः]

ननु न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः नास्त्यकृत कृतेन इत्यादिभि· बहुश्रुतिस्मृतिभि कर्मणां मोक्षसाधनत्व प्रतिषिध्यते । तथा तमेव विदित्वाऽतिमृत्युमेति ब्रह्म वेद ब्रह्मैव भवति तमेवं विद्वानमृत इह भवति इत्यादिभिः ज्ञान[1]साधनत्वा-वगमात् । तथा च ‘तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन’ ‘अविद्यया मृत्यु [2]तीर्त्वा विद्ययाऽमृतमश्नुते इत्यादिभिः कर्मणो विद्यायाश्च फलभेदोऽवगम्यते । अतो न समुच्चिते ज्ञानकर्मणी मोक्षस्य साधनामिति, नैतत्सारम् ; श्रुतिस्मृतिनियन्त्राणां महतीमसहमानानां स्वैराचारसमुत्सुकाना वैदिक-गर्हाभयात् वेदवाक्यान्ययथातथमुदाहरतां परलोकभयरहितानामिदं

---

[1] नस्य साधनत्वमवगम्यते–ख ग [2] नीत्वा–ख. ग.

[विद्युदसिनिषेधतद्धेतू]

(मा) नापामुपस्पर्शनम् ;

(वृ) मतम् । तथा हि—यत्तावत् कर्मणो मोक्षसाधनत्वप्रतिषेधकानि वाक्यानि ; तानि केवलकर्मविषयाणि । विद्यासहितस्यैव वीर्यवत्तरत्वात् । यदेव विद्यया करोति तदेव वीर्यवत्तरमिति श्रुते. । यज्ञेन यज्ञमयजन्त देवाः—ते ह नाक महिमानस्सचन्ते । एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषतीत्यादिभिश्च कर्मसाधनत्वावगतेः । 'हिरण्मयश्शकुनिर्ब्रह्मनाम येन सूर्यस्तपति तेजसेद्ध· पिता पुत्रेण पितृमान् योनि योनौ नावेदाविन्मनुते त बृहन्तम् सर्वानुभुमात्मान॰सपराये इति ब्रह्मप्रशस्य ब्रह्मणस्सायुज्य सलोकता यन्ति य एतदुपयन्ति ओम्' इति विश्वसृजामयनस्य ब्रह्मप्राप्तिसाधनत्वदर्शनाच्च । तस्यैवात्मा पदवित्त विदित्वा न कर्मणा लिप्यते पापकेन इति च । प्रत्युत विद्याया [1] भगवतोक्ताविद्याकार्यत्व गम्यते । अतो 'यथा वा रथोऽन्यतरेण चक्रेण न वर्तते यथा हवा पक्षी पक्षेणैकेन एव विद्याकर्मणी पुरुषस्य' इति ताण्ड्यायनिश्रुत्या परस्परव्याघातपरिहाराय समुच्चिते एव विद्याकर्मणी । स्मृतिरपि—

इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥

इति । तथा च भगवतोक्तम् मतान्तराण्युपन्यस्य—

कर्तव्यानीति मे पार्थ निश्चित मतमुत्तमम् ॥

इति । [2]अयमर्थः तर्कैरपि सतां प्रापितोऽस्माभिस्तत्रतत्रेति । अलं विस्तरेण ॥

**सकल्प कृत्वा —**

**नापामुपस्पर्शनम्—यजमानस्य ।**

---

[1] भवतो—ख. ग [2] अयमर्थ इत्यादि—तत्रेति इत्यश. घ.– कोशे नोपलभ्यते.

(भा) होष्यन्नप उपस्पृशेदिति होमे पुनर्विधानात्। अन्येषु तु यज्ञक्रतुषु यक्ष्यमाणो वेष्ट्वा वेत्याद्यन्तयोः ॥

[आधानकल्पभेदेन दशहोतृहोमादावग्निः उपदेशपक्षश्च]

तस्मिन्नेवाश्वपादिके दशहोता सग्रहो मनसा हूयते अमावास्याधाने नक्षत्राधाने[1] च यत्र सभवोऽजस्राणाम्। [2] सोमाधानेऽप्यमावास्यायां कृते यत्र नाजस्राः पूर्यन्ते तत्र तस्मिन्नेवाश्वपदिके दशहोता अग्निहोत्रहोमश्च। उपदेशो मनसा होता ग्रह उपाशु ॥

---

(वृ) होष्यन्न–नादिति—यक्ष्यमाणो वेति कर्मादौ प्राप्तस्य सूत्रकारेणोत्कृष्य विधानात् नारम्भेऽपामुपस्पर्शनम् ॥

[नक्षत्राधाने दशहोतृहोमे विशेषतद्धेतू]

नक्षत्रा–स्राणामिति—नक्षत्राधाने पौर्णमास्या' प्राक्द्वादशरात्रसभवेऽजस्रधारणे प्रणयनासभवात् तस्मिन्नेवाश्वपदिके दशहोता ॥

[सोमाधानेऽप्याश्वपदिक एव दशहोत्रग्निहोत्रहोमोपपत्तिः]

सोमाधाने – होत्रश्चेति–अस्यार्थः — सोमाधानेऽप्याधानस्य सोमाङ्गत्वाभावात् स्वतन्त्रकालत्वात् कालापेक्षायां ऋतुनक्षत्रानादरेऽपि [3] पर्वकालानादरविधानाभावात् नान्तरीयकत्वात्पर्वकालसबन्धस्य अमावास्याया क्रियमाणे सोमाधाने अजस्रधारणप्राप्तेः समाप्तेऽपि सोमे यावद्द्वादशरात्रमजस्रधारणायोदवसानीयार्थं पृथक्समारोप्य मथित आहवनीये दशहोता अग्निहोत्रहोमश्च ॥

[उपदेशपक्षाशय ]

उपदेशो–उपांशुः—दशहोतार मनसानुद्रुत्येति होतृमात्रस्य मानसत्वविधानात् ग्रहस्य वाक्यान्तरविहितत्वात् याजुर्वेदिकोपांशुत्वमेवेति ॥

---

1 नेन–क 2 सोमयागे 3 पर्वानादर

[दशहोतृग्रहहोमयोः पक्षान्तरम्]

(भा) अन्ये[1] तु मनसा होतॄनुक्त्वा पुनर्होतॄणां ग्रहणां चोपांशुहोम कुर्वन्ति ॥

(सू) व्याहृतीभि[2]रुपसादयेत् ॥११॥११॥१०९९॥

[अग्निहोत्रे हविरासादनमन्त्रेण नित्येन विप्रतिषेधपरिहारः]

(भा) उपप्रेतप्रत्याम्नायो व्याहृतीभिरुपसादनं सायहोम एव ॥

(सू) [3]संवत्सरे पर्यागत एताभिरेवोपसादयेत् ॥
॥१२॥१२॥११००॥

[संवत्सरान्तेऽप्येवम् अत्रोपदेशपक्षः]

(भा) सवत्सरे पूर्णेऽपि साय होम एव। उपदेशो होमद्वयेऽपि।

---

[अन्येतुपक्षस्याशयः]

(वृ) अन्येतु—कुर्वन्ति—दशहोतार मनसाऽनुद्रुत्येति पूर्वकालावगतेः पुनः सग्रह हुत्वेति ग्रहसहितस्य होतुर्होमे विनियोगात् पश्चा-

[अथ सायमित्यादिसूत्रभागाशयः]

त्कृत्स्नस्योपांशुत्वमिति। अथ सायमग्निहोत्रमिति दशहोतुरूर्ध्वं साग्नाग्निहोत्रविधानात् अहवनीयभेद ॥

[समावेशोपपादकन्यायः]

व्याहृती—येत् —अन्यतरबाधेनाऽपि विनियोगोपपत्तेः ॥

[उपदेशपक्षाभिमतहेतुः]

संवत्सरे—द्वयेऽपि—उभयोरेककार्यत्वात्।

---

1 अन्ये मनसा-घ 2 तस्मिन् सायमग्निहोत्रे व्याहृतीभिर्हविरुपसादयेत् नित्यस्तूपसादनमन्त्रो निवर्तते (रु). 3 तत आरभ्य संवत्सरेऽतीते यदनन्तरं सायमग्निहोत्रहोम तत्राप्येवमुपसादयेत्, अथाग्नीनाहितवतोऽग्न्याधेयानन्तरभाविद्वादशाहसाध्य व्रतमाह (रु).

[अजस्रेषु धारणादिविशेषाः]

(सू) द्वादशाहमजस्रेष्वग्निषु यजमानस्स्वयमग्निहोत्रं जुहुयादप्रवसन्नहतं वासो बिभर्ति ॥ १३ ॥ १३ ॥ ॥ ११०१ ॥

द्वाविंशी खण्डिका ॥

---

(भा) [1]अजस्रा नित्यधारणा आश्वलायनस्य । आधाना[2]द्द्वादशरात्रमजस्राः सर्वत्र नाजस्रेषु धृष्ट्यादानाभिमन्त्रणबोधनादीनि विहरणार्थत्वात् ।

[स्वयं शब्दविवक्षितार्थे ]

यजमान[3]स्स्वयमितिवचनादेधोदकादीन्यपि स्वयमेवाहरति अन्यत्र

[अहतवासोभरणावसरः)

वसतिः प्रवासः । हुत्वा नान्यत्र कुर्याद्वसतिम् । अहतम्—अनिवसितम् । तद्धोमे बिभर्ति ॥

(सू) [4]यां प्रथमामग्निहोत्राय दोग्धि तां दक्षिणां ददाति ॥ १ ॥ १ ॥ ११०२ ॥

---

[स्वयं शब्दतस्तदर्थलाभप्रकारः]

(वृ) यजमान—हरति—यजमान इत्येतावता सिद्धेऽपि स्वय वचनात् ।

---

[1] अजस्रस्य धारणा—ङ [2] नादिद्वादश—ख. ग [3] नश्च स्वय—घ.

[4] आजस्रेषु धार्यमाणेष्वग्निषु यजमानस्स्वय जुहोति नान्य । कल्पान्तरेषु तूक्त अन्यो वा जुहुयात् स्वय वा त्रयोदशी जुहुयादिति । तथा आज्येनेति क्वचित् क्षीरेणेति क्वचित् । अप्रवसन् ग्रामान्तरे- रात्रिमवसन् । अहत—अकारुहतम् अनुपयुक्त वा । दक्षिणा ददाति—व्रतान्ते व्रतदक्षिणा ददाति यस्मै दातुमिच्छति । व्रतस्थ तु द्वादशाहाशक्तौ अनुकल्प उक्त कात्यायनेन ,—यथा क्षीरहोम्यग्निमुपशयीत द्वादशरात्र षड्रात्र त्रिरात्रमन्तत इति । तत्र अजेस्रषु जुहुयादिति होमानुवादेन अजस्रविधि होमस्य अन्यतस्सिद्धत्वात् । तथा आधानाद्द्वादशरात्रमजस्रा इत्येव आश्वलायन तेन सोमपूर्वाधानेऽपि आधानादारभ्य सह सोमदिवसैः द्वादशाहेन अजस्रापवर्ग होमस्तु सोमात्परेषु यावत्संभवं क्रियत इति सिद्धं भवति । भरद्वाजश्चाह—सोमाधाने नाजस्रान् कुर्यात् इति (रु)

[सूत्रे अग्निहोत्रपदार्थः गोदानसंप्रदानं च]

(भा) [1]या प्रथमा दुह्यतेऽग्निहोत्रहोमार्थं सा दीयते। यो[2] होमं करिष्यति ॥

(सू) [3]अथैकेषाम्—[4]अग्नीनाधाय हस्ताववनिज्य संवत्सरमग्निहोत्रं हुत्वाऽथ दर्शपूर्णमासावारभते। ताभ्यां संवत्सरमिष्ट्वा सोमेन पशुना वा [5]यजते तत ऊर्ध्वमन्यानि कर्माणि कुरुते ॥२॥२॥११०३॥

[हस्तावनेजनेसमन्त्रकामन्त्रकपक्षौ]

(भा) हस्ताववनिज्य तूष्णीम्; केचि[6]द्व्रियुदासिना।

---

(वृ) अग्निहोत्रहोमार्थम्—[7]प्रथमाग्निहोत्रहोमार्थम्।

यो होमं करिष्यति—अजस्रोत्सर्गोत्तरकाल यो होमं करिष्याते ब्रह्मचारी क्षीरहोता वा तस्मै ददाति ॥

[हस्तावनेजनेभाष्यदर्शितपक्षद्वयोपपत्तिः]

हस्ताववनिज्य तूष्णीमिति—अथैकेषामित्यस्मिन् पक्षे प्रयोगारम्भत्वे[8]नानुपदेशात् मन्त्रानुपदेशाच्च ॥

केचिद्व्रियुदसिना[9]—कर्माङ्गत्वेन प्राप्तस्य सर्वत्राग्निहोत्रे विधानादिति ॥

---

1 यथा—ग. 2 यस्मा इच्छतीति रुद्रदत्त 3 दर्शपूर्णमासारम्भ विधास्यन् तत्रैवावसरे शाखान्तरीयेकौचित् कर्मणामारम्भप्रकारविकल्पौ दर्शयति 4 आधानानन्तर तूष्णी हस्ताववनेनेक्ति तावत् यजमान ततो यथोक्तेन-विधिना अग्निहोत्रमारभ्य संवत्सरमग्निहोत्रमेव जुहोति न दर्शपूर्णमासावारभते। ततः पूर्णे सवत्सरे तावारभ्य ताभ्यामेव सवत्सर यजेत नान्येष्टि पश्वादिना। अग्निहोत्र तु क्रियत एव प्रथमत एव। प्रारब्धस्याविच्छेद्यत्वात्। आग्रयणमपि अविरुद्धैः अनुकल्पै उभयस्मिन् सवत्सरे क्रियते। तत तृतीये संवत्सरे अग्निष्टोमेन निरूढपशुबन्धेन वा यजेत। तत परस्तात् यथोपपादमन्यानि नित्यनैमित्तिककाम्यानि कर्माणि कुरुत इत्यय एकशाखानुगत. पक्ष (रु). 5 यजेत—ख 6 द्वियुदसिति —ग द्वियुदसिनाऽऽहु —क. 7 इदं विवरणं ख. ग —पुस्तकयोर्न दृश्यते. 8 त्वेनानुपदेशाच्च—ख. ग. 9 दसिन—ख. ग.

[आधानं संवत्सरेऽकार्यं कार्यं च कर्म]

(भा) [1]अग्निहोत्रमेव संवत्सर नान्यत्फल[2]वदिति । पूर्वं प्रवृत्तत्वात्पिण्डपितृयज्ञः क्रियते । आग्रयण स्तम्बभक्षणेन [3]यवाग्वा वा । दर्शपूर्णमासौ नवैः ॥

(सू.) **त्रयोदशरात्रमहतवासा यजमानः स्वयमग्निहोत्रं जुहुयात्प्रवसन्नेव सोमेन पशुना वेष्ट्वाग्नीनुत्सृजति**

---

[आधानसंवत्सरे अग्निहोत्रान्यकतिपयाभ्यनुज्ञाहेतवः]

(वृ) **अग्निहो–त्फलवदिति** — [4]नित्याधिकारस्यापि प्रदर्शनम् नैमित्तिक तु कर्तव्यमेव ॥

**पूर्वं–क्रियते**—अनाहिताग्नेरपि कर्तव्यत्वात् । सवत्सरमग्निहोत्रमित्यादे कर्मणां क्रमेण प्रवृत्त्यर्थत्वात् ॥

**आग्रयणं–ग्वावा**—व्रीहिस्तम्ब यवस्तम्ब वेत्यादि प्रयोग [5]आग्रयणस्य । तस्यापि पूर्वं प्रवृत्तत्वात् स्तम्बभक्षणात्मकश्रौतप्रयोगसभवात् । ससर्गेष्ट्यादिनां नैमित्तिकानां पूर्णाहुति ॥

---

[1] अग्निहोत्रहोम संव–ग [2] नान्यत्फलादिति–ख. ग I. त्फलवदग्नियदिति [2]–क II ग. [3] पयसायवाग्वा वा–क. [4] अथापर दर्शयति, आधायाग्नीन् अग्निहोत्रमारभ्य द्वादशाहव्रतविधिना त्रयोदशरात्रमग्निहोत्र हुत्वा अनन्तरमग्नयाधेयिकेष्वेवाग्निष्टोमेन निरूढ पशुबन्धेन वेष्ट्वा द्वादशरात्रमजस्रेषु आज्येन स्वयमाग्निहोत्र जुहोति अहत वासो वस्ते काममन्यो जुहुयाद्व्रतचारीत्वेव स्यात्स्वय त्रेयादशी जुहोति या प्रथमामग्निहोत्राय दुहन्ति साग्निहोत्रस्य दक्षिणेति हिरण्यकेशिसूत्रे । यथा हि शाकटिक अनडुह सूयवसान् सुभक्षितघासान् कृत्वा प्राज्यात्—वहनाय प्रेरयेत् तथाऽय यजमानोऽप्यग्नीन् प्रथममेव सोमेन पशुना वा सुतृप्तान् कृत्वा हविर्वहनाय प्रेरयति । तस्मात् प्रथममेवं कृत्वा ततो यथाकालमिष्टिपशुसोमैर्यजेतेत्यर्थ । (रु) [4]प्रदर्शनस्यापि प्रदर्शन नित्याधिकारम्–ख ग. [5]आग्रयण तस्यापि

(सू) यथा सुयवसान् कृत्वा प्राज्यात्ताद्दक्तदिति शाट्या-
यनिब्राह्मणं भवति ॥ ३॥ ३ ॥ ११०४ ॥

[त्रयोदशरात्रादुत्तरं कर्म तत्राग्नि· अग्न्युत्सर्गे मतिभेदश्च]

(भा) उत्त[1]रस्य सोमस्य [2]पशोर्वा नित्यस्यैव प्रवृत्ति । ततः फलवतामाग्रयणादीनाम् । चतुर्दशेऽहनि सोम. पशुर्वा तेष्वेवाजस्राग्निषु । अजस्रोत्सर्गार्थ[3]त्वाच्च ॥

---

[दर्शपूर्णमासवत्सरेऽप्यग्निहोत्रमस्त्येव]

(वृ) ताभ्या सवत्सरमित्यस्मिन् पक्षे कर्मान्तराभावात् [4]अग्निगुप्त्यर्थाग्निहोत्र तु कर्तव्यमेव ॥

[आधानात्परं शाट्यायनिपक्षे नित्यस्यैवेत्यवधारणहेतु.]

उत्तरस्य–प्रवृत्तिः—नित्योपदेशप्रकरणत्वात् अवश्यकर्तव्यत्वाच्च ॥

[फलवतां प्रवृत्तिपदार्थः]

ततः फल–दीनाम्—यथाकाम प्रयोग· ।

[अत्र सोमपशूशाट्यायनिपक्षे]

चतुर्दशे–ग्निषु—त्रयोदशरात्रमहतवासा इत्यस्मिन् पक्षे अत्रैवेत्यजस्राग्निषु ॥

[उत्सर्गार्थत्वफलम्]

अजस्रोत्सर्गार्थत्वाच्च—इष्ट्वाग्नीनुत्सृजतीति । अतस्सोमपश्वो-[5]र्विकृतित्वम् ॥

---

[1] तरत्र–घ ङ. I तरत्तरं–ख ग II [2] पशोर्वामित्यस्यैव–ख ग I पशो नित्यस्यैव ङ. II [3] त्वात्–घ. [4] गुप्त्यर्थाग्नि–घ [5] र्विकल्पत्वम् .

(भा) सुयवसान्—यवसेन सुप्रीतान् । [1]यथाऽऽज्यात् कालयेत् कृषिसिद्धये बलीवर्दान् एवमेवाग्नीन् सुप्रीतान् हव्यवाहनाय कालयतीति लिङ्गात् नात्यन्तत्याग· । पुनश्च नित्यस्सोम· पशुर्वा । उपदेशस्त्याग· आत्यन्तिक इति ॥

प्रातर्होम [2]हुत्वाऽजस्रोत्सर्गः ॥

---

[सूयवसानित्यादिदृष्टान्तस्य प्रकृतोपयोगः]

(वृ) सूयवसान्–नात्यन्तत्यागः—भक्षणेन [3]प्रीतबलीवर्दप्रस्थापन यथा कर्षणार्थं एवमजस्रहोमेन सुप्रीताग्निना त्यागात् कर्मान्तराणि पुनः कर्तव्यानि , तदाह—

[नित्याधिकाराग्निहोत्रनिवृत्तिहेतुः रक्षार्थस्यानिवृत्तिः]

पुनश्च नित्यस्सोमः पशुर्वा—कर्तव्यः, आधान कृत्वा पूर्वाभ्यां नित्याधिकारासिद्धेः अग्निहोत्रकार्यस्य त्रयोदशरात्रहोमेनैव सिद्धत्वात् नाग्निहोत्रहोमः । पुनश्च नित्यस्सोम· पशुर्वेति द्वयोर्नित्ययोरुपादानात् [4]नित्याधिकाराग्निहोत्रहोमनिवृत्ति· । अग्निगुप्त्यर्थमग्निहोत्र कर्तव्यमेवाग्निहोत्रे कृते ॥

[उपदेशपक्षे दृष्टान्तानुगुण्यम्]

उपदेश–त्यन्तिक इति—यथा सूयवसानित्येतदर्थवादमात्रमिति ॥

[अजस्रोत्सर्गस्वरूपम् , अजस्रविधिलाभप्रकारश्च]

प्रात–त्सर्ग इति—अजस्रसमाप्तिरिति । त्रयोदशरात्रमहतवासा इत्येतदप्यजस्र[5]विधान पूर्वेण समानधर्मत्वात् । अत [6]एवैतेष्वग्निष्विति भाष्यकारेणोक्तम् ॥

---

[1] प्राज्यात्—ख ग [2] कृत्वा—क ग घ [3] सुप्रीत—घ. [4] नित्याग्निहोत्र. [5] विधायकम्—घ. [6] अत एव तेष्व—घ.

(भा) उभयत्र सारस्वतान्वारम्भणीया चतुर्होतारोऽन्वाधान च पौर्णमास्यामेव कर्तव्यम् । प्रधानकालासक्तेः ॥

---

[सारस्वतहोमादेः पौर्णमासीकर्तव्यतासमर्थनम्]

(वृ) **सारस्वता–कर्तव्यम्–लासक्तेः**—अस्यार्थः – सारस्वतहोमयोस्तावत् दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जुहुयादिति दर्शपूर्णमासारम्भसयोगः । अन्वारम्भणीयायाश्च शाखान्तरे[1] आरप्स्यमानपदसमभिव्याहरात् । अस्माक च सारस्वतहोमानन्तरं आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेदित्यादिना[2]ऽऽरम्भसयोगः । चतुर्होतुरपि दर्शपूर्णमासावालभमानः चतुर्होतार मनसाऽनुद्रुत्येत्यारम्भसयोगः । अतस्त्रयाणामपि दर्शपूर्णमासारम्भार्थता । तथा आहवनीये सग्रह हुत्वा दर्शपूर्णमासावारभते इति । अथशब्दप्रयोगाप्रयोगात् चतुर्होतृदर्शपूर्णमासयोरेकप्रयोगत्वाभावात् आहवनीयभेदात् बहिःप्रयोज्याश्चतुर्होतृपर्यन्ता दर्शपूर्णमासयोरुपकारकाः दर्शपूर्णमासाधिकारिपुरुषस्य योग्यतापादनद्वारेण । अत एव सर्वदर्शपूर्णमासोपकारकत्वात्सकृदेवादौ कर्तव्याः सकृत्सस्कृतस्य पुनस्सस्कारानपेक्षणात् ॥

[दीक्षादेरपि पुरुषसंस्कारस्यसकृदेवसोमादौकर्तव्यतापत्तिपरिहारौ]

ननु दीक्षादीनामपि पुरुषसस्कारत्वात् सकृदेव प्रथमसोमादौ कर्तव्यता स्यात्? न, द्विधा हि पुरुषसस्कारा: । तत्र प्रयोगाङ्गकर्तृसस्काराः केचित् ते प्रतिप्रयोगमावर्तन्ते, ये प्रयोगाभ्यन्तरे विधीयन्ते । अधिकारिसस्काराः केचित् ते सकृदेवादौ क्रियन्ते ये बहिः प्रयोगाच्चोद्यन्ते, तस्मात्सारस्वतादीना दर्शपूर्णमासापेकार-

---

[1] न्तरप्रारप्स्य–ख ग.   [2] त्यादिविधानाच्चा–ख. ग

(भा) उपदेशो हिरण्यकेशिमतिश्च सारस्वतान्वारम्भणीये चतुर्दश्याम् पौर्णमास्यां चतुर्होताऽन्वाधान च तस्य प्रातःकालनियमात् ॥

---

(वृ) कत्वात् कालान्तरानुपदेशाच्च प्रथमपौर्णमास्या पञ्चदश्यामेव कर्तव्याः । पुनः पुनः प्रणीतेऽग्नौ कार्यभेदात् । किं च अन्वारम्भणीया चतुर्होत्रोः आरप्स्यमानपदसमभिव्याहरादद्यतनविभक्तियोगात् पौर्णमास-समानाहस्सम्बन्धावगमाच्च पञ्चदश्यामेव प्रयोग· । तथा सारस्वतौ होमौ हुत्वाऽन्वारम्भणीयामित्यानन्तर्यावगतेः तावपि पञ्चदश्यामेव । अतश्चतुर्हो[1]त्रन्तैर्योग्यत्वे सिद्धेऽनन्तरमन्वाधानम् । अस्मिन् पक्षे प्रथमपौर्णमास्या· प्रातरन्वाधानाभावेऽपि न विरोधः ॥

[सारस्वतान्वारम्भणीये चतुर्दश्यामेवेत्युपदेशमताशयः]

उपदेशो हिरण्यकेशि—कालनियमात्—प्रातरन्वादधातीति नियमात् चतुर्होतुश्चाद्यतनविभक्तियोगाच्च पञ्चदश्यां प्रातश्चतुर्होत्रादि । अन्वारम्भणीयायास्त्वद्यतनविभक्तियोगेऽपि अन्वाधानस्य प्रातःकाल-विरोधात् चतुर्दश्या सारस्वतान्वारम्भणीये । अस्मिन् पक्षे यदा चतुर्दश्यजस्रपूरणी तदा अजस्रेष्वेव सारस्वतान्वारम्भणीये । यथा सोमाधाने अजस्रे सभारयजुरादयः ॥

[सारस्वतहोमेन दर्शपूर्णमासकालबाधशङ्कापरिहारौ]

ननु यदीष्ट्यादिवाक्येन इष्टिसामान्यादाग्रयणादिवत् प्रकृतेः प्रातःकालबाध एव स्यात् । अद्यतनविभक्तिश्चानुगृह्येत । दर्शपूर्ण-मासावालभमान एतौ होमाविति[2] नैतत् ; इष्टि[2]पश्वादीना दर्शपूर्ण-मासतुल्यप्राधान्यात् प्रकृतिकालमध्ये विधिबलाच्च तैः कालोपरोधो युक्त· सारस्वतादीनां तु दर्शपूर्णमासयोरेवाङ्गत्वात् तयोरनुपरोधे[3]ना-नुष्ठेयानीति । प्रधान सगुण कर्तुं ह्यङ्गान्यनुष्ठीयन्ते । अद्यतनविभक्तिश्च तत्सामीप्येऽप्युपपद्यते वर्तमानसामीप्ये वर्तमानवद्वेति ॥

---

[1] त्रन्ते—ख. ग. [2] पशूना—घ. [3] धेनप्रयोक्तव्यानीति—घ

(सू.) [1]पूर्णा पश्चाद्यत्ते देवा अदधुरिति [2]सारस्वतौ होमौ हुत्वाऽन्वारम्भणीयामिष्टिं निर्वपति ॥४॥४॥ ॥ ११०५ ॥

(सू.) आग्नावैष्णवमेकादशपाल॑ सरस्वत्यै चरुं सरस्वते द्वादशकपालम् ॥ ५ ॥ ५ ॥ ११०६ ॥

(सू.) अग्नये भगिनेऽष्टाकपालं यः कामयेत भग्यन्ना- दस्स्यामिति ॥ ६ ॥ ६ ॥ ११०७ ॥

(सू.) [3]नित्यवदेके समामनन्ति नानातन्त्रमेके ॥ ७ ॥ ७ ॥ ११०८ ॥

(सू.) त्वामिश्चा सुभग सौभगान्यग्ने वियन्ति वनिनो न वयाः । श्रुष्टीरयिर्वाजो वृत्रतूर्ये दिवो [4]वृष्टि-

---

[1] एव प्रासङ्गिकौ कर्मणामारम्भाविकल्पावुक्त्वा प्रकृतमेव आरम्भप्रकारमनु- सरति ,—

अन्वारभ्यतेऽनयेत्यन्वारम्भणीया । स। च दर्शपूर्णमासारम्भविशेष । तथा सारस्वतौ होमौ दर्शपूर्णमासावारभमाण इति प्रकृत्यत्रय।णामाम्नानात् । दर्शपूर्णमास- योश्च पूर्णमासः पूर्व इति स्थास्यति । तेन संस्थिते सेष्टिकेऽग्न्याधेये या अनन्तरा- पौर्णमासी तस्या सारस्वतौ हुत्वा अन्वारम्भणीया निर्वपेत् । पूर्वस्य पर्वण औपवसथ्येऽ- हनातिसत्याषाढ । प्रातरन्वाधान पौर्णमासस्यमाबाधीदिति तस्याभिप्राय बोधाय- नस्तु सारस्वतादि पौर्णमासान्त सर्वमपि यजनीयेऽहनि विकल्पितवान् । यथा ,— सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्र ' इति । अत्र सारस्वतयुगलस्य अन्वा- रम्भणीयायाश्च उभयोरपि दर्शपूर्णमासारम्भेण निमित्तेन प्रवर्तमानयोः स्वतन्त्रत्वात् पृथगग्ने प्रणयनमिष्यते । न चाद्यपौर्णमासेन समानाग्नी भवत. सर्वप्रयोगाङ्गित्वात् । तत्र च लिङ्गम् ' पञ्चहोतृवैश्वानरपार्जन्याभ्या पृथक् वैश्वदेवप्रणयनानुवाद । यथा ' पशुबन्धवद्गार्हपत्यादग्निं प्रणयन्तीति । किं च यान्यत्र क्रतुशरीरान्तर्गतान्यङ्गानि तेषामेवाङ्गिना समानाग्नित्वमिष्ट न तु बहिस्तन्त्रवर्तिनामपि । यथा पञ्चपशव सौत्रा- मण्युदवसानीयासम्भारयजूंषि सावित्राणीत्यादीनाम् । अत एव पशौ आग्नावैष्ण- वान्ते अग्ने त्यागं सिद्ध कृत्वा वक्ष्यति ' धारयत्याहवनीयम् ' इति । तस्मात् सिद्धं पृथगग्नीन्येव सारस्वतादीनीति (रु). [2] सारस्वतौ हुत्वा—ख [3] नित्यस्य काम्यस्य च नानातन्त्रत्वाविकल्प (रु). [4] वृष्णि—ख.

(सू) रीढ्यो रीतिरपाम्। त्वं भगो न आहि [1]रत्नमिषे परिज्मेव क्षयसि दस्मवर्चाः। अग्ने मित्रो न [2]बृहत ऋतस्यासि क्षत्ता वामस्य देवभूरेरिति याज्यानुवाक्ये ॥८॥८॥११०९॥

त्रयोविंशी खण्डिका ॥

---

[सारस्वतहोममन्त्रान्तरे]

(भा) निवेशनी अग्नीषोमावित्येतावपि लभ्येते सारस्वतौ ॥

---

[पाठक्रमवर्तमाननिर्देशादिफलविवरणम]

(वृ) दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसा ऽनुद्रुत्याहवनीये सग्रहं हुत्वा इत्यत्र पाठक्रमोऽद्यतनविभाक्ति क्त्वाप्रत्ययोऽथशब्दश्चामी किमर्था. उच्यते—पाठक्रमोन्वारम्भणीयादर्शपूर्णमासयोः चतुर्होतुर्मध्यपातार्थं । यथा सारस्वतादीनामारम्भार्थत्वाविशेऽपि पाठक्रमात् सारस्वतहोमोत्तरकालत्वमन्वारम्भणीयाया । अद्यतनविभक्त्या दर्शपूर्णमाससमानाहःकर्तव्यता क्त्वाप्रत्ययेन समानकर्तृकता ॥

[हुत्वेति क्त्वार्थस्वारस्य विवरणम]

अनेन प्रवसन् काले विहाराभिमुखो याजमान जपतीति यजमानप्रवासेऽपि पुत्रादिभिर्दर्शपूर्णमासानुष्ठान प्राप्त प्रथमे प्रयोगे निषिध्यते। प्रवासनिमित्ता व्रातपती तु व्रतोपायनादूर्ध्वम्। अथशब्दोऽर्थकृत्यप्रतिषेधार्थ. ॥

[सारस्वतहोममन्त्रान्तत्वोपपत्तिः]

**निवेशनी—स्वतौ**—विकल्पेन तयोरपि मन्त्रपाठे पठितवात् पाठानर्थक्य माभूदिति।

---

[1] रथ—ख [2] भगिन इति शेष (ख)

[दर्शपूर्णमाससङ्कल्पप्रकारः]

(भा) दर्शपूर्णमासावारप्स्ये ताभ्यां यावज्जीव यक्ष्ये स्वर्गं लोकमवाप्नवानीति सङ्कल्पः ॥

[सारस्वतादिहोमेष्वग्निविशेष ]

ततः सारस्वतान्वारम्भणीया चतुर्होतार । पुनःपुन. प्रणीतेऽग्नौ न पौर्णमासार्थे । सर्व[1]प्रयोगाङ्गत्वात् ॥

[पक्षद्वयसाधारणोऽर्थः, विभक्तयश्च]

नानातन्त्रेऽपि भागिनि मिथुनौ गावौ दक्षिणा जयाश्च । अग्नये भागिने अग्ने भगिन् अग्निं भागिन [2]अग्नेर्भगिन. अग्निर्भगीद उक्ते याज्यानुवाक्ये ॥

---

(वृ) सारस्वतहोमयोः पुरस्तात्——

[अधिकारिविशेषे सङ्कल्पवैलक्षण्यम्]

**दर्शपूर्ण—सङ्कल्पः**—न मुमुक्षो. फलनिर्देशः । सर्वदर्शपूर्णमासार्थस्सङ्कल्प. ॥

[सारस्वतादेस्सङ्कल्पपूर्वकालत्वपक्षोऽपि]

**ततस्सार—ङ्गत्वात्**—सर्वोपकारकत्वादित्यर्थः । पुरस्तादेव वा दर्शपूर्णमाससङ्कल्पात् सारस्वतादीनि यक्ष्यमाणोपस्पर्शनवत् । ततः परं दर्शपूर्णमासयो॰ साधिकारस्सङ्कल्प. । यदि [3]कामः ततः पौर्णमासीमात्रसङ्कल्पः ॥

[भाष्यदर्शितदक्षिणा जयाश्च प्रतिप्रयोगम्]

**नानात—जयाश्च**—सर्वकरणार्थत्वाद्दक्षिणायाः विभागानुपदेशाच्च प्रतिप्रयोगं मिथुनौ गावौ दक्षिणा जयहोमश्च ॥

---

[1] प्रयोगान्तत्वात्—ङ [2] अग्नेर्भगिन. उक्ते—ग [3] कातम —ख. ग

(सू) चित्तं च चित्तिश्चेति [1]पुरस्तात् स्विष्टकृतो जयान् जुहोति ॥ १ ॥ १ ॥ १११० ॥

(सू) चित्ताय स्वाहा चित्त्यै स्वाहेत्येके समामनन्ति ॥ २ ॥ २ ॥ ११११ ॥

[जयेषु विभक्तिविकल्पः]

(भा) चित्ताय स्वाहा चित्त्यै स्वाहाऽऽकूताय स्वाहेति चतुर्थ्या विभक्त्या सर्वे होमाः ॥

(सू) [2]प्रजापतिर्जयानिति त्रयोदशीम् ॥ ३ ॥ ३ ॥ ॥ १११२ ॥

[क्वचिच्छ्रुतैव विभक्तिः]

(भा) अविकृता त्रयोदशी । [3]एवमुत्तरा ॥

[कामनाविशेषे चतुर्दशी]

(सू) अग्ने बलद सह ओजः क्रममाणाय मेदाः । अभिशस्तिकृतेऽनभिशस्तेन्यायास्यै जनतायै श्रैष्ठ्यायेति चतुर्दशीं यः कामयेत चित्रं जनतायां

---

[अविकृतपरिग्रहे हेतुविवरणम्]

(वृ) अविकृता त्रयोदशीति—जयान् जुहोतीत्येतावता प्रजापतिर्जयानित्यस्य सिद्धौ प्रजापतिर्जयानिति त्रयोदशीमिति पुनरुपादान चतुर्थ्यन्तपक्षेऽप्यविकृता त्रयोदशीति दर्शयितुम् ॥

एवमुत्तरा— चतुर्दश्यप्यविकृता ।

---

1 उपहोमकालादेव सिद्धे पुरस्तात् स्विष्टकृत इति पुनर्विधानं प्राङ्नारिष्ठेभ्यो मा भूवन् प्राग्वा समिष्टयजुष इति (रु) 2 प्रजापतिर्जयानित्यादेरेकमन्त्रत्वस्य ख्यापनार्थं वचनम्, चतुर्थ्यन्तप्रयोगेऽप्यधिकारार्थं च (रु). 3 तथोत्तरा–ग.

(सू) स्यामिति चित्रं भवति शबलं [1] त्वस्य मुखे [2] भवति ॥ ४ ॥ ४ ॥ १११३ ॥

(भा) चित्र—विस्मापनीयम् । जनाना समूहो जनता । समूहे आत्मान विस्मापयितुमिच्छति । शबल—चित्र—श्वित्रम्—कुष्ठम् ॥

(सू) [3] मिथुनौ गावौ दक्षिणा ॥ ५ ॥ ५ ॥ १११४ ॥

(भा) मिथुनौ—पुमान् स्त्री च ॥

(सू) सिद्धमिष्टिस्संतिष्ठते ॥ ६ ॥ ६ ॥ १११५ ॥

(सू) [4] दर्शपूर्णमासावारप्स्यमानश्चतुर्होतारं मनसाऽनुद्रुत्याहवनीये सग्रहं हुत्वाऽथ दर्शपूर्णमासावारभते ॥ ७ ॥ ७ ॥ १११६ ॥

---

(वृ) समूहे—मिच्छति—[5] तस्य चतुर्दशी ।

---

[1] य कामयेत जनसमाजेषु चित्र स्याम् , अहो अयर्मादृश इति विस्मयनीयस्स्यामिति स एतामाहुतिं जुहोति । स तु काममेव चित्र भवति । दोषस्त्वन्य शबले—चित्रमस्य मुखे जायते तमिमं दोषमनुजानतोऽस्य विधिरिति भाव (रु).
[2] जायते—क. ख (रु) [3] स्त्रीपुंसौ । भगिनस्तु नानातन्त्रे अन्वाहार्यो दक्षिणा । तदितराण्येवाधिकृत्यमिथुनाम्नानात् (रु). [4] सारस्वतान्वारम्भणीयानामपि आरम्भार्थत्वाविशेषे दर्शपूर्णमासावारप्स्यमान इत्यत्र वचन चतुर्होतृपौर्णमासयोरर्थकृत्यैरप्यव्यवायार्थमिति द्रष्टव्यम् । दर्शपूर्णमासावारभते इति दर्शशब्दस्याल्पाच्तरत्वात्पूर्वनिपात । प्रयोगस्तु पूर्णमासस्यैव प्रथमं भवति । ' यत्पौर्णमासी पूर्वामालभेत ' इति लिङ्गात् । प्रयोगविधिषु तस्यैव प्रथमोद्देशाच्च । यथा उदित आदित्ये पौर्णमास्या अग्नीषोमाभ्यामिति पौर्णमास्यामित्यादि । तथा अथेमा दर्शपूर्णमासी पौर्णमास्युपक्रमामावास्या मस्थावित्येव बोधायन । तत्र चतुर्होतुराग्निपृथक्त्व सारस्वताभ्या व्याख्यातम् । भारद्वाजस्तु सर्वेषामेव चतुर्होतृणा ततस्ततश्शेषिणोऽग्निपृथक्त्व निषेधति । तथा प्राणा वा एते यच्चतुर्होतारो यच्चतुर्होतॄन् हुत्वाऽग्निमपनयेद्यजमानस्य प्राणान् विच्छिन्द्यादिति विज्ञायते इति (रु) [5] इदं विवरण पुस्तके न दृश्यते—घ.

(सू.) व्याहृतिभिर्हवींष्यासादयेत्संवत्सरे पर्यागत एताभिरेवासादयेत् ॥ ८ ॥ ८ ॥ १११७ ॥

[व्याहृतिभिरासादनमुभयोरपि]

(भा) व्याहृतिभिरासादन प्रथमायामेव पौर्णमास्याम् । पूर्णे च सवत्सरे दर्शपूर्णमासौ चातुर्मास्यान्यालभमान इति श्रुतेः अमावास्यायामपीत्युपदेशः ॥

(सू) [1]अमावास्यायामादधानस्यैतत् । पौर्णमास्यां तु पूर्वस्मिन् पर्वणि सेष्टि सान्वारम्भणीयमाधानमपवृज्य ॥ ९ ॥ ९ ॥ १११८ ॥

चतुर्विंशी खण्डिका ॥

---

[अजस्रधारणाप्रवासादिनियमस्य आधानविशेषविषयत्वम्]

(भा) अमावास्यायामादधानस्य कर्तुरेतद्व्रतम्; यथाऽजस्रता अहृतधारण अप्रवासस्स्वय होमो दानकर्मणा क्रमेण प्रयोग इति ॥

---

[एकमन्त्रकासदनहेतुः]

(वृ) व्याहृतिभिः–त्युपदेशः—उभयोरेकफलत्वात् ।

[एतद्व्रतपदेन ग्राह्यविशेषनिर्णयोपपत्तिः]

अमावास्यायां–प्रयोग इति—अयमभिप्राय —अग्निहोत्रदर्शपूर्णमासयोः सर्वाधानेष्वविशेषेण यावज्जीवकर्तव्यत्वात् अमावास्यायामेवेति विशेषनियमानुपपत्तेः आधानेष्ट्युत्तरभाविना सारस्वतहोमात्पुरस्तात्तनानां अजस्रादीना अमावास्यायामादधानस्यैतदिति एतच्छब्देन निर्देश कृत्वा नियमः क्रियते । अग्निहोत्रविषयत्वादजस्रधारणस्य तत्प्रसङ्गेन नित्याधिकारदर्शपूर्णमासावप्युक्त्वा इदानी व्रतनियम उच्यते अमावास्यायामादधान[2]स्येति ॥

---

[1] अथामाधा–क [2] स्येति श्रुत्याम्–ख ग

[मतान्तरे तिथ्याधानयोः प्रत्येकधर्म उभयधर्मश्च]

(भा) अन्ये त्वाहुः — अमावास्यायामादधानस्य पवमानहविषां संवत्सराद्यो विषयः । पौर्णमास्यां तु सेष्टरपवर्गः । सर्वमन्यदुभयत्र ॥

[आधानविशेषेषु तदभावः]

पुरुषधर्मत्वाच्च प्रायश्चित्ता[1]धाने न क्रियन्ते । अग्निहोत्रा[2]ङ्गत्व-

[सोमाधानेऽपि न]

सोमादुत्तरकालं प्रवृत्तेऽग्निहोत्रे द्वादशाहादीनि न क्रियेरन् ॥

---

[सेष्ट्यपवर्गस्य मानसिद्धता]

(वृ) अन्ये त्वाहुः–अमा–रपवर्गः—सेष्टेराधानस्यापवर्गो वचनात्।

[उभयत्रेत्यस्यान्यपक्षता]

सर्वमन्यदुभयत्र—आधाने । [3]अजस्रादीत्येषोऽन्येषां पक्षः ।

[अजस्राग्निहोत्रनियमादेरनुष्ठानव्यावृत्तिहेतुः अननुष्ठानस्थलानि च]

पुरुषध–क्रियन्ते—एतेषां शेषिविशेषनिरूपणं क्रियते—अजस्रधारणाहितधारणादीनां पुरुषधर्मत्वात् अमावास्यायामादधानस्यै-तादिति पुरुषप्रधाननिर्देशादाहिताग्निधर्मत्वात् आधानाङ्गत्वाभावात् प्रायश्चित्ताधाने अजस्रादीनि न क्रियन्ते पुनराधाने पुनराधेये [4] च ॥

[अग्निहोत्राङ्गत्वहेतुः]

अग्निहोत्राङ्गत्व इति—अग्निहोत्रारम्भसंनिधानात् अग्नि-होत्राङ्गत्वे सति ॥

[सोमाधाने तदभावहेतुः]

सोमाधाने—

सोमादुत्तरकालं–येरन्—परमप्रकृताधानसन्निधानात् ।

---

[1] श्चित्ताधाने पुनराधाने च- ख ग. श्चित्ताधाने न क्रियन्ते–घ. [2] ङ्गत्वे हीति–ख दीनि क्रियन्ते–घ [3] अजस्रादीन्येषा ? पु –घ [4] ये च कृता इति–ख

(भा) आधानाङ्गत्वेऽपि पुनराधाने पुनराधेये च । अतः कर्तृनियमात् श्रुत्या कर्तृसंयोगात् । ते त्वमावास्याधान एव [1] भवन्ति वचनात् ॥

[नक्षत्राधानेऽपि पूर्ववत्]

नक्षत्राधाने च एव [2] भवति श्रुत्यन्तरात् । अत्राग्नियत्राजस्रास्सम्भवन्ति पौर्णमास्याः ॥

[पौर्णमास्याधानविशेषधर्मः]

पौर्णमास्याधाने तु नैव [3] भवति अपवृज्येति वचनात् ॥

---

[आधानङ्गत्वे इति भाष्यभावः तदनौचित्यं च]

(वृ) **आधानाङ्ग—धेये चेति**—पुनराधान इति अग्न्याधेयमित्यालेखन इत्यस्मिन् पक्षे । पुनराधेय इत्याश्मरथ्य इति पक्षे । उभयं चैतन्नोपपद्यते पुरुषधर्मत्वात् ॥

[अमावास्याधाने प्रथम एव ते इत्यत्रोपपत्तिः]

**अतः कर्तृ—वचनात्**—अजस्रधारणाहितधारणादीनां सामर्थ्यात् पुरुषधर्मत्वात् अमावास्यायामाधानस्येति च पुरुषप्राधान्यावगतिश्रुत्या कर्तृसयोगात् आधानाग्निहोत्राङ्गत्वाभावात् अमावास्याधाने नैमित्तिकाः पुरुषार्थाः अजस्रादयः प्रथमाधान एव कर्तव्याः ॥

[पौर्णमासीनक्षत्राधानयोर्विशेषोपपत्तिः]

**नक्षत्रधानेऽज्येति वचनात्**—आधानेष्टिभिरग्निसिद्धौ । सारस्वत्ताहोमादीनां अर्थायार्थायाग्निं प्रणयतीति सर्वेषा प्रणयनप्रयोजकत्वादाधानेष्टयन्तेऽग्निरपवैज्य' त्याज्यः । अत एव सेष्टेति पृथगिष्टिसाहित्यमात्रमुक्तम् । तस्मात् पृथक्पृथक्प्रणयनस्य कर्तव्यत्वात् अजस्रधारणाद्यनुपपत्तिः । नक्षत्राधाने तु पौर्णमास्याः प्रागजस्रकालसभवे अजस्रधारणादीनि ॥

---

[1] एव न भवन्ति—क. ङ [2] भवन्ति—ख ग घ, [3] भवन्ति—ख. ग. ङ

[सर्वाधानसाधारणार्थः कल्पकारमतिभेदश्च]

(भा) [1]यत्राधानकर्तुर्व्रत नोपदिष्टम् कर्माङ्गत्वेन चोद्यते यथा दशहोता-व्याहृत्यासादन सारस्वतान्वारम्भणीया चतुर्होतार इति तत्सर्वस्याप्या-धानस्य भवति । नामावास्यायामेव कर्माङ्गत्वात् । अजस्राः कात्याय-नाश्वलायनाभ्यामविशेषेणोक्ता । आधानाद्द्वादशरात्रमजस्रा इति ॥

[आधानेषूपक्रमभेदाः मतान्तरम् उपदेशमतं च]

पौर्णमास्याधाने पौर्णमास्या पूर्वमुपक्रम सर्वकर्मभ्यः मध्येऽग्नि-होत्रहोमः । अमावास्याधाने नक्षत्राधाने [2] च अग्निहोत्रहोमः पूर्वः ।

---

(वृ) यत्राधान–स्यभीवति— उत्तरकाल कर्मकाले ।

अजस्राः=णोक्ताः नामावास्यायमाधान एव ।

आधानाद्वा–जस्रा इति—तस्मिन् पक्षे पौर्णमास्याधानेऽपि भवति ॥

पौर्णमा–र्मभ्यः—साधिकारेभ्य. ।

[मध्येग्निहोत्रहोम इत्यस्य विवरणं द्वेधा]

मध्ये–होम इति—पौर्णमास्या· । आहिताग्नित्वे सति पौर्ण-मासीमध्येऽप्यग्निहोत्रहोमकाले प्राप्ते तदधिकारात् । तेन दर्शपूर्णमासा-भ्यामिष्ट्वा सोमेन यजेतेतिवदधिकारक्रमबोधनाभावात् । एवमन्यत्र विप्रकान्ते तन्त्रे इति न्यायेन पौर्णमासीमध्येऽप्यग्निहोत्रहोमः । पौर्णमा-स्यर्थेऽग्नौ । दशहोता च, नित्याधिकाराग्निहोत्रस्य प्रणयनाङ्गलोपेनाऽपि यथाशक्ति कर्तव्यत्वात् पौर्णमास्याधाने प्रातःकालाभावेऽपि अन्वा-धानवत् ॥

---

[1] यत्त्वाधान. [2] नेनाग्नि–ङ

(भा) ऋत्वादीनामतिक्रमे सोमपूर्वत्वम् । केचिदमावास्यायामाधानस्यै-तदग्निहोत्रपूर्वत्व [1] भवतीत्याहुः । [2] पूर्वं पर्व चतुर्दशीत्युपदेशः ॥

(वृ) अथवा [3] मध्येऽग्निहोत्रहोम इत्यस्याभिप्रायान्तरम्—आधाना-नन्तर अग्निषु सिद्धेषु अग्निहोत्राकरणे चतूरात्रमहूयमानोऽग्निर्लौकिकस्स-पद्यत इति श्रुते· अग्निसरक्षणस्याप्यग्निहोत्रकार्यत्वात् तदर्थं मध्येऽपि होमः कार्यो दशहोता च । प्रतिपद्यपराह्णे पुनर्नित्याधिकाराग्निहोत्र-संकल्प कृत्वा दशहोत्रादि । नक्षत्राधानादावग्निहोत्रपूर्वकत्वात् नित्या-धिकाराग्निरक्षणकार्यद्वयसाधनस्य होमस्यैकरूपत्वात् तन्त्रेण सकल्पानु-ष्ठानादि । पौर्णमास्याधानेऽपि [4] उपरितनहोमेषु कार्यद्वयार्थं तन्त्रे-णानुष्ठानम् ॥

[ऋत्वादीनामिति बहुवचनोपपत्तिः]

**ऋत्वादीना – पूर्वत्वम्** — ऋतुनक्षत्राणामवान्तरदीक्षाश्रयणेन बहुवचनम् । न पुन पर्वणा सह । सोमाधानेऽति तस्यादरणीय-त्वात् ॥

[केचिदित्याद्युक्तमतस्याशयः]

**केचिदमा--दाहुः**—अमावास्याधाने इष्टिसोमपूर्वत्वाभावादग्नि-होत्रस्य प्राप्तकालत्वात् अग्निहोत्रप्रायणा यज्ञा इति श्रुतेरग्निहोत्रपूर्वत्व-मात्रमनेन सूत्रेणोच्यते इति । नक्षत्राधाने च वचनान्तरात् । अन्यत्स-र्वत्र । आश्वलायनमतात्तु प्रागपि सोमेनैक इति वचनादाधानानन्तर अग्निहोत्रारम्भ कृत्वा इष्टे प्राक् सोमारम्भ· ॥

[पर्वशब्दस्य चतुर्दशीपरत्वोपपत्तिः]

**पूर्वं–देशः**—साकमेधेषु दर्शनात् । प्रातरन्वाधानो[5]पपत्त्यां च पर्वशब्दश्चतुर्दश्यां लक्षणया वर्तत इति ॥

---

1 भवतीत्येतावदाहु —घ 2 पूर्वपर्व–ङ 3 मध्येप्यग्नि—चा 4 उपरि होमेषु—ख 5 पपत्त्यर्थम्—घ

(सू) [1]श्वोभूते पौर्णमासेन यजते ॥ १ ॥ १० ॥
॥ ११९ ॥

---

[1]यदेतत् महाप्रकरणेन आधानाद्भिन्नकालं दर्शपूर्णमासारम्भणमुक्तम्; यथा पक्षे पावमान्यादीनामिष्टीनामुत्कर्षः। संस्थितासु इष्टिषु आगामिपौर्णमास्यामन्वारम्भणीया ततः पूर्णमासयाग इति, तदमावास्यायामादधानस्य। पूर्णमास्यां तु आदधानस्य सद्य एव सहेष्टिभिरन्वारम्भणीयया च अग्न्याधेयमपवृज्य तदानीमेवाग्नीनन्वाधाय श्वोभूते पौर्णमासेन यजते। पूर्वं पर्वेति पौर्णमास्यत्रोच्यते न तु चतुर्दशी। अन्यथा अमावास्यायां पौर्णमास्यां वाधेय इत्यनेन श्वोभूते पौर्णमासेन यजत इत्यनेन च विरोधात्। चतुर्दश्येव वा पूर्वं पर्व चातुर्मास्येषु तथा दर्शनात्। न च पौर्णमास्यामाधेय इत्यनेन विरोधः तस्यैव प्रकारविधित्वात्। पूर्णमासेन यजत इत्यस्य च यष्टुं प्रतिपद्यत इत्यर्थः। यथोक्तं हिरण्यकेशिना 'पौर्णमास्यास्तु पूर्वस्य पर्वणः औपवसथ्येऽहनि अग्नीनाधाय सेष्ट्यपवृज्य तदानीमेव चतुर्होत्रं सारस्वतावारभणीयाश्च कुरुते श्वोभूते पौर्णमासीं यजत' इति। यत्तु अन्यत्त्राग्निहोत्रारम्भार्थं दशहोत्रादि द्वादशाहव्रतं च तत्सर्वमुभयत्रैव भवति अविशेषात्। अन्ये तु व्याचक्षते,—यदेतत् द्वादशाहव्रतं तत् अमावास्यायामादधानस्य न तु पौर्णमास्यामिति, तदयुक्तम्, महाप्रकरणमध्यगतस्य अनन्तरस्य च तस्य एकस्य एतच्छब्देन निष्कृष्य परामष्टुमशक्यत्वात्। तथा इष्ट्यपवर्गविशिष्टदर्शपूर्णमासारम्भविधायिनि उत्तरवाक्ये तु शब्देन तत्प्रतियोगिन एव प्रकारस्य अनन्तरोक्तस्य व्यावर्तनीयत्वाच्च। व्यक्तीकृतं चैतत् हिरण्यकेशिना तेन हि एवमेव पवमानहविरुत्कर्षादि दर्शपूर्णमासारम्भान्तं कर्म द्वादशाहव्रतवर्जमाध्वर्यवकाण्डेऽभिधायानन्तरमुक्तम्,—'अमावास्यायामादधानस्यैतत्' इति द्वादशाहव्रतं तु ततोऽन्यत्र याजमानकाण्डे सामान्यतश्चोदितम्। तद्दूरं निवारित एवानयोस्सङ्कर इति। किञ्च अत एवाविशेषवचनात् नक्षत्राधानवचनाच्च सिद्धनक्षत्राधानेऽप्यभिमतमेवास्यैतत्क्रमिति। तथा आश्वलायनेनापि अविशेषेणोक्तं 'आधानाद्द्वादशरात्रमजस्रा' इति। तस्माद्यथोक्त एव युक्तस्सूत्रार्थः। सर्वाणि तु एतानि आरम्भणार्थानि दशहोत्रादीनि द्वितीयाद्याधानादिषु नेष्यन्ते;—कस्मात्[2] यस्माद्यावज्जीविकस्यापि प्रयोगस्य एक एवारम्भः। तत्र च लिङ्गम् 'वैश्वानरपार्जन्यापञ्चहोता च नाभ्यावर्तेते एकोपक्रमत्वात्' इति। द्वादशाहव्रतमपि या प्रथमामग्निहोत्राय दोग्धीति प्रथमाग्निहोत्रसंयोगादारम्भार्थैस्सह पठितत्वाच्च प्रथमाधान एवेच्छन्ति (इ).

[पौर्णमासारम्भपूर्वकर्तव्यक्रमादि उपदेशपक्षश्च]

(भा) सहेष्टिभि पारिसमाप्तेऽग्न्याधेयेऽग्नित्याग । सारस्वतान्वारम्भणीयाचतुर्होतृषु पुन.पुनः [1]परित्यज्य चतुर्होत्रर्थेऽन्वाधानम् पौर्ण[2]मास्याम् । पौर्णमासेन यजेतेति याग प्रतिपद्यत इत्युपदेशः पौर्णमास्यामुपक्र[3]मणम् ॥

---

[अग्नित्यागपदार्थः]

(वृ) सहेष्टि-त्यागः—इष्ट्यन्ते आहवनीयादिशब्दवाच्यरूपसम्पत्तिरिति ॥

सारस्वता-त्यज्य—[4]इष्ट्यन्ते त्यक्तेऽग्नौ पश्चाहि स तर्हि गत इति वचनात् अर्थायार्थायाग्निं प्रणयतीति सारस्वतहोमार्थीना पुनः पुनः प्रणयनम् ॥

चतुर्हो-धानम्—उपदेशपक्षे चतुर्दश्यां सारस्वतान्वारम्भणीयान्ते कृते पञ्चदश्या प्रातःकाले चतुर्होत्रन्वाधानयो. सन्निपाते देशकालकर्त्रैक्यात् तन्त्रमाग्निप्रणयनमित्याभिप्राय । अन्यमाहवनीय प्रणीयेति दर्शनात् । क्वचित् चतुर्होत्रर्थं प्रणीते त्यक्तेऽन्वाधानामिति पाठः । तथा सति पूर्वोक्त एवार्थ. । चतुर्होतुरपि सर्वदर्शपूर्णमासार्थतया अस्यैव न्याय्यत्वात् ॥

पौर्णमासेन-पक्रमणमिति—उपदेशपक्षे श्वोभूते पौर्णमासेन यजेत इत्यस्यैव व्याख्या; पौर्णमास्यां पञ्चदश्या याग प्रक्रम्य प्रतिपदि समाप्यते ॥

---

[1] परील्य ते–घ [2] वान्वाधानम्–घ मास्या–घ [3] क्रमणम्–ख ग
[4] इष्ट्यन्ते इत्यादि प्रणयनमित्यन्तो ग्रन्थ घ–पुस्तके न दृश्यते

[पक्षान्तरे यागकालः]

(भा) येषां तु पौर्णमासी पूर्वं पर्व तेषा तत्राग्न्यन्वाधा[1]नमपि कृत्वा श्वोभूते प्रतिपदि पौर्णमासेन याग· ॥

(सू) [2]**अनन्तरमाधानादाहिताग्निव्रतानि ॥ २॥ ११ ॥ ॥ ११२० ॥**

[आधानमात्रनिमित्तकत्वं व्रतानाम्]

(भा) व्रतान्याहितमात्रेष्वग्निषु । यद्यपि सवत्सरे पवमानेष्टयः ॥

(सू) [3]**नानृतं वदेत् ॥ ३॥ १२ ॥ ११ ॥**

[4]**नाऽस्य ब्राह्मणोऽनाश्वान् गृहे वसेत् ॥ ४ ॥ ॥ १३ ॥ ११२१ ॥**

(भा) अनाश्वान्—अनशितवान् न वसेत् ॥

(सू) **सूर्योढ[5]मितिथिं वसत्यै नापरुन्धीत ॥ ५ ॥ ॥ १४ ॥ ११२२ ॥**

---

[येषामित्यादिभाष्यस्योपदेशपक्षादरापरित्यागपरता]

(वृ) **येषां तु—यागः**—येषा तु पौर्णमासीति तुल्यविकल्पनिर्देशादुपदेशपक्षस्यापि तुल्यवदादरः । अन्यत्र सर्वत्रोपदेशः परिहार इत्युक्तमेव ॥

[व्रतस्य तथात्वं श्रुतिकण्ठोक्तिसिद्धम्]

**व्रतान्या–ग्निषु–ष्टयः**—तस्मादाहिताग्निर्नानृत वदेदित्याधानमात्रस्य बन्धनात् ॥

---

[1] धान कृत्वा–घ [2] अथाहिताग्नेर्यावज्जीविकानि व्रतान्युच्यन्ते तानि च अनन्तरमाधानादिति वचनात् इष्ट्युत्कर्षेऽपि नोत्कृष्यन्ते (रु). [3] स्मृतिप्राप्तस्या. नृतवदनस्याहिताग्निव्रतत्वख्यापनार्थ पुनरुपन्यास तस्य चातिक्रमे प्रायश्चित्तविशेष-प्रयोजन वक्ष्यति च 'अग्नये व्रतपतये पुरोडाशमष्टाकपाल निर्वपेद्य आहिताग्निस्सन्न-व्रत्यमिव चरेत्' इति । (रु) [4] बुभुक्षितश्चेत् वसेत् तं भोजयेदित्यर्थ (रु). [5] ऊढ –अपोढ –अस्तमित सूर्यो यस्य स सूर्योढः त निवासायागतं निवासयेत् (रु)

(भा) सूर्योढः—सूर्येऽस्तमित आगतः तस्य देया वसतिः ॥

( सू ) [1] नर्जीषपक्कस्याश्नीयात् ॥ ६ ॥ १५ ॥
॥ ११२३ ॥

(भा) अनाग्निज उष्मा ऋजीषः तत्पक्वस्य प्रतिषेधः ॥

(सू) क्लिन्नं दारु [2] नादध्यात् ॥ ७ ॥ १६ ॥
॥ ११२४ ॥

(भा) क्लिन्नम्—उदकोक्षितम् ॥

(सू) [3] अन्तर्नाव्यपां नाश्नीयात् ॥ ८ ॥ १७ ॥
॥ ११२५ ॥

[अन्तर्नाव्यपां प्राशनं द्वेधा]

(भा) अन्तर्नावि या आप । उपदेशोऽन्तर्नाविस्थोऽपामशन न [4] कुर्यादिति ॥

(सू) स्वकृत [5] इरिणे नावस्येत् ॥९॥१८॥११२६॥

(भा) इरिणमतृण [6] यत् स्वय कृतम् तत्र न तिष्ठत्यग्निभिस्सह ॥

(सू) [7] पुण्यस्स्यात् ॥ १०॥१९ ॥ ११२७ ॥

(भा) पुण्यकर्मा [8] च स्यात् ॥

सू ) [9] हिंकृत्य वाग्यतः स्त्रियमुपेयात् ॥ ११ ॥
॥ २० ॥ ११२८ ॥

---

(वृ) अन्तर्नावि या आपः—[10] तासा नाश्नीयात् ।
उपदेशो—र्यादिति — बहिस्स्थितानामप्यपाम् ॥

---

[1] यत् तिरोहितस्याग्नेरूष्मणा पक्क न प्रत्यक्षाग्निना तद्दर्बीसपक्कम् , तन्ना-श्नीयात् (रु) नर्बास–ङ [2] अग्नौ नादधात् (रु) [3] रुद्रदत्तास्त्विममर्थं पक्षान्तरत-येच्छति कल्पान्तरैककण्ठ्यात्. [4] र्यात्–ङ [5] स्वभावत ऊषरे देशे न निवसेत् (रु) [6] यत् स्वयमकृतम्–ख ग [7] पुण्यकर्मा–मङ्गलाचारयुक्त (रु). [8] स-पुण्य–ङ [9] ऋतुगमने हिङ्कारमुक्त्वा वाचयमो भवेत् (रु). [10] ता नाश्नीयात्–ख.ग.

(भा) स्त्र्युपगमन हिङ्कार कृत्वा ॥

(सू) व्याहरेद्वा ॥ १२ ॥ २१॥ ११२९ ॥

(सू) [1] न सायमाहुतावहुतायामश्नीयात् ॥ १३ ॥ ॥ २२ ॥ ११३० ॥

(सू) एवं प्रातः ॥ १४॥२३ ॥ ११३१ ॥

(सू) आहिताग्नेर्गृहे न सायमहुते भोक्तव्यं तथा प्रातरि[2]त्यन्येषां व्रतम् ॥ १५ ॥ २४॥११३२ ॥

(भा) अन्येषा—आहिताग्निगृहवासिना व्रतम् ॥

(सू) नक्तं [3] नान्य[4]दन्नाद्द्यात् ॥१६॥२५॥११३३॥

[नक्तं दानसङ्कल्पाकारः]

(भा) [5] नान्यदन्नाद्ददामीति सङ्कल्पः ॥

(सू) [6] दद्यादित्येके ॥ १७ ॥ २६ ॥ ११३४ ॥

(सू) [7] अन्नं तु ददन्नदयीत ॥१८॥२७॥११३५ ॥

---

[इह परं संकल्पोक्तेराशयद्वयम्]

(वृ) नान्यदन्नाद्द्यामिति सङ्कल्पः—सर्वेषामाहिताग्निव्रताना सङ्कल्पपूर्वकत्वप्रदर्शनार्थं व्रतानीति निर्देशात् । अथवा न दद्याद्द्यादिति पक्षद्वयोपदेशात् । अनियमपरिहारार्थं विशेषपक्षसङ्कल्पो वा ॥

---

[1] सायमित्युभयत्र सम्बध्यते सायमाहुतौ अहुतायां न सायमाशं कुर्यादित्यर्थः (रु) [2] अन्येषामप्याहिताग्निगृहवासिना व्रतमेतत् (रु). [3] दन्नाद्द्यात् ?—ख. [4] अन्नादन्यत् गोहिरण्यादि नक्त न दद्यात् (रु). [5]न्नाद्द्यामिति—ख ग. न्नाद्द्यामिति —घ. नान्यद्द्यानामिति ?—ङ. [6] अद्यादि—ख. [7] ददन्नप्यन्नमदयीत—आदयेत् न तु विधान्तरेण दद्यात् (रु).

[अन्नदाने विशेषः]

(भा) प्रयच्छन्नन्नमामातृप्ते[1]रन्न दद्यात् ॥

(सू) [2]**नैतास्मिन् संवत्सरे पशुनाऽनिष्ट्वा मांसं भक्षयेत् ॥ १९ ॥ २८ ॥ ११३६ ॥**

[आधानवत्सरे मांसभक्षणनिषेधः]

(भा) एतस्मिन् सवत्सरे नित्यस्य पशोः प्रवृत्तिः । न च तेनानिष्ट्वा मांसभक्षणम् ॥

(सू) [3]**मनसाग्निभ्यः प्रहिणोमि भक्षं मम वाचा तं सह भक्षयन्तु । अप्रमाद्यन्नप्रमत्तश्चरामि शिवेन मनसा सह भक्षयतेति यद्यादिष्टो भक्षयेदेतं मन्त्र-मुक्त्वा भक्षयेत् ॥ २० ॥ २९ ॥ ११३७ ॥**

पञ्चविंशीखण्डिका ॥

---

[आदिष्टेऽभ्यनुज्ञा च तस्य]

(भा) आदिष्टः श्रुतिवचनात् यदा भक्षयेत् आर्त्विज्ये ॥

---

(वृ) अन्न तु ददन्नदयीतत्यस्यार्थं'—

प्रयच्छ—द्यात्—इति ॥

एतास्मिन्—भक्षणम्—यजमानेन कर्तव्यम् ।

आदिष्टः—र्त्विज्ये—यद्यादिष्टो भक्षयेदित्यार्त्विज्यविषयम् यजमानस्य पशुनाऽनिष्ट्वा मांसभक्षणप्रतिषेधात् आर्त्विज्यविधिप्राप्तस्य भक्षणस्यानिवृत्ति. । एतस्मिन् सवत्सरे पशुनाऽनिष्ट्वा आर्त्विज्यकरणे ।

---

1 मातृप्ते[न] नु दद्यात्—ग 2 एतस्मिन् आधानसवत्सरे निरूढेन अङ्गभूतने वा पशुना अनिष्ट्वापूवर्माग्निभ्यः स्वय मास न भक्षयेत् (रु) 3 यदि त्वृत्तिकर्शित. आर्तिज्य कुर्वन् इडामास आदिष्टो भक्षयेत् तदा भक्षप्रायश्चित्तार्थमेतं मन्त्र जपित्वा ततो भक्षमन्त्रेण भक्षयेत् । एतेन अर्त्विज्यागत मासभक्षणं नातीवदोषवदिति भाव. (रु).

(सू) एतं मन्त्रमुक्त्वा स्वेन मन्त्रेण भक्षयेत् ॥

इति आपस्तम्बश्रौतसूत्रेषु धूर्तस्वामिभाष्ये पञ्चमे प्रश्ने
सप्तम पटल

---

(सू) [1]पुनराधेयं व्याख्यास्यामः ॥ १॥१॥११३८॥

(सू) तस्याग्न्याधेयवत्कल्पः ॥ २ ॥ २॥ ११३९ ॥

(सू) अग्नीनाधायैतस्मिन् संवत्सरे [2]यो नर्ध्नुयात्स पुनरादधीत प्रजाकामः पशुकामः पुष्टिकामो ज्यान्यां पुत्रमत्यायां स्वेष्वारुध्यमानेषु यदा वाङ्गेन विधुरतां नीयात् ॥ ३ ॥ ३ ॥ ११४० ॥

---

(वृ) एतं–येत्—अनेन भक्षयेदिति वक्तव्ये मन्त्रमुक्त्वेति वचनात् पूर्वमन्त्रस्यानिवृत्तेरुभाभ्या भक्षणम् ॥

इति श्री आपस्तम्बश्रौतसूत्र वृर्तस्वामिभाष्यवृत्ता
पञ्चमे प्रश्ने सप्तम पटल

---

[1] आहिता अग्नय पुन—विधानान्तरेण आधीयन्ते यस्मिन कर्मणि तत् पुनराधेयं नाम अग्न्याधेयस्यैव गुणविकार (रु) [2] यो नर्ध्नुयादिति प्रजापश्वादि हान्याव्यृद्धिनिमित्तमुच्यते न ऋद्ध्यभावमात्रम्, प्रजा पशून् यजमानस्योपदोद्वा- वेति लिङ्गात्। 'आधानार्थादि आमयावीयदिवा अर्थी व्यथेरन्' इत्याश्वलायन- वचनाच्च । ज्यानि — व्याधिपीडादिभिर्बाध । पुत्रमत्यी -पुत्रमृति । स्वेषु ज्ञातिषु अवरुध्यमानेषु—बलवद्भि. परै निर्गृह्यमाणेषु । यदा वा अङ्गेन विधुरता—विकलता गच्छेत् एतस्मिन् सवत्सरे एतेषु निमित्तेषु कामेषु वा सजातेषु पुनरादधीत। केचित्वन्त्य निमित्त यदा वेत्यविशेषात् सार्वकालिक मन्यन्ते। अन्ये तु प्रजाकामप्रभृति एतस्मिन् संवत्सर इति नानुवर्तयन्ति, तदुभयमप्ययुक्तम्, सर्वादौ उपात्तस्य कालस्य सर्वान् प्रत्यविशेषात्। यदा वेति च निमित्तनिर्देशप्रकारत्वाच्च। व्यक्त चाह सत्याषाढ —'य एतस्मिन् संवत्सरे ज्यानिं पुत्रमत्यीं वा अभ्येति स्वेन वा अङ्गेन व्यृध्येतनवर्ध्नोति सपुनराधेय कुर्वीत' इति। तथा च बोधायनः—अग्नीनाधाय पापीयानभूवं अजासिषि पुत्रो मृत इत्येतस्मिन्नेव सवत्सर इष्ट भवतीति (रु).

[अग्न्याधानपुनराधानपदप्रवृत्तिनिमित्ते प्रथम-
विकृतित्वं च द्वितीये]

(भा) अग्नीनां [1] विधानेन सभारेषु स्थापनमग्न्याधेयम् । पुनः—विधानान्तरेण स्थापन पुनराधेयम् । तस्यैव गुणविकारः । आधानाङ्ग-मिष्टय उभयत्र । अनृद्धि[2]र्यदाऽस्योपचयो न भवति [3] अप्यृद्धिकामः [4] पुनराधत्ते । योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्ते इति । प्रजा-कामादयोऽन्यस्मिन्नपि सवत्सरे लभ्यन्ते । यदा प्रजाकामो यदा पशुकाम इति तस्य सर्वत्रानुषङ्गात् । [5] पुष्टिर्वृद्धिः । ज्यानिर्हानिः । पुत्रमर्त्या पुत्रमरणम् । स्वे —ज्ञातय. ; तेषां [6] निग्रहण—आरोधन राजादिभिः ।

[अङ्गेन विधुरतापदार्थः मतभेदश्च]

अङ्गविधुरता—अङ्गवैकल्यम् । [7] तद्यदात्मन प्राप्नुयात् । उपदेशः पत्नी यज्ञाङ्ग तन्मरणेऽङ्गविधुरतेति ॥

---

(वृ) अग्नीनां—मुभयत्रेति—आधाने एतत् पूर्वमुपपादितम् ।
अनृद्धि—न भवति—पूर्वावस्थातो वृद्ध्यभाव ।
अथर्धि—माधत्त इति—अनृद्धिनैमित्तिकतया तत्परिहारार्थ-त्वात् [8] ऋद्ध्यर्थता । अतो नाकामहतस्य पुनराधेयम् ॥
प्रजाकामा—ङ्गात्—तस्य [9] यदाशब्दस्य ।
पुष्टिर्धनवृद्धिः—काम्यमिदम् । यो नर्ध्नुयादित्यनृद्धिनैमित्तिकम् ।
ज्यानिर्हानिः—विद्यमानस्य नाशो वत्सरान्तरेऽपि ।

[पत्नीरूपाङ्गवैधुर्ये पुनराधानविधेराशयः मतान्तरं च]

उपदेशः—धुरतेति—अस्मित् पक्षे पत्नीमरणेऽप्युत्सर्गेष्टिपूर्वक-पुनराधानविधानाद्यजमानात्पूर्वं प्रमीतायाः पत्न्या अग्निभिर्दाहो

---

[1] संभारेषु विधानेन—ङ. [2] र्यत्तस्योप—ख ग. [3] अथर्धि—ख ग. [4] रादध्यात्—ग. [5] पुष्टिर्धनवृद्धि.—ख. ग घ [6] ग्रहणम्—ग. [7] यद्यदाप्नुयात्—ख, ग. तद्यदाप्नुयात्—घ [8] अनृध्यर्थता—घ [9] कृत्स्नस्य—घ.

[अङ्गविधुराधाने पक्षान्तरम्, तत्पक्षेऽनृद्धिपदार्थश्च]

(भा) केचित् अङ्गविधुरतायामेवान्यस्मिन् सवत्सरे इच्छन्ति । प्रजा कामादयस्तस्मिन्नेव संवत्सरे इति ।

(वृ) नास्तीति गम्यते । अस्यायं विषयः,—अनेकभार्यस्याहिताग्नेः ज्येष्ठायां विद्यमानाया कनिष्ठामरणे,—

द्वितीया वै तु यो भार्या दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायां तु सुरापानसम हि तत् ॥

इति वैतानिकाग्निभिर्दाहनिषेधात् तन्मरणे उत्सर्गेष्टिपूर्वकपुनराधानोपदेश इति । अथवा,—'अन्यतराभावे कार्या प्रागग्न्याधेयात्' (२, ५, ११, १३. आप. ध. सू.) [1]इत्यत्र—

भार्यायै पूर्वमारिण्यै दत्त्वाग्नीन् . . . . ।

इत्यादिमानववचनविरोधमाशङ्क्य तत्परिहारार्थतया कपर्दिस्वामिना 'अन्वारम्भणीयाविरोधात्' इति हेतुनिर्देशात् एकभार्यस्याहिताग्नेः अकृतान्वारम्भणीयस्य पूर्वं भार्यामरणे मनुवचनानुसारेणाग्निभिर्दाहोपपत्तिः । कृतान्वारम्भणीयस्य त्वेकभार्यस्य पूर्वं पत्नीमरणे कपर्द्यभिप्रायेण श्रौताग्निभिर्दाहानुपपत्तेः एकभार्यस्यापि पत्नीमरणे उत्सर्गेष्टिपूर्वकपुनराधानसभवादुपदेशमतोपपत्तिः । केचित्तु मानव वचन पतिव्रताविषय मन्यन्ते—

दाहयित्वाऽग्निहोत्रेण स्त्रिय वृत्तवती पतिः ।

इति याज्ञवल्क्यनियमात् । भारद्वाजव्याख्याकारेणोक्तत्वाच्च ।

[अङ्गविधुराधाने पक्षान्तराशयः]

केचिद्—च्छान्ति—अग्नीनाधायैतस्मिन् संवत्सरे इत्युपक्रमात् यदाशब्दस्याङ्गविधुरतायामेव निर्देशात् ॥

---

[1] इत्यस्य—घ.

(भा) तेषां चानृद्धिरुपद्रव. ॥

[पुनराधानसङ्कल्पकालादि]

उत्सर्गेष्ट्यादौ सङ्कल्पः—अग्नीन् पुनराधास्ये ऋध्यासं प्रजावान् भूयासमिति ॥

(सू) [1] आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादश-

---

[केचिदिति पक्ष अनृद्धिपदार्थवर्णनहेतु]

(वृ) तेषां चा नृद्धिरुपद्रवः—तस्मिन् संवत्सरे अनृद्धेर्ज्यान्यामित्येतेनैवोक्तत्वात् तेषां मतेऽनृद्धिरुपद्रवः ॥

[पुनराधाने सङ्कल्पकालोपपत्तिः]

उत्सर्गेष्ट्यादौ–भूयासमिति—सर्वेषा प्रदर्शनम् । उद्वास्य पुनरादधीतेत्युद्वासनपूर्वकपुनराधानस्यैकनैमित्तिकत्वात् । अतो नष्टेष्वग्निषु पुत्रनाशादावग्नीनुत्पाद्य पुनरुत्सर्गेष्ट्यादि कर्तव्यम् ॥

---

[1] केवलवैश्वानरचोदनासु वैश्वानर एव देवता न तद्गुणोऽग्नि तस्या श्रवणादिति केचित्, तत्तु मन्दफलम्, बहुमन्त्रब्राह्मणकल्पविरोधात् । इतरथाऽपि अश्रवणोपपत्तेश्च । तथाहि—मन्त्रास्तावद्याज्यानुवाक्यादय तद्गुणाग्निलिङ्गा एव 'वैश्वानरो ' अजीजनत्, पृष्टो दिवि ' इत्यादय । ब्राह्मणेऽपि वैश्वानरं द्वादशकपाल निर्वपेदिति विधाय संवत्सरो वा 'अग्निर्वैश्वानर इति वाक्यशेष आम्नात । सूत्रकारोऽपि वायव्य पशौ अग्नये वैश्वानराय द्वादशकपाल पशुपुरोडाश निर्वपतीत्युक्त्वा तमेवान्यत्र विकल्पयन्नाह ' य. कश्चनाग्नौ पशुरालभ्यते वैश्वानर एवास्य द्वादशकपाल पुरोडाशो भवतीत्येके इति । 'तथा यदस्य पारे रजस ' इति वैश्वानराग्निलिङ्गामृच विनियुङ्क्ते वैश्वानर्यापरिषिच्येति । बोधायनेनाप्युक्त वैश्वानरमवदाय वैश्वानरायानुब्रूहीति । भरद्वाजेनापि वैश्वानर द्वादशकपाल निर्वपेदित्यनुवाकोक्तान् वैश्वानरान् व्याचक्षाणेनोक्त 'अग्नये वैश्वानराय पुरोडाश द्वादशकपालं निर्वपतीति । यत्तु अग्नेरश्रवणमुक्तं तदपि तद्धितवृत्तित्वादुपपन्नम् । यत्र तु सगुणदेवतासम्बन्ध· तद्धितवृत्त्या विवक्षित तत्र गुणशब्दादेव तद्धित क्रियते । गुणी तु अश्रुतोऽपि वाक्यशेषादिना अवसीयत इति पन्था, यथा वैमृध गृहमधीय पथिकृदित्यादौ । तस्मात् सिद्धं केवलवैश्वानरचोदनास्वपि अग्निर्वैश्वानरोदेवतेति । उद्वासयिष्यन्निति वक्ष्यमाणकालात् उद्वासनात्पूर्वस्मिन् काल इत्यर्थ । आग्नेयमष्टाकपाल निर्वपेद्वैश्वानर द्वादशकपालमग्निमुद्वासयिष्यन् इति काम्येष्टिष्वाम्नाताया द्विहविषोऽपीष्टे. अनया विकल्पमिच्छन्ति । ता ब्राह्मणव्याख्याता इति तस्या अप्युपसङ्ग्रहात् (रु).

(सू) कपाल वारुणं दशकपालमग्नयेऽप्सुमतेऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन्॥ ४ ॥ ४ ॥ ११४१ ॥

[अग्निमुद्वासयिष्यत इष्टिषु देवतानिर्णयः]

(भा) सर्वत्राग्निर्वैश्वानरो वाक्यशेषान्मन्त्रलिङ्गाच्च । उपदेशो वैश्वानर एवेति । अग्नयेऽप्सुमते अग्नेऽप्सुमन् अग्निमप्सुमन्तम् । अग्नेरप्सुमत. अग्निरप्सुमान् । अग्निर्मूर्धा भुवो वैश्वानरोन ऊत्या पृष्टो दिवीति । अवते हेड, उदुत्तम, अप्स्वग्ने, गर्भो अस्योषधीना, अयं मित्रोनमीवासः इति याज्यानुवाक्या· ॥

[असंभारपक्षेणानुष्ठातुर्विशेषः]

येन त्वसभारपक्षः कृतोऽग्न्याधाये [1] तस्य ये ते अग्ने वानस्पत्या

[अग्न्युत्सर्गे मतद्वयम्]

इत्यृचो लोपः । पौर्णमासीमिष्ट्वोत्सर्गेष्ट्येष्ट्वाऽग्नीनुत्सृजति तस्या ब्राह्मण-भोजनान्ते ।

---

[वाक्यशेषो लिङ्गं च]

(वृ) सर्वत्रा–ङ्गाच्चेति—सवत्सरो वा अग्निर्वैश्वानर इति शेषः । अग्निरुक्थेन वाहसेत्यादिमन्त्रलिङ्गम् ॥

[उपदेशपक्षाशयः]

उपदेशो वैश्वानर एवेति—चोदनैकसमधिगम्यत्वाद्देवतायाः यथा चोदितशब्दैरेव प्रयोग इति ; यथा प्रकृतावग्निर्मूर्धन्वान् भवति ॥

[असंभारपक्षे ऋग्विशेषलोपहेतुः]

येन त्व–लोपः—सभारास्संभृता इति नि(रुक्त) वृत्तनिर्देशात् ॥

[पौर्णमासेष्ट्युत्सर्गेष्ट्युत्सर्गा इति पक्षोपपत्तिः]

पौर्णमासी–जनान्ते—यद्यप्युत्सर्गेष्ट्युत्तरकालं पौर्णमासी-मिष्ट्वेत्युच्यते तथाऽप्युद्वास्य पुनरादधीतेत्युत्सर्गपूर्वकपुनराधानस्यैक-

---

[1] तस्या

(भा) उपदेश कृत्वोत्सर्गेष्टिं पौर्णमासीमिष्ट्वा ब्राह्मणभोजनान्ते उत्सर्गो ज्वलतामग्नीनाम् ॥

[उत्सर्गे प्रकारान्तरम्]

केचित्तु ब्राह्मणभोजनान्ते पुनर्विहृत्य ज्वलतोऽग्नीनायतनेभ्यः परित्य[1]जति ॥

[उत्सर्गेष्टेर्विधान्तरमपि]

द्विहविरप्युत्सर्गेष्टिर्लभ्यते । एषु निमित्तेषु आग्नेयमष्टाकपाल निर्वपेत् । वैश्वानर द्वादशकपालमग्निमुद्वासयिष्यन् इति । नास्या[2]-मुपहोमा नापि ज्वलतामुत्सर्गनियमः ॥

---

(वृ) नैमित्तिकत्वात् तन्मध्ये पौर्णमास्यनुपपत्तेः पौर्णमास्युत्तरकालं प्रति-पद्युत्सर्गेष्टिं कृत्वा तस्या ब्राह्मणभोजनान्ते ज्वलतामग्नीनामुत्सर्गः । मया त्यक्ता अग्नय. इति सङ्कल्पयेत् ॥

[उत्सर्गेष्टिपौर्णमासेष्ट्युत्सर्गा इति पक्षोपपत्तिः]

उपदेशःकृ—मग्नीनाम्—सूत्रकारेण [3]तथोपक्रमात् ॥

[उत्सर्गे प्रकारान्तरपक्षाशयः]

केचित्—त्यजन्ति—इष्ट्यन्ते लौकिकत्वात्पुनर्विहृत्य त्यागः । पूर्वस्मिन् पक्षे इष्ट्यन्ते त्यागोपदेशात् ; न त्यागात्पूर्वं लौकिकता उत्सर्गार्थत्वादुत्सर्गेष्टे ॥

[विधान्तरे मानम्]

द्विहविरप्यु—यिष्यन् इति—अस्मच्छाखोक्तत्वात् ॥

[अस्यैव शाखान्तरे विशेषः]

नास्यामु—नियम इति—शाखान्तरे तयोः पञ्चहविष्केष्टि-सम्बन्धोपदेशात् ॥

---

[1] त्यजन्ति—ग. [2] मुपभोज २—ग [3] तथा क्रमोपदेशात्—घ

[निर्निमित्तत्यागपक्षानभ्युपगमः]

(भा) केचिद्विनाऽपि [1] निमित्तमेतयोत्सृजन्ति ; तदयुक्तम् ;

[हिरण्यकेशिपक्षः]

अमावास्ययेष्ट्वा पौर्णमास्यामुत्सर्गेष्टिर्हिरण्यकेशिन· ॥

(सू) या ते अग्ने उत्सीदतः पवमाना प्रिया तनूः । तया सह पृथिवीमाविश रथन्तरेण साम्ना गायत्रेण च छन्दसा ॥ ५ ॥ ५ ॥ ११४२ ॥

(सू) या ते अग्ने पावका या मनसा प्रेयसी प्रिया तनूः । तया सहान्तरिक्षमाविश वामदेव्येन साम्ना त्रैष्टुभेन च छन्दसा। ततो न ऊर्जमाकृधि गृहमेधं च वर्धय। या ते अग्ने सूर्ये शुचिः प्रिया तनूः शुक्रेऽध्यधिसंभृता । तया सह दिवमाविश बृहता साम्ना जागतेन च छन्दसा ततो नो वृष्ट्याऽवत । यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः । ताभिर्नः कामान् धुक्ष्वेह प्रजां पुष्टिमथो धनम् । यास्ते अग्ने संभृतीरिन्द्रः [2] सूकर आभरत् । तासु शोचिषु सीदेह भस्म वैश्वानरस्य यत् ॥ ६ ॥ ६ ॥ ॥११४३॥

षड्विंशी खण्डिका ॥

---

[निर्निमित्तत्यागपक्षे दोषः]

(वृ) केचिद्विनापि—दयुक्तमिति—उद्वासनपुनराधानयोरेकनैमित्तिकत्वात् पुनराधानस्य च सर्वनैमित्तिकत्वात् ॥

---

[1] निमित्तेनैतयो—ख. ग घ. ङ. [2] स वीर आरभत्—ख सवर .

(सू) ये ते अग्ने वानस्पत्याः संभारास्संभृतास्सह । तेभिर्गच्छ वनस्पतीन् स्वां योनिं यथायथम् । अगन्नग्निर्यथालोकमसदत्सदने स्वे । अवीरहत्यं देवेषूपागां मनसा सहेति पुरस्तात्स्विष्टकृतः सप्ताहुतीर्जुहोति ॥ १ ॥ ७ ॥ ११४४ ॥

(सू) सिद्धमिष्टस्संतिष्ठते ॥ २ ॥ ८ ॥ ११४५ ॥

(सू) [1] पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति ॥ ३ ॥ ॥ ९ ॥ ११४६ ॥

(सू) संवत्सरं [2] पराध्यर्मुत्सृष्टाग्निर्भवति ॥ ४ ॥ ॥ १० ॥ ११४७ ॥

---

[1] निमित्तकामग्यो सतो आगामिना पौर्णमासेनेष्ट्वा अनन्तरमुत्सर्गार्थमिष्टिं निरुप्य तदन्ते ज्वलत तानग्नीन्. उत्सृजति–बुध्योपेक्षते न रक्षतीत्यर्थ । ज्वलत इति वचनात् न निर्वापयति । तत्र परमेतन प्रसक्त निवार्यते, यथाऽऽह बोधायन, अद्भिरग्निं समुक्ष्येति । केचित्तु पूर्वेद्युरुत्सर्गेष्टिं निरुप्य पौर्णमासानन्तरमुत्सर्गमिच्छन्ति, तदयुक्तम्, अग्निहोत्रमारप्स्यमान इत्यादिवत् उद्वासयिष्यमित्यनेन उत्सर्गेष्टे उत्सर्गादपृथक्कालत्वावसायात् उत्सर्गेष्ट्यन्ते चाग्नीना अदृष्टतिरोधानेनाकर्माङ्गत्वात् विपर्ययस्यैव सत्यषाढादिभिर्व्यक्तवचनाच्च । अथैषात्र मीमासा,–पुनराधाननिमित्ते सञ्जाते यदि स्वयमग्नयो विच्छिद्येरन् विच्छिन्नेषु वा अग्निषु निमित्त जायेत तदा किं पुनराधानमात्र कर्तव्यम्? आहोस्वित् उत्पाद्याग्नीनुत्सृज्य पुनराधातव्यमिति? प्रथम कल्प इति ब्रूयात् । कुत? धार्यमाणानामग्नीना हानार्थत्वादुत्सर्गविधानस्य । न हि उद्वासनापेक्षाया स्वयमुद्वासितानां प्रथममनुत्सर्गो दोषाय! प्रत्युत गुणायैव वीरहत्यादिदोषश्रुते । तस्मात्सिद्ध पुनराधानमात्रमेव कर्तव्यं न पुनरुत्सर्ग इति (रु) [2] परार्ध्य उत्सृ–ख. परार्ध्यशब्द षडवरार्ध्यानित्यत्र अवरार्ध्यशब्देन व्याख्यात । सवत्सर एव उत्सर्गस्य परावधि । अतोऽर्वागेव सवत्सरादाधातव्यमित्यर्थ । तेन सवत्सरातिक्रम अग्निहोत्राद्यतिक्रमप्रायश्चित्तानि भवन्ति । बोधायनीयमतात्तु सत्यपि निमित्ते यावत्पुनराधेयकालमासित्वा कालेऽग्नीनुत्सृज्य सद्य एवाधान भवति । यथा उत्सर्गेष्ट्यनन्तरमाह,–तदानीमेवं अद्भिरग्नीन् समुक्ष्य ब्रह्मौदन श्रपयित्वोपवसतीति । कात्यायनश्चाह,–त्रिरात्रावरमग्नीनुत्सृज्य स द्योवेति । सत्याषाढश्चाह,—यावद्दर्शपूर्णमासावविहितौ तावच्चिरमवसृष्टाग्निर्भवति संवत्सर द्वादशाह वेति (रु)

[उत्सर्गपरावधिः तदतिक्रमे च कार्यम्]

(भा) पराध्र्यम्—परतः [1] काल संवत्सरः । तस्यातिक्रमे कृते पुनराधेये सर्वप्रायश्चित्तम् । यावज्जीवश्रुतीनि च यान्यकृतानि ॥

[कर्मविशेषेषु प्रायश्चित्तविशेषाः]

सप्तहोताऽग्निहोत्राक्रियायाम् । पथिकृद्वैश्वानरौ दर्शपूर्णमासाक्रियायां सोमाक्रियाया सप्तदशोऽग्निष्टुत् ॥

---

(वृ) पराध्र्ये–न्यकृतानि — सवत्सरादूर्ध्वं पुनराधानकालोत्कर्षे तेषामपि प्रायश्चित्त कर्तव्यम् ॥

सप्त यायाम्—तन्तुमान् वा ॥

[उक्तानुक्तप्रायश्चित्तेष्विषु विषयविशेषव्यवस्था]

पथिकृद्वै–ग्निष्टुदिति—वैश्वानर आग्रयणोत्कर्षे । पशूत्कर्षे पथिकृन्मुखः पुनः पशु । सर्वप्रायश्चित्त वा । गौणकालस्याप्यतिपत्तौ पथिकृद्वैश्वानरौ । गृहदाहहिरण्येष्ट्यादयो लुप्यन्त एव जातेष्टिस्तु पश्चात्क्रियते युगळजनने नैमित्तिक च ॥

[प्रायश्चित्तोपदेशवैयर्थ्यशङ्कापरिहारौ पक्षान्तरं च]

नन्वकृते पुनराधाने अग्न्यभावेऽधिकाराभावात् किमिति प्रायश्चित्तमुच्यते [2] अयमभिप्रायो भाष्यकारस्य ,—आहिताग्नेरग्निनाशेऽपि नित्याधिकारकर्मस्वधिकारोऽस्त्येव । तथाहि ,—आधानप्रभृति यजमान एवाग्नयो भवन्तीति श्रुते· आधानोत्पन्नानामग्नीनामाश्रयनाशेऽपि अदृष्टरूपस्य यजमाने समवेतत्वात् पुनराधानादिभिः तस्याश्रयसम्पादनमिति उत्सृष्टाग्नेरतिक्रान्ते काले अनुगताग्नेश्च अग्निमत्तया अधिकारे सति कर्तव्याकरणात्प्रायश्चित्त कर्तव्यमिति । केचित् आहिताग्नित्वमात्रेणाधिकारसिद्धावदृष्टनाशेऽपि कर्तव्याकरणे प्रायश्चित्त भवतीति मन्यन्ते ॥

---

[1] किञ्चिद्विल—ङ काल —ख ग घ

[अन्यत्रातिदेशः]

(भा) यस्तु अविधानेन त्यजति तस्याप्येवम् ॥

[संवत्सरानत्ययेन प्रायश्चित्तम् ]

यस्य नातीतस्सवत्सरः न तस्यैवम्[1] ॥

[प्रथमाधानवैलक्षण्यम्]

नचारम्भार्थानि[2] पुनराधाने प्रायश्चित्ताधाने च ॥

[उपदेशपक्षः]

उपदेश पुनराधेये दशहोतृचतुर्होत्रादीनि व्याहृतिभिरुपसाद-नान्तानि पुन क्रियन्तेऽग्न्याधेयवत्कल्प[3] इति ॥

---

[अविधानेन त्यागप्रभवप्रायश्चित्तषु विशेष ]

(वृ) यस्तु—प्येवम् —प्रायश्चित्तम् ; शक्तस्य बुद्धिपूर्वत्यागे स्मार्तमग्नि-त्यागनिमित्तमुपपातकप्रायश्चित्तमपि पुरुषापराधनिमित्त कर्तव्यम् । अबुद्धिपूर्वनाशे झडित्यनाधातुः मतिपूर्वमुद्वासयतो द्विगुणम् ;—

विहित यदकामानां कामात्तद्द्विगुण वदेत् ।

इति । देशविप्लवादिनोत्सर्गे न पुरुषापराधजम् । पश्चात् सति विभवे[4] उपेक्षको भवति ॥

[प्रायश्चित्ताप्रवृत्तिहेतुः]

यस्य नाती—स्यैवम्—प्रायश्चित्तम् । सवत्सरमुत्सृष्टाग्नित्वानु-ज्ञानात् ॥

[आधानत्वप्राप्तं वैलक्षण्यम्]

न चार—त्ताधानेच—दशहोत्रादीनि । पूर्वमेवारब्धत्वात् ॥

[उपदेशपक्षे पुनराधानेऽतिदेशासङ्कोचे हेतुः]

उपदेशः पुनरा—त्कल्प इति—अग्न्याधेयधर्माणा तदनन्तर-भाविनां च प्राप्तेः ॥

---

[1] नाग्यारम्भा—ख ग घ [2] पुनराधेये—ख ग घ [3] इति वचनात्—ख. ग घ. [4] उपेक्षतो—ख ग. घ

(भा) प्रायश्चित्ताधाने तु यद्यनन्तर दोषात्क्रियते नारम्भार्थो दशहोता[1]। अलुप्तेऽग्निहोत्रे[2] ॥

[सारस्वतहोमाद्यपि क्वचिन्न]

अलुप्ते च पर्वणि न सारस्वतहोमादीनि ॥

[पुनराधेये हिरण्यकेशिमतम्]

अर्वाक् त्रिरात्रान्न पुनराधेयमुत्सर्गे कृते हिरण्यकेशिमतात्

(सू) [3]**रोहिणी पुनर्वसू अनूराधा इति नक्षत्राणि ॥**

॥ ५ ॥ ४९॥ ११४९ ॥

(सू) [4]**वर्षासु शरदि वाऽऽदधीत॥६॥५०॥११५०॥**

---

[प्रायश्चित्ताधाने विशेषोपपात्ति]

(वृ) **प्रायश्चित्ता–दशहोता**—अलुप्ते होमे । कथ [5]द्व्यहसाध्ये आधाने होमस्यालोप ? न द्व्यहसाध्य निमित्तानन्तरमाधान अनन्तर दोषात्कर्त[6]व्यानि । उभयाभ्युपेताभिनिम्रोके अभ्युदये च आरभ्य प्राक्परकालात्समापनीयत्वात् । प्रक्रान्तस्य कर्मणो दोषनिर्घातार्थतया [7]तदङ्गत्वात् । अङ्गानां प्रधानानुविधायित्वस्यावश्यकत्वात् ॥

**अलुप्ते–मादीनि**—[8]अलुप्ते दर्शपूर्णमासे वा । अतो दर्शपूर्णमासाग्रयणचातुर्मास्यपशुसोमकालानुरोधेन निमित्तज्ञानानन्तर नैमित्तिकमाधानमित्युपदेश. ॥

---

[1] होता च–ख. ग. [2] लुप्तहोमे पर्वणाति । कथम् ?–ख ग

[3] नक्षत्रान्तर परिसङ्ख्यानार्थं वचन नित्यत्वख्यापनार्थं चैषाम् । तेन पर्वविप्रतिषेधेऽपि नक्षत्रमेवाद्रियेत (रु) [4] एतावेव ऋतू सर्ववर्णानां भवतः बाधायनस्त्वत्राह — येयमाषाढ्या पौर्णमास्या पुरस्तादमावास्या भवति सा सकृत्संवत्सरस्य पुनर्वसुभ्यां सम्पत्स्यते तस्यामादधीतेति (रु) [5] द्वियह ?–ख दीतीयाह–ग [6] व्यानिति–ख. ग. [7] तदङ्गाना प्रधाना–घ [8] इदं–घ.–कोशे न दृश्यते.

[पुनराधाने कालः]

(भा) रोहिण्यादौ नक्षत्रे कृष्णपक्षे वर्षासु शरदि वा ॥

(मू) [1]कृताकृतास्संभारा यजूंषि च भवन्ति ॥

॥७॥५१। ११५१ ॥

[संभारपक्षे यजुषोऽपि प्रयोगनियमः]

(भा) यदि क्रियन्ते सभारा तदाऽग्न्याधेययजूंषि चाधानार्थानि नित्यानि ॥

---

[सूत्रानुक्तकृष्णपक्षपरिग्रहोपपत्तिः]

(वृ) **रोहिण्यादौ–रदिवा**—पुनराधानम् । कृष्णपक्षे इत्यस्याय-मभिप्रायः ;—पौर्णमासीमिष्ट्वोत्सर्जनात् उभयोरेकाधिका[2]रापूर्वसाधनत्वात् पुनराधानानन्तरममावास्यानुष्ठानसिद्ध्यर्थमपरपक्षनियम । पौर्णमास्य-नन्तरमुत्सर्जनविधानादेव पूर्वानुष्ठितपौर्णमास्या भविष्यद्दर्शेन सहैकाधि-कारापूर्वसाधनत्वमुपपन्नम् । प्रायश्चित्ताधाने[3]त्वनन्तरदोषात्कुनेऽति-क्रान्तस्य [4]पर्वण प्रायश्चित्तं कृत्वा प्राप्तकाल [5]यत्किञ्चित्पर्व कर्तव्यम् । वाचनिकत्यागे पूर्वाधिकारशास्त्राविरोधेन नैमित्तिकाधानकालनियमो युक्त इति ॥

[यदीति नित्यानीति च पदस्वारस्यम् ]

**यदि क्रियन्ते सं–र्थानिनित्यानि**—सम्भाराणामग्न्याधेय-यजुषां च सह प्रयोगनियम । सम्भाराभावे यजुषामपि निवृत्ति ॥

---

[1] आग्न्याधेयकास्सभाराः पक्षे कृता पक्षे अकृताश्च ब्राह्मणे भवन्ति । तथाऽऽधानयजूंषि च यथर्थ्याधानादीन्यर्थं । तथा च ब्राह्मणम्—न सभृत्यास्सभारा न यजु. कर्तव्यमित्यथो खलु सभृत्या एव सभारा कर्तव्य यजु इति । तेषा चोभयेषा सह शिष्टत्वात्सहप्रवृत्तिस्सह वा निवृत्ति (र) [2] रापूर्वे–ख, ग
[3] धानेऽनन्तर–ख ग [4] कर्मण –घ [5] कर्म–घ

(सू) [1]अपि वा पञ्च पार्थिवान् संभारानाहरति एवं वानस्पत्यान् ॥ ८ ॥ ५२ ॥ ११५२ ॥

[पुन पञ्चविधान नियमार्थम्]

(भा) पुनःपञ्च(विधाना)वचना[2]त्सप्त न लभ्यन्ते भूयांसोऽपि न लभ्यन्ते ॥

[पुनःपञ्चविधानाशयान्तरपक्षः]

केचिदयजुः पक्षेऽपि पञ्चेच्छन्ति ॥

[नियमस्संभारेषु]

[3]ये यस्याग्न्याधेयेन कृतास्सभारा· तस्य नियताः । इह कृतयजुरिति लिङ्गात् ॥

---

(वृ) **पुनःपञ्च–भ्यन्ते**—अस्यार्थ —कृताकृता इति विकल्पविधि । सप्तपञ्चसङ्ख्ययोरविशेषेण कर्तव्याकर्तव्यत्वे । आधानयजुषा च सम्भारैस्सह प्रवृत्तिनिवृत्ती । न सम्भृत्यास्सम्भारा न यजुः कर्तव्यमित्यथो खलु सम्भृत्या एव सम्भाराः कर्तव्य यजुर्यज्ञस्य समृद्ध्यै इति प्रवृत्तिनिवृत्त्योस्साहित्यवचनात् । अपि वा पञ्च पार्थिवानिति पञ्चसङ्ख्यानियमाविधिरिति ॥

[अयजुःपक्षेऽपि पञ्चपरिग्रहोपपत्तिः]

**केचिदय–च्छन्ति**—अपिवा पञ्च पार्थिवानिति । यजुषोऽभावेऽपि सम्भारपञ्चत्वनियमार्थं पुनर्विधानमिति ॥

[सम्भारेषु नियमोपपत्तिः]

**यस्याग्न्या–रितिलिङ्गात्**—न सम्भृत्यास्सम्भारा इत्यस्य हेतुत्वेन कृतयजुस्सम्भृतसम्भार इति निर्देशात् ॥

---

[1] पूर्वसूत्रे द्वौ कल्पावुक्तौ सप्तकादिषु सभारकल्पेषु अनियमेनान्यतम पक्षस्स्यादित्येक । न कश्चिदिति द्वितीयः तृतीयस्त्वयंकल्पो नियमेन पञ्चकल्पस्स्याभान्य इति (रु) [2] त्सप्त गृह्यन्ते केचित्–ग. [3] ग्रस्याग्न्या–ख ग. घ.

(सू.) [1] आयतनेषु पुराणान् दर्भान् संस्तीर्य भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमाददाति माध्य[2]न्दिन इतरान् ॥ ९ ॥ ५३ ॥ ११५३ ॥

[संभारतदभावपक्षयोः कर्मक्रमादिः]

(भा) [3] सभारसभरणान्ते पुराणदर्भाहरण ततो निधानम्। असभारपक्षे पुराणदर्भा. सम्भ्रियन्ते साद्यन्ते च तूष्णीम् । रजतनिरसनान्तं कृत्वा पुराणदर्भास्तरणमायतनेषु असभारपक्षे त्ववोक्षणान्ते । सर्वानुक्ताऽऽधानमन्त्रान् सर्पराज्ञीभिः पौनराधे[4]यिकैराधनम् । असभारपक्षे पौनराधेयिकैरेवाधानम् । चतस्रस्सर्पराज्ञ्यः ॥

---

[सम्भारतदभावपक्षयोः भाष्योक्तापेक्षितांशाः]

(वृ) सम्भारसं–तूष्णीम्—मन्त्रानुपदेशात् ।

रजतनिर–वोक्षणान्ते—शन्नो देवीरभिष्टय इत्यन्ते ।

सर्वानुक्ता–कीभिराधानम्—अग्न्याधेयवत्कल्प इत्याधानमन्त्राणां प्राप्तिः ॥

असम्भार–वाधानम्—आधानयजुषा निवृत्तत्वात् ।

चतस्रःसर्पराज्ञ्यः—पौनराधेयिक्य. ।

---

1 अरण्याहरणादिसमानमागार्हपत्याधानात्। तत्र सभारकाले पुराणानपि दर्भान् सम्भृत्य निर्वपनकाले सभाराणामुपरितानपिस्तृणाति। तानेव तु असभारपक्षे । ततो गार्हपत्याधानकाले सर्वाग्न्याधेयकमन्त्रान्ते चतसृभिरपि सर्पराज्ञीभिर्गार्हपत्यमादधाति । सर्पराज्ञीरेव तु अयजु पक्षे । ता अपि यजमानोऽनुवर्तयेत , येनयेनादधातीत्यविशेषवचनात् (रु). 2 अह्नो नवधाकृतस्य पञ्चमो भाग मध्यन्दिन । तथा बृहस्पतेर्मध्यन्दिन इत्यत्र विवेचनात्। तत्र सर्वान् मध्यान्दिन इति कल्पान्तरकारा (रु). 3 संभाराहरणान्ते–ग. 4 यिकीभिरा–ख ग.

(भा) [1] इह तु आधानेष्वनुवर्तमानस्य [2] यजमानस्य प्राकृतानामेव मन्त्राणाम् । सर्वे मध्यन्दिने वाजसनेयिनाम् ॥

(सू) [3] **उपोलवैर्दर्भैः परुत्कैः संवत्सरप्रवातैराहवनीयं ज्वलन्तमुद्धरति ॥ १०॥५४ ॥ ११५४ ॥**

[अग्न्युद्धरणसाधनविशेषः]

(भा) उपोलवा—आलवेभ्य उत्थिता. आलवसमीपे लूना वा । परुत्काः—पर्ववन्त. । प्रवाता.—संवत्सरमाकाशेऽवस्थिता. । ते च अश्वत्थेध्म[4]प्रत्याम्नायाः । तथोपाय' क्रियते यथा नानुगच्छत्यग्नि. ॥

(सू) [5] **यत्त्वा क्रुद्धः परो वपेति दक्षिणाग्निम् । यत्ते मन्युपरोप्तस्येतीतरान् ॥ ११॥५५॥११५५ ॥**

(सू) [6] **मनो ज्योतिर्जुषतामिति बृहस्पतिवत्यर्चोपतिष्ठते ॥ १२ ॥ ५६ ॥ ११५६ ॥**

---

(वृ) इह तु **आधाने—मन्त्राणामिति**—यजमानानुवर्तनं प्राकृतानामेव मन्त्राणाम् । व्याहृती सर्पराज्ञीरिति व्याहृत्यादि[7]सहितेषु विधानात् प्राकृतमन्त्रेषु प्रयुक्तसर्पराज्ञीनामपि पुनः प्रयोगः । प्राकृतानामन्ते निवेशात् । अतुल्यकालत्वात् तत्स्थानापत्त्यसम्भवात् ॥

**सर्वे मध्य—नेयिनाम्**—मतेन ॥

**तथोपायः—त्यग्निः**—दर्भगतः ॥

---

[1] इतीह तु. [2] प्राकृ—ख घ [3] उपोलवा इति आलवेभ्य उत्थिता वक्ष्यन्ते । परुत्का'—परुष्मन्त पर्ववन्तो वा सवत्सरप्रवाता —संवत्सरमुपशुष्का. । ते प्रणयनीयेध्मस्थाने भवन्ति (रु) [4] प्रत्याम्नाय —क. [5] आदधातीति शेषः (रु) [6] अग्नीनिति शेष तत्राहितमाहितमुपतिष्ठतइति भारद्वाज' (रु). [7] त्यादिनापितेषु ?—घ.

[उपस्थाने मतभेदः]

(भा) बृहस्पतिवत्योपस्थानमाहितस्याग्नेः शमने कृते भरद्वाजमतात उपदेशस्तन्त्रेणोपस्थानम् । आवसथ्यस्य शमने कृते सर्वेषाम् ॥

(सू) सप्त[1] ते अग्ने समिधस्सप्त जिह्वा इत्यग्निहोत्रं जुहोति ॥ १३ ॥ ५७ ॥ ११५७ ॥

सप्तविंशी खण्डिका ॥

---

[मन्त्रविनियोगः प्रकृतिश्च]

(भा) अग्निहोत्रहोमो नित्यः । पूर्वाहुति. सप्तते अग्ने इति प्रातर्होमविकारः ॥

---

[अस्मिन्नुपस्थाने कर्ता]

(वृ) बृहस्पति—जमतात्—प्रत्यगाशिष्ट्वादुपस्थान याजमानम् ॥

[उपदेशपक्षे हेतुः]

उपदेश—नम्—सर्वेषाम्—सर्वान्ते विधानात् ॥

[मन्त्रविशिष्टहोमविध्याशयः प्रातर्होमविकारत्वोपपत्तिश्च]

अग्निहोत्र – मविकारः — अग्न्याधेयात्प्रकरणान्तरत्वात् । जुहोतिप्रत्यभिज्ञाया अभावात् । अग्निहोत्रशब्दस्य च नित्याधिकाराग्निहोत्रे मुख्यत्वात् तद्धर्मपरत्वात् प्रकरणान्तरन्यायेनाधानाङ्गभूताग्निहोत्रेऽतिदेशप्राप्ते मन्त्रविधिर्न युक्तः अपि तु [2] मन्त्रविशिष्टहोमान्तरविधिरेव । अत्र च पूर्णाहुतेरविधानान्नित्य एवाग्निहोत्रहोमः । [3] पूर्वाहुतिः सप्त ते अग्न इति विकृतौ चोद्यमानो धर्मः प्रधानार्थो भवतीति । पूर्वाहुतेः प्रधानत्वात् । अस्य च कॢप्तकार्ये विधानात् पूर्वाग्निहोत्रकार्यापन्नत्वात् प्रातर्होमविकारत्वम् ॥

---

1 अनयैवात्र पूर्वाहुति । न तूष्णीम् । नापि द्वादशगृहीतमग्निहोत्रस्य स्थाने भवति । मन्त्रवर्णात्तु अग्निर्देवता । प्रातर्होमविकारत्व च पूर्ववत् (रु) 2मन्त्रहोमविशिष्टहोमान्तर—ख. मन्त्र होमान्तर—ग 3 पूर्णा—ख ग.

(सू) आग्नेयं पञ्चकपालं निर्वपत्यष्टाकपालं वा ॥ ॥ १ ॥ ५८ ॥ ११५८ ॥

(भा) आग्नेय हविरिति मन्त्रसन्नाम. ।

(सू) यदि पञ्चकपालो गायत्र्यौ संयाज्ये यद्यष्टाकपालः [1] पङ्क्त्यौ ॥ २ ॥ ५९ ॥ ११५९ ॥

(भा) यस्याजुषद्विद्माहित इति सयाज्ये गायत्र्यौ ॥

(सू) [2] सर्वमाग्नेयं भवति ॥॥ ३ ॥ ६० ॥ ११६० ॥

(भा) [3] सर्वं[4]माग्नेयवदेव विधास्यते ॥

(सू) पञ्चदश सप्तदश वा सामिधेन्यः ॥ ४ ॥ ६१ ॥ ॥ ११६१ ॥

(सू) [5] सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजात् उच्चैस्स्विष्टकृतम् ॥ ५ ॥ ६२ ॥ ११६२ ॥

[उच्चैस्त्वे स्थलविशेषव्यवस्था]

(भा) सप्तदशसु पृथुपावाजवत्यौ यत्र नोपदिष्टौ[6] अग्निस्स्विष्टकृत् सूक्तवाकयोर्देवताया आप्युच्चैः ॥

---

(वृ) सप्तद–वत्यौ—सप्तदशसु सामिधेनीषु पृथुपाजा अमर्त्यः इति द्वे॥

[उपांशुत्वार्हेऽप्युच्चैस्त्वे हेतुः]

यत्र नोपदि–प्युच्चैः—पूर्वमुपांशुत्वेन प्रयुक्तानामप्यत्रोच्चैस्त्वं सूक्तवाकस्यानूयाजात्परत्वात् ॥

---

[1] पङ्क्त्यौ स्वयमेवदर्शयिष्यति (रु) [2] यदस्यामिष्टौ हवि देवता सयुक्तत्सर्वमाग्नेय भवति । विकारान् स्वयमेव कर्तव्यान् वक्ष्यति (रु) [3] सर्वं सौम्य–ख. [4] य यदेव विधायस्यते–ख ग ङ [5] यजतिरत्रप्रकरणार्थं । उच्चैरुत्तम संप्रेष्यतीति लिङ्गात् तेनोपांशु प्रचरतीति श्रुतेश्च । तेनाध्वर्युनिगदा अप्युपांशवो भवन्ति (रु). [6] ष्टा –ख. ग. ष्टे–घ.

(सू) [1] अग्नाग्ने अग्नावग्नेऽग्निनाऽग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ॥ ६ ॥ ॥ ६३ ॥ ११६३ ॥

(भा) समिधो अग्न आज्यस्य वियन्त्विति द्वितीयोऽग्निशब्दः क्रमार्थः। सर्वत्र तनूनपादग्नावग्न आज्यस्य इडो अग्निनाऽग्न आज्यस्य बर्हिरग्निमग्न आज्यस्य प्रयाजानूयाजेष्वेव विभक्तीरिति पञ्चमेऽपि स्यादन्या विभक्तिः ॥

(सू) [2] नोत्तमे ॥ ७ ॥ ६४ ॥ ११६४ ॥

(भा) तथोत्तमे प्रयाजे नोत्तम इति निषिध्यते ॥

(सू) [3] विभक्तिमुक्त्वा प्रयाजेन वषट्करोति ॥ ॥ ८ ॥ ६५ ॥ ११६५ ॥

[विभक्तिप्रयोगस्थानम्]

इत्युपरिष्टाद्देवतोपलक्षणस्य व्याहृतीभ्यश्च परतो विभक्तिः ॥

---

(वृ) विभक्ति—द्करोति—इति पक्षान्तरम्। तत्र—

[इहप्रयाजपदार्थः मन्त्रक्रमश्च]

उपरिष्टाद्—तो विभक्तिः—प्रयाजेन वषट्करोतीति प्रयाजशब्दो याज्या[4]वचन.। अतो व्याहृतिभ्यः पुरस्ताद्विभक्तिं याज्य चोक्त्वा तदन्ते वषट्कार· ॥

---

[1] अनेनादितश्चतुर्षु प्रयाजेषु याज्यागतानामाग्नेयशब्दान् पुरस्तादावापिकाम् विभक्त्यग्निशब्दान् निधाय पाठ प्रदर्श्यते। तद्यथा, समिधो अग्नाग्न आज्यस्य वियन्तु तनूनपादग्नावग्न आज्यस्य वेत्वित्यादि'। अग्नाविति सबुद्धे रूप द्रष्टव्यम् (रु). [2] प्रयाजानूयाजेष्वेव विभक्ती कुर्यादित्यविशेषश्रुते पूर्वसूत्रेण प्रयाजचतुष्टये विभक्तिचतुष्टयनियमाच्च। पञ्चमेऽप्यनियमेन याकाचिद्विभक्ति कार्येति भ्रमो मा भूदित्यारम्भ (रु) [3] अथवा विभक्तिमुक्त्वा प्रयाजेन वषट्करोति याज्याया पुरस्ताद्वा विभक्तिन्दधातीत्यर्थ। तद्यथा,—अग्नासमिधो अग्न आज्यस्य अग्नौ तनूनपादग्न आज्यस्य वेत्वित्यादि (रु). [4] ज्यापरः—ख ग.

(सू) [1] **यं कामयेतर्ध्नुयादिति तस्योपरिष्टाद्येय-जामहाद्विभक्तिं दध्यात्पुरा वा वषट्कारात् ॥ ॥ ९ ॥ ६६ ॥ ११६६ ॥**

[उपरिष्टाद्येयजामहात्पुरावषट्काराच्च विभक्तिघटितमन्त्र प्रयोगक्रमः]

(भा) तत्र प्रथमे प्रयाजे 'ये यजामहे समिधो भूर्भुवस्सुवरग्ना समिधो अग्न आज्यस्य । ये यजामहे भूर्भुवस्सुवरग्नौ तनूनपादग्न आज्यस्य । भूर्भुवस्सुवग्निनेडो अग्न आज्यस्य । भूर्भुवस्सुवरग्निं बर्हि-रग्न आज्यस्य । उपरिष्टाद्येयजामहात्पुरस्ताद्देवतोपलक्षणात् व्याहृती-भ्यश्च ये यजामहे [2] अग्नाभूर्भुवस्समिधो अग्न आज्यस्य ये यजामहेऽ-ग्नौ भूर्भुवस्सुवस्तनून[3]पादग्ना आज्यस्य । ये यजामहेऽग्निना

---

[तत्र प्रथमे इत्यादि भाष्यस्य विभक्तिप्रकारदर्शकत्वम्]

(वृ) **तत्र प्रथमे–रग्न आज्यस्य**—इति विभक्तिमुक्त्वा प्रयाजेन वषट्करोतीत्यस्मिन् पक्षे प्रयोगप्रकारः ॥

[काम्यविभक्तिप्रयोगपक्षः । स्वपरशाखीयत्वविभागः]

**उपरिष्टाद्येयजामहादिति**—शाखान्तरीयपक्षाश्रयणेन । अनु-क्रान्तपक्षस्तु सूत्रकारपक्षाश्रयणेन । द्वितीयोऽग्निशब्दः क्रमार्थः इति प्रथमपक्ष । विभक्तिमुक्त्वा प्रयाजेन वषट्करोतीति पक्षान्तरमस्मच्छा-खीयम् ॥

---

[1] काम्याविमावपरौ कल्पौ । येयजामहादुपरिष्टाद्व्याहृतिभ्यश्च पुरस्ताद्विभक्ति-रित्येक पक्ष तद्यथा, येयजामहेऽग्नाभूर्भुवस्स्व समिधो अग्न आज्यस्य येयजामहे भूर्भुवस्स्वस्तनूनपादग्न आज्यस्य वोत्त्वित्यादि । पुरावषट्कारादिति द्वितीय । तत्र प्लुतिश्च विभक्तावेव भवति तद्यथा वियन्त्वग्ना ३ वौषडित्यादि (रु). [2] ग्नास-मिधो भू–ख. ग. घ. [3] न पात् येयजा–ख. ग.

(भा) भूर्भुवस्सुवरिडो अग्न आज्यस्य। ये यजामहेऽग्निं भूर्भुवस्सुवर्बर्हिरग्न आज्यस्य। पुरा वा वषट्कारादिति पूर्वं वषट्काराणा विभक्तीनां च प्लुतिः। [1] वियन्त्वग्ना इवौ वेत्वग्नौ इवौ वियत्वाग्निनावौ वेत्त्वग्निं वौ। ऋद्धिकामस्य विधिद्वयम् ॥

(सू) [2] अग्निꣳ स्तोमेन [3] बोधयेत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति। अग्न आयूꣳषि पवस इति सौम्यस्य ॥ १० ॥ ६७ ॥ ११६७ ॥

[श्रुत्युक्तसौम्यत्वोपपत्तिः, याज्या अनुमन्त्रणं च]

(भा) पवमानत्वेन सौम्यस्यानुग्रहात् तेन सौम्य इति।

---

[देवतोपलक्षणव्याहृत्युभयग्रहणफलम्]

(वृ) पुरस्ताद्देवतोपलक्षणाद्व्याहृतिभ्यश्चेत्युभयोपादानाद्देवतोपलक्षणपक्षे ततः पूर्वम् इतरथा व्याहृतिभ्य. पूर्वमित्युभयोपादानम्। उपदेशपक्षे व्याहृतिदेवतयोः क्रमभेदात् ॥

**पुरा वा–षट्काराणां**—विभक्तय।

[प्लुतमानम्]

**विभक्तीनां च प्लुतिः**—आश्वलायनवचनात्।

[सौम्यस्यपवमानपुरोनुवाक्यात्वोपपादनम्]

उपरिष्टाद्येयजामहात् वषट्कारात्पुरतो वा—

**पवमान–सौम्य इति**—अग्न आयूꣳषि पवस इति सौम्यस्येति सौम्यस्य पवमानपुरोऽनुवाक्यान्वयसिद्धौ हेतुः पवमानत्वेन सौम्यस्यानुग्रहात्तेन सौम्य इति। त (अ) त —

---

1 वियन्त्वग्नाभ्य इवौ वेत्त्वग्नाभ्यवौ वियाग्निनाभ्यवौ वेत्वग्नीभ्यवौ ऋद्धि च.

2 अत्र देवतानिगमेषु सौम्यस्य स्थाने अग्निं पवमान निगमयेयु.। यथा,—अग्नये पवमानायानुब्रूहीत्यादि (रु).   3 स्विष्टकृतेन? इत्यधिक क.–पुस्तके.

(भा) अग्नये पवमानायानुब्रूहीत्युक्ते अग्न आयूꣳषि पवस इति पुरोऽनुवाक्या। अग्निं पवमान यजेत्युक्ते भूर्भुवस्सुवर्जुषाणो अग्निः पवमान आज्यस्य हविषो वेत्त्विति याज्या। अग्निना पवमानेन यज्ञश्चक्षुष्मानग्नेः पवमानस्याहं देवयज्यया चक्षुष्मान् भूयासमिति हुतानुमन्त्रणम्। अग्निपवमानयोरहं देवयज्यया चक्षुष्मान् भूयासमिति समस्तम्॥

(सू) [1]अग्निर्मूर्धेति वा सौम्यस्य कुर्यात् ॥ ११ ॥
॥ ६८ ॥ ११६८ ॥

[सौम्यस्याग्नेयत्वप्रकारान्तरम्]

(भा) यदाग्निर्मूर्धेति सौम्ये तदोभावाग्नेयावाज्यभागौ स्याताम्। अग्नये पवमानायोत्तरस्स्यादिति विधिद्वयम्॥

[अत्र याज्यापुरोनुवाक्यादिपक्षान्तरं च]

जुषाणो अग्निराज्यस्य हविषो वेत्त्विति। सौम्यस्याग्नेयत्वे याज्या आग्नेयवत् विहृतानुमन्त्रणमुत्तरस्य। अग्नयोरहं देवयज्यया चक्षुष्मान् भूयासमिति समस्तस्य भरद्वाजाश्वलायनमतिश्च॥

[उपदेशपक्षः]

उपदेश आज्यभागयो पुरोनुवाक्यामात्र विकार इति॥

---

(वृ) अग्नये पवमानाये–नुवाक्या—यदाऽग्निर्धाम्नू योत्तरस्स्यादिति—विधिद्वयम् उभावाग्नेयावित्यस्मिन् पक्षे अग्निर्मूर्धेति पुरोऽनुवाक्या पवमाने पूर्वोक्ता॥

जुषाणो आग्नेयत्–यनमतिश्च—उभयोराग्नेयत्वेन।

[विकारत्वे हेतुः]

उपदेश आज्य–विकार इति—तावन्मात्रबाधेनाप्युपदेशद्वयोपपत्तेः॥

---

[1] अस्मिंस्तु पक्षे केवलमग्निमेव निगदेयुरिति शेषः (रु).

(सू) [1] प्रजाकामपशुकामस्य प्रजाव्यृद्धपशुव्यृद्धस्य वा ॥ १२ ॥ ६९ ॥ ११६९ ॥

(भा) यः प्रजाकाम पशुकामः तस्याप्याग्नेयौ । यस्य म्रियते प्रजा स प्रजाव्यृद्धः । यस्य पशुर्मियते स पशुव्यृद्ध ॥

(सू) [2] अग्निन्यक्ता पत्नीसंयाजानामृचो भवन्ति ॥ ॥ १३ ॥ ७० ॥ ११७० ॥

[पत्नीसंयाजेषु विशेषः]

(भा) अग्निन्यक्ताः पत्नीसयाजानामृचो भवन्तीति वचनाद्देवताशब्दस्य परोऽग्निशब्दस्तयैव विभक्त्या क्षिप्यते । तेन सर्वाग्नेयत्वम् । अतो नाध्वर्योर्विकारा । सोमाग्ने वृष्णियम् । अमृताय सोमाग्ने दिवि । त्वष्टारम[3]ग्नियम् । देवत्वष्टः अग्ने विरराण । देवानां पत्नीरग्निरुशतीः । देव-

[सर्वाग्नेयत्वे हेतुः]

(वृ) अग्निन्यक्ताः- क्षिप्यते - तेन सर्वाग्नेयत्वम्--अग्नि[4]न्यक्तत्वमात्रे[5]णर्चाम् ॥

[नाध्वर्योर्विकारा इत्यत्र हेतुः]

अतो नाध्वर्योर्विकाराः--तस्याग्नेयत्वेन विकाराभावात् ।

---

[1] प्रजाव्यृद्ध नष्टप्रज. । तथा पशुव्यृद्ध । एषामपि अग्निर्मूर्धेति सौम्यस्य कुर्यात् (रु). [2] या पत्नी सयाजानामृच याज्यानुवाक्या ता. अग्निन्यक्ता — निषिक्ताग्निशब्दा भवन्ति । तासु ऋक्षु देवताशब्देभ्य पर तत्समानया विभक्त्या अग्निशब्द प्रक्षेप्तव्य इत्यर्थ । यथा विश्वतत्सोमाग्ने वृष्णियमित्यादिना उक्त पत्नीसंयाजो विक्रियते तस्य स्वयमनाग्नेयत्वात् सर्वाग्नेयार्थत्वाच्च विकारस्य । तथा च ब्राह्मणम्--अग्निन्यक्ता पत्नीसयाजानामृचस्यु । तेनाग्नेय सर्वं भवति इति । ऋच इति वचनाच्च नाध्वर्युनिगमेषु विकार आज्यभागानन्तरं व्युत्क्रमेण पत्नीसयाजनवचनमुत्तरसूत्रे सद्योभयेषा विकल्पविधानार्थं ब्राह्मणानुसारार्थं च (रु)
[3] प्रथम्--ख. ग [4] अग्नित्व--ख ग [5] णर्चा ?--ख ग

(भा) पत्नीरग्निरिन्द्राणी। राकामग्निमह यास्ते राकेऽग्ने सिनीवाल्यग्ने पृथुष्टुके सिनिवाल्या अग्नये जुहोतन कुहूमग्निमह कुहूरग्निर्देवानाम् । उपदेशो

[पक्षान्तरम्]

देवताशब्दमपनीयाग्निशब्दस्य तथैव विभक्त्या क्षेप । अग्निना पत्नीरिति देवपत्नीषु । उतग्नाव्यन्त्वग्निपत्नीरिति ॥

(सू) अपि वा [1]यथापूर्वमाज्यभागावेवं पत्नीसंयाजाः ॥ ॥ १४ ॥ ७१ ॥ ११७१ ॥

(सू) [2]अग्ने तमद्याश्वामित्यक्षरप[3]ङ्क्त्यो याज्यानुवाक्या भवन्ति । द्वे आग्नेयस्य द्वे स्विष्टकृतः ॥ १५ ॥ ७४ ॥ ॥ ११७२ ॥

[याज्यानुवाक्याविशेषव्यवस्था]

(भा) आग्नेयस्य नित्यमक्षरपङ्क्त्यौ । अष्टाकपालपक्षे स्विष्टकृतः । पुरोडाशस्यानियमः ॥

---

(वृ) **उपदेशो–क्षेपः**––अग्निं वृणियामित्यादि ॥

[पङ्क्तिच्छन्दसः परिग्रहमानं तत्र विशेषश्च]

**अष्टाक–ष्टकृत इति**––पङ्क्त्यो याज्यानुवाक्या भवन्तीति । अष्टाकपालपक्षे प्रधानस्य स्विष्टकृतश्च पङ्क्त्य । पङ्क्तिमात्रे ब्राह्मणे उक्तेऽपि सूत्रकारेण अक्षरपङ्क्त्य[4] इति विशेष उक्त । पञ्चकपालपक्षे स्विष्ट[5]कृतो गायत्र्यौ यस्याजुषद्विप्राहित इति ॥

[पुरोडाशविषयेऽनियमहेतुः]

**पुरोडाशस्यानियमः**––कपालसङ्ख्ययो शाखान्तरे अष्टाकपालविधानात् अस्मच्छाखाया च पञ्चकपालस्य ॥

---

[1] यथ। प्रकृतीत्यर्थ (रु). [2] आदितो द्वे प्रधानस्य । परतो द्वे स्विष्टकृत अष्टाकपालपक्षे । यदि पञ्चकपालो गायत्र्यौ संयोज्य यद्यष्टाकपाल पङ्क्त्याविति नियमात् (रु). [3] ङ्क्त्यौ [4] पङ्क्त्या अविशेष उक्तः–ख.ग. [5] कृतौ–ख, ग.

(सू) पुनरूर्जा सहरय्येत्यभितः [1] पुरोडाशमाहुती-
र्जुहोति ॥ १६ ॥ ७५ ॥ ११७५ ॥

(सू) पुनरूर्जेति वा पुरस्तात्प्रयाजानां सहरय्येत्युप-
रिष्टदनूयाजानाम् ॥ १७ ॥ ७६ ॥ ११७६ ॥

(सू) [2] एतद्वा विपरीतम् ॥ १८ ॥ ७७ ॥ ११७७ ॥

[पुनरूर्जेत्यादि होमयोर्देशादिव्यवस्थादि]

(भा) यस्मिन् होम करिष्यामीति [3] तत्र पुनरूर्जेति जुहोति । ततः पुरोडाशेज्या [4] तास्मिन् । ततस्सहरय्येत्युपरिष्टात्पुरोडाशस्य होमः ॥

(सू) उभयीर्दक्षिणा ददाति ॥ १९ ॥ ७८ ॥ ११७८ ॥

अष्टाविंशी खण्डिका ॥

---

(सू) [5] आग्न्याधेयिकीः पौनराधेयिकीश्च पुनर्निष्कृतो
रथ इत्येताः शतमानं च हिरण्यम् ॥ १ ॥ ७९ ॥
॥ ११७९ ॥

---

(वृ) यस्मिन्–शेज्या तस्मिन्—देशे ॥
ततस्सहः–होमः—अभितः पुरोडाशमिति देशाभिप्रायमिति ॥

---

[1] पुरोडाशेज्याया पुरस्तदेकामुपरिष्टादन्यामित्यर्थ । पुरोडाशस्योपरि अधस्ताच्चेति केचित् , तदयुक्तम् । उत्तरविकल्पानौचित्यात् अभितो वपाजुहोतीति श्रुते । सूत्रकृतैवान्यथा व्याख्यानाच्च (रु). [2] उपरिष्टात्प्रयाजाना पुरस्तादनू [3] यत्र—ग [4] तस्मिन्नेव—ङ [5] पौनराधेयिकीश्च पुनर्निष्कृतोरथ इत्येता इत्यन्वय । उक्ता हि एते ब्राह्मणे 'पुनर्निष्कृतोरथो दक्षिणा पुनरुत्स्यूतं वास पुनरुत्सृष्टोऽनड्वान्' इति । तत्र पुनर्निष्कृत पुनस्संस्कारेण नवीकृत । पुनरुत्स्यूत—दार्ढ्यार्थं सूत्रैरुत्स्यूतम् । पुनरुत्सृष्टोऽवसृष्टो गौ तथा बोधायन —पुनर्निष्कृतोरथो दक्षिणेति पुनस्संस्कृत एव भवति । पुनरुत्स्यतं वास इति पुनस्संस्कृतमेवैतद्भवति । पुनरुत्सृष्टोऽनड्वान् इति अवशीर्ण गव एवैष उक्तो भवतीति (रु)

(सू) [1] तस्माद्रजतं हिरण्य[2]मित्युक्तम् ॥ २ ॥ ८० ॥ ॥ ११८० ॥

(सू) [3] पुनरभिहितो रथः पुनरुत्स्यूतं स्यामूलं पुनः कामस्याप्त्या इत्येकेषाम् ॥ ३ ॥ ८१ ॥ ११८१ ॥

[दक्षिणा पदार्थविवरणादि]

(भा) पुनर्निष्कृतः—पुनस्संस्कृत । पुनरुत्स्यूत ऊर्ध्वं यस्य सीवनं कृत पाटितस्य [4] पुनर्गृह्यते [5] वसनार्थं द्वितीयमुत्स्यूतम् । कोचित्पुनश्शब्दप्रयोगात् कृतम् । उत्सृष्टो वाहनाय समर्थः पुनर्गृह्यते स पुनरुत्सृष्टः । शतमान हिरण्यम् । रजत न देयम् अन्यत्रापि यज्ञकर्मणि । बर्हिषीति यज्ञकर्मोपणक्षणात् । प्रतिषेधार्थम् ॥

---

(वृ) पुनरुत्स्यूतं–गात्कृतं इति—पुनस्सीवन कुर्वन्ति ॥

[रजते हिरण्यशब्दप्रयोगाद्रजननिषेधानुपपत्तिशङ्कापरिहारः]

शतमानं–न देयम्—यद्यपि सर्वे हिरण्यं रजतमित्येवमादिषु हिरण्यशब्दो रजते प्रयुक्त॰, तथाऽपि शतमानं च हिरण्यमित्यत्र न रजत दानम् तस्माद्रजत हिरण्यमदाक्षिण्यमिति निषेधस्य सर्वयज्ञेषु सर्वरजतदाननिषेधार्थत्वात् । बर्हिश्शब्देन यज्ञमात्रोपलक्षणात् । तस्माद्बर्हिषि न देयमिति, तदाह ;—

अन्यत्रापि यज्ञकर्मणीति ।

बर्हिषीति–धार्थम्—सर्वयज्ञेषु बर्हि[6]ग्रहणात् ॥

---

[1] शतमान हिरण्यमित्युक्त तत्र किं रजतस्यापि हिरण्यस्यदानं लभ्यते? नेत्याह [2] ब्राह्मणे तस्माद्रजत हिरण्यमदाक्षण्यमित्यारभ्य तस्माद्बर्हिषि न देयमित्युक्तम् । तत स्वर्णमेव दयामिति भाव (रु) [3] पुनरभिहित —पुनस्संस्कृत । स्यामूल—वासोविशष । यथास्यामूलेन क्षणमेवाश्व सज्ञ्यन्तीत्यादौ । विकल्पते. चैतद्वयं पुनर्निष्कृतादिभि. । पुन.काम्यत इति पुन कामः पुनराधेयफलम् (रु). [4] तत्पुन–ग [5] वासनार्थम्–ख ग [6] ग्रहणम्–ख. ग.

(भा) पुनरभिहितः पुनरभिप्रेत. । [1]स्यामूलं—कम्बलम् । तत्र दक्षिणाद्वयम् ॥

(सू) **यदीतराणि न विद्येरन्नप्यनड्वाहमेव दद्यात् । अनडुहि ह वा एते च कामा अतश्च भूयाꣳस इति पैङ्गायनिब्राह्मणं भवति ॥४॥४२॥११८२॥**

(भा) अनड्वाहमेवेत्यवधारणादाग्नेयाधेयिकीनामपि निवृत्तिः । पुनरुत्सृष्टो न । केचित्त्वविशिष्टमनड्वाहम् ॥

(सू) **[2]देवे अग्नौ देवो [3]अग्निरिति द्वयोरनूयाजयोर्विभक्ती [4]दधाति ॥ ५ ॥ ४३ ॥ ११८३ ॥**

(भा) देवो अग्नौ बर्हिर्वसुवने देवो अग्निर्नराशꣳसो वसुवने ॥

(सू) **[5]नोत्तमे ॥ ६ ॥ ४४ ॥ ११८४ ॥**

[निषेधप्रवृत्तिहेतु.]

(भा) नोत्तम इति प्रतिषेधो ब्राह्मणे[6] सामान्यचोदितत्वात्प्रयाजानूयाजेष्विति ॥

---

(वृ) पुनराभि–भिप्रेतः—पूर्वमारूढो विसृज्य पुनस्स्वीकृतः ॥

तत्र दाक्षिणाद्वयम्—एकेषा मतेन ।

अनड्वाह–पुनरुत्सृष्टेनेति — पुनरुत्सृष्टोऽनड्वानित्युक्तस्यैव नियमार्थं वचनमिति ॥

[केचित्तुपक्षे उपपत्तिः]

केचित्त्ववशिष्टमनड्वाहम्—शाखान्तरोक्तत्वादपि अनड्वाहमित्यस्य तु पुनरुत्सृष्टविशेषणानुपादानात् ॥

[नोत्तम इति निषेधहेतुविवरणम् ]

नोत्तम–याजेष्विति प्रयाजानूयाजेष्वेव विभक्तीरिति सर्वानुयाजप्राप्तत्वात् ॥

---

[1] स्यामूलम्–वासोविशेष (रु) [2] तद्यथा देवे अग्नौ बार्हिर्देवो अग्निर्नराश स इति (रु) [3] अग्न इति–क [4] ददाति–ख. [5] व्याख्यात उत्तमप्रयाजेन (रु). [6] ब्राह्मणसामान्य–ग.

